# धन्यवादाः ।

अद्य सानन्दं तस्मै निखिलसद्गुणसमुदयसनाथीकृतानन्तब्रह्माण्डनायकाय श्रीमतेऽपारकरुणापारावाराय भगवते भक्तकामकल्पद्रुमाय सनमोवाकमनन्तान्धन्यवादान्मनसा मन्महे । येन श्रीभगवता निजलीलाप्रभावतोऽनन्तानि ब्रह्माण्डानि निर्माय तत्र स्वयं विद्यामयस्वरूपेणाविर्भूय तदनु सुरनरादिविविधाकारेण निजलीलाभिरवतीर्य स्वस्वामिभावेन विपरिणम्य चाशेषब्रह्माण्डकार्यक्रमोऽनादिकालतोऽनंतकालपर्यंतं निर्वाह्यते । निजनित्यलीलास्वरूपेण निजविभूतिमहिमानं च निरंतरं पर्यालोच्य निजस्वरूपे स्वानन्दमयतयाऽवतेष्ठीयते च । यस्य चेश्वरस्य ज्ञानलेशेनेतत्समग्रं परापराविद्यात्मकं वाङ्मयं समस्ते जगति त्रयीस्वरूपेण प्रकाशमानं विराराज्यते । यस्य चांशांशावतारैरिदं जगत्पुनःपुनः स्वकीयविज्ञानमयेन ज्योतिषा समुदेदीप्यते च । स एष भगवतः स्वस्वरूपत्वेनाविशेषात्स्वलीलाविषयत्वेऽपि तदपारमायाविलसितविभ्रमविवशतया परिच्छिन्नदृष्टीनामस्मदादिजीवानां दृष्ट्या भगवतः परंपरया जगत उपरि भूयानुपकार इति स्मृत्वा वयं तस्मै भगवतेऽनन्तान्धन्यवादान्कृतज्ञेन मनसाऽऽशास्महे ।

अथ च तस्यैव परमपुरुषस्य लीलावताररूपाय श्रीव्यासमहर्षये सन्तु कोटिशो धन्यवादाः । येन श्रीभगवता व्यासमहर्षिणाऽवतीर्य कालवशेन प्रसरताऽज्ञानेन लुप्तप्रायतादशामभ्युपयियासतीनां समस्तवेदादिविद्यानां निजमतिप्रदीपेन पुनरुज्ज्वलीकरणं व्यधायि । शतकोटिप्रविस्तरं पुराणविद्यावाङ्मयं चतुर्लक्षसङ्ख्याकश्लोकैः सारसमाकर्षं च पुनर्व्यवास्थापि यत्र चास्माकं सर्वेषां सदाचारः सम्यगुपवर्णितः समस्तवेदार्थश्च सम्प्रकटितः प्रचकास्ति । शारीरिकब्रह्मसूत्रैर्वेदांतविद्या च समुज्ज्वालिता । स एष तस्यास्माकमुपरि भूयाननुग्रह इति तदीयमुदारचरितं शिरसा श्लाघामहे ।

अपि च तेभ्यः सज्जनेभ्यो महामान्येभ्यो विद्वज्जनेभ्यो वयं बहून्धन्यवादान्वदामो ये सततं परिचरंति श्रुतिस्मृतिप्रतिपादितं सदाचारमिति ।

अथ च सांप्रतं ये महांतः सज्जनाः स्वकीयमुदारचरितं जगति प्रकाशयन्तो निजप्राचीनसरस्वतीसंग्रहालयादतितरप्रभावसमलंकृतानि नानाविधानि वेदशास्त्रपुराणधर्मशास्त्रव्याकरणन्यायमीमांसावेदांतयोगसाङ्ख्यज्योतिषवैद्यककाव्यालङ्कारनाटकचम्पूप्रभृतिपुस्तकानि मुद्रणद्वारा जगति प्रकाशयितुं प्रदायास्माञ्छश्वत्साहाय्येनोपकुर्वन्ति । विद्याप्रकाशनसाहाय्याद्धयं तेभ्यो बहून्धन्यवादान्वदामः ।

तत्प्रसंगेनैवाद्यैतस्य "श्रीस्कान्दमहापुराण" पुस्तकस्य मुद्रणेन प्रकाशनायास्मभ्यं यैः परमपूज्यैः सकलसज्जनवरेण्यैः श्रीमन्महाभ्यु

दयैः साहाय्यं प्रदत्तम्। यस्य च साहाय्यस्य प्रभावेणाद्यैतत्सर्वतोऽपि समग्रतयाऽत्यन्तं दुर्लभं श्रीस्कान्दमहापुराणं समग्रमत्र सर्वेषां सज्जनानां सुलभतया संग्रहार्थं पुरत उपस्थापनस्य सुदिनं नः समागतम्। अत एव वयं सहर्षं तेषां महाभ्युदयानां सुमंगलपवित्रनामधेयानि प्रकाशयामः—

१ पुस्तकम्—श्रीमन्तमहाराजश्रीशंकररावजीमहाराजानां—दाक्षिणात्यभोरसंस्थानाधिपतीनाम्।

२ पुस्तकम्—पंडितवर्यमहामहोपाध्याय श्रीबाकेलालगोस्वामिनां—दिल्लीपत्तननिवासिनाम्।

३ पुस्तकम्—ठाकुरश्रीमहान्चन्द्रशुभनामधेयानां—पञ्जाबप्रांतांतर्गतामृतसरपत्तननिवासिनाम्।

४ पुस्तकम्—पण्डितवर्यश्रीलज्जारामजीमहाभ्युदयानां द्वारा समागतं—पण्डितमान्यश्रीजुगुलकिशोरसमभिधेयानां—रईस—सतोहा-निवासिनाम्।

५ पुस्तकम्—पण्डितवर्यश्रीहरिकृष्णवेङ्कटरामशास्त्रिमहाराजानाम्—औरंगाबादपत्तननिवासिनाम्।

६ पुस्तकम्—पण्डितवर्यश्रीज्येष्ठारामसुकुन्दजीशास्त्रिणां—मुंबापुरीनिवासिनाम्।

७ पुस्तकम्—पण्डितवर्यश्रीज्वालाप्रसादजीशास्त्रिवर्याणां—मुरादाबादनिवासिनाम्—उद्योगाल्लायब्ररीतः प्राप्तम्।

८ पुस्तकम्—पण्डितवर्यश्रीपरशुरामकृष्णवैद्य—माधवकॉलेज—एतेषां द्वारा समागतं—पण्डितवर्यश्रीकाशिनाथाचार्याणां मालवप्रांतवर्त्युज्जयनीस्थमाधवकॉलेजसंस्कृताध्यापकानाम्।

एवमेतेभ्यः परममान्येभ्योऽत्युदारचरितेभ्यो महोदयेभ्य एतानि श्रीस्कान्दमहापुराणस्यादर्शप्रतिपुस्तकानि पूर्णान्यपूर्णानि च यथोपलब्धान्यप्यस्माकं समीपे समागतानि संति। तेषामेतेषां सर्वेषां पुस्तकानां साहाय्येनास्माभिरेतत्स्कांदं महापुराणं श्रीबृहन्नारदीयमहापुराणोक्तानुक्रमणिकानुसारेण क्रमसंबद्धं विधाय बहूनां प्रतिपुस्तकं नियमितानां शास्त्रिणां साहाय्येन सम्यक्परिशोध्य पाठांतर—शब्दार्थ—वाक्यार्थ—श्लोकार्थसुव्यञ्जकटिप्पणीभिः समलंकृत्य यतस्ततः समग्रतया सुदुर्लभमपि तेषां सर्वेषां पुस्तकानां संमेलनेन समग्रं कृत्वा श्रीमतां समस्तभूमण्डलनिवासिनां सज्जनानां पुरतः श्रीपरमेश्वरकृपयाद्य समुपढौकितम्। सोऽयमेतेषामत्युदारचरितानां महामान्यानां पुस्तकप्रदानसाहाय्यकरणेन सर्वजगदुपरि भूयानेवानुग्रहः। अत एतेभ्यो महामान्येभ्यो वयं सहर्षं साभिनंदनमसंख्यान्धन्यवादान्प्रशास्महे।

एवमेव हि विद्याप्रसारसाहाय्यादिसत्कार्ये श्रीमतां सदैव सद्बुद्धिः श्रीशकृपया समुद्यच्छतादित्यभ्यर्थ्यते—

श्रीमतामनन्तोपकारस्मर्ता नम्रसेवकः—क्षेमराज श्रीकृष्णदासः—"श्रीवेंकटेश्वर" स्टीम्—मुद्रणालयाध्यक्षः—मुंबई.

श्रीः ।

# प्रस्तावना.

अथ खलु श्रीमदनन्तसद्गुणगणालंकृतानन्तकोटिब्रह्माण्डमण्डलाखण्डलप्रभृतिवृन्दारकवृन्दवन्दितपदारविन्दनिस्यन्दमानामन्दानन्दसन्दोहमिलिन्दायमानमानसवैखानसमुनिजनजेगीयमानविमलविरुदावलिविराजमानदिव्यलीलावतारसमनुगृहीतसमस्तभक्तजनकामनापरिपूरणनिबद्धपरिकरश्रीपरमेश्वरकृपाप्रसादसमवाप्तविशुद्धशेमुषीविशेषविकसितविद्यावैभवकृतार्थीकृतधरित्रीवलयानां समस्तधरणीतलविराजमानविविधसभ्यसम्भावितसभासभाजितविद्वत्त्वसौजन्यसौशील्यप्रभृतिसद्गुणगणावाप्तप्रसरबुधजनसरस्वतीजेगीयमानविमलयशोवलक्षीकृतदिङ्मण्डलानां परमपूज्यताभाजनसमस्तसज्जनशिरःसरोजसम्भावितनमस्क्रियाप्रभृतिपुरस्क्रियाणां सकलवेदशास्त्रपारावारपारदृश्वनां निखिलकलाकलापकौशल्यशल्योत्खलितदुर्बुद्धिनिबद्धाशयानां समस्तभूमण्डलनिवासिनां सन्मान्यविद्वज्जनानां पुरतोद्य नूतनपरिचयप्रभावपरिस्फुरदभिनवादरातिशयसमुत्कण्ठितसरस्वतीसुप्रसादसमवाप्तसुमङ्गलमयगीर्वाणवाग्देवतामधुरतरविलासप्रोल्लासविकसितैः प्रास्ताविकैः कतिपयैर्वाक्यनिकुरम्बैः सुमङ्गलमयमभिनवोदन्तं निवेदयितुं समुत्कण्ठतेऽस्मदीयंमानसम्. तदत्र समस्तविद्वज्जनानां सुविचारविलसितं चित्तमासमन्ततो विविधविचारणीयप्रस्तुतकार्यकदम्बकादावर्ज्य प्रकृतेऽस्मदीयेऽभिनवोदन्तनिवेदनीये वक्तव्यांशेसमवधानाय कृतक्षणं जायतामिति सप्रश्रयं साञ्जलिबन्धं संप्रार्थ्य सम्प्रति निजवक्तव्यांशमुपोद्घातमुखेन प्रस्तोतुमारभामहे—

अयि समस्तसज्जनाः! विदितमेव खलु सकलवैदिकधर्ममार्गानुयायिनां सदाचारसम्पन्नानां तत्रभवतां भवताम्, यत्—सकलवाङ्मयस्यादिबीजभूतो वेदो भगवद्रूप इति। तदेतदेव किञ्चिदत्र विविच्यते—"तल्लोकपद्मं स उ एव विष्णुः प्रावीविशत्सर्वगुणावभासम्। तस्मिन्स्वयं वेदमयो विधाता स्वयंभुवं यं प्रवदन्ति सोऽभूत्॥" इति भूतिमैत्रेयोक्तेः साक्षाद्विष्णुरूपः स्वयंभूः सर्ववेदोपवेदेतिहासपुराणोपपुराणवार्तादण्डनीत्यान्वीक्षिक्यादिभिः स्वोत्पन्नज्ञानविभूतिभिः सह सदैव विराजमानो वरीवर्ति। तस्मादेव च ज्ञानस्वरूपेणोपादानकारणरूपाद्भगवतो वेदविद्याविर्भावः समभवत्। तदुक्तं श्रीमद्भागवते तृतीयस्कन्धे—"ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजत्। शस्त्रमिज्यां स्तुतिस्तोमं प्रायश्चित्तं व्यधात्क्रमात्॥ आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः। स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैः॥ इतिहासपुराणानि पञ्चमं वेदमीश्वरः। सर्वेभ्य एव वक्त्रेभ्यः ससृजे सर्वदर्शनः॥" इत्यादिना। तांश्च स्वस्वरूपवान्नित्यसिद्धान्वेदान्भगवान्निजाचिन्त्यशक्त्या वैधदीक्षया ब्रह्माणमुपदिदेश। एतदेवोक्तं श्रुतौ—"यो ब्रह्माणं

विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।" इति । अनया श्रुत्या च नित्यसिद्धानेव स्वान्तःस्थितान्वेदान्प्रणवमातृकारूपेण सुसूक्ष्मान्ब्रह्ममुखेभ्य ऋगादिस्थूलरूपेणाविर्भावयामासेति तावदुच्यते । अत एव—"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ॥" इति स्मृतेः "वाचा विरूपनित्यया" इति श्रुतेश्च वेदानां नित्यत्वम् । यच्चोक्तम्—"ऋचः सामानि जज्ञिरे" इति । तत्राप्याविर्भाव एव बोध्यः—जनेः प्रादुर्भावार्थकत्वात् । ननु "शास्त्रयोनित्वात्" इति व्याससूत्रस्य का गतिः ? इति चेत्—तत्र 'योनि'शब्दः प्रमाणार्थक एव बोध्यः, तेन "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्युपनिषद्वेद्यत्वं ब्रह्मणस्तत्सूत्रं प्रशास्ति । किं च—"एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः" इत्यादिश्रुतिरपि वेदानामुत्पत्तिं निराकरोति । श्वासप्रश्वासादिवद्भगवानन्तःस्थितान्वेदाँल्लीलयाऽऽविर्भावितवानित्यस्मिन्नेवार्थे श्रुतेस्तात्पर्यात् । ननु लीलयाऽऽविर्भावकर्तृत्वेऽपि ब्रह्मोपादानता वेदानां जातैव, तथात्वे च तेषां पौरुषेयत्वं कथं न भविष्यति ? न च ब्रह्मकार्यत्वेऽपि तेषां वेदानां पौरुषेयत्वं नामास्ति—पुरुषमात्रजन्यत्वेऽपि पौरुषेयत्वे वर्णानां नित्यत्वेऽप्यानुपूर्वीविशेषस्य पुरुषजन्यत्वान्मीमांसकंमन्यस्यापि वेदाप्रामाण्यप्रसङ्गात्, वर्णनित्यत्वमात्रेणैवापौरुषेयत्वव्यवस्थापने लौकिकास्मदादिवाक्यस्याप्यपौरुषेयत्वप्रसङ्गाच्च । तस्मान्मानान्तरेणार्थमुपलभ्य रचितत्वं पौरुषेयत्वं सापेक्षत्वलक्षणाऽप्रामाण्यप्रयोजकम् । तच्च न वेदेषु, वेदार्थस्य मानान्तरागोचरत्वात् । इदमेव हि श्रुत्या निश्वासदृष्टान्तेन दर्शितम् । तथा हि—निश्वासः पुरुषाज्जायमानोपि न पुरुषचिकीर्षाजन्यः—सुषुप्तावपि तद्दर्शनात् । एवं समग्रो वेदो ज्ञानस्वरूपेणोपादानकारणरूपाद्ब्रह्मणो जायमानोऽपि न ब्रह्मचिकीर्षाजन्यः—वेदार्थस्य वेदातिरिक्तमानाविषयत्वात् । इत्यनया विधया "कारणगुणा हि कार्यगुणानारभन्ते" इति न्यायेन कारणरूपस्य ब्रह्मणो नित्यत्ववत्तदाविर्भूतवेदानामपि नित्यत्वं तावत्सिद्धम् ॥ एतेषां वेदानां च प्रथमतः प्रणवरूपेण सूक्ष्मतयाऽवस्थितिरासीत् । ततः प्रणवतो मातृकाणामाविर्भावोऽभवत् । तास्ता एव मातृकाः, या अक्षरसमाम्नायत्वेनोच्यन्ते । तस्मादक्षरसमाम्नायत एव सर्वा आन्वीक्षिक्यादयोऽष्टादश विद्या अपि ब्रह्मद्वारा सम्भूताः । तदेतदुक्तं श्रीमद्भागवते तृतीयस्कन्धे विदुरं प्रति मैत्रेयेण—"ऋग्यजुःसामाथर्वाख्यान्वेदादीन्मुखतोऽसृजत्" इत्यारभ्य—"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथैव च ।" इत्यादिना "शब्दब्रह्मात्मनस्तात" इत्यन्तेन । तत्रैतासामष्टादशविद्यानां भेदाः प्रत्येकशोऽनन्तशाखाप्रशाखावशादनन्तशः प्रसृताः सन्ति । मुख्यतया ता अष्टादशविद्याश्चाधुनोद्देशादिक्रमेण स्तोकं प्रदर्श्यन्ते । तत्र—ऋग्यजुःसामाथर्वभेदेन वेदाश्चत्वारः, शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिःशास्त्रं छन्दोविचितिरिति षड्वेदाङ्गानि, पुराणानि न्यायविस्तरः मीमांसा धर्मशास्त्रमिति चत्वार्युपांगानि, आयुर्वेदः धनुर्वेदः गान्धर्वम् अर्थशास्त्रमिति चत्वार उपवेदाः, इति मिलित्वा संकलनयाष्टादश विद्या भवन्ति ॥ तत्र च महापुराणेषूपपुराणानामन्तर्भावः, न्यायनये वैशेषिकनयस्यान्तर्भावः, मीमांसायां वेदान्तस्यान्तर्भावः, धर्मशास्त्रे च महाभारतरामायणयोः सांख्यपातञ्जलपाशुपतवैष्णवादीनां चान्तर्भावः । एवमष्टादशविद्यारूपाण्ये

तावन्ति ह्यास्तिकानां धर्मप्रस्थानानि भवन्ति। अन्येषामेकदेशिनां धर्मप्रस्थानानामेष्वेवान्तर्भावः। इत्थमिह साक्षात्परंपरया परमार्थोपयोगिनां वेदोपकरणानामेव प्रस्थानानां भेदो दिङ्मात्रेण दर्शितः॥ अथैतेषां प्रस्थानानां स्वरूपभेदहेतुः प्रयोजनभेदस्तावत्किञ्चिदुच्यते। तत्र धर्मप्रतिपादकमपौरुषेयं वाक्यं वेदः। स च मन्त्रब्राह्मणात्मकः। "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति तत्स्वरूपस्यान्यत्रोक्तेः। तत्र मन्त्रा अनुष्ठानकारकभूतद्रव्यदेवताप्रकाशकाः। ते चर्ग्यजुःसामभेदेन त्रिविधाः। अथर्वणवेदस्यैतेषु त्रिष्वेवान्तर्भूतत्वेन पृथक्कयाऽनभिधानम्। तदेवं निरूपिता मन्त्राः। मन्त्रव्याख्यानरूपं ब्राह्मणमपि त्रिविधम्—विधिरूपमर्थवादरूपं तदुभयविलक्षणं चेति। तत्र विध्यादीनां लक्षणभेदादिविस्तरोऽन्यतोऽवसेयः। तदेतद्ब्राह्मणं च पुनरष्टविधम्। तदुक्तं बृहदारण्यकश्रुतौ—"इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि व्याख्यानान्यनुव्याख्यानान्यस्यैव निश्वसितानि" इति। तत्र कथाप्रतिपादक इतिहासः, विश्वस्य पूर्वावस्थानिरूपकं पुराणम्, उपासनात्मविद्याप्रतिपादिकाः विद्याः, या चोपास्यदेवरहस्यप्रतिपादिका सोपनिषत्, ये मन्त्राः श्लोकवत्पठ्यन्ते ते श्लोकाः, संक्षिप्तार्थप्रतिपादकं सूत्रम्, विस्तृतार्थप्रतिपादकं व्याख्यानम्, व्याख्यानस्यापि स्फुटतापादकमनुव्याख्यानम्। एतान्यष्ट ब्राह्मणानि॥ शिक्षाकल्परहस्यादीनां च वेदसाङ्गतापादकत्वमेव। मन्त्रब्राह्मणयोर्व्याख्येयव्याख्यानताभावोऽस्ति। तच्च "मान्त्रवर्णिकम्" इति सूत्रव्याख्याने प्रतिपादितं वृत्तिकारैः॥ एवं च कर्मकाण्डगुणकाण्डब्रह्मकाण्डात्मको वेदो धर्मार्थकाममोक्षहेतुः। स च हौत्राध्वर्यवौद्गात्रप्रयोगत्रयरूपेण यज्ञकर्मविभागनिर्वाहार्थं भिन्नः। अथर्ववेदस्तु चतुर्थो वेदत्रय्यवशिष्टब्रह्मत्वकर्तव्यताप्रतिपादकोऽपि शान्तिकपौष्टिकाभिचारिकादिकर्मप्रतिपादकत्वेन सर्वोपयोग्येव॥ आचार्यप्रवचनभेदात्प्रतिवेदं भिन्ना भूयस्यः शाखाः सन्ति। तज्ज्ञानं च चरणव्यूहाख्यवैदिकग्रन्थाद्बोध्यम्॥ अथ षण्णां शिक्षादिवेदांगानां च प्रयोजनं तावदुच्यते। तत्र शिक्षाया व्याकरणस्य च सुस्पष्टवर्णोच्चारपदसाधुत्वविज्ञानार्थमुपयोगः। मन्त्रपदार्थज्ञानार्थं निरुक्तस्योपयोगः। तत्र हि निरुक्ते नामाख्यातनिपातोपसर्गभेदेन चतुर्विधं पदजातं निर्वचनेन निरूप्य वैदिकपदानामर्थः प्रदर्शितः। एवमृङ्मन्त्राणां पादबद्धानुष्टुबादिच्छन्दोविशिष्टत्वात्तदज्ञाने च निन्दाश्रवणाच्छन्दोज्ञानार्थं पिङ्गलविरचितायाश्छन्दोविचितेरुपयोगः। एवं वैदिककर्मदर्शादिकालज्ञानार्थमादित्यप्रभृतिप्रणीतस्य ज्यौतिषस्योपयोगः। एवं शाखान्तरीयगुणोपसंहारेण वैदिकानुष्ठानक्रमविशेषविज्ञापनायाश्वलायनसांख्यायनबौधायनापस्तम्बकात्यायनशाट्यायनत्र्याख्यारुण्यादिप्रणीतानां कल्पसूत्राणामुपयोगः॥ एवं निरूपितः षण्णां वेदाङ्गानां प्रयोजनभेदः॥ अथ चतुर्णामुपाङ्गानां प्रयोजनभेदस्तावत्किञ्चिदुच्यते। तत्र सर्गप्रतिसर्गमन्वन्तरवंशवंश्यानुचरितप्रतिपादकानि भगवता बादरायणेन निरूपितानि पुराणानि। तानि च महापुराणोपपुराणोपोपपुराणभेदाच्चतुःपञ्चाशत्। तद्विषये विशेषतोऽत्र पृथग्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः॥ तेषां पुराणानां च सर्गप्रतिसर्गादिज्ञानं सद्धर्माचरणप्रवृत्तिदर्शनमेव सम्यक्प्रयोजनम्। न्याय आन्वीक्षिकी विद्या गौतमप्रणीता। प्रमाणप्रमेयादिषोडशपदार्थानामुद्देशलक्षणपरीक्षाभिस्तत्त्वज्ञानान्निःश्रेयसाधिगम एव तत्प्रयोजनम्। कणादप्रणीतं वैशेषिकं शास्त्रमपि सप्तपदार्थव्युत्पादनैकप्रयोजनम्।

तच्च न्याय एवान्तर्भूतमित्युक्तं प्राक् । मीमांसा द्विविधा—धर्ममीमांसा शारीरिकमीमांसा चेति। तत्र द्वादशाध्यायी धर्ममीमांसा "अथातो धर्मजिज्ञासा" इत्यारभ्य "अन्वाहार्ये च दर्शनात्" इत्यन्ता भगवता जैमिनिना प्रणीता । तस्याश्च धर्मप्रमाणादिविज्ञानपूर्वककर्मकांडव्यवस्थापरिज्ञानायोपयोगः । शारीरिकमीमांसा च "अथातो ब्रह्मजिज्ञासा" इत्यारभ्य "अनावृत्तिः शब्दात्" इत्यन्ता जीवब्रह्मैकत्वसाक्षात्कारहेतुश्रवणाख्यविचारप्रतिपादकान्न्यायानुपदर्शयन्ती भगवता बादरायणेन कृता । तस्याश्च जीवब्रह्मैक्यसाक्षात्कारः प्रयोजनम् । एवं धर्मशास्त्राणि मनुयाज्ञवल्क्यविष्णुयमांगिरोवसिष्ठदक्षशातातपपराशरगौतमशंखलिखितहारीतापस्तम्बोशनोव्यासकात्यायनबृहस्पतिदेवलनारदपैठीनसिप्रभृतिभिः कृतानि वर्णाश्रमधर्मविशेषाणां विभागेन प्रतिपादकानि । वर्णाश्रमधर्मविशेषविज्ञानमेवैषां प्रयोजनम् । एवं व्यासकृतं महाभारतं वाल्मीकिकृतं रामायणं चेतिहासत्वेन प्रसिद्धे । ते च धर्मशास्त्र एवान्तर्भूते इत्युक्तं प्राक् । एवं सर्वदेवसाधारणमन्त्रशास्त्रं श्रीमहादेवब्रह्मगौतमादिप्रणीतं धर्मशास्त्र एवान्तर्भूतम् । स्वेष्टदेवतायाः सकाशात्स्वाभीप्सितफलप्राप्तिस्तत्प्रयोजनम् । एवं निरूपितश्चतुर्णामुपाङ्गानां प्रयोजनभेदः ॥ अथ चतुर्णामुपवेदानां प्रयोजनभेदस्तावत्किञ्चिदुच्यते । वेदचतुष्टयस्य च क्रमेण चत्वार उपवेदाः । तत्रर्ग्वेदोपवेदस्य ब्रह्मप्रजापत्यश्व्यादिनिर्मितस्यायुर्वेदस्याष्टौ स्थानानि भवन्ति—सूत्रं शारीरमैन्द्रियं चिकित्सा निदानं विमानं कल्पं प्रसिद्धिश्चेति । कामशास्त्रस्याप्यायुर्वेद एवान्तर्भावः—सुश्रुतेन वाजीकरणाख्यकामशास्त्रस्याभिधानात् । एवं समस्तस्यायुर्वेदस्य रोगतद्धेतुरोगनिवृत्तितत्साधनज्ञानं प्रयोजनम् । तच्च मोक्षसाधनीभूतशरीरारोग्यसंपादकत्वेन मोक्षोपयोग्येव । एवं यजुर्वेदोपवेदो धनुर्वेदः पादचतुष्टयात्मको विश्वामित्रप्रणीतः । क्षत्रियाणां स्वधर्माचरणं युद्धं दुष्टदस्युचौरादिभ्यः प्रजापालनं च धनुर्वेदस्य प्रयोजनम् । एवं सामवेदोपवेदो गान्धर्वशास्त्रं भरताचार्येण प्रणीतम् । तत्र नृत्यगीतवाद्यभेदेन बहुविधोऽर्थः प्रपञ्चितः । तस्य गान्धर्ववेदस्य देवताराधननिर्विकल्पकसमाध्यादिसिद्धिः प्रयोजनम् । रसशास्त्रं च बहुविधं भरतेनैव प्रणीतं गान्धर्ववेद एवान्तर्भूतम् । तच्च रसरीतिशब्दालङ्कारार्थालङ्कारनायकनायिकादिवर्णनरूपम् । अथाथर्ववेदोपवेदोऽर्थशास्त्रम् । तच्चैहिकसर्वसुखोपलब्धिप्रयोजनम् । अथ च तदनुसार्येव नीतिशास्त्रमपि मन्वादिभिः सूत्रितं कामंदकादिभिः प्रणीतम् । तत्संधिविग्रहादिभेदैरनेकधा । लौकिकसर्वव्यवहारनैपुण्यमेव तत्प्रयोजनम् । एवमश्वशास्त्रं गजशास्त्रं शिल्पशास्त्रं सूपशास्त्रं चतुःषष्टिकलाशास्त्रं चेति नानाशास्त्राणि शालिहोत्रादिनानामुनिभिः प्रणीतानि । तेषां च सर्वेषां लौकिकतत्तत्प्रयोजनभेदो द्रष्टव्यः ॥ एवमष्टादश विद्याः सप्रयोजनाः संक्षेपतो नामनिर्देशेन प्रोक्ताः ॥ एवमेव कपिलमुनिप्रणीतं सांख्यशास्त्रं पतञ्जलिमुनिप्रणीतं योगशास्त्रं भगवता पशुपतिना विनिर्मितं पाशुपतशास्त्रं नारदादिभिः कृतं पाञ्चरात्रादिकं वैष्णवशास्त्रं चेत्येवमादिवेदानुकूलः प्रस्थानभेदः प्रदर्शितः । इत्थं हि वेदराशिमयस्य भगवतो ज्ञानमयं शरीरमित्याख्यायते ॥ एतस्माद्वेदमयाद्ब्रह्मण एव सकलसृष्ट्युत्पत्त्यादिव्यवस्था प्रचलतीति सर्वमनवद्यम् ॥

अथ प्रकृतमनुसरामः ॥ यदुक्तं प्राग्वेदमयस्य भगवत उपाङ्गेषु पुराणस्य परिगणनमिति । तद्विषयेऽधुना किञ्चिद्विवेकः प्रस्तूयते—अथ पुराणंनाम विश्वस्य पूर्वावस्थानिरूपकं व्यासादिमुनिप्रणीतं वेदार्थवर्णनैकपरं पञ्चलक्षणान्वितं शास्त्रम् । "पुराणं पञ्चलक्षणम्" इत्यमरः । पुराणशब्दनिरुक्तिः सोपक्रमोक्ता ब्रह्मांडपुराणे प्रक्रियापादे—"यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः ॥ न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ यस्मात्पुरा ह्यनक्तीदं पुराणं तेन तत्स्मृतम् ॥ निरुक्तमस्य यो वेद सर्वपापैः स मुच्यते ॥" इति । अथ पुराणोपपत्तिस्तावत्किञ्चिन्निर्णीयते । सा चेत्थम्—"ऋचः सामानि च्छदांसि पुराणं यजुषा सह ॥ उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः ॥" अथर्व० (का० ११।९।२४) तथा—"स बृहतीं दिशमनुव्यचलत्तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलन् । इतिहासस्य च वै सपुराणस्य च गाथानां च नाराशंसीनाञ्च प्रियं धाम भवति य एवं वेद" अथर्व० (का० १५ अनु० १ प्र० ६ मं० १२) इति । तथा च सामवेदीयगोपथब्राह्मणे—"एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वयाख्याताः सपुराणाः सस्वराः" इत्यादि गोपथपूर्वभागे (२ प्र०)। तथा च च्छान्दोग्योपनिषदि—"स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदमिति" छान्दोग्योपनिषदि (प्र० ७ ख० १) "एवं विद्वान्वाकोवाक्यमितिहासः पुराणमित्यहरहः स्वाध्यायमधीते त एनं तृप्तास्तर्पयन्ति सर्वैः कामैः सर्वैर्भोगैः" शतपथब्रा० (११।५।७।९) ॥ इत्येवमाद्यनेकप्रमाणपर्यालोचनया ऋग्वेदादिवेदसंमितत्वेन सर्वसम्मान्यताभाजनत्वं पुराणस्य । तच्चेदं पुराणं नाम शास्त्रं पुरैकमेवासीत् । तथा चोक्तं मात्स्यपुराणे त्रिपञ्चाशदध्याये—"पुराणमेकमेवासीत्तदा कल्पान्तरेऽनघ ॥ त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ निर्दग्धेषु च लोकेषु वाजिरूपेण वै मया ॥ अङ्गानि चतुरो वेदान्पुराणं न्यायविस्तरम् ॥ मीमांसां धर्मशास्त्रं च परिगृह्य मया कृतम् ॥ मत्स्यरूपेण च पुनः कल्पादावुदकार्णवे ॥ अशेषमेतत्कथितमुदकान्तर्गतेन च ॥ श्रुत्वा जगाद च मुनीन्प्रति देवश्चतुर्मुखः ॥" इत्याद्युक्त्वाग्रे कैः कैः कांस्कान्प्रति कानिकानि पुराणान्युक्तानीत्युक्तम् ॥ तथा च रेवामाहात्म्ये—"पुराणमेकमेवासीदस्मिन्कल्पान्तरे नृप । त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ स्मृत्वा जगाद च मुनीन्प्रति देवश्चतुर्मुखः । प्रवृत्तीः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप । व्यासरूपं विभुः कृत्वा संहरेत्स युगेयुगे ॥ चतुर्लक्षप्रमाणेन द्वापरेद्वापरे सदा । तदष्टादशधा कृत्वा भूलोकेऽस्मिन्प्रभाष्यते ॥ अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥ तदर्थोऽत्र चतुर्लक्षसंक्षेपेण निवेशितः । पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ॥" इत्येवमुक्त्वाग्रे पुराणनामधेयादीन्युक्तानि । किञ्च पाद्मपुराणे सृष्टिखण्डे प्रथमेऽध्याये—"प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः । कलिनाऽग्रहणं दृष्ट्वा पुराणस्य तदा विभुः । व्यासरूपी तदा ब्रह्मा संग्रहार्थं युगेयुगे । चतुर्लक्षप्रमाणेन द्वापरेद्वापरे विभुः । तदष्टादशधा कृत्वा भूलोकेऽस्मिन्प्रकाशयत् ॥" इत्युक्तम् । अपि च बृहन्नारदीये मरीचिं प्रति ब्रह्मणो

वचनम्—"ब्रह्मोवाच—शृणु वत्स प्रवक्ष्यामि पुराणानां समुच्चयम् ॥ यस्मिञ्ज्ञाते भवेज्ज्ञातं वाङ्मयं सचराचरम् ॥ पुराणमेकमेवासीत्सर्वकल्पेषु मानद ॥ चतुर्वर्गस्य बीजस्य शतकोटिप्रविस्तरम् ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ॥ हरिर्व्यासस्वरूपेण जायते च युगेयुगे ॥ चतुर्लक्षप्रमाणेन द्वापरेद्वापरे सदा ॥ तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ॥ अद्यापि देवलोके तु शतकोटिप्रविस्तरम् ॥ अस्त्येव तस्य सारस्तु चतुर्लक्षेण वर्ण्यते ॥" इत्युक्त्वाग्रेऽष्टादशपुराणनामसंख्याविषयादि समुपवर्णितम् ॥ अथ च येकेचनाधुनातना अदृष्टशास्त्रयथार्थतत्त्वा अल्पज्ञानेन पण्डितंमन्यमानाः प्रत्यवतिष्ठन्ते—पुराणेषु रामकृष्णाद्यवतारकथानां केवलं व्यासकपोलकल्पितत्वमेव, न तु वास्तविकतया प्रामाणिकत्वम्—इति । तदेतत्तेषामदूरदर्शित्वमेवेति सुस्पष्टं वयं ब्रूमः । पुराणप्रोक्तानां भगवतः सगुणावताराणां वेदमंत्रादिष्वनागताख्यानत्वेन वर्णितत्वात्सर्वथा सप्रमाणत्वमेवेति समस्तास्तिकजनानां सुतरां सुदृढतरो विश्वासो वरीवर्ति । अत एव कानिचित्तद्विषये वेदमंत्रादिप्रमाणानि प्रदर्श्यन्ते । तत्र—वराहावतारः—तैत्तिरीयसंहितायाम्—"आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्स इमामपश्यत्तं वाराहो भूत्वाहरत्", "स वराहो रूपं कृत्वोपन्यमज्जत स पृथिवीमध आर्छत्" इति तैत्तिरीयब्राह्मणे । "इतीयतीह वा इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वाराह उज्जघान सोऽस्याः पतिः" इति शतपथब्राह्मणे (१४।१।२।११)। परशुरामावतारः—ऐतरेयब्राह्मणे—"प्रोवाच रामो भार्गवेयो विश्वान्तरायः" इति । कृष्णावतारः—छान्दोग्ये—"कृष्णाय देवकीपुत्राय" इति । तैत्तिरीयारण्यके च—"नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥" इति । वामनावतारः—ऋग्वेदे विष्णुसूक्ते—"विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥ प्र तद्विष्णुस्तव ते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥२॥" इति । तस्मिन्नेव सूक्ते—"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूळ्हमस्य पांसुरे ॥१॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ २ ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ ३ ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ४ ॥" इति । शतपथब्राह्मणे—"देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे ततो देवा अनुव्यामिवासुरथ हासुरा मेनिरेऽस्माकमेवेदं भुवनमिति ॥ १ ॥ ते होचुः हन्तेमां पृथिवीं विभजामहै तां विभज्योपजीवामेति तामौक्ष्णैश्चर्मभिः पश्चात्प्राञ्चो विभजमाना अभीयुः ॥ २ ॥ तद्वै देवाः शुश्रुवुः विभजन्ते ह वा इमामसुराः पृथिवीं प्रेतनदेष्यामो यत्रेमामसुरा विभजन्ते के ततः स्याम यदस्यै न भजेमहीति ते यज्ञमेव विष्णुं पुरस्कृत्येयुः ॥ ३ ॥ ते होचुः अनु नोऽस्यां पृथिव्यामाभजतास्त्वेव नोऽप्यस्यां भाग इति । ते हासुरा असूयंत इवोचुर्यावदेवैष विष्णुरभिशेते तावद्वो दद्म इति ॥ ४ ॥ वामनो ह विष्णुरास तद्देवा न जिहीडिरे महद्वै नोऽदुर्ये नो यज्ञसंमितमदुरिति ॥ ५ ॥ ते प्राञ्चं विष्णुं निपाद्य च्छन्दोभिरभितः पर्यगृह्णन्गायत्रेण त्वा च्छन्दसा परिगृह्णामीति दक्षिणतस्त्रैष्टुभेन त्वा च्छन्दसा

परिगृह्णामीति पश्चाज्जागतेन त्वा च्छन्दसा परिगृह्णामीत्यानुष्टुभेन च्छन्दसा त्वा परिगृह्णामीत्युत्तरतः ॥ ६ ॥ तं छन्दोभिरभितः परिगृह्याग्निं पुरस्तात्समाधाय तेनार्चन्त श्राम्यन्तश्चेरुस्तेनेमाᳬंसर्वां पृथिवीᳬंसमविन्दन्त ।" इति श० (१।२।५—७)। रुद्रस्य वर्णनम्—अथर्ववेदे (११ काण्डे २ प्रपाठके ६६) मन्त्रे—"नमस्ते रुद्र मन्यव उतो त इषवे नमः । बाहुभ्यामुत ते नमः ॥" इति । "भवाशर्वौ मृडतं माभियातं भूतपती पशुपती नमो वाम् । प्रतिहितामायतां विस्राष्टं मा नो हिंसिष्टं द्विपदो मा चतुष्पदः ॥ १ ॥ नमस्ते रुद्र कृण्मः सहस्राक्षायामर्त्य ३ । चतुर्नमो अष्टकृत्वो भवाय दशकृत्वः पशुपते नमस्ते ॥ ९ ॥" इति । तैत्तिरीयारण्यके—"नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमोनमः॥" इति । देव्या वर्णनम्—ऋग्वेदेऽथर्ववेदे च—"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा ॥ १ ॥ अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ । अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश ॥ २ ॥" इत्युपक्रम्य—"यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं सुमेधाम् ॥" इत्यन्तम् । गणपतेर्वर्णनम्—ऋग्वेदे—"गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥" इति । शुक्लयजुर्वेदे च—"गणानां त्वा गणपतिᳬंहवामहे प्रियाणां त्वा प्रियपतिᳬंहवामहे निधीनां त्वा निधिपतिᳬंहवामहे वसो मम । आहमजानि गर्भधमा त्वमजासि गर्भधम् ॥" इति । सूर्यस्य वर्णनम्—"उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् । हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ॥ अथो हारिद्रवेषु मे हरिमाणं निदध्मसि ॥ उदगादयमादित्यो विश्वेन सहसा सह ॥ द्विषन्तं मह्यं रंधयन्मो अहं द्विषते रधम् ॥" इति । एवमन्येषामपि देवानां वर्णनं वेदमन्त्रादिषु संक्षिप्ततया यत्रतत्र कृतमस्ति । येन च तत्तन्मन्त्रैस्तत्तद्देवतानां पूजाप्रार्थनादिप्रयोगो निखिलयाज्ञिकैः शश्वत्क्रियमाणो दरीदृश्यते याज्ञिकशान्तिकपौष्टिकादिकर्मसु । यतो वेदमन्त्राद्युक्तानां देवानां चरित्राणि समुपबृंह्य पुराणेषूपवर्णितानि ततो न पुराणोक्तदेवताकथानाममूलत्वमिति सुधीभिः सुष्ठ्ववगन्तव्यम् । तथा च श्रीमच्छंकराचार्यकृते ग्रन्थे शारीरिकभाष्येऽप्युक्तम्—"इतिहासपुराणमपि व्याख्यातेन मार्गेण सम्भवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुं प्रत्यक्षामूलमपि सम्भवति, भवति हि अस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम् । तथा च व्यासादयो देवताभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते ॥ यस्तु ब्रूयादिदानीन्तनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमपि स जगद्वैचित्र्यं प्रतिषेधेत्, इदानीमिव च नान्यदापि सार्वभौमक्षत्रियोऽस्तीति ब्रूयात्, ततश्च राजसूयादिचोदना उपरुन्ध्यात्, इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीयात्, ततश्च व्यवस्थाविधायिशास्त्रमनर्थकं स्यात्, तस्माद्धर्मोत्कर्षवशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते ॥ अपि च स्मरन्ति—"स्वाध्यायादिष्टदेवतासंप्रयोगः" इत्यादि । योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलकः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योग

माहात्म्यं प्रत्याख्यापयति "पृथिव्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥" इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम्, तस्मात्समूलमितिहासपुराणम्" इति शारीरिकभाष्यम् ॥ ( १ । ३ । ३३ । ) अथ च स्कांदे महापुराणे पञ्चमेऽवन्तिकाखण्डे तृतीये रेवाखण्डे शौनकादीन्प्रति सूतोक्तिरित्थम्—"वेदोपवेदवेदाङ्गादीन्यभिव्यस्य पूरकः । अष्टादशपुराणानां वक्ता सत्यवतीसुतः ॥ तं नमस्कृत्य वक्ष्यामि पुराणानि यथाक्रमम् । येषामभिव्याहरणादभिवृद्धिर्नृपायुषोः ॥ श्रुतिः स्मृतिश्च विप्राणां चक्षुषी परिकीर्तिते । काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ॥ श्रुतिस्मृतिपुराणानि विदुषां लोचनत्रयम् । यस्त्रिभिर्नयनैः पश्येत्सोंऽशो माहेश्वरः स्मृतः ॥ आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता । शौनकीया च पौराणी धर्मशास्त्रात्मिका च या ॥ तिस्रो विद्या इमा मुख्याः सर्वशास्त्रविनिर्णये । पुराणं पञ्चमो वेद इति ब्रह्मानुशासनम् ॥ यो न वेद पुराणं हि न स वेदात्र किञ्चन ॥ कतमः स हि धर्मोऽस्ति किं वा ज्ञानं तथाविधम् । अन्यद्वा तत्किमत्राह पुराणे यन्न दृश्यते ॥ वेदाः प्रतिष्ठिताः पूर्वं पुराणे नात्र संशयः ॥ बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ इतिहासपुराणैश्च कृतोऽयं निश्चयः पुरा ॥ आत्मा पुराणं वेदानां पृथगङ्गानि तानि षट् ॥ यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल ॥ उभाभ्यां यत्तु दृष्टं हि तत्पुराणेषु गीयते ॥ पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणः स्मृतम् ॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीदस्मिन्कल्पान्तरे मुने ॥ त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ स्मृत्वा जगाद च मुनीन्प्रति देवश्चतुर्मुखः ॥ प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ॥ कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो मुने । व्यासरूपं विभुः कृत्वा संहरेत्स युगेयुगे ॥ अष्टलक्षप्रमाणेन[1] द्वापरे द्वापरे सदा । तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रभाषते ॥ अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥" इति ॥ ततः कोपराधः परमपूज्यश्रीव्यासमहर्षेराहोस्विदयथार्थवेदार्थानभिज्ञानां पण्डितंमन्यानामाधुनिकानामल्पश्रुतानामिति निर्मत्सराः सन्त एव विभावयन्तु । हन्त तत एवोक्तम्—"बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति" इति । अतः समस्तपुराणानां वेदार्थोपबृंहकत्वेन सर्वथा प्रामाणिकत्वमेव । इत्थं व्यासोक्तपुराणानां कपोलकल्पितत्वं वल्गमानानामल्पश्रुतानां कपोलस्तु चपेटिकया निर्भिन्न इति हेतोः समस्ता आस्तिकजनाः स्वस्थतया विश्वसन्तु समस्तेषु पुराणेषु तदुक्तदेवतादिषु चेति सहर्षं सर्वानास्तिकजनान्वयं सप्रांजलं प्रोत्साहयामः । किं चाग्नेयपुराणे वसिष्ठाग्निसंवादे तु—"पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा स्मृतम् ॥ अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ " इत्युक्तम् । एतेन ह्युपदेशः पूर्वं पुराणस्य पश्चाद्वेदानां मुनिभ्यो ब्रह्मणा कृत इति व्यवस्था सुधीभिरत्रार्थेऽनुसंधेया । अत एवानुपनीतान्ब्राह्मणादित्रैवर्णिकबालकानुप

१ अष्टलक्षप्रमाणेन—महापुराणोपपुराणभेदात्प्रत्येकं चतुश्चतुर्लक्षविभागो बोध्यः ।

नयनात्प्राक्पौराणिकस्तोत्रपाठाद्युपदिश्य पश्चादुपनयनोत्तरं वेदप्रपाठनं क्रियते । तदेतच्छ्रेष्ठानुविधानंनाम परम्परया सर्वतः प्रचलतीति सुविदितमेव सुधियाम् ॥ एतेन पुराणानां वेदादित्वेन मान्यतायां सत्यामपि पुराणानामप्रामाणिकत्वं मन्यमाना आधुनिकाः पण्डितंमन्या ज्ञानलवदुर्विदग्धाः प्रत्युक्ताः ॥ अथ तत्र सामान्यतः पुराणस्य पञ्च लक्षणान्युच्यन्ते—सर्गः प्रतिसर्गः वंशः मन्वन्तरं वंश्यानुचरितं चेति । क्वचिच्च महापुराणस्य दश लक्षणान्युक्तानि ॥ तानि यथा—सर्गः १ प्रतिसर्गः २ वृत्तिः ३ रक्षा ४ अन्तरम् ५ वंशः ६ वंश्यानुचरितं ७ संस्था ८ हेतुः ९ अपाश्रयः १० इति । तत्र महापुराणान्यष्टादश । तेषामभिधाः संख्याश्चोक्ताः श्रीमद्भागवते द्वादशस्कन्धे । ताश्चेत्थम्—प्रथमं ब्राह्मम् १०००० द्वितीयं पाद्मम् ५५००० तृतीयं वैष्णवम् २३००० चतुर्थं शैवम् २४००० पञ्चमं भागवतम् १८००० षष्ठं नारदीयम् २५००० सप्तमं मार्कंडेयम् ९००० अष्टममाग्नेयम् १५४०० नवमं भविष्यम् १४५०० दशमं ब्रह्मवैवर्तम् १८००० एकादशं लैङ्गम् ११००० द्वादशं वाराहम् २४००० त्रयोदशं स्कान्दम् ८११०० चतुर्दशं वामनम् १०००० पञ्चदशं कौर्मम् १७००० षोडशं मात्स्यम् १४००० सप्तदशं गारुडम् १९००० अष्टादशं ब्रह्माण्डम् १२००० एतेषामष्टादशमहापुराणानां समुदायेन चतुर्लक्षश्लोकाः ४००००० सन्ति । अपि च ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ( १३२ ) अध्याये पुराणविषयमुपक्रम्य कृतमेतद्विवरणं द्रष्टव्यम् । यथा च तत्रोक्तम्—"सूत उवाच—विस्तराणि पुराणानि चेतिहासश्च शौनक ॥ संहितां पञ्चरात्राणि कथयामि यथागमम् ॥ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंश्यानुचरितं विप्र पुराणं पञ्चलक्षणम् ॥ एतदुपपुराणानां लक्षणं च विदुर्बुधाः ॥ महतां च पुराणानां लक्षणं कथयामि ते ॥ सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषां च पालनम् ॥ कर्मणां वासना वार्ता मनूनां च क्रमेण च ॥ वर्णनं प्रलयानां च मोक्षस्य च निरूपणम् ॥ उत्कीर्तनं हरेरेव देवानां च पृथक्पृथक् ॥ दशाधिकं लक्षणं च महतां परिकीर्तितम् ॥ संख्यानं च पुराणानां निबोध कथयामि ते ॥ परं ब्राह्मपुराणं च सहस्राणां दशैव च ॥ पंचोनपष्टिसाहस्रं पाद्ममेवं प्रकीर्तितम् ॥ त्रयोविंशतिसाहस्रं वैष्णवं च विदुर्बुधाः ॥ चतुर्विंशतिसाहस्रं शैवमेव निरूपितम् ॥ ग्रन्थाष्टादशसाहस्रं श्रीमद्भागवतं विदुः ॥ पञ्चविंशतिसाहस्रं नारदीयं प्रकीर्तितम् ॥ मार्कण्डं नवसाहस्रं पुराणं पंडिता विदुः ॥ चतुःशताधिकं पञ्चदशसाहस्रमेव च ॥ परमग्निपुराणं च रुचिरं परिकीर्तितम् ॥ चतुर्दशसहस्राणि परं पंच शताधिकम् ॥ पुराणप्रवरं चैव भविष्यं परिकीर्तितम् ॥ अष्टादशसहस्रं च ब्रह्मवैवर्तमीरितम् ॥ सर्वेषां च पुराणानां सारमेव विदुर्बुधाः ॥ एकादशसहस्रं च परं लिङ्ग पुराणकम् ॥ चतुर्विंशतिसाहस्रं वाराहं परिकीर्तितम् ॥ एकाशीतिसहस्रं च परमेव शताधिकम् ॥ वरं स्कान्दपुराणं च सद्भिरेवं निरूपितम् ॥ वामनं दशसाहस्रं कौर्मं सप्तदशैव तु ॥ मात्स्यं चतुर्दशं प्रोक्तं पुराणं पंडितैस्तथा ॥ ऊनविंशतिसाहस्रं गारुडं परिकीर्तितम् ॥ परं द्वादशसाहस्रं ब्रह्माण्डं परिकीर्तितम् ॥ एवं पुराणसंख्यानं चतु

लक्षमुदाहृतम् ॥ अष्टादशपुराणानामेवमेव विदुर्बुधाः ॥ एवं चोपपुराणानामष्टादश प्रकीर्तिताः ॥ इतिहासो भारतं च वाल्मीकं काव्यमेव च ॥ पंचकं पांचरात्राणां कृष्णमाहात्म्यपूर्वकम् ॥ वासिष्ठं नारदीयं च कापिलं गौतमीयकम् ॥ परं सनत्कुमारीयं पांचरात्रं च पंचकम् ॥ पंचकं संहितानां च कृष्णभक्तिसमन्वितम् ॥ ब्रह्मणश्च शिवस्यापि प्रह्लादस्य तथैव च ॥ गौतमस्य कुमारस्य संहिताः परिकीर्तिताः ॥" इति । तथा चात्रैव स्कान्दे प्रभासखण्डे प्रभासक्षेत्रमाहात्म्ये द्वितीयेऽध्याये—"पुरा तपश्चचारोग्रममराणां पितामहः ॥ आविर्भूतास्ततो वेदाः सषडङ्गपदक्रमाः ॥ ततः पुराणमखिलं सर्वशास्त्रमयं ध्रुवम् ॥ नित्यशब्दमयं पुण्यं शतकोटिप्रविस्तरम् ॥ निर्गतं ब्रह्मणो वक्त्राद्ब्राह्मं पाद्मं च वैष्णवम् ॥ शैवं भागवतं चैव भविष्यं नारदीयकम् ॥ मार्कंडेयमथाग्नेयं ब्रह्मवैवर्तमेव च ॥ लैङ्गं तथा च वाराहं स्कान्दं वामनमेव च ॥ कौर्म्यं मात्स्यं गारुडं च वायवीयमनन्तरम् ॥ अष्टादशं समुद्दिष्टं सर्वपातकनाशकम् ॥ एकमेव पुरा ह्यासीद्ब्रह्मांडं शतकोटिधा ॥ तदष्टादशधा कृत्वा वेदव्यासो युगेयुगे ॥ प्रख्यापयति लोकेऽस्मिन्साक्षान्नारायणांशजः ॥" इति । पाद्मपुराणे तु—"निस्ताराय तु लोकानां स्वयं नारायणः प्रभुः ॥ व्यासरूपेण कृतवान्पुराणानि महीतले ॥ पठनाच्छ्रवणाद्येषां नृणां पापक्षयो भवेत् ॥ धर्माधर्मपरिज्ञानं सदाचारप्रवर्तनम् ॥ गतिश्च परमा तद्भक्तिर्भगवति प्रभौ ॥ तानि ते कथयिष्यामि सप्रमाणानि भूतले ॥ पुराणानि चतुर्लक्षाण्येतानि धरणीतले ॥ तथा महाभारतं च लक्षसंख्यं प्रकीर्तितम् ॥ आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः ॥ पुराणसंहितां चक्रे पुराणार्थविशारदः ॥ प्रख्यातो व्यासशिष्योऽभूत्सूतो वै लोमहर्षणः ॥ पुराणसंहितां तस्मै ददौ व्यासो महामुनिः ॥ सुमतिश्चाग्निवर्चाश्च मित्रायुः शांशपायनः ॥ अकृतव्रणोऽथ सावर्णिः षट्छिष्यास्तस्य चाभवन् ॥" इति । तत्रैव पाद्मोत्तरखण्डे पुराणानां सात्त्विकत्वादिगुणविवेचनं चेत्थं कृतम्—"मात्स्यं कौर्म्यं तथा लैङ्गं शैवं स्कान्दं तथैव च ॥ आग्नेयं च षडेतानि तामसानि निबोधत ॥ वैष्णवं नारदीयं च तथा भागवतं शुभम् ॥ गारुडं च तथा पाद्मं वाराहं शुभदर्शने ॥ सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै ॥ ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च ॥ भविष्यं वामनं ब्राह्मं राजसानि निबोधत ॥" इति । एतेन परिगणनेनैतेषां शिवादिदेवताविशेषमाहात्म्यपरत्वं ध्वन्यते ॥ न तूत्तमाधमफलत्वे तात्पर्यम् ॥ यत्तु कैश्चित्पूर्वोक्तपाद्मपुराणमध्ये स्वयं कृतं पद्यं प्रक्षिप्योच्यते—"सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः ॥ तथैव तामसा देवि निरयप्राप्तिहेतवः ॥" इति, तत्तेषां तुच्छबुद्धीनां दुर्विचारविलसितमेवावगन्तव्यम् । सात्त्विकाइत्यादिपुंस्त्वनिर्देशेनैव विशेष्यीभूतपुराणेषु संबंधाभावात्प्रक्षिप्तत्वं स्फुटमेव प्रतीयते तत्कपोलकल्पितस्योपारितनपद्यस्य । तांस्तुच्छबुद्धीनुद्दिश्योक्तं भविष्यपुराणे—"ब्रह्माणं केशवं रुद्रं भेदभावेन मोहिताः । पश्यन्त्येकं न जानन्ति पाखण्डोपहता जनाः ॥" इति । परमार्थत एकस्यैव भगवतोऽनेकनाम

१ भेदाः—इति शेषः । २ "स्वयंदृष्टार्थकथनं प्राहुराख्यानकं बुधाः । श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते ॥" इत्याख्यानोपाख्यानलक्षणे ।

रूपैः प्रसिद्धिरस्ति न वस्तुतो भेदोऽस्तीति तूक्तं श्रुतौ । तथा च श्रुतिः—"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" इति ऋग्वेदे ( मं० १ । व०२२ सू० १६४ । मं० ४६ ) अष्टादशमहापुराणेषु मध्ये कतिपुराणैः के देवा मुख्यत्वेन प्रतिपादितास्तदुक्तं स्कान्दे महापुराणे केदारखण्डे प्रथमेऽध्याये—"अष्टादशपुराणेषु दशभिर्गीयते शिवः ॥ चतुर्भिर्भगवान्ब्रह्मा द्वाभ्यां देवी तथा हरिः ॥" इति । तथा तत्तत्पुराणप्रतिपाद्यानां तत्तद्विशिष्टदेवतानां निर्णयः प्रोक्तः शिवरहस्ये सम्भवकाण्डे—"तत्र शैवानि शैवं च भविष्यं च द्विजोत्तमाः ॥ मार्कण्डेयं तथा लैङ्गं वाराहं स्कान्दमेव च ॥ मात्स्यमन्यत्तथा कौर्मं वामनं च मुनीश्वराः । ब्रह्माण्डं च दशेमानि त्रीणि लक्षाणि संख्यया ॥ ग्रन्थानां महिमा सर्वैः शिवस्यैव प्रकाश्यते । असाधारणया मूर्त्या नाम्नाऽसाधारणेन च ॥ वदन्ति शिवमेतानि शिवस्तेषु प्रकाश्यते ॥ विष्णोर्हि वैष्णवं तच्च तथा भागवतं विदुः ॥ नारदीयं पुराणं च गारुडं वैष्णवं विदुः ॥ ब्राह्मं पाद्मं ब्रह्मणो द्वे अग्नेराग्नेयमेककम् । सवितुर्ब्रह्मवैवर्तमेवमष्टादश स्मृतम् । चत्वारि वैष्णवानीशविष्ण्वोः साम्यपराणि वै ॥ ब्रह्मादिभ्योऽधिकं विष्णुं प्रवदन्ति जगत्पतिम् ॥ ब्रह्मविष्णुमहेशानां साम्यं ब्राह्मे पुराणके ॥ अन्येषामधिकं देवं ब्रह्माणं जगतां पतिम् । प्रवदन्ति दिनाधीशं ब्रह्मविष्णुशिवात्मकम् ॥" इति । एवमेतेषां महापुराणानां संक्षेपतो वर्णितः संघट्टः ॥ एवमुपपुराणान्यप्यष्टादश भवन्ति । तान्युक्तानि गारुडे (२२७) अध्याये । यथा—"आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥ दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥ कापिलं वामनं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ॥ माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम् ॥ पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥" इति । इतोऽन्यान्युपोपपुराणान्यपि गाणेशमौद्गलदेवीपुराणकल्किपुराणादिपुराणप्रभृतीन्यष्टादश सन्तीति ॥ सोऽयं प्रोक्तश्चतुष्पञ्चाशत्पुराणसमुदायः ।

अथ यानि चोक्तान्यष्टादशमहापुराणानि तत्र प्रस्तुतं तावत्किञ्चिद्विविच्यते—अयि सज्जनमहोदयाः ! अस्माभिश्चिरंतनं समयमारभ्याद्ययावदनेकदेशदेशान्तरस्थितेभ्यो महाभाग्यशालिनां समस्तराजवर्याणां विद्वज्जनानां राजसन्मान्यानामग्रहारसंभावितसज्जनानां चातिप्राचीनसरस्वतीभाण्डागारेभ्यो हस्तलिखितान्यतिप्राचीनानि वेदशास्त्रपुराणधर्मशास्त्रयोगवैशेषिकसांख्यव्रतकथेतिहासकर्मकांडव्याकरणन्यायच्छंदोज्यौतिषकाव्यालंकारनाटकोपन्यासचंपूकोशवैद्यकमंत्रस्तोत्रसकलसांप्रदायिकग्रन्थान्महता परिश्रमेण भूयसा द्रव्यव्ययेन च संपाद्यानेकप्रत्यादर्शपुस्तकसंमेलनपुरःसरं शास्त्रिजनद्वारा संपरिशोध्य चास्मदीये "श्रीवेङ्कटेश्वर" मुद्रणालये सुपुष्टचिक्कणपत्रेषु सुमनोहरसीसकाक्षरैः संमुद्र्य सर्वेषां सुखलाभायात्यल्पमौल्येन प्रसिद्धिं नीतानीत्यद्ययावदस्मदीय"श्रीवेङ्कटेश्वर"मुद्रणालयपरिचितानां समस्तसज्जनानां सुविदितमेवैतत् । एवमस्मदीयेऽद्ययावदविरतमसंख्यातग्रन्थमुद्रणकार्यक्रमे प्रचलिते सति बहुवर्षेभ्यः प्रागेकस्मिन्समये पुराणग्रन्थपर्यालोचनायामस्माभिः समवधाने क्रियमाणे—श्रीमन्मा

ण्डेयमहापुराणस्थम्—"अष्टादशपुराणानां नामधेयानि यः पठेत् ॥ त्रिसंध्यं जपते यस्तु सोऽश्वमेधफलं लभेत् ॥" इति पद्यं, तथा च भविष्यपुराणस्थम्—"ये त्वेतानि समस्तानि पुराणानि च जानते ॥ भारतं च महाबाहो ते सर्वज्ञा मता नृणाम् ॥" इति पद्यं चास्माकं दृष्टिपथं समायासीत् । एतत्पद्यद्वया वलोकनेन चास्माकं श्रीपरमेश्वरस्य प्रेरणया चाकस्मादेषा बुद्धिपरिस्फूर्तिरजायत—'सर्वेषां भूतलनिवासिनामास्तिकजनानां सकलैहिकामुष्मिकसत्फलोदर्कसमुपल ब्धये समस्तपुराणज्ञानोपलब्धिरत्यावश्यकी' इति । परंतु समस्तपुराणग्रन्थोपलब्ध्यधीना समस्तपुराणज्ञानोपलब्धिरिति तु सार्वजनीनम् । ततो बहुकालं विचारान्ते—यद्येतानि समग्राष्टादशमहापुराणानि संमुद्र्यास्माभिः प्रकाशयिष्यन्त तर्हि नः प्राचीनसमस्तग्रन्थप्रकाशनप्रयत्नसाफल्यं समजनिष्यतेति सहसास्मदीये मनसि समुत्कण्ठा समुद्भूत् । अथ चास्माभिस्तदानीमेवाष्टादशमहापुराणपुस्तकमुद्रणार्थं दृढतरः संकल्पोऽकारि । ततोऽस्माभिर्बद्धपरिकरीभूय महान्तं प्रयत्नमारचय्य यतस्ततः स्थितेभ्यः प्राचीनसरस्वतीभाण्डागारेभ्यस्तेभ्यस्तेभ्योऽत्युदारचरितेभ्यस्तत्तत्सरस्वतीभाण्डागाराधिपतिभ्यो महामान्येभ्यो महाभ्युदयेभ्यस्तत्रतत्र यथोपलब्धानि पूर्णान्यपूर्णानि खण्डितानि त्रुटितान्यधिकानि न्यूनानि सटीकान्यटीकानि जीर्णलिखितानि नवलिखितानि शीर्णपत्राणि यथातथा व्यस्तानि समस्तानि भागशः खण्डशः स्थितानि समस्तानां पुराणानां पुस्तकानि भूयसा परिश्रमेण महता द्रव्यव्ययेन कथंकारं संगृह्य संपादितानि । एतावांश्च पुस्तकसंपादनप्रयत्नोऽद्ययावद्विंशतिवर्षैः प्रतिक्षणं प्रचलता प्रक्रमेण परमेश्वरानुग्रहवशात्सफलताप्रायतां प्रापत् । ततश्चास्माभिस्तानि यतस्ततः समुपलभ्य संपादितानि महापुराणपुस्तकानि संगृह्य विविधशास्त्रविद्याविशारदैर्बहुभिः शास्त्रिजनैः सम्यक्परिशोध्य तद्गतगूढविषयविशेषपरिस्फोरणार्थाभिष्टिप्पणीभिः समलंकृत्य च पुष्टचिक्कणपत्रेषु सुन्दराक्षरैः स्वकीये "श्रीवेङ्कटेश्वर" मुद्रणालये संमुद्र्य प्रकाशयितुमुपक्रान्तानि । एवं प्रचलता प्रक्रमेणाद्ययावत्तानि ब्राह्म—पाद्म—शैव—भागवत—बृहन्नारदीय—मार्कंडेय—आग्नेय—भविष्य—ब्रह्मवैवर्त—लैङ्ग—वाराह—वामन—कौर्म—मात्स्य—गारुड—ब्रह्माण्डेत्येतानि षोडश—एवमन्यानि वायवीयपुराणदेवीभागवतप्रभृतीनि प्रमाणान्तरेण परिगणितानि महापुराणानि तथान्यानि कतिपयानि सांबपुराणनरसिंहपुराणादीन्युपपुराणानि तथाचादिपुराणकालिकापुराणकल्किपुराणप्रभृतीन्युपोपपुराणानि च मुद्रयित्वा प्रकाशितानि सन्ति । एवं क्रमेणाद्ययावन्महापुराणपुस्तकानि संमुद्र्य श्रीवेङ्कटेश्वरमुद्रणालयात्सर्वभूमण्डले प्रकाशितानि सन्ति । इदानीं महापुराणमुद्रणप्रक्रमेण चैतत्स्कान्दंनाम महापुराणं महता प्रयासेन बहुभ्यः स्थलेभ्यः श्रीमन्महामान्यानां सज्जनवरिष्ठानां महाभ्युदयानां प्राचीनसरस्वतीभाण्डागारेभ्यः सम्पाद्य संगृहीतम् । तस्यैतस्य स्कान्दमहापुराणस्याष्टौ प्रत्यादर्शपुस्तकानि येषांयेषामुदारचरितानां सज्जनशिरोमणीनां प्राचीनसरस्वतीभाण्डागारेभ्योऽस्माकं मिलितानि तेषां शुभमङ्गलनामधेयानि च सधन्यवादं पृथगत्र प्रथमपृष्ठ एतस्याः प्रस्तावनाया ऊर्ध्वभागे प्रदर्शितान्येव सन्ति ॥

# अथ स्कान्दमहापुराणविषयकसन्देहनिरासः ।

अथैतत्स्कान्दमहापुराणसमवगाहनसमुद्भूतविषयविशेषविवेचनेनैतस्य स्कान्दमहापुराणस्य सर्वेषां सुदृढपरिचयार्थं स्कान्दपुराणविषयकविविधभेदजन्यदुर्निवारसन्देहसन्दोहनिरासार्थं च समस्तसज्जनानां पुरतः किञ्चित्प्रास्ताविकं तावदिदानीं प्रस्तूयते—

अयि महामान्यसज्जनशिरोमणयः ! स्कांदंनाम पुराणं तावद्द्विविधम्—एकं स्कांदं महापुराणं, द्वितीयं च स्कांदंनामोपपुराणम् । तत्राष्टादशमहापुराणेषु यत्त्रयोदशं स्कांदंनाम महापुराणं परिगणितं तदेतदेव—यस्यैषा प्रस्तावनाऽधुना श्रीमद्भिः पर्यालोच्य कृतार्थीक्रियते । तत्र द्विविधत्वं च स्कांदपुराणस्य प्रथमतो विविच्यते । तदित्थम् । महापुराणपरिगणनायां ब्रह्मवैवर्ते श्रीकृष्णजन्मखंडे (१३२) अध्याये—"परं ब्राह्मपुराणं च सहस्राणां दशैव च ॥ पंचोनषष्टिसाहस्रं पाद्ममेव प्रकीर्तितम् ॥" इत्यारभ्य त्रयोदशं स्कांदमहापुराणं समुद्दिश्योक्तम्—"एकाशीतिसहस्रं च परमेव शताधिकम् ॥ वरं स्कांदपुराणं च सद्भिरेवं निरूपितम् ॥" इति । तथा च बृहन्नारदीयपुराणे महापुराणसंख्यानुक्रममुपक्रम्य त्रयोदशं स्कांदं महापुराणमुद्दिश्येत्थमुक्तम्—"शृणु वक्ष्ये मरीचे च पुराणं स्कांदसंज्ञितम् । यस्मिन्प्रतिपदं साक्षान्महादेवो व्यवस्थितः ॥ पुराणे शतकोटौ तु यच्छैवं वर्णितं मया ॥ लक्षितस्यार्थजातस्य सारो व्यासेन कीर्तितः ॥ स्कान्दाह्वयस्तत्र खंडाः सप्तैव परिकल्पिताः ॥ एकाशीतिसहस्रं तु स्कान्दं सर्वाघकृन्तनम् ॥ यः शृणोति पठेद्वापि स तु साक्षाच्छिवः स्थितः ॥ यत्र माहेश्वरा धर्माः षण्मुखेन प्रकाशिताः ॥ कल्पे तत्पुरुषे वृत्ताः सर्वसिद्धिविधायकाः ॥" इति । किञ्चात्रैव स्कान्दे प्रभासखंडे चतुर्थे द्वारकामाहात्म्ये चतुश्चत्वारिंशदध्याये—"सूत उवाच—एतत्पुराणमखिलं पुरा स्कन्देन भाषितम् ॥ भृगवे ब्रह्मपुत्राय तस्माल्लेभे तथांगिराः ॥ ततश्च च्यवनः प्राप ऋचीकश्च ततो मुनिः ॥ एवं परम्पराप्राप्तं सर्वेषु भुवनेष्वपि ॥ स्कान्दं पुराणमेतच्च कुमारेण पुरोद्धृतम् ॥ यः शृणोति सतां मध्ये नरः पापाद्विमुच्यते ॥ इदं पुराणमायुष्यं चतुर्वर्णसुखप्रदम् ॥ निर्मितं षण्मुखेनेह नियतं सुमहात्मना ॥ एवमेतत्समाख्यातमाख्यानं भद्रमस्तु वः ॥ मण्डितं सप्तभिः खण्डैः स्कान्दं यः शृणुयान्नरः ॥ न तस्य पुण्यसंख्यानं कर्तुं शक्येत केनचित् ॥ य इदं धर्ममाहात्म्यं ब्राह्मणाय प्रयच्छति ॥ स्वर्गलोके वसेत्तावद्यावदक्षरसंख्यया ॥" इत्यादिनैतदेव सप्तखण्डात्मकं स्कान्दंनाम महापुराणमित्याख्यायते । किं चैतदेव तत्पुरुषकल्पोक्तं स्कान्दं महापुराणं समुद्दिश्य सप्तखण्डनामानुक्रमण्येकेन श्लोकेन कैश्चिदभियुक्तैरित्थमुक्तास्ति—"माहेश्वरो वैष्णवब्राह्मकाश्यास्त्ववन्तिका नागरमत्र षष्ठम् ॥ प्राभासिको विप्रवरेण खण्डाः स्कान्दे पुराणे कथिताः सुपुण्याः ॥" इति । अपि चात्रैव स्कान्दे महापुराणे सप्तमे प्रभासखंडे प्रथमे प्रभासक्षेत्रमाहात्म्ये द्वितीयेऽध्यायेऽष्टादशमहापुराणभेदवर्णनप्रसंगे—"स्कान्दं तु सप्तधा भिन्नं

तस्याद्यो यो विभागस्तु स्कान्दमाहात्म्यसूचकः ॥ माहेश्वरः समाख्यातो द्वितीयो वैष्णवः स्मृतः ॥
...नेन धीमता ॥ एकाशीतिसहस्राणि शतं चैकं तु संख्यया ॥ ... पारिपठ्यते ॥ रेवायाः पञ्चमो भागः सोज्जयिन्याः प्रकीर्तितः ॥ षष्ठः कल्पो नागरश्च तीर्थ
...तृतीयो ब्रह्मणः प्रोक्तः सृष्टिसंक्षेपसूचकः ॥ काशीमाहात्म्यसंयुक्तश्चतुर्थः पारिपठ्यते ॥ रेवायाः पञ्चमो भागः ... आस्मिन्प्राभासिकः सर्वो वर्ण्यते क्षेत्रविस्तरः ॥
...माहात्म्यसूचकः ॥ सप्तमोऽयं विभागो यः स्मृतः प्राभासिको द्विजाः ॥ सर्वे द्वादशसाहस्रा विभागाः संप्रकीर्तिताः ॥ इति भेदः पुराणानां संक्षेपात्कथितो द्विजाः ॥ इममष्टादशानां तु पुरा
...तीर्थानां चैव माहात्म्यं माहात्म्यं शंकरस्य च ॥ अन्येषां चैव देवानां माहात्म्यं च प्रकीर्त्यते ॥ इदं च देवेष्वमृताय नित्यमिदं महापातकध्वंसि
...णानामनुक्रमम् ॥ यः पठेद्धव्यकव्येषु स याति भवनं हरेः ॥ इदं पवित्रं हि यशोनिधानमिदं पितॄणामपि वल्लभं च ॥ ... तत्र समस्तमहापुराणस्थसर्वभागखण्डस्कन्दपर्वपादादिविवेचन
...पुंसाम् ॥" इति । बृहन्नारदीयमहापुराणे समस्तमहापुराणानां संख्यापरिगणनपूर्वकं परिगणनं कृतमस्ति। तत्र समस्तमहापुराणस्थसर्वभागखण्डस्कन्दपर्वपादादिविवेचन
...पूर्वकं तत्तन्महापुराणस्थसमस्तप्रत्येकैकविषयानुक्रमणिकावर्णनप्रक्रमे क्रमायाततया त्रयोदशत्वेन परिगणितस्य सप्तखण्डविभूषितस्यैतस्यैव स्कान्दमहापुराणस्य सवि
...स्तरमाहेश्वरखण्डादिसप्तखण्डस्थविषयानुक्रमणिकायाः संवर्णनादिदं माहेश्वर—वैष्णव—ब्राह्म—काशी—आवन्त्य—नागर—प्रभासेतिसप्तमुख्यखण्डात्मकमेतदुक्तसप्तखण्डा
...न्तर्गतानेकखण्डमाहात्म्योपेतं यथावर्णितैकशताधिकैकाशीतिसहस्रग्रन्थश्लोकसंख्यात्मकं स्कान्दंनाम महापुराणं वरीवर्तितरामिति सुनिपुणैः सुधीभिः साधु निर्धा
...रणीयम् ॥ अथ चैतस्यैव सप्तखण्डान्वितस्य स्कान्दमहापुराणस्य महापुराणत्वेन सत्यापनार्थं बृहन्नारदीयमहापुराणोक्तः समग्रसप्तखण्डानुक्रमणिकाध्याय इदानीं
...सर्वेषां सज्जनानामेतत्परिचयार्थैतद्विभागपरिज्ञानाय सर्वसंदेहनिवृत्तये चेहोपन्यस्यते । ततः स्यादेव समस्तसज्जनानामेतस्यैव स्कान्दमहापुराणस्य महापुराणत्वेन
...सत्यत्वेन प्रतीतिः ॥ स च नारदीयमहापुराणोक्तः स्कान्दमहापुराणस्थविषयानुक्रमणिकाध्याय इत्थम्—"ब्रह्मोवाच—शृणु वत्स प्रवक्ष्यामि पुराणं स्कान्दसं
...ज्ञकम् ॥ यस्मिन्प्रतिपदं साक्षान्महादेवो व्यवस्थितः ॥ १ ॥ पुराणे शतकोटौ तु यच्छैवं वर्णितं मया ॥ लक्षितस्यार्थजातस्य सारो व्यासेन कीर्तितः
॥ २ ॥ स्कान्दात्रयस्तत्र खण्डाः सप्तैव परिकल्पिताः ॥ एकाशीतिसहस्रं तु स्कान्दं सर्वाघकृन्तनम् ॥ ३ ॥ यः शृणोति पठेद्वापि स तु साक्षाच्छिवः स्थितः ॥ यत्र
माहेश्वरा धर्माः षण्मुखेन प्रकाशिताः ॥ ४ ॥ कल्पे तत्पुरुषे वृत्ताः सर्वसिद्धिविधायकाः ॥ तस्य माहेश्वरश्चाद्यः खण्डः पापप्रणाशनः ॥ ५ ॥ किञ्चिन्न्यूनार्कसाहस्रो बहु
पुण्यो बृहत्कथः ॥ सुचरित्रशतैर्युक्तः स्कान्दमाहात्म्यसूचकः ॥६॥ यत्र केदारमाहात्म्ये पुराणोपक्रमः पुरा ॥ दक्षयज्ञकथा पश्चाच्छिवलिंगार्चने फलम् ॥७॥ समुद्र
मथनाख्यानं देवेन्द्रचरितं महत् ॥ पार्वत्याः समुपाख्यानं विवाहस्तदनंतरम् ॥८॥ कुमारोत्पत्तिकथनं ततस्तारकसंगरः ॥ ततः पाशुपताख्यानं चण्डाख्यानसमन्वितम् ॥
॥९॥ द्यूतप्रवर्तनाख्यानं नारदेन समागमः ॥ ततः कुमारमाहात्म्ये पञ्चतीर्थकथानकम् ॥ १० ॥ धर्मवर्मनृपाख्यानं महीसागरकीर्तनम् ॥ इन्द्रद्युम्नकथा पश्चान्नाडीजंघ

कथान्विता ॥ ११ ॥ प्रादुर्भावस्ततो मह्याः कथा दमनकस्य च ॥ महीसागरसंयोगः कुमारेशकथा ततः ॥ १२ ॥ ततस्तारकयुद्धं च नानाख्यानसमन्वितम् ॥ वधश्च
तारकस्याथ पञ्चलिंगनिवेशनम् ॥१३॥ द्वीपाख्यानं ततः पुण्यमूर्ध्वलोकव्यवस्थितिः॥ ब्रह्माण्डस्थितिमानं च बर्करेशकथानकम् ॥१४॥ महाकालसमुद्भूतिः कथा चास्य
महाद्भुता ॥ वासुदेवस्य माहात्म्यं कोटितीर्थं ततः परम् ॥ १५ ॥ नानातीर्थसमाख्यानं गुप्तक्षेत्रे प्रकीर्तितम् ॥ पाण्डवानां कथा पुण्या महाविद्याप्रसाधनम् ॥१६॥ तीर्थ
यात्रासमाप्तिश्च कौमारमिदमद्भुतम् ॥ अरुणाचलमाहात्म्यं सनकब्रह्मसंकथा ॥१७॥ गौरीतपःसमाख्यानं तत्तत्तीर्थनिरूपणम् ॥ माहिषासुरमाख्यानं वधश्चास्य महाद्भुतः ॥
॥१८॥ द्रोणाचले शिवास्थानं नित्यदा परिकीर्तितम् ॥ इत्येष कथितः स्कान्दे खण्डो माहेश्वरोद्भुतः ॥ १९ ॥ द्वितीयो वैष्णवः खण्डस्तस्याख्यानानि मे शृणु ॥ प्रथमं
भूमिवाराहसमाख्यानं प्रकीर्तितम् ॥ २० ॥ यत्र वेंकटकुध्रस्य माहात्म्यं पापनाशनम् ॥ कमलायाः कथा पुण्या श्रीनिवासस्थितिस्ततः ॥ २१ ॥ कुलालाख्यानकं
चात्र सुवर्णमुखरीकथा ॥ नानाख्यानसमायुक्ता भरद्वाजकथाऽद्भुता ॥२२॥ मतङ्गाञ्जनसंवादः कीर्तितः पापनाशनः ॥ पुरुषोत्तममाहात्म्यं कीर्तितं चोत्कले ततः ॥२३॥
मार्कण्डेयसमाख्यानमम्बरीषस्य भूपतेः ॥ इन्द्रद्युम्नस्य माहात्म्यं विद्यापतिकथा ततः ॥ २४ ॥ जैमिनेः समुपाख्यानं नारदस्यापि वाडव ॥ नीलकण्ठसमाख्यानं नरसिं
होपवर्णनम् ॥ २५ ॥ अश्वमेधकथा राज्ञो ब्रह्मलोकगतिस्तथा ॥ रथयात्राविधिः पश्चाज्जन्मस्थानविधिस्तथा ॥ २६ ॥ दक्षिणामूर्त्युपाख्यानं गुण्डिचाख्यानकं ततः ॥
रथरक्षाविधानं च शयनोत्सवकीर्तनम् ॥ २७ ॥ श्वेतोपाख्यानमत्रोक्तं पृथूत्सवनिरूपणम् ॥ दोलोत्सवो भगवतो व्रतं सांवत्सराभिधम् ॥ २८ ॥ पूजा चाकामिका
विष्णोरुद्दालकनियोगतः ॥ योगसाधनमत्रोक्तं नानायोगनिरूपणम् ॥ २९ ॥ दशावतारकथनं स्नानादिपरिकीर्तनम् ॥ ततो बदरिकायाश्च माहात्म्यं पाप
नाशनम् ॥ ३० ॥ अग्न्यादितीर्थमाहात्म्यं वैनतेयशिलाभवम् ॥ कारणं भगवद्वासे तीर्थं कापालमोचनम् ॥ ३१ ॥ पञ्चधाराभिधं तीर्थं मेरुसंस्थापनं
तथा ॥ ततः कार्तिकमाहात्म्ये माहात्म्यं मदनालसम् ॥ ३२ ॥ धूम्रकेशसमाख्यानं दिनकृत्यानि कार्तिके ॥ पञ्चभीष्मव्रताख्यानं कीर्तितं भुक्तिमुक्ति
दम् ॥ ३३ ॥ ततो मार्गस्य माहात्म्ये विधानं स्नानजं तथा ॥ पुंड्रादिकीर्तनं चात्र मालाधारणपुण्यकम् ॥ ३४ ॥ पञ्चामृतस्नानपुण्यं घंटानादादिजं फलम् ॥ नाना
पुष्पार्चनफलं तुलसीदलजं फलम् ॥ ३५ ॥ नैवेद्यस्य च माहात्म्यं हरिवासरकीर्तनम् ॥ अखण्डैकादशीपुण्यं तथा जागरणस्य च ॥ ३६ ॥ यात्रोत्सवविधानं च
नाममाहात्म्यकीर्तनम् ॥ ध्यानादिपुण्यकथनं माहात्म्यं मथुराभवम् ॥ ३७ ॥ मथुरातीर्थमाहात्म्यं पृथगुक्तं ततः परम् ॥ वनानां द्वादशानां च माहात्म्यं कीर्तितं
ततः ॥ ३८ ॥ श्रीमद्भागवतस्यात्र माहात्म्यं कीर्तितं परम् ॥ वज्रशाण्डिल्यसंवादो ह्यन्तर्लीलाप्रकाशकम् ॥ ३९ ॥ ततो माघस्य माहात्म्यं स्नानदानजपोद्भवम् ॥
नानाख्यानसमायुक्तं दशाध्यायैर्निरूपितम् ॥ ४० ॥ ततो वैष्णवमाहात्म्ये शय्यादानादिजं फलम् ॥ जलदानादिविधयः कामाख्यानमतः परम् ॥ ४१ ॥

भुजंगस्य चरितं त्वाथोपाख्यानमद्भुतम् ॥ तथाऽक्षय्यतृतीयादेर्विशेषात्पुण्यकीर्तनम् ॥ ४२ ॥ ततस्त्वयोध्यामाहात्म्ये चक्रब्रह्मादितीर्थके ॥ सुरापापविमोक्षाख्ये तथाधार
मङ्गलकम् ॥ ४३ ॥ स्वर्गद्वारं चन्द्रहारेर्धर्महर्युपवर्णनम् ॥ स्वर्णवृष्टेरुपाख्यानं तिलोदासरयूयुतिः ॥ ४४ ॥ सीताकुण्डं गुप्तहारिः सरयूघर्घरान्वयः ॥ गोप्रतारं च
दुग्धोदं गुरुकुण्डादिपञ्चकम् ॥ ४५ ॥ सोमार्कादीनि तीर्थानि त्रयोदश ततः परम् ॥ गयाकूपस्य माहात्म्यं सर्वाघविनिवर्तकम् ॥ ४६ ॥ माण्डव्याश्रमपूर्वाणि तीर्थानि
तदनन्तरम् ॥ अजितादिमानसादितीर्थानि गदितानि च ॥ ४७ ॥ इत्येष वैष्णवः खण्डो द्वितीयः परिकीर्तितः ॥ अतः परं ब्राह्मखण्डं मरीचे शृणु पुत्रक ॥ ४८ ॥
यत्र वै सेतुमाहात्म्ये फलं स्नानेक्षणोद्भवम् ॥ गालवस्य तपश्चर्या राक्षसाख्यानकं ततः ॥ ४९ ॥ चक्रतीर्थादिमाहात्म्यं देवीपत्तनसंयुतम् ॥ वेतालतीर्थमहिमा पापनाशा
दिकीर्तनम् ॥ ५० ॥ मंगलादिकमाहात्म्यं ब्रह्मकुण्डादिवर्णनम् ॥ हनुमत्कुण्डमहिमाऽगस्त्यतीर्थभवं फलम् ॥ ५१ ॥ रामतीर्थादिकथनं लक्ष्मीतीर्थनिरूपणम् ॥ शंखा
दितीर्थमहिमा तथा साध्यामृतादिजः ॥ ५२ ॥ धनुष्कोट्यादिमाहात्म्यं क्षीरकुण्डादिजं तथा ॥ गायत्र्यादिकतीर्थानां माहात्म्यं चात्र कीर्तितम् ॥ ५३ ॥ राम
नाथस्य महिमा तत्त्वज्ञानोपदेशनम् ॥ यात्राविधानकथनं सेतौ मुक्तिप्रदं नृणाम् ॥ ५४ ॥ धर्मारण्यस्य माहात्म्यं ततः परमुदीरितम् ॥ स्थाणुः स्कन्दाय
भगवान्यत्र तत्त्वमुपादिशत् ॥ ५५ ॥ धर्मारण्यसुसंभूतिस्तत्पुण्यपरिकीर्तनम् ॥ कर्मसिद्धेः समाख्यानमृषिवंशनिरूपणम् ॥ ५६ ॥ अप्सरस्तीर्थमुख्यानां
माहात्म्यं यत्र कीर्तितम् ॥ वर्णानामाश्रमाणां च धर्मतत्त्वनिरूपणम् ॥ ५७ ॥ देवस्थानविभागश्च बहुलार्ककथा शुभा ॥ छत्रानन्दा तथा शान्ता
श्रीमाता च मतंगिनी ॥ ५८ ॥ पुण्यदा च समाख्याता यत्र देव्यः समास्थिताः ॥ इन्द्रेश्वरादिमाहात्म्यं द्वारकादिनिरूपणम् ॥ ५९ ॥ लोहासुरसमाख्यानं
गङ्गाकूपनिरूपणम् ॥ श्रीरामचरितं चैव सत्यमन्दिरवर्णनम् ॥ ६० ॥ जीर्णोद्धारस्य कथनमासनप्रतिपादनम् ॥ जातिभेदप्रकथनं स्मृतिधर्मनिरूपणम् ॥ ६१ ॥
ततस्तु वैष्णवा धर्मा नानाख्यानैरुदीरिताः ॥ चातुर्मास्ये ततः पुण्ये सर्वधर्मनिरूपणम् ॥ ६२ ॥ दानप्रशंसा तत्पश्चाद्व्रतस्य महिमा ततः ॥ तपसश्चैव पूजायाः
सच्छिद्रकथनं ततः ॥ ६३ ॥ तद्वृत्तीनां भिदाख्यानं शालिग्रामनिरूपणम् ॥ भारकस्य वधोपायो वृक्षार्चामहिमा तथा ॥ ६४ ॥ विष्णोः शापश्च वृक्षत्वं
पार्वत्यनुतपस्ततः ॥ हरस्य ताण्डवं नृत्यं रामनामनिरूपणम् ॥ ६५ ॥ हरस्य लिंगकथनं कथा पैजवनस्य च ॥ पार्वतीजन्मचरितं तारकस्य वधोऽद्भुतः ॥ ६६ ॥
प्रणवैश्वर्यकथनं तारकाचरितं पुनः ॥ दक्षयज्ञसमाप्तिश्च द्वादशाक्षरभूषणम् ॥ ६७ ॥ ज्ञानयोगसमाख्यानं महिमा द्वादशाक्षरः ॥ श्रवणादिकमाहात्म्यं कीर्त्तितं
शर्मदं नृणाम् ॥ ६८ ॥ ततो ब्राह्मोत्तरे भागे शिवस्य महिमाऽद्भुतः ॥ पञ्चाक्षरस्य महिमा गोकर्णमहिमा ततः ॥ ६९ ॥ शिवरात्रेश्च माहात्म्यं प्रदोषव्रत
कीर्तनम् ॥ सोमवारव्रतं चापि सीमन्तिन्याः कथानकम् ॥ ७० ॥ भद्रायूत्पत्तिकथनं सदाचारनिरूपणम् ॥ शिववर्मसमुद्देशो भद्रायूद्वाहवर्णनम् ॥ ७१ ॥

भद्रायुमहिमा चापि भस्ममाहात्म्यकीर्तनम् ॥ शबराख्यानकं चैवाथोमामाहेश्वरं व्रतम् ॥ ७२ ॥ रुद्राक्षस्य च माहात्म्यं रुद्राध्यायस्य पुण्यदम् ॥ श्रवणादिक पुण्यं च ब्राह्मखण्डोऽयमीरितः ॥ ७३ ॥ अतः परं चतुर्थं तु काशीखण्डमनुत्तमम् ॥ विन्ध्यनारदयोर्यत्र संवादः परिकीर्तितः ॥ ७४ ॥ सत्यलोकप्रभाव श्चागस्त्यावासे सुरागमः ॥ पतिव्रताचरित्रं च तीर्थयात्राप्रशंसनम् ॥ ७५ ॥ ततश्च सप्तपुर्याख्याः संयमिन्या निरूपणम् ॥ बुधस्य च तथेन्द्राग्न्योर्लोकाप्तिः शिव शिवशर्मणः ॥ ७६ ॥ अग्नेः समुद्भवश्चैव क्रव्याद्वरुणसंभवः ॥ गन्धवत्यलकापुर्योरीश्वर्याश्च समुद्भवः ॥ ७७ ॥ चन्द्रार्कबुधलोकानां कुजेज्यार्कभुवां क्रमात् ॥ मम विष्णोर्ध्रुवस्यापि तपोलोकस्य वर्णनम् ॥ ७८ ॥ ध्रुवलोककथा पुण्या सत्यलोकनिरीक्षणम् ॥ स्कन्दागस्त्यसमालापो मणिकर्णीसमुद्भवः ॥ ७९ ॥ प्रभावश्चापि गङ्गाया गङ्गानामसहस्रकम् ॥ वाराणसीप्रशंसा च भैरवाविर्भवस्ततः ॥ ८० ॥ दण्डपाणिज्ञानवाप्योरुद्भवः समनन्तरम् ॥ ततः कलावत्याख्यानं सदाचार निरूपणम् ॥ ८१ ॥ ब्रह्मचारिसमाख्यानं ततः स्त्रीलक्षणानि च ॥ कृत्याकृत्यविनिर्देशो ह्यविमुक्तेशवर्णनम् ॥ ८२ ॥ गृहस्थयोगिनो धर्माः कालज्ञानं ततः परम् ॥ दिवोदासकथा पुण्या काशिकावर्णनं ततः ॥ ८३ ॥ मायागणपतेश्चाथ भुवि प्रादुर्भवस्ततः ॥ विष्णुमायाप्रपञ्चोऽथ दिवोदासविमोक्षणम् ॥ ८४ ॥ ततः पञ्चनदोत्पत्तिर्बिन्दुमाधवसंभवः ॥ ततो वैष्णवतीर्थाख्या शूलिनः काशिकागमः ॥ ८५ ॥ जैगीषव्येण संवादो ज्येष्ठेशाख्या महेशितुः ॥ क्षेत्राख्यानं कन्दुकेशो व्याघ्रेश्वरसमुद्भवः ॥ ८६ ॥ शैलेशरत्नेश्वरयोः कृत्तिवासस्य चोद्भवः ॥ देवतानामधिष्ठानं दुर्गासुरपराक्रमः ॥ ८७ ॥ दुर्गाया विजयश्चाथ ॐकारेशस्य वर्णनम् ॥ पुन रोंकारमाहात्म्यं त्रिलोचनसमुद्भवः ॥ ८८ ॥ केदाराख्या च धर्मेशकथा विष्णुसमुद्भवा ॥ वीरेश्वरसमाख्यानं गंगामाहात्म्यकीर्तनम् ॥ ८९ ॥ विश्वकर्मेशमहिमा दक्ष यज्ञोद्भवस्तथा ॥ सतीशस्यामृतेशादेर्भुजस्तम्भः पराशरे ॥ ९० ॥ क्षेत्रतीर्थकदंबश्च मुक्तिमण्डपसंकथा ॥ विश्वेशविभवश्चाथ ततो यात्रापरिक्रमः ॥ ९१ ॥ अतःपरं त्ववन्त्याख्यं शृणु खण्डं च पञ्चमम् ॥ महाकालवनाख्यानं ब्रह्मशीर्षच्छिदा ततः ॥ ९२ ॥ प्रायश्चित्तविधिश्चाग्नेरुत्पत्तिश्च सुरागमः ॥ देवदीक्षा शिवस्तोत्रं नानापा तकनाशनम् ॥ ९३ ॥ कपालमोचनाख्यानं महाकालवनस्थितिः ॥ तीर्थं कनखलेशस्य सर्वपापप्रणाशनम् ॥ ९४ ॥ कुण्डमप्सरसंज्ञं च सरो रुद्रस्य पुण्यदम् ॥ कुड वेशं च विद्याध्रं मर्कटेश्वरतीर्थकम् ॥ ९५ ॥ स्वर्गद्वारं चतुःसिंधुतीर्थं शंकरवापिका ॥ शंकरार्कं गंधवतीतीर्थं पापप्रणाशनम् ॥ ९६ ॥ दशाश्वमेधिकानंशातीर्थंशहर सिद्धिदम् ॥ पिशाचकादियात्रा च हनुमत्केश्वरं सरः ॥ ९७ ॥ महाकालेशयात्रा च वाल्मीकेश्वरतीर्थकम् ॥ शुक्रेश्वरादिमाहात्म्यं कुशस्थल्याः प्रदक्षिणा ॥ ९८ ॥ अक्रूरसंज्ञकं त्वेकपादं चंद्रार्कवैभवम् ॥ करभेशाख्यतीर्थं च लटुकेशादितीर्थकम् ॥ ९९ ॥ मार्कंडेशं यज्ञवापीसोमेशं नरकान्तकम् ॥ केदारेश्वररामेशसौभाग्येशनरार्क कम् ॥ १०० ॥ केशवार्कं शक्तिभेदं स्वर्णसारमुखानि च ॥ ॐकारेशादितीर्थानि अन्धकश्रुतिकीर्तनम् ॥ १०१ ॥ कालारण्ये लिंगसंख्या स्वर्णश्रृंगाभिधानकम् ॥

कुशस्थल्या अवन्त्याश्चामथिन्या अभिधानकम् ॥ १०२ ॥ पद्मावतीकुमुद्वत्यमरावतिकनामकम् ॥ विशालाप्रविकल्पाभिधानं च ज्वरशान्तिकम् ॥ १०३ ॥ शिवानामा शिवकल्पं नागोद्गीता शिवस्तुतिः ॥ हिरण्याक्षवधाख्यानं तीर्थं सुन्दरकुण्डकम् ॥ १०४ ॥ नीलगंगापुष्कराख्यं विन्ध्यवासनतीर्थकम् ॥ पुरुषोत्तमाभिधानं तु तत्तीर्थं नागनागनम् ॥ १०५ ॥ गोमती वामन कुण्डं विष्णोर्नामसहस्रकम् ॥ वीरेश्वरसरः कालभैरवस्य च तीर्थकम् ॥ १०६ ॥ महिमा नागपंचम्या नृसिंहस्य जय निका ॥ कुंभेश्वरयात्रा च देवसाधनकीर्तनम् ॥ १०७ ॥ कर्कराजाख्यतीर्थं च विघ्नेशादिसुरोहनम् ॥ रुद्रकुण्डप्रभृतिषु बहुतीर्थनिरूपणम् ॥१०८॥ यात्राऽष्टतीर्थजा पुण्या रेवामाहात्म्यमुच्यते ॥ धर्मपुत्रस्य वैराग्यान्मार्कण्डेयेन संगमः ॥ १०९ ॥ प्राग्रीयानुभवाख्यानममृतापारिकीर्तनम् ॥ कल्पेकल्पे पृथङ्नाम नर्मदायाः प्रकीर्तितम् ॥ ११० ॥ स्तवमार्षं नार्मदं च कालरात्रिकथा ततः ॥ महादेवस्तुतिः पश्चात्पृथक्कल्पकथाद्भुता ॥ १११ ॥ विशल्याख्यानकं पश्चाज्जालेश्वरकथा तथा ॥ गौरीव्रत समाख्यानं त्रिपुरज्वालनं तथा ॥ ११२ ॥ देहपातविधानं च कावेरीसंगमस्ततः ॥ दारुतीर्थं ब्रह्मावर्तं यज्ञेश्वरकथानकम् ॥ ११३ ॥ अग्नितीर्थं रवितीर्थं मेघनादा विदारुकम् ॥ देवतीर्थं नर्मदेशं कपिलाख्यं करंजकम् ॥ ११४ ॥ कुण्डलेशं पिप्पलादं विमलेशं च शूलभित् ॥ शचीहरणमाख्यानमन्धकस्य वधस्तथा ॥ ११५ ॥ शूलभेदोद्भवो यत्र दानधर्माः पृथग्विधाः ॥ आख्यानं दीर्घतपस ऋष्यशृङ्गकथा ततः ॥ ११६ ॥ चित्रसेनकथा पुण्या काशीराजस्य लक्षणम् ॥ ततो देवशिलाख्यानं शबरीतीर्थकान्वितम् ॥ ११७ ॥ व्याधाख्यानं ततः पुण्यं पुष्करिण्यर्कतीर्थकम् ॥ आदित्येश्वरतीर्थं च शक्रतीर्थं करोटिकम् ॥ ११८ ॥ कुमारेशमगस्त्येशमानंदेशं च मातृजम् ॥ लोकेशं धनदेशं च मंगलेशं च कामजम् ॥ ११९ ॥ नागेशं चापि गोपारं गौतमं शंखचूडकम् ॥ नारदेशं नंदिकेशं वरुणेश्वरतीर्थकम् ॥ १२० ॥ दधि स्कन्दादितीर्थानि हनूमंतेश्वरं ततः ॥ रामेश्वरादितीर्थानि सोमेशं पिंगलेश्वरम् ॥१२१॥ ऋणमोक्षं कपिलेशं पूतिकेशं जलेशयम् ॥ चण्डार्कं यमतीर्थं च कह्लोडीशं वनादि कम् ॥ १२२ ॥ नारायणं च कोटीशं व्यासतीर्थं प्रभासकम् ॥ नागेशसंकर्षणकं प्रश्रयेश्वरतीर्थकम् ॥ १२३ ॥ एरण्डीसंगमं पुण्यं सुवर्णशिलतीर्थकम् ॥ करंजं कामदं तीर्थं भाण्डीरो रोहिणीभवम् ॥ १२४ ॥ चक्रतीर्थं धौतपापं स्कान्दमांगिरसाह्वयम् ॥ कोटितीर्थमयोन्याख्यमङ्गाराख्यं त्रिलोचनम् ॥१२५॥ इन्द्रेशं कम्बुकेशं च सोमेशं कोहनाशकम् ॥ नार्मदं चार्कमाग्नेयं भार्गवेश्वरमुत्तमम् ॥ १२६ ॥ ब्राह्मं दैवं च मार्गेशमादिवाराहकेश्वरम् ॥ रामेशमथ सिद्धेशमाहिल्यं कंकटेश्वरम् ॥ १२७ ॥ शाक्रं सौम्यं च नादेशं तापेशं रुक्मिणीभवम् ॥ योजनेशं वराहेशं द्वादशीशिवतीर्थकम् ॥ १२८ ॥ सिद्धेशं मंगलेशं च लिंगवाराहतीर्थकम् ॥ कुण्डेशं श्वेतवाराहं गर्भानेशं रवीश्वरम् ॥ १२९ ॥ शुक्लादीनि च तीर्थानि हुंकारस्वामितीर्थकम् ॥ संगमेशं नारकेशं मोक्षणं पञ्चगोपकम् ॥ १३० ॥ नागशात्वं च सिद्धेशं मार्कण्डाक्रूरतीर्थके ॥ कामोदशूलारोपाख्ये मांडव्यं गोपकेश्वरम् ॥ कपिलेशं पिंगलेशं भूतेशं गांगगौतमे ॥ १३१ ॥ अश्वमेधं भृगुकच्छं केदारेशं च पापनुत् ॥ कल्क

लेशं च जालेशं शालिग्रामं वराहकम् ॥ १३२ ॥ चन्द्रहास्यं तथादित्यं श्रीपत्याख्यं च हंसकम् ॥ मूलस्थानं च शूलेशमाश्विनं चित्रदैवकम् ॥ १३३ ॥ शिखीशं कोटितीर्थं च तीर्थं पैतामहं परम् ॥ तथैव कुकुरीतीर्थं दशकन्यं सुवर्णकम् ॥ ऋणमोक्षं भारभूतिं पुंखिलं मुंडिडिण्डिमम् ॥ १३४ ॥ आमलेशं कपालेशं शृंगेरंडीभवं ततः ॥ कोटितीर्थं लोटणेशं फलस्तुतिरतः परम् ॥१३५॥ कृमिजांगलमाहात्म्ये रोहिताश्वकथा ततः ॥ धुंधुमारसमाख्यानं वधोपायस्ततोऽस्य च ॥१३६॥ वधो धुंधोस्ततः पश्चात्तताश्चित्रवहोद्भवः ॥ सहेभास्या ततश्चण्डी सप्रभावो रतीश्वरः ॥ १३७ ॥ केदारेशो लक्षतीर्थं ततो विष्णुपदीभवम् ॥ मुखारं च्यवनांधास्यं ब्रह्मणश्च सरस्ततः ॥ १३८ ॥ चक्राख्यं ललिताख्यानं तीर्थं च बहुगोमयम् ॥ रुद्रावर्तं च मार्कण्डं तीर्थं पापप्रणाशनम् ॥ १३९ ॥ श्रवणेशं शुद्धपुटं देवांध्रप्रेततीर्थकम् ॥ जिह्वोदतीर्थसंभूतिः शिवोद्भेदं फलस्तुतिः ॥ १४० ॥ एष खण्डो ह्यवन्त्याख्यः शृण्वतां पापनाशनः ॥ अतः परं नागराख्यः खण्डः षष्ठोऽभिधीयते ॥ १४१ ॥लिंगोत्पत्तिसमाख्यानं हरिश्चन्द्रकथा शुभा ॥ विश्वामित्रस्य माहात्म्यं त्रिशंकुस्वर्गतिस्तथा ॥ १४२ ॥ हाटकेश्वरमाहात्म्ये वृत्रासुरवधस्तथा ॥ नागबिलं शंखतीर्थमचलेश्वरवर्णनम् ॥ १४३ ॥ चमत्कारपुराख्यानं चमत्कारकरं परम् ॥ गयशीर्षं वालशाख्यं वालमण्डं मृगाह्वयम् ॥ १४४ ॥ विष्णुपादं च गोकर्णं युगरूपं समाश्रयः ॥ सिद्धेश्वरं नागसरः सप्तार्षेयमगस्त्यकम् ॥ १४५ ॥ भ्रूणगर्तं नलेशं च भैष्मं वैडुरमर्ककम् ॥ शार्मिष्ठं सोमनाथं च दौर्गमानर्तकेश्वरम् ॥ १४६ ॥ जामदग्न्यवधाख्यानं नैःक्षत्रियकथानकम् ॥ रामहृदं नागपुरं षड्लिंगं चैव यज्ञभूः ॥ १४७ ॥ मुण्डीरादित्रिकार्कं च सतीपरिणयाह्वयम् ॥ रुद्रशीर्षं च यागेशं वालखिल्यं च गारुडम् ॥ १४८ ॥ लक्ष्मीशापः सप्तविंशं सोमप्रासादमेव च ॥ अंबावृद्धं पाण्डुकाख्यमाग्नेयं ब्रह्मकुण्डकम् ॥ १४९ ॥ गोमुखं लोहयष्टयाख्यमजापालेश्वरी तथा ॥ शानैश्चरं राजवापी रामेशो लक्ष्मणेश्वरः ॥ १५० ॥ कुशेशाख्यं लवेशाख्यं लिंगं सर्वोत्तमोत्तमम् ॥ अष्टषष्टिसमाख्यानं दमयन्त्यास्त्रिजातकम् ॥ १५१ ॥ ततोम्बारेवती वापी भक्तिकातीर्थसंभवः ॥ क्षेमंकरी च केदारं शुक्लतीर्थमुखारकम् ॥१५२॥ सत्यसंधेश्वराख्यानं तथा कर्णोत्पलाकथा ॥ अटेश्वरं याज्ञवल्क्यं गौर्यं गाणेशमेव च ॥१५३॥ ततो वास्तुपदाख्यानमजागृहकथानकम् ॥ सौभाग्यान्धुश्च शूलेशं धर्मराजकथानकम् ॥ १५४ ॥ मिष्टान्नदेश्वराख्यानं गाणपत्यत्रयं ततः ॥ जाबालिचरितं चैव मकरेशकथा ततः॥१५५॥ कालेश्वर्यंधकाख्यानं कुण्डमाप्सरसं तथा ॥ पुष्पादित्यं रोहिताश्वं नागरोत्पत्तिकीर्तनम् ॥ १५६ ॥ भार्गवं चरितं चैव वैश्वामित्रं ततः परम् ॥ सारस्वतं पैप्पलादं कंसारीशं च पिण्डकम् ॥ १५७ ॥ ब्रह्मणो यज्ञचरितं सावित्र्याख्यानसंयुतम् ॥ रैवतं भर्तृयज्ञाख्यं मुख्यतीर्थनिरीक्षणम् ॥ १५८ ॥ कौरवं हाटकेशाख्यं प्रभासं क्षेत्रकत्रयम् ॥ पौष्करं नैमिषं धार्ममरण्यत्रितयं स्मृतम् ॥ १५९ ॥ वाराणसी द्वारकाख्यं मन्वाख्येति पुरीत्रयम् ॥ वृन्दावनं खाण्डवाख्यमद्वैताख्यं वनत्रयम् ॥ १६० ॥ कल्पः शालस्तथा नन्दिग्रामत्रयमनुत्तमम् ॥ असिशुक्लपितृसंज्ञं तीर्थत्रयमुदाहृतम् ॥ १६१ ॥ श्र्यर्बुदौ रैवतश्चैव पर्वतत्रयमुत्तमम् ॥

नदीनां त्रितयं गंगा नर्मदा च सरस्वती ॥ १६२ ॥ सार्धकोटित्रयफलमेकं चैषु प्रकीर्तितम् ॥ कपिका शंखतीर्थं चामरकं बालमण्डनम् ॥ १६३ ॥ भास्करक्षेत्रफलदं प्रोक्तं चतुष्टयम् ॥ श्राद्धादित्यं श्राद्धकल्पं यौधिष्ठिरमथांधकम् ॥ १६४ ॥ जलशायि चतुर्मासमशून्यशयनव्रतम् ॥ मङ्कणेशं शिवरात्रिस्तुलापुरुषदानकम् ॥ १६५ ॥ पृथ्वीदानं वानकेशं कपालमोचनेश्वरम् ॥ पापपिंडं मासलैंगं युगमानादिकीर्तनम् ॥ १६६ ॥ निंबेशशाकंभर्याख्या रुद्रैकादशकीर्तनम् ॥ दानमाहात्म्यकथनं द्वादशादित्यकीर्तनम् ॥ १६७ ॥ इत्येष नागरः खण्डः प्राभासाख्योऽधुनोच्यते ॥ सोमेशो यत्र विश्वेशोऽर्कस्थलं पुण्यदं महत् ॥ १६८ ॥ सिद्धेश्वरादिकाख्यानं पृथगत्र प्रकीर्तितम् ॥ अग्नितीर्थं कपर्दीशं केदारेशं गतिप्रदम् ॥ १६९ ॥ भीमभैरवचण्डीशभास्करांगारकेश्वराः ॥ बुधेज्यभृगुसौरागुशिखीशा हरविग्रहाः ॥ १७० ॥ सिद्धेश्वराद्याः पञ्चान्ये रुद्रास्तत्र व्यवस्थिताः ॥ वरारोहा ह्यजापाला मङ्गला ललितेश्वरी ॥ १७१॥ लक्ष्मीशो वाडवेशश्चोर्वीशः कामेश्वरस्तथा ॥ गौरीशवरुणेशाख्यं दुर्वासेशं गणेश्वरम् ॥ १७२ ॥ कुमारेशं चण्डकल्पं शकुलीश्वरसंज्ञकम् ॥ ततः प्रोक्ताऽथ कोटीशबालब्रह्मादिसत्कथा ॥ १७३ ॥ नरकेशसंवर्तेशनिधीश्वरकथा ततः ॥ बलभद्रेश्वरस्याथ गंगाया गणपस्य च ॥ १७४ ॥ जाम्बवत्याख्यसरितः पाण्डुकूपस्य सत्कथा ॥ शतमेधलक्षमेधकोटिमेधकथा तथा ॥ १७५ ॥ दुर्वासार्कघटस्थानहिरण्यासंगमोत्कथा ॥ नगरार्कस्य कृष्णस्य संकर्षणसमुद्रयोः ॥ १७६ ॥ कुमार्याः क्षेत्रपालस्य ब्रह्मेशस्य कथा पृथक् ॥ पिंगलासंगमेशस्य शंकरार्कघटेशयोः ॥ १७७ ॥ ऋषितीर्थस्य नन्दार्कत्रितकूपस्य कीर्तनम् ॥ शशापानस्य पर्णार्कन्यंकुमत्योः कथाऽद्भुता ॥ १७८ ॥ वाराहस्वामिवृत्तान्तं छायालिङ्गाख्यगुल्फयोः ॥ कथा कनकनन्दायाः कुन्तीगंगेशयोस्तथा ॥ १७९ ॥ चमसोद्भेदविदुरत्रिलोकेशकथा ततः ॥ मंकणेशत्रैपुरेशपण्डतीर्थकथास्तथा ॥ १८० ॥ सूर्यप्राचीत्रीक्षणयोरुमानाथकथा तथा ॥ भूद्वारशूलस्थलयोश्च्यवनार्केशयोस्तथा ॥ १८१ ॥ अजपालेशबालार्ककुबेरस्थलजा कथा ॥ ऋषितोया कथा पुण्या संगालेश्वरकीर्तनम् ॥ १८२ ॥ नारदादित्यकथनं नारायणनिरूपणम् ॥ तप्तकुण्डस्य माहात्म्यं मूलचंडीशवर्णनम् ॥ १८३ ॥ चतुर्वक्त्रगणाध्यक्षकलंबेश्वरयोस्तथा ॥ गोपालस्वामिबकुलस्वामिनोर्मरुतां कथा ॥ १८४ ॥ क्षेमार्कोन्नतविघ्नेशजलस्वामिकथा ततः ॥ कालमेघस्य रुक्मिण्या दुर्वासेश्वरभद्रयोः ॥ १८५ ॥ शंखावर्तमोक्षतीर्थगोष्पदाच्युतसद्मनाम् ॥ जालेश्वरस्य हुंकारेश्वरचण्डीशयोः कथा ॥ १८६ ॥ आशापुरस्थविघ्नेशकलाकुण्डकथाद्भुता ॥ कपिलेशस्य च कथा जरद्गवशिवस्य च ॥ १८७ ॥ नलकर्कोटेश्वरयोर्हाटकेश्वरजा कथा ॥ नारदेशयन्त्रभूपादुर्गकूटगणेशजा ॥ १८८ ॥ सुपर्णैलाख्यभैरव्योर्भल्लतीर्थभवा कथा ॥ कीर्तनं कर्दमालस्य गुप्तसोमेश्वरस्य च ॥ १८९ ॥ बहुस्वर्णेशशृंगेशकोटीश्वरकथा ततः ॥ मार्कण्डेश्वरकोटीशदामोदरगृहोत्थका ॥ १९० ॥ स्वर्णरेखा ब्रह्मकुंडं कुन्तीभीमेश्वरौ तथा ॥ मृगीकुण्डं च सर्वस्वं क्षेत्रे वस्त्रापथे स्मृतम् ॥ १९१ ॥ दुर्गाभद्रेशगंगेशरैवतानां कथाऽद्भुता ॥ ततोऽर्बुदेश्वरकथा अचलेश्वरकीर्तनम् ॥१९२॥ नागतीर्थस्य च

कथा वसिष्ठाश्रमवर्णनम् ।। भद्रकर्णस्य माहात्म्यं त्रिनेत्रस्य ततः परम् ॥ १९३ ॥ केदारस्य च माहात्म्यं तीर्थागमनकीर्तनम् ॥ कोटीश्वररूपतीर्थहृषीकेशकथास्ततः ॥ ॥१९४॥ सिद्धेशशुक्रेश्वरयोर्मणिकर्णीशकीर्तनम् ॥ पंगुतीर्थयमतीर्थवाराहतीर्थवर्णनम् ॥ १९५ ॥ चन्द्रप्रभासपिण्डोदश्रीमाताशुक्लतीर्थजम् ॥ कात्यायन्याश्च माहात्म्यं ततः पिण्डारकस्य च ॥ १९६ ॥ ततः कनखलस्याथ चक्रमानुपतीर्थयोः ॥ कपिलाग्नितीर्थकथा तथा रक्तानुबन्धजा ॥ १९७ ॥ गणेशपार्थेश्वरयोर्यात्राया मुज्ज्वलस्य च ॥ चण्डीस्थाननागोद्भवशिवकुण्डमहेशजाः ॥ १९८ ॥ कामेश्वरस्य मार्कण्डेयोत्पत्तेश्च कथा ततः ॥ उद्दालकेशसिद्धेशगततीर्थकथाः पृथक् ॥ १९९ ॥ श्रीदेवमातोत्पत्तिश्च व्यासगौतमतीर्थयोः ॥ कुलसंतारमाहात्म्यं रामकोट्याह्वतीर्थयोः ॥ २०० ॥ चन्द्रोद्भेदेशानश्रृंगब्रह्मस्थानोद्भवोद्भुतः ॥ त्रिपुष्कररुद्रहृदगुहेश्वर कथा शुभा ॥ २०१ ॥ अविमुक्तस्य माहात्म्यमुमामाहेश्वरस्य च ॥ महौजसः प्रभावश्च जंबुतीर्थस्य वर्णनम् ॥ २०२ ॥ गङ्गाधरमिश्रकयोः कथा चाथ फल स्तुतिः ॥ द्वारकायाश्च माहात्म्ये चन्द्रशर्मकथानकम् ॥ २०३ ॥ जागराद्यर्चनाद्याख्या व्रतमेकादशीभवम् ॥ महाद्वादशिकाख्यानं प्रह्लादर्षिसमागमः ॥ २०४ ॥ दुर्वाससं उपाख्यानं यात्रोपक्रमकीर्तनम् ॥ गोमत्युत्पत्तिकथनं तस्यां स्नानादिजं फलम् ॥ २०५ ॥ चक्रतीर्थस्य माहात्म्यं गोमत्युदधिसंगमः ॥ सनकादिहृदाख्यानं नृगतीर्थकथा ततः ॥ २०६ ॥ गोप्रचारकथा पुण्या गोपीनां द्वारकागमः ॥ गोपीसरःसमाख्यानं ब्रह्मतीर्थादिकीर्तनम् ॥ २०७ ॥ पञ्चनद्यागमाख्यानं नानाख्यानसमन्वितम् ॥ शिवलिंगगदातीर्थकृष्णपूजादिकीर्तनम् ॥ २०८ ॥ त्रिविक्रमस्य मूर्त्याख्या दुर्वासःकृष्णसंकथा ॥ कुशदैत्यवधोचारविशेषार्चनजं फलम् ॥ २०९ ॥ गोमत्यां द्वारकायां च तीर्थागमनकीर्तनम् ॥ कृष्णमन्दिरसंप्रेक्षा द्वारवत्यभिषेचनम् ॥ २१० ॥ तत्र तीर्थावासकथा द्वारकापुण्यकीर्तनम् ॥ इत्येष सप्तमः प्रोक्तः खण्डः प्राभासिको द्विजाः ॥ २११ ॥ स्कान्दे सर्वोत्तरकथे शिवमाहात्म्यवर्णने ॥ लिखित्वैतत्तु यो दद्याद्धेमशूलसमन्वितम् ॥ २१२ ॥ माघ्यां सत्कृत्य विप्राय स शैवे मोदते पदे ॥ २१३ ॥ इति श्रीनारदीयपुराणे पूर्व० बृहदुपाख्याने चतुर्थपादे स्कान्दमहापुराणानुक्रमणीवर्णनंनाम चतुरधिकशततमो ऽध्यायः ॥ १०४ ॥" इति । अथ प्रसंगानुसारेणैतस्य स्कान्दमहापुराणस्य पुराणत्वोपयुक्तपञ्चलक्षणसमन्वितत्वविचारे क्रियमाणे हि वैष्णवपुराणब्रह्माण्डपुराणयोः— "सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंश्यानुचरितं चैव पुराणं पञ्चलक्षणम् ॥ " इति, स्कान्दे महापुराणे सप्तमे प्रभासखण्डे प्रथमे प्रभासक्षेत्रमाहात्म्ये द्वितीयेऽध्याये—"ब्रह्मविष्ण्वर्करुद्राणां माहात्म्यं भुवनस्य च ॥ संहारश्च प्रदृश्येत पुराणं पञ्चलक्षणम् ॥" इति च यद्वैविध्येन सामान्यतः पुराणस्य पञ्चलक्षणत्वमाम्नायते तत्रास्य स्कान्दमहापुराणस्य पूर्वोक्तलक्षणस्य यथावदनुक्रमासंबन्धादुत्तरलक्षणस्यैव समन्वयौचित्यादनन्तरोक्तमेव पञ्चलक्षणत्वं साधु युज्यत इति विदांकुर्वंतु सुधियः ॥ अस्त्वेतत्तु प्रसंगोपात्तम् ॥ एतावता विवेचनेनैतदेव माहेश्वरादिप्रभासान्तसप्तखण्डात्मकं स्कान्दंनाम महापुराणमिति हि सर्वथा सिद्धम् ॥

अथ च यत्स्कान्दंनामान्यदप्येकं पुराणं षट्संहितात्मकं पञ्चाशत्खण्डमण्डितं लक्षग्रन्थश्लोकसंख्योपनिबद्धम् [ विचारदृष्ट्या यतस्ततः पृथक्पृथगुपलभ्यमानानां नानाखण्डान्तःपातिखण्डानां विपुलतरश्लोकसंख्यापरिमाणे बुद्ध्याकलिते द्वित्रिलक्षग्रन्थपर्यन्तश्लोकसंख्योपनिबद्धं स्यादेतावदतिविस्तीर्णम् ] समुपलभ्यते—तत्तु स्कान्दंनामोपपुराणमिति निश्चयेनावगन्तव्यम् ॥ अथ तस्योपपुराणत्वेन परिगणनं तदन्तःपातिखण्डानुक्रमणिका चेदानीं प्रदर्श्यते । यथा चोक्तमुपपुराणपरिगणनाप्रसंगे गारुडे (२२७) अध्याये—"आद्यं सनत्कुमाराख्यं नारसिंहमथापरम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेण तु भाषितम् ।। चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥ दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥ कापिलं वामनं चैव तथैवोशनसेरितम् ॥ ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च ॥ माहेश्वरं तथा साम्बं सौरं सर्वार्थसञ्चयम् ॥ पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥" इति । तथा चात्रैव स्कान्दे महापुराणे प्रभासखण्डे प्रभासक्षेत्रमाहात्म्ये द्वितीयेऽध्याये—" अन्यान्युपपुराणानि मुनिना कथितानि तु ॥ तानि वः कथयिष्यामि संक्षेपादवधार्यताम् ॥ आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् । तृतीयं स्कान्दमुद्दिष्टं कुमारेणाभिभाषितम् ॥ चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् । दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम् ॥ कापिलं वामनं चैव तथैवोशनसेरितम् । ब्रह्माण्डं वारुणं चान्यत्कालिकाह्वयमेव च ॥ माहेश्वरं तथा सांबं सौरं सर्वार्थसञ्चयम् । पराशरोक्तं परमं मारीचं भार्गवाह्वयम् ॥ एतान्युपपुराणानि कथितानि द्विजोत्तमाः ॥ " इति । तत्स्कान्दनामकोपपुराणस्थषट्संहितासमग्रग्रन्थसंख्याविस्तरश्च तत्रत्यशांकरसंहितायां हालास्यमाहात्म्य इत्थं वर्णितः— " स्कान्दमद्यापि वक्ष्यामि पुराणं श्रुतिसारजम् ॥ षड्विधं संहिताभेदैः पञ्चाशत्खण्डमण्डितम् ॥ आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता ॥ तृतीया शांकरी प्रोक्ता चतुर्थी वैष्णवी तथा ॥ पञ्चमी संहिता ब्राह्मी षष्ठी सा सौरसंहिता ॥" इत्येवं संहिताभेदानुक्त्वाऽग्रे प्रतिसंहितं श्लोकग्रन्थसंख्याभेद उक्तः । स यथा—"ग्रन्थेन चैव षट्त्रिंशत्सहस्रेणोपलक्षिता । आद्या तु संहिता विप्रा द्वितीया षट्सहस्रिका ॥ तृतीया ग्रन्थतस्त्रिंशत्सहस्रेणोपलक्षिता ॥ चतुर्थी संहिता पञ्चसहस्रेणाभिनिर्मिता ॥ ततोऽन्या त्रिसहस्रेण ग्रन्थेनैव विनिर्मिता ॥ अन्या सहस्रतः सृष्टा ग्रन्थतः पण्डितोत्तमाः ॥" इति । एतेन तत्स्कान्दंनामोपपुराणमेकाशीतिसहस्रश्लोकग्रन्थसंख्यात्मकमित्येकं मतम् । अन्यच्चाग्रे वक्ष्यमाणकालिकाखण्डोक्तानुक्रमणिकानुसारेण—"स्कान्दमेतल्लक्षमानं स्कन्दो यत्कथयत्पुरा ॥" इत्युक्त्या च लक्षश्लोकग्रन्थसंख्यात्मकमिति मतान्तरम् । अत एव तस्मिन्स्कान्दोपपुराणे क्वचित्पुस्तकेष्वध्यायसमाप्तिदण्डके "शतसाहस्र्यां संहितायाम् " इति, क्वचिच्च "एकाशीतिसाहस्र्यां संहितायाम्" इति च पाठभेदो दरीदृश्यते ॥ किञ्च कानिचिन्मानसखण्डहिंगुलाद्रिखण्डादीनि बहूनि खण्डानि चोपपुराणत्वेन परिगणितस्कान्दोपपुराणखंडानुक्रमण्यां न दृश्यन्तेऽतस्तानि पृथगेव सन्तीति विभाव्यते । तेन ग्रन्थसंख्या त्रिलक्षपर्यन्तापि पर्यवसन्ना स्यादिति तर्क्यते । एतेन तत्स्कान्दंनामोपपुराणमुपपुराणपरिगणनायां तृतीयं विद्यतेऽतस्तत्स्कान्दंनामोपपुराणं महापुराणपरिगणितत्रयोदशस्कान्दमहापुराणादन्यदेवेति

तावत्सिद्धम् ॥ तत्र च षट्संहितात्मके स्कान्दनामकोपपुराणे प्रथमायां सनत्कुमारसंहितायां विंशे कालिकाखण्डे प्रथमेऽध्याये समग्रतत्स्कान्दोपपुराणस्थषट्सं हितान्तःपातिपञ्चाशत्खण्डानामनुक्रमणिकोक्ताऽस्ति । सा चेदानीं तत्स्कान्दनामकोपपुराणस्य सर्वसज्जनानां परिचयाय तद्विभागपरिज्ञानाय चेदानीमत्रो च्यते—यथा—"ॐबालसूर्यप्रतीकाशं वंदे देवं गणाधिपम् ॥ करस्थकदलीचूतपनसेक्षुकमोदकम् ॥ १ ॥ पुरा सरस्वतीतीरे मुनयो दीर्घसत्रिणः ॥ तेपुस्तपो महाघोरं मनःस्थज्ञानवासिनः ॥ २ ॥ यदृच्छयाऽऽगतं सूतं संपूज्य विनयोत्तरम् ॥ तस्मै ते विष्टरं दत्त्वा पप्रच्छुर्वीतकल्मषाः ॥ ३ ॥ ॥ मुनय ऊचुः ॥ ॥ सूत धन्या वयं सर्वे त्वत्समागमकांक्षिणः ॥ अनघाज्ञानतमसः किञ्चित्पृच्छामहे वयम् ॥ ४ ॥ त्वं सर्वमुनिहृत्पद्मविकासनकरो रविः ॥ पाराशर्याद्रह स्यानि श्रुतवानसि विस्तरात् ॥ ५ ॥ पुराणानि सशैवानि स्कान्दादीनि वदाधुना ॥ स्कान्दं कियत्प्रकथितं गुरुणा ते महर्षिणा ॥ ६ ॥ तस्मिन्नहस्यसारं यत्सप्रमाणं वदाधुना ॥ यस्य च श्रवणादेव विमुक्तिर्भवबंधनात् ॥ ७ ॥ ॥ सूत उवाच ॥ ॥ तपस्विनः पात्रतमा भवन्तः पुण्यवर्धनाः ॥ गोप्यं भवत्सु विप्रेषु श्रावयामि पुराणके ॥ ८ ॥ पुरा संशयमापन्नः कृष्णद्वैपायनो मुनिः ॥ प्रणिपत्य स कैलासे कुमारं भववल्लभम् ॥ ९ ॥ स्कान्दं पुराणं संप्राप पञ्चाशत्खण्डमण्डितम् ॥ षड्विधं संहिताभेदैः शिवधर्ममहार्णवम् ॥ १० ॥ सनत्कुमारः श्रुतवान्विस्तरात्तन्मुखोदितम् ॥ सनत्कुमारशिष्येण मम व्यासेन दर्शितम् ॥ ११ ॥ तद्वदाम्यानुपूर्व्येण शृण्वन्तु परमर्षयः ॥ आद्या सनत्कुमारीया संहितास्मिन्पुराणके ॥ १२ ॥ सा पञ्चाशत्सहस्रेण कथिता विस्तराद्विजाः ॥ पञ्चविंशतिखण्डैश्च मण्डिता श्रुतिसम्मिता ॥ १३ ॥ क्षेत्रखण्डः प्रथमतो द्वितीयस्तीर्थखण्डकः ॥ वर्षेऽस्मिन्भारते यानि तीर्थक्षेत्राणि सत्तमाः ॥ १४ ॥ शैवानि वैष्णवान्येव कथितानि सुविस्तरात् ॥ काशीखण्डस्तृतीयस्तु खण्डः सह्याद्रिसंज्ञकः ॥ १५ ॥ हिमाचलाख्यखण्डस्तु मलयाचलखण्डकः ॥ विन्ध्याद्रिखण्डो मोक्षाख्यः प्रभासः पुष्करस्तथा ॥ १६ ॥ नागराख्यस्ततः खण्डो नर्मदाखण्ड एव च ॥ श्रीशैलखण्डो विख्यातो ह्यवन्तीखण्ड एव च ॥ १७ ॥ गौरीखण्डस्ततो विप्राः कुरु क्षेत्राख्यखण्डकः ॥ केदारखण्डस्त्वपरो हरिद्वाराख्यखण्डकः ॥ १८ ॥ सेतुमाहात्म्यखण्डाख्यः कालिकाखण्ड एव च ॥ तत्त्वोपाख्यानखण्डश्च नदीखण्डस्तथैव च ॥ ॥ १९ ॥ धर्मखण्डो देशखण्डो वर्षखण्डस्तथैव च ॥ एते सनत्कुमारीयसंहितायां प्रकीर्तिताः ॥ २० ॥ तीर्थखंडे तीर्थकथा तत्र दानतपःक्रियाः ॥ शिवविष्ण्वादि क्षेत्राणां सेतिहासकथादिकम् ॥ २१ ॥ काशीखंडेऽविमुक्तस्य प्रशंसा परिकीर्तिता ॥ सह्याद्रिखंडे सह्याद्रेः प्रभावः कीर्तितो द्विजाः ॥ २२ ॥ सेतुभूपालमाहात्म्यं चन्द्रलापीठवर्णनम् ॥ हिमाचलाख्ये विश्वेशप्रभावो मुनिसत्तमाः ॥२३॥ मलयाचलखंडे तु शिवपूजोपवर्णनम् ॥ विन्ध्याद्रिखंडे विश्वेशमहिमा परिकीर्तितः ॥ २४ ॥ मोक्षाख्ये मोक्षधर्माणां कथनमृषिसत्तमाः ॥ प्रभासे तु प्रभासस्य महिमाकथनं पुनः ॥ २५ ॥ नर्मदाख्यानकथनं नर्मदाखंडके द्विजाः ॥ श्रीशैलखंडे श्रीशैलगुणकीर्तन

प्रथमोऽध्यायः ॥ १ ॥ " इति । एतेन सनत्कुमारसंहितादिसौरसंहितान्तषट्संहितात्मकं स्कान्दंनाम उपपुराणमन्यत्, माहेश्वरादिप्रभासान्तसप्तखण्डात्मकं स्कान्दंनाम महापुराणं चान्यदिति सुधियो निःसन्देहं विभावयन्तु ॥ इत्थं हि स्कान्दपुराणस्य महापुराणत्वोपपुराणत्वविषये निरस्तः सन्देहः ॥

## इति स्कान्दमहापुराणविषयकसन्देहनिरासः ।

अथ प्रकृतमनुसरामः ॥ अयि सज्जनमहाभ्युदयाः समस्तविद्वज्जनाः ! तदेतन्माहेश्वरादिप्रभासान्तसप्तखण्डात्मकं श्रीस्कान्दंनाम महापुराणं सर्वेषामष्टादशमहापुराणानां मध्ये ग्रन्थसंख्यया गरीयः, प्रायः सर्वतः समग्रतया दुर्लभं च कथमेकत्र संगृहीतं स्यादिति भृशं चिन्तया व्याकुलचित्तैरस्माभिर्महान्तं प्रयत्नमारभ्य यतस्ततः प्राचीनसरस्वतीभाण्डागारेभ्यः संपादितम् । एतस्य संपादितानि पुस्तकानि चाष्टावष्टसरस्वतीभाण्डागारेभ्यः समागतानि । तन्मध्ये कानिचित्पूर्णानि कानिचिदपूर्णानि च पुस्तकान्यासन् । ततश्च तानि विविधदेशदेशान्तरेभ्यः समुपलब्धानि सर्वाणि श्रीस्कान्दपुराणपुस्तकानि परिशोधयितुं खानदेशीयरावेरग्रामनिवासिश्रीपरशुरामभट्टतनयगोविन्दशास्त्रिणां समीपेऽस्माभिर्दत्तानि । ततस्तैर्गोविन्दशास्त्रिभिस्तेषांतेषां सर्वेषां पुस्तकानां सम्यगवगाहनपूर्वकं यथाक्रमं बृहन्नारदीयमहापुराणोक्तानुक्रमणिकानुसारेण विवेचनं, तन्मध्यमिश्रितानां स्कान्दनामकोपपुराणस्थानां केषांचित्खण्डानां पृथक्करणं च कृत्वा समग्रं चैतत्स्कान्दमहापुराणपुस्तकं यथानुक्रमोक्तानुक्रमसंबद्धं विहितम् । ततश्च प्रत्येकप्रत्यादर्शपुस्तकस्थपाठभेदनिदर्शनार्थं सकलविद्याकलाकलापकुशलानां पण्डितवर्यश्रीनिवासनरसिंहाचार्य( श्रीबालाजीस्वामि )श्रीमहावीरदत्तपण्डितश्रीमातादीनपण्डितश्रीनरहरिशास्त्रिश्रीनन्दरामशास्त्रिणां साहाय्यं गृहीत्वा तैर्गोविन्दशास्त्रिभिः स्वयं समग्रस्यास्य श्रीस्कान्दमहापुराणपुस्तकस्याऽऽदित आरभ्य संशोधनं समारभ्य साद्यन्तं प्रत्यादर्शपुस्तकस्थितानां त्रुटितानां पाठक्रमाणां समुपलब्धप्रत्यादर्शपुस्तकानां साहाय्येन संमेलनं कृतम् । क्वचिदन्यार्थकपाठान्तराणां नीचैष्टिपण्यां निवेशनं, क्वचिदस्फुटार्थमूलस्थशब्दानां वाक्यानां पद्यानां च स्फुटबोधार्थं शब्दार्थवाक्यार्थश्लोकार्थसुस्पष्टबोधकटिप्पणीनिवेशनं च कृत्वा सरलार्थबोधोपयुक्तार्थैः समलंकरणं, क्वचिच्च सुसूक्ष्मार्थविषयस्य सुस्पष्टप्रतिपत्तयेऽन्यप्रमाणैस्तस्यतस्य सुसूक्ष्मस्याप्यर्थस्य सविस्तरटिप्पणीभिर्विशदीकरणं च सुव्यवस्थयाऽकारि । एवमध्यायसमाप्तिदण्डकस्थविषयोद्घाटनादिव्यवस्था च व्यधायि । तत्तत्खण्डान्तःपातिविविधखण्डमाहात्म्यादिपृथक्पृथग्व्यवस्थितिश्च कृता । अथ चैवं सम्यक्परिशोधनोपयुक्तां सुव्यवस्थां विधाय समस्तसप्तखण्डान्तःपातिप्रतिखण्डस्थप्रत्यध्यायस्थसविस्तरविषयानुक्रमणिका च निरमायि ॥ अथ चान्त इमां प्रस्तावनां विधायास्यां स्वयं समस्तद्विविधस्कान्दपुराणपुस्तकसमवगाहनसमुद्भूतमहापुराणत्वोपपुराणत्वविवेचनपुरःसरं सोपपत्तिप्रमाणकं महापुराणोपपुराणसन्देहनिरसनं च सम्यग्व्यधायि । तदेतत्तैर्गोविन्दशास्त्रिभिः सम्य

कृत्वा सुस्पष्टस्थापूर्वकं परिशोधनेन परिष्कृतम् ॥ अत्र च स्कान्दमहापुराणे द्वितीयखण्डान्तर्गते कार्तिकमाहात्म्यवैशाखमाहात्म्ये, चतुर्थं काशीखण्डं च समग्रमित्येते भागाः सटीकाः सन्ति । अपरं च सर्वं मूलमात्रं विद्यते । तदेतत्समग्रं "श्रीस्कान्दमहापुराण" पुस्तकं चास्माभिः स्वकीये "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालये सुपुष्टचिक्कणपत्रेषु सुन्दरमनोहराक्षरैर्मुद्रयित्वा सर्वेषां विद्वज्जनानां पुरतः प्रकाश्य समुपस्थापितमस्ति ॥

तदेतत्समग्रं सर्वतोऽपि समग्रतया सत्यं दुर्लभं श्रीस्कान्दमहापुराणं सर्वे सन्तो महान्तो विद्वांसो भाविकसद्गृहस्थाः सदाचारसंपन्नाः सज्जनाश्च संगृह्य पठनश्रवणपूर्वकं तदुक्तदेवतासमुपासनायात्राव्रतदानधर्मसदाचारप्रतिपालनपूर्वकैहिकामुष्मिकधर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थं संसाध्यात्मनः पुरुषावतारस्य कृतार्थतां संपादयन्त्विति सप्रश्रयं साञ्जलिबन्धं सम्प्रार्थ्यते । अपि चैतत्प्रसंगेनैव समस्तविद्वज्जनाः सम्प्रार्थ्यन्ते—यदत्र महति ग्रन्थे मनुष्यनिष्ठनैसर्गिकभ्रमप्रमादवशेन कचिच्छब्दार्थपदानामशुद्धता स्यात्तदागः क्षन्तव्यमिति । अथान्ततः सर्वसज्जनान्प्रति—सर्वतो दुर्लभस्यैतस्य स्कान्दमहापुराणपुस्तकस्य संग्रहेण, तथा चानेन सहैवास्मदीये "श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालये संमुद्र्य प्रकाशितानां समग्राणां ब्राह्माद्यष्टादशमहापुराणपुस्तकानां संग्रहेण च स्वकीयमुदारमाश्रयं प्रदाय मदीयमद्ययावदाचरितं श्रीपरमेश्वरस्य कृपया परिपूर्णं समग्राष्टादशमहापुराणग्रन्थमुद्रणविषयकं संकल्पं सनाथीकुर्वन्त्विति च सविनयमभ्यर्थ्यते—

संवत् १९६६ शके १८३१
इ० स० १९१०
फाल्गुन शुक्ल ६
सौम्यवासरे.

समस्तविद्वज्जनसज्जनानां निरन्तरनिर्मलकृपाभिलाषी—
खेमराज श्रीकृष्णदासः—
"श्रीवेङ्कटेश्वर" स्टीम्–मुद्रणालयाध्यक्षः–मुंबई.

# अथ श्रीस्कान्दमहापुराणस्थविषयानुक्रमणिका प्रारभ्यते ।



## अथ श्रीस्कान्दे महापुराणे प्रथममाहेश्वरखण्डस्थविषयानुक्रमणिका. १

### अथ माहेश्वरखण्डे प्रथमं केदारखण्डम् ॥ ( १–१ ) ॥

इति माहेश्वरखण्डे तृतीयेऽरुणाचलमाहात्म्ये पूर्वार्धम् ॥ ( १-३-१ ) ॥

## अथ माहेश्वरखण्डे तृतीयेऽरुणाचलमाहात्म्य उत्तरार्धम् ॥ ( १-३-२ )

इति माहेश्वरखण्डे द्वितीयेऽरुणाचलमाहात्म्ये उत्तरार्धम् ॥ ( १--३--२ ) ॥

इति स्कान्दे महापुराणे प्रथमं माहेश्वरखण्डम् ॥ १ ॥

## ॥ अथ वैष्णवखण्डे द्वितीयं पुरुषोत्तम ( जगन्नाथ ) क्षेत्रमाहात्म्यम् ॥ ( २–२ ) ॥

अध्यायाः | विषयाः | प० | पृ०

अध्यायाः विषयाः पृ० पृ०



इति वैष्णवखण्डे द्वितीयं पुरुषोत्तम ( जगन्नाथ ) क्षेत्रमाहात्म्यम् ॥ ( २–२ ) ॥

अथ वैष्णवखण्डे तृतीयं बदरिकाश्रममाहात्म्यम् ॥ ( २-३ ) ॥

## अथ कार्तिकमासमाहात्म्यप्रसंगेन कार्तिकमासव्रतिभिः कर्तव्याकर्तव्यनियमास्तावदुच्यन्ते ॥ १ ॥

### तत्र कर्तव्यनियमाः ।

१ नित्यसतारकस्नानम्. २ राधादामोदरपूजनम्. ३ विष्णुहरिशिवनामस्मरणम्. ४ इन्द्रियजयः. ५ मनोनिग्रहः. ६ सर्वभूतेषु दया. ७ ईश्वरध्यानम्. ८ ईश्वरपूजनम्. ९ सत्यभाषणम्. १० हविष्यान्नभोजनम्. ११ नक्तव्रतम्. १२ धारणापारणाव्रतम्. १३ मौनव्रतम्. १४ ब्रह्मचर्यव्रतम्. १५ सत्समागमः. १६ धात्रीपूजनम्. १७ धात्रीच्छायायां विष्णुपूजनम्. १८ नित्यकथाश्रवणम्. १९ भूमिदानम्. २० मातापितृसेवनम्. २१ गुरुसेवनम्. २२ नित्यं देवदर्शनम्. २३ देवमन्दिरे गानम्. २४ देवालये नित्यदीपदानम्. २५ चतुष्पथे दीपदानम्. २६ ब्राह्मणाय दीपदानम्. २७ गोशालायां दीपदानम्. २८ तुलसीपूजनम्. २९ अश्वत्थपूजनम्. ३० देवब्राह्मणगोपूजनम्. ३१ देवप्रदक्षिणाकरणम्. ३२ तुलसीलक्षप्रदक्षिणाकरणम्. ३३ अश्वत्थप्रदक्षिणा. ३४ ब्राह्मणभोजनम्. ३५ अन्नदानम्. ३६ गोवृषमहिषीगजदानम्. ३७ स्वर्णधातुरत्नदानम्. ३८ अनाथरक्षणम्. एतान्नियमान्कार्तिके मास्यवश्यं सेवेत ।

### अथ वर्ज्यनियमाः—

१ परद्रव्येच्छा. २ परक्रिया. ३ परापवादाः. ४ परशय्या. ५ परान्नम्. ६ पर्युषितान्नम्. ७ पलाण्डुः. ८ पापिसंसर्गः ९ परपुरुषसङ्गः १० परस्त्रीगमनम्. ११ परपैशुन्यम्. १२ परोत्कर्षासहनम्. १३ परदोषानुकीर्तनम्. १४ परानिष्टविचिन्तनम्. १५ असत्प्रलापः. १६ अगम्यागमनम्. १७ अभोज्यान्नम्. १८ शास्त्रेणानुक्तम्. १९ आमिषपदार्थाः. २० असच्छास्त्रम्. २१ शास्त्रेऽविश्वासः. २२ चौर्यम्. २३ मिथ्यावादः. २४ दुष्टसंसर्गः. २५ दुष्टभाषणम्. २६ मांसम्. २७ मृतवत्सादुग्धम्. २८ रजस्वलादृष्टान्नम्. २९ नीचाहृतजलम्. ३० गुडमिश्रं गव्यम्. ३१ राजमाषाः. ३२ कांस्यपात्रे पानं भोजनं च. ३३ द्विदलान्नम्. ३४ वृन्ताकम्. ३५ मूलकम्. ३६ तैलम्. ३७ दूषितान्नम्. ३८ जम्बीरम्. ३९ दिवा मदनसेवनम्. ४० नित्यमदनसेवनम्. ४१ रसविक्रयः. एतान्कार्तिके मास्यवश्यं वर्जयेत् ।

## इति कार्तिकमासे कर्तव्याकर्तव्यनिर्णयः ॥

इति वैष्णवखण्डे चतुर्थं कार्तिकमासमाहात्म्यम् ॥ ( २–४ ) ॥

---

## अथ वैष्णवखण्डे पञ्चमं मार्गशीर्षमाहात्म्यम् ॥ ( २–५ ) ॥

इति वैष्णवखण्डे षष्ठं भागवतमाहात्म्यम् ॥ ( २–६ ) ॥

## अथ वैष्णवखण्डे सप्तमं वैशाखमासमाहात्म्यम् ॥ ( २–७ ) ॥

| अध्यायाः | विषयाः | प० | पृ० |
|---|---|---|---|
| ” | गणपूर्वकं वर्धनं च, अथ तस्या लक्ष्म्या अन्वेषणार्थं विप्रवेषधारिणा विष्णुना तत्रागमनं तत्रोद्याने पुष्पाणि विचिन्वन्त्याः कन्यारूपधारिण्या लक्ष्म्या हठाद्रक्षणं च, ततः कन्यारोदनं श्रुत्वा पुण्यनिधिना निजदूतद्वारा तस्य विप्ररूपधारिणो विष्णोः श्रीरामनाथमन्दिरं नीत्वा निगडैर्बन्धनम्, अथ रात्रौ स्वप्ने पुण्यनिधिनां तस्य विप्रस्य भगवद्विष्णुरूपेण निजकन्यायाश्च लक्ष्मीरूपेण दर्शनम्, ततः प्रभाते स्वकन्यां गृहीत्वा रामनाथालयं गत्वा तं विप्रं स्वप्नदृष्टभगवद्रूपवन्तं दृष्ट्वा तं विष्णुं विज्ञाय स्तुतिकरणपूर्वकं स्वापराधक्षमापणम्, निजकन्यारूपायाश्च तस्या लक्ष्म्याः स्तुतिकरणम्, तत्प्रार्थनया प्रसन्नेन सलक्ष्मीकेण भगवता पुण्यनिधये वरप्रदानम्, तस्य भक्तस्य पुण्यनिधेर्भूपस्य निरन्तरकीर्तयता भगवता सेतुमाधवसंज्ञया निगडबद्धमूर्तिधारणपूर्वकमेव तत्रावस्थितिकरणम्, ततः पुण्यनिधिभूपेन सेतुमाधवभगवत्सेवाकरणम्, पुण्यनिधेर्देहान्ते मुक्तिप्राप्तिः, सेतुमाधवमाहात्म्यवर्णनम्. ... ... ... ... ... | ९४ | २ |
| ५१ | अथ सेतुयात्राविधिक्रमवर्णनम्, स्वगृहे स्नानपूर्वकं संकल्पं विधाय यात्रोद्देशेन यात्रिकनित्यनियमधारणपूर्वकं सविस्तरयात्राविधानवर्णनम्. ... ... | ९६ | २ |
| ५२ | अथ विशेषतः सेतुवैभववर्णनपुरःसरं धनुष्कोटितीर्थस्नानदानादिमाहात्म्यवर्णनम्, श्रीरामचन्द्रेण धनुष्कोटितीर्थस्य वरप्रदानवृत्तान्तवर्णनम्, दानप्रसंगेन पात्रविचारे प्रस्तूयमाने वसिष्ठदिलीपसंवादे सत्पात्रप्रशंसा, रामसेतौ धनुष्कोटितीर्थे स्नानादिकर्मस्वर्योदयादिकालप्रशंसापूर्वकं पूजार्घ्यमन्त्रवादिसत्कर्मप्रशंसनम्, सेतुमाहात्म्यपठनश्रवणदानमाहात्म्यवर्णनम्, सेतुमाहात्म्यस्योपसंहारपूर्वकसमाप्तिवर्णनम्. ... ... .... ... ... ... ... | ९८ | २ |

इति ब्राह्मखण्डे प्रथमं सेतुमाहात्म्यम् ॥ ( ३–१ ) ॥

---

| अध्यायाः | विषयाः | प० | पृ० |
|---|---|---|---|
| | **अथ ब्राह्मखण्डे द्वितीयं धर्मारण्यखण्डम् ॥ ( ३–२ ) ॥** | | |
| १ | मङ्गलाचरणम्, नैमिषारण्ये समागतं सूतमहर्षिं प्रति शौनकादिमहर्षिभिः सत्कारपूर्वकं धर्मवर्धककथाश्रवणेच्छया प्रश्नकरणम्, अथ सूतमहर्षिणा धर्मारण्यमाहात्म्यकथनायोपक्रमकरणम्, तत्र श्रीयमधर्मदेवस्य ब्रह्मणः सभां प्रति गमनम्, तत्र ब्रह्मसभायां व्यासमहर्षिणा वाच्यमानां दिव्यां धर्मारण्यकथां श्रुत्वा यमधर्मदेवस्य स्वपुरीं प्रति गमनम्, तत्र यमधर्मराजं प्रति नारदस्यागमनम्, नारदेन हर्षकारणं पृष्टेन यमधर्मराजेन स्वसन्तोषकारणकथनपूर्वकं नारदाय ब्रह्मलोके व्यासमुखतः श्रुताया धर्मारण्यकथायाः कथनम्, यमधर्मराजतो धर्मारण्यकथां श्रुत्वा नारदस्य भूतले युधिष्ठिरं धर्मराजं प्रत्यागमनम्, धर्मराजसत्कृतेन नारदेन धर्मारण्यकथां शुश्रूषवे धर्मराजाय माघमासे गंगायां स्नानार्थं त्वं गच्छ अत्रैव व्यासमहर्षिरागमिष्यति तन्मुखात्त्वं धर्मारण्यकथां च शृण्वित्युक्त्वा नारदस्यान्तर्धानम्, अथ धर्मराजं प्रति श्रीव्यासमहर्षेरागमनम्, अथ युधिष्ठिरेण व्यासं सिंहासने समावेश्य सम्पूज्यानामयप्रश्नकरणम्, ततो व्यासेन युधिष्ठिराय धर्मारण्यकथाकथनायोपक्रमकरणम्. ... ... .... ... | १०६ | १ |
| २ | अथ मोहेरकापरपर्यायधर्मारण्यमुख्यस्थानमाहात्म्यवर्णनम्, तत्र तस्य धर्मारण्यस्य सर्वतीर्थारण्याद्यतिशायिपुण्यशालित्ववर्णनम्, तन्माहात्म्यजिज्ञासया व्यासमहर्षिं प्रति युधिष्ठिरेण प्रश्नकरणम्. ... ... ... ... | १०८ | २ |
| ३ | अथ व्यासेन धर्मारण्यकथारम्भकरणम्, तत्र श्रीभगवत्त्वरूपदिदृक्षया धर्मदेवस्य वनमध्ये गत्वा महादेवं ध्यात्वा तपश्चर्यावर्णनम्; तत्तपःसमुद्भूताग्निशिखाप्रतप्तैः सपरिवारैर्ब्रह्मादिदेवैः कैलासे श्रीमहादेवं प्रति गत्वा महादेवस्य स्तुतिकरणम्, ततो रुद्रवचनाद्धर्मतो भयाभावं ज्ञात्वा सर्वेषां देवानां स्वस्थानं प्रति गमनेऽकारणमेव शंकामापन्नेनेन्द्रेण बृहस्पत्यनुमत्या धर्मं प्रति तपोविघ्नकरणायोर्वशीवचनाद्वर्धन्याख्याप्सरसः संप्रेषणम्, तया च धर्मसमीपं गत्वा, गायनसमान्वितनृत्येन | | |

| अध्यायाः | विषयाः | प० | पृ० |
|---|---|---|---|
| | पुटिकायां राजद्वारे प्रक्षिप्तमात्रायां राज्ञः पुनः समस्तस्त्रीपुत्रगजाश्वादिवैभवसंजीवनपुरःसरसर्वशांतिप्राप्तिः, ततः संजातश्रीराममार्कतिप्रभावप्रत्ययेन तेन राज्ञा तेभ्यो विप्रेभ्यः पुरावन्नवीनं वृत्तिशासनपत्रं कृत्वा प्रदानम्, स्वराज्यात्सर्वलमक्षपणकादिवेदवाह्यपापंडलोकानां निष्कासनम्, अथ पट्त्रिंशत्सहस्रसदाचारसंपन्नगोभुजवणिजामढवीजानां वणिजां च यथापूर्वं विप्रशुश्रूपार्थं निरूपणम्, अथ राज्ञा दत्तस्य वृत्तिशासनपत्रस्य सेतुबन्धगतत्रिसहस्रब्राह्मणानामेवाधिकारवर्णनम्, पञ्चदशसहस्रसंख्याकानां सेतुबंधगमने निजप्रतिज्ञावचनलोपकराणां ब्राह्मणानां ग्रामवृत्तिसंबंधानधिकारित्वनिरूपणम्, सत्यप्रतिज्ञां कुर्वाणानां त्रयीविद्यसंज्ञकानां त्रिसहस्रब्राह्मणानां मोहेरकपुरमध्ये निवासकरणम्, स्वप्रतिज्ञाभंगकराणां च सर्वेषां चातुर्विद्यसंज्ञकानां पञ्चदशसहस्रसंख्याकानां ब्राह्मणानां मोहेरकग्रामाद्बहिः सुखवासस्थाने निवासकरणम्, सर्वस्तैर्मोढवंशजैस्त्रैविद्यैश्चातुर्वेदिभिश्च ब्राह्मणैः प्रतिवर्षं पौषशुक्लत्रयोदश्यां कुलदेवतापूजनोत्सवकरणवर्णनम्. ... ... | १५९ | ३ |
| ३९ | अथ कदाचिद्ब्रह्मविष्णुरुद्रादिदेवानां धर्मारण्यं प्रत्यागमनम्, तत्रत्यैः सर्वैर्ब्राह्मणैर्गोभुजाख्यवणिग्भिश्च तेषां पूजादिसत्कारकरणम्, तैर्ब्रह्मादिभिर्देवैस्तेषां धर्मारण्यनिवासिनां ब्राह्मणानां पृथक्पृथग्वृत्तिविभागं कृत्वा स्वस्थानं प्रति गमनम्, ततः पंचपंचाशद्ग्रामेषु पंचदशसहस्राणां चातुर्विद्यानां त्रैविद्यानां च ब्राह्मणानां निवासवर्णनम्, चातुर्विद्यानां पंचदशगोत्रनामानि, सीतापुरादिपंचपंचाशद्ग्रामनामवर्णनम्, अथ सीतापुरादिपंचपंचाशद्ग्रामस्थाननिवासिचातुर्विद्यब्राह्मणसविस्तरगोत्रप्रवरदेवतास्वभावादिवर्णनम्, अथ हनुमत्समीपतः समागतानां त्रैविद्यब्राह्मणानां शीलायादिसप्तदशस्थाननिरूपणम्, चतुर्विंशतिचातुर्विद्यानां त्रैविद्यानां च कियत्कालपर्यन्तं विरोध आसीदिति वर्णनम्, अथ केषांचिच्छूद्राणां भ्रष्टाचारवशेन जातिभेदवर्णनम्, अथ कलियुगे प्राप्ते तत्रत्यानां केषांचिद्वणिजां मध्ये भ्रष्टाचारवशात्पृथगाचारवशाच्च संबन्धपृथक्करणादिवर्णनम्, अथ पूर्वं कुमारपालराजभयात्सीतापुरं विहाय सांभ्रमतीतटे निवासार्थं गतानां पुनरागत्य सुखवासकस्थाननिवासपूर्वकं धेनुसंचारणवृत्त्योपजीवनवर्णनम् ततस्तेषां चातुर्विद्यब्राह्मणानां विधवासु कन्यासु गोपालवृत्तिधारकैर्ब्राह्मणैः संभोगेनोत्पादितानां कुमाराणांःझातीभगोलकधेनुजनाम्ना ख्यातिवर्णनम्, अथ हनुमत्सकाशागतानां ग्रामवृत्त्यधिकारवतां त्रैविद्यानां त्रिसहस्रब्राह्मणानां मध्ये कतिपयैः कुष्ठिपंगुमूकबधिरकाणकुब्जमूकादिभिः स्वजातिमध्ये स्वविवाहार्थं कन्यकाया अलाभवशाद्यौनसंबंधेन चातुर्विद्यकन्यकाभिः सहोद्वाहेन समुत्पादितानां मिश्रसंभूतीनां ब्राह्मणानां त्रिवलजसंज्ञावर्णनम्, तेषां वृत्तिविभागपूर्वकज्ञातिभेदवर्णनम्. ... .... ... ... .... ... ... | १६१ | २ |
| ४० | अथ पूर्वोक्तप्रकारेण मोहेरकपुरे ज्ञातिभेदसमुत्पत्त्यनन्तरं ब्राह्मणादीनां कलियुगे पापाचारभीत्या सर्वसंमत्या परंपरागतधर्माचारकुलाचारस्थानाचारप्रभृतिगोत्रमातृपूजाविध्यादिव्यवस्थापत्रकरणवर्णनम्, सर्वेषां मोढब्राह्मणानां गोत्रप्रवरावटंकशाखादिवर्णनम्, धर्मारण्यस्थानां वणिजां शूद्राणां च द्विजशुश्रूषापरायणत्वोपदेशवर्णनम्, धर्मारण्यमाहात्म्यफलश्रुतिवर्णनपुरःसरं धर्मारण्यमाहात्म्यसमाप्तिवर्णनम्. ... ... ... ... ... ... ... | १६८ | १ |

इति ब्राह्मखण्डे द्वितीयं धर्मारण्यमाहात्म्यम् ॥ ( ३–२ ) ॥

---

## अथ ब्राह्मखण्डे तृतीयं ब्राह्मोत्तरखण्डम् ॥ ( ३–३ ) ॥

| अध्यायाः | विषयाः | प० | पृ० |
|---|---|---|---|
| १ | अथ नैमिषारण्ये शौनकादिमहर्षीणां सूतमहर्षिं प्रति श्रीशंकरमाहात्म्यजिज्ञासया प्रश्नकरणम्, तत्र श्रीसूतमहर्षिणादौ शौनकादिमहर्षीन्प्रति श्रीशंकरस्य पञ्चाक्षरमन्त्रमाहात्म्यवर्णनम्, सद्गुरोः सकाशान्मन्त्रग्रहणादिविधिवर्णनम्, तत्प्रसंगेन मथुराधिपतिदाशार्हराजवृत्तान्तवर्णनम्, तत्र दाशार्हभूपेन काशिराजतनयां | | |

निजमात्रे तस्मै पद्माकराख्याय वैश्यवर्याय च सर्वयुद्धादिवृत्तान्तनिवेदनम्, अथ द्वितीयेऽह्नि चन्द्रांगदापरपर्यायं चित्राङ्गदं नृपं प्रति तस्य पूर्वोक्तस्यर्षभाख्यशिवयोगिन आगमनं चित्रांगदं प्रति भद्रायुषे राजपुत्राय कन्याप्रदानार्थमुपदेशपूर्वकमाज्ञाकरणं च, तत ऋषभयोगिवचनाच्चित्राङ्गदेन भूपेन भद्रायुषमाहूय तस्मै कीर्तिमालिन्याख्यां निजकन्यां प्रदाय वैवाहिकविधिकरणाय समारम्भकरणम्, अथ तत्पितुर्वज्रबाहोः समीपे दूतं प्रेषयित्वा पुत्रस्योद्वाहार्थं सत्कारपूर्वकं निमन्त्रणम्, वज्रबाहोः सपरिवारस्य तत्र निषधेशराजधान्यामागमनम्, तस्यागतस्य पितुर्वज्रबाहोर्भद्रायुना पुत्रेणाभिवादनम्, तथाप्यविज्ञाततत्कुलनाम्ना वज्रबाहुना तस्य भद्रायोर्जिज्ञासया प्रश्ने कृते सति निषधेश्वरेण वज्रबाहुं प्रति 'अयं त्वया मात्रा सह वने त्यक्तस्तवैव पुत्रो भद्रायुनामास्ति' इति तस्य वृत्ते कथिते सति वज्रबाहोर्निजकर्मणः ससुतपत्नीत्यागरूपस्य लज्जया गर्हणानन्तरं प्रतापशालिनिजपुत्रप्राप्त्याऽत्यन्तानन्दप्राप्तिः, अथ चित्राङ्गदेन भूपेन कृतं पूजासत्कारमादायात्मनोऽग्रमहिषीं तां भद्रायोर्मातरं स्वस्नुषया समेतं भद्रायुषं स्वपुत्रं च गृहीत्वा वज्रबाहोर्निजपरिवारजनैः सह महता समारम्भेण सानन्दं स्वपुरीप्रत्यागमनम्, ततो भद्रायुना पूर्वं पितुराज्ञया यौवराज्यं कृत्वा पितुः स्वर्गारोहणानन्तरं सर्वभूमण्डलराज्यकरणम्, राज्याधिरोहणानन्तरं भद्रायुना पूर्वं निबद्धस्य हेमरथाख्यमागधभूपस्य मैत्रीं संधाय बन्धनान्मोचनम्, ततो भद्रायुना स्वपत्न्या कीर्तिमालिन्या सह सुखोपभोगपूर्वकराज्यकरणम्, इत्थं पूर्वजन्मकृतशिवयोगिपूजासत्कारप्रभाववर्णनम्. ... ... ... ... १९८ १

१४ अथ प्राप्तराज्यसिंहासनस्य भद्रायोः कदाचिन्निजभार्यया सह वनं गत्वा स्वच्छन्दविहारकरणम्, तस्मिन्नेव समये तस्मिन्वने कयोश्चिद्द्विजदम्पत्योर्मध्ये व्याघ्रेणानुगत्योपद्रवे क्रियमाणे ताभ्यां निजरक्षणार्थमुच्चैः शब्देन राज्ञः प्रार्थनाकरणम्, तदैव व्याघ्रेणागत्य द्विजपत्न्या ग्रहणम्, तस्योपरि भद्रायुना कृतेऽपि शस्त्रप्रहारे सर्वशस्त्राणां व्यर्थीभावः, व्याघ्रेण च द्विजपत्न्यां हृतायां द्विजेन शोकपूर्वकं राज्ञो धिक्कारकरणम्. अथ राज्ञा भद्रायुणा व्याघ्रनाशितपत्नीकस्य तस्य द्विजस्य सान्त्वनाय बहुविधप्रार्थनाकरणम्, ततो द्विजेन राजानं प्रति निजकामोपभोगशान्त्यर्थं राजपत्नीं प्रति याचनाकरणम्, ततो भद्रायुणा तस्मै ब्राह्मणाय निजपत्नीं दत्त्वाग्निं प्रज्वाल्य शिवं ध्यात्वाऽग्नौ पतनायोद्यमनम्, तस्मिन्नेवावसरे तद्भक्तिपरीक्षार्थं द्विजरूपधारिणा तेनैव श्रीशंकरेण स्वस्वरूपेण प्रादुर्भवनम्, तस्य श्रीशंकरस्य भद्रायुणा स्तुतिकरणम्, तत्स्तुतिप्रसङ्गेन भगवता श्रीशंकरेण सपत्नीकाय भद्रायुषे वरप्रदानम्, भद्रायुषः शिवप्रसादाद्राज्यसुखोपभोगप्राप्तिवर्णनम्, अन्ते च पुत्रेषु राज्यं विन्यस्य भद्रायुषः शिवसायुज्यप्राप्तिः, भद्रायुश्वशुरस्य चित्राङ्गदस्य निजपत्न्या सीमन्तिन्या सह शाम्भवपदावाप्तिवर्णनम्, इत्थं शिवभक्तिमाहात्म्यवर्णनम्. ... ... ... ... ... २०० १

१५ अथ भस्ममाहात्म्यवर्णनम्. तत्प्रसङ्गेन वामदेवाख्यशिवयोगिनो वृत्तान्तवर्णनम्, तत्रैकदा क्रौञ्चारण्ये विचरन्तं तं वामदेवशिवयोगिनं प्रति भक्षितुं समागच्छता ब्रह्मराक्षसेन निजदोर्भ्यां दृढनिपीडने कृते तदंगस्पर्शमात्रादेव तस्य सद्यो विध्वस्तकल्मषताप्राप्तिः, ततो निजपूर्वदुष्कर्मस्मरणेन निर्विण्णमानसेन तेन ब्रह्मराक्षसेन वामदेवशिवयोगिनं प्रति निजपूर्वपञ्चविंशतितमजन्माचरितदुष्कर्मतत्परिपाकयान्यथातनाब्रह्मराक्षसत्वप्राप्त्यादिवर्णनम्, ततश्च वामदेवं प्रति 'त्वद्देहस्पर्शमात्रेण मे पूर्वसहस्रजन्मस्मृतिर्जातास्ति, मम चित्तं च सुप्रसन्नं वर्ततेऽत एतादृशः प्रभावस्त्वया कथं लब्धः?' इति प्रश्ने कृते वामदेवशिवयोगिना निजदेहलिप्तस्य भस्मनोऽयं प्रभाव इति कथयित्वा भस्मसामर्थ्यवर्णनम्, तत्प्रसंगेन च द्रविडदेशस्थदुराचारवर्तिब्राह्मणस्य प्रेतोपरि भस्मलिप्तपादस्य शुनोऽङ्घ्रिलग्नभस्मस्पर्शनमात्रेण तस्य ब्राह्मणस्य शिवलोकावाप्तिवृत्तान्तवर्णनम्, इत्थं वामदेवोक्तं

इति श्रीस्कान्दे महापुराणे तृतीयं ब्राह्मखण्डम् ॥ ३ ॥



## अथ श्रीस्कान्दे महापुराणे चतुर्थं काशीखण्डम् ॥ ४ ॥

### अथ काशीखण्डे पूर्वार्धम् ॥ ( ४–१ ) ॥

इति काशीखण्डोत्तरार्धम् ॥ (४–२) ॥

इति श्रीस्कान्दे महापुराणे चतुर्थं काशीखण्डम् ॥ ४ ॥

## ॥ अथश्रीस्कान्दे महापुराणे पञ्चममावन्त्यखण्डम् ॥ ५ ॥

### ॥ अथावन्त्यखण्डे प्रथममावन्त्यक्षेत्रमाहात्म्यम् ॥ (५-१) ॥

इत्यावन्त्यखण्डे प्रथममवन्तीक्षेत्रमाहात्म्यम् ॥ (५–१) ॥

## अथावन्त्यखण्डे द्वितीयमवन्तीस्थचतुरशीतिलिंगमाहात्म्यम ॥ (५–२) ॥

अध्यायाः | विषयाः | प० | पृ०



इत्यावन्त्यखण्डे तृतीयं रेवाखण्डम् ॥ ( ५–३ )

---

इति स्कान्दे महापुराणे पंचममावन्त्यखण्डम् ॥ ५ ॥

---

## ॥ अथ स्कान्दे महापुराणे षष्ठं नागरखण्डम् ॥ ६ ॥

॥ इति श्रीस्कान्दे महापुराणे षष्ठं नागरखण्डम् ॥ ६ ॥

## ॥ अथश्रीस्कान्दे महापुराणे सप्तमं प्रभासखण्डम् ॥ ७ ॥

### ॥ अथ प्रभासखण्डे प्रथमं प्रभासक्षेत्रमाहात्म्यम् ॥ (७–१) ॥

॥ इति प्रभासखण्डे प्रथमं प्रभासक्षेत्रमाहात्म्यम् ॥ ( ७–१ ) ॥

---

## अथ प्रभासखण्डे द्वितीयं वस्त्रापथ ( गिरनार ) क्षेत्रमाहात्म्यम् ॥ ( ७–२ ) ॥

इति प्रभासखण्डे तृतीयमर्बुदखण्डम् ॥ ( ७–३ ) ॥

---

| अध्यायाः | विषयाः | प० | पृ० |
|---|---|---|---|

## अथ प्रभासखण्डे चतुर्थं द्वारकामाहात्म्यम् ॥ ( ७–४ ) ॥

इति श्रीप्रभासखण्डे चतुर्थं द्वारकामाहात्म्यम् ॥ (७-४) ॥

इति श्रीस्कान्दे महापुराणे सप्तमं प्रभासखण्डम् ॥ ७ ॥

## ॥ इति श्रीस्कान्दमहापुराणस्थविषयानुक्रमणिका समाप्ता ॥

॥ इति श्रीस्कान्दमहापुराणस्थविषयानुक्रमणिका समाप्ता ॥

# ॥ अथ श्रीस्कान्दे महापुराणे प्रथमं माहेश्वरखण्डं प्रारभ्यते ॥

॥ श्रीगणेशाय नमः ॥ ॐनमो भगवते वासुदेवाय ॥ ॐनारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥
॥ ॥ व्यास उवाच ॥ ॥ यस्याज्ञया जगत्स्रष्टा विरिंचिः पालको हरिः॥ संहर्ता कालरुद्राख्यो नमस्तस्मै पिनाकिने ॥१॥तीर्थानामुत्तमं तीर्थं क्षेत्राणां
क्षेत्रमुत्तमम् ॥ तत्रैव नैमिषारण्ये शौनकाद्यास्तपोधनाः ॥ दीर्घसत्रं प्रकुर्वंतः सत्रिणः कर्मचेतसः ॥ २ ॥ तेषां संदर्शनौत्सुक्यादागतो हि महा
तपाः ॥ व्यासशिष्यो महाप्राज्ञो लोमशोनाम नामतः ॥३॥ तत्रागतं ते ददृशुर्मुनयो दीर्घसत्रिणः॥उत्तस्थुर्युगपत्सर्वे साघ्यर्हस्ताः समुत्सुकाः ॥४॥
दत्त्वार्घ्यपाद्यं सत्कृत्य मुनयो वीतकल्मषाः ॥ तं पप्रच्छुर्महाभागाः शिवधर्मं सविस्तरम् ॥ ५ ॥ ॥ ऋषय ऊचुः ॥ ॥ कथयस्व महाप्राज्ञ देवदेवस्य
शूलिनः ॥ महिमानं महाभाग ध्यानार्चनसमन्वितम् ॥ ६ ॥ संमार्जने किं फलं स्यात्तथा रंगावलीषु च ॥ प्रदाने दर्पणस्याथ तथा वै चामरस्य च
॥ ७ ॥ प्रदाने च वितानस्य तथा धारागृहस्य च ॥ दीपदाने किं फलं स्यात्पूजायां किं फलं भवेत् ॥ ८ ॥ कानिकानि च पुण्यानि कथ्यतां
शिवपूजने ॥ इतिहासपुराणानि वेदाध्ययनमेव च ॥ ९ ॥ शिवस्याग्रे प्रकुर्वंति कारयन्त्यथवा नराः ॥ किं फलं च नृणां तेषां कथ्यतां विस्तरेण हि
॥ १० ॥ शिवाख्यानपरोलोके त्वत्तो नान्योऽस्ति वै मुने ॥ ११ ॥ इति श्रुत्वा वचस्तेषां मुनीनां भावितात्मनाम् ॥ उवाच व्यासशिष्योऽसौ
शिवमाहात्म्यमुत्तमम् ॥ १२ ॥ ॥ लोमश उवाच ॥ ॥ अष्टादशपुराणेषु गीयते वै परः शिवः ॥ तस्माच्छिवस्य माहात्म्यं वक्तुं कोऽपि न पार्यते ॥
॥ १३ ॥ शिवेति द्व्यक्षरं नाम व्याहरिष्यंति ये जनाः ॥ तेषां स्वर्गश्च मोक्षश्च भविष्यति न चान्यथा ॥ १४ ॥ उदारो हि महादेवो देवानां पतिरी
श्वरः ॥ येन सर्वं प्रदत्तं हि तस्मात्सर्व इति स्मृतः ॥ १५ ॥ ते धन्यास्ते महात्मानो ये भजंति सदा शिवम् ॥ १६ ॥ विना सदाशिवं यो हि संसारं
तर्तुमिच्छति ॥ स मूढो हि महापापः शिवद्वेषी न संशयः ॥१७॥ भक्षितं हि गरं येन दक्षयज्ञो विनाशितः॥ कालस्य दहनं येन कृतं राज्ञः प्रमोच
नम् ॥ १८ ॥ ॥ ऋषय ऊचुः ॥ ॥ यथा गरं भक्षितं च यथा यज्ञो विनाशितः ॥ दक्षस्य च तथा ब्रूहि परं कौतूहलं हि नः ॥१९॥ ॥ सूत उवाच ॥ ॥
दाक्षायणी पुरा दत्ता शंकराय महात्मने ॥ वचनाद्ब्रह्मणो विप्रा दक्षेण परमेष्ठिनः ॥ २० ॥ एकदा हि स दक्षो वै नैमिषारण्यमागतः ॥ य
दृच्छावशमापन्न ऋषिभिः परिपूजितः ॥ २१ ॥ स्तुतिभिः प्रणिपातैश्च तथा सर्वैः सुरासुरैः ॥ तत्र स्थितो महादेवो नाभ्युत्थानाभिवादने ॥ चका
रास्य ततः क्रुद्धो दक्षो वचनमब्रवीत् ॥ २२ ॥ सर्वत्र सर्वे हि सुरासुरा भृशं नमंति मांविप्रवराः समुत्सुकाः ॥ कथं ह्यसौ दुर्जनवन्महात्मा भूता
दिभिः प्रेतपिशाचयुक्तः ॥ श्मशानवासी निरपत्रपो ह्ययं कथं प्रणामं न करोति मेऽधुना ॥२३॥ पाखंडिनो दुर्जनाः पापशीला विप्रं दृष्ट्वा चोद्धता

उन्मदाश्च ॥ वध्यास्त्याज्याः सद्भिरेवंविधा हि तस्मादेनं शापितुं चोद्यतोऽस्मि ॥२४॥ इत्येवमुक्त्वा स महातपास्तदा रुपान्वितो रुद्रमिदं बभाषे ॥ ॥ २५ ॥ शृण्वं त्वमी विप्रतमा इदानीं वचो हि मे कर्तुमिहार्हथैतत् ॥ रुद्रो ह्ययं यज्ञबाह्यो वृतो मे वर्णातीतो वर्णपरो यतश्च ॥ २६ ॥ नंदी निशम्य तद्वाक्यं शैलादो हि रुपान्वितः॥अब्रवीत्त्वरितो दक्षं शापदं तं महाप्रभम् ॥२७॥ ॥ नन्द्युवाच ॥ ॥ यज्ञबाह्यो हि मे स्वामी महेशोऽयं कृतः कथम् ॥ यस्य स्मरणमात्रेण यज्ञाश्च सफला ह्यमी ॥ २८ ॥ यज्ञो दानं तपश्चैव तीर्थानि विविधानि च ॥ यस्य नाम्ना पवित्राणि सोयं शप्तोऽधुना कथम् ॥ ॥ २९ ॥ वृथा ते ब्रह्मचापल्याच्छप्तोऽयं दक्ष दुर्मते ॥ येनेदं पालितं विश्वं सर्वेण च महात्मना ॥ शप्तोऽयं स कथं पाप रुद्रोऽयं ब्राह्मणाधम ॥ ३० ॥ एवं निर्भर्त्सितस्तेन नंदिना हि प्रजापतिः ॥ नंदिनं च शशापाथ दक्षो रोपसमन्वितः ॥ ३१ ॥ यूयं सर्वे रुद्रवरा वेदबाह्याश्च वै भृशम् ॥ शप्ता हि वेदमार्गैश्च तथा त्यक्ता महर्पिभिः ॥ ३२ ॥ पापंडवादसंयुक्ताः शिष्टाऽऽचारबहिष्कृताः ॥ कपालिनः पानरतास्तथा कालमुखा ह्यमी ॥३३॥ इति शप्तास्तदा तेन दक्षेण शिवकिंकराः ॥ तदा प्रकुपितो नंदी दक्षं शप्तुं प्रचक्रमे ॥ ३४ ॥ शप्ता वयं त्वया विप्र साधवः शिवकिंकराः ॥ वृथैव ब्रह्म चापल्यादहं शापं ददामि ते ॥ ३५ ॥ वेदवादरता यूयं नान्यदस्तीतिवादिनः ॥ कामात्मानः स्वर्गपरा लोभमोहसमन्विताः ॥ ३६ ॥ वैदिकं च पुरस्कृत्य ब्राह्मणाः शूद्रयाजकाः ॥ दरिद्रिणो भविष्यंति प्रतिग्रहरताः सदा ॥३७॥ दक्ष केचिद्भविष्यन्ति ब्राह्मणा ब्रह्मराक्षसाः ॥ ॥ लोमश उवाच ॥ विप्रास्ते शपितास्तेन नंदिना कोपिना भृशम् ॥ ३८ ॥ अथाकर्ण्येश्वरो वाक्यं नंदिनः प्रहसन्निव ॥ उवाच वाक्यं मधुरं बोधयुक्तं सदाशिवः ॥३९॥ ॥ महादेव उवाच ॥ कोपं नार्हसि वै कर्तुं ब्राह्मणान्प्रति वै सदा ॥ ब्राह्मणा गुरवो ह्येते वेदवादरताः सदा ॥ ४० ॥ वेदो मंत्रमयः साक्षात्तथा सूक्तमयो भृशम् ॥ सूक्ते प्रतिष्ठितो ह्यात्मा सर्वेषामपि देहिनाम् ॥ ४१ ॥ तस्मान्नात्मविदो निन्द्या आत्मैवाहं न चेतरः ॥ कोऽयं कस्त्वं क्व चाहं वै कस्माच्छप्ता हि वै द्विजाः ॥ ४२ ॥ प्रपंचरचनां हित्वा बुद्धो भव महामते ॥ तत्त्वज्ञानेन निर्वर्त्य स्वस्थः क्रोधादिवर्जितः ॥ ४३ ॥ एवं प्रबोधितस्तेन शंभुना परमेष्ठिना ॥ विवेकपरमो भूत्वा शैलादो हि महातपाः ॥ शिवेन सह संगम्य परमानंदसंप्लुतः ॥ ४४ ॥ दक्षोपि हि रुपाऽऽविष्ट ऋषिभिः परिवारितः ॥ ययौ स्थानं स्वकं तत्र प्रविवेश रुपाऽन्वितः ॥४५॥ श्रद्धां विहाय परमां शिवपूजकानां निंदापरः स हि बभूव नराधमश्च ॥ सर्वैर्महर्षिभिरुपेत्य स तत्र शर्वं देवं निनिन्द न बभूव कदापि शान्तः ॥४६॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे पुराणप्रस्तावदक्षवृत्तान्तवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥ ७ ॥ ॥ लोमश उवाच ॥ एकदा तु तदा तेन यज्ञः प्रारंभितो

महान् ॥ तत्राहूतास्तदा सर्वे दीक्षितेन तपस्विना ॥ १ ॥ ऋषयो विविधास्तत्र वशिष्ठाद्याः समागताः ॥ अगस्त्यः कश्यपोऽत्रिश्च वामदेवस्तथा
भृगुः ॥ २ ॥ दधीचो भगवान्व्यासो भरद्वाजोऽथ गौतमः॥ एते चान्ये च बहवः समाजग्मुर्महर्षयः ॥ ३ ॥ तथा सर्वे सुरगणा लोकपालास्तथाऽपरे
विद्याधराश्च गंधर्वाः किंनराप्सरसां गणाः ॥ ४ ॥ सत्तलोकात्समानीतो ब्रह्मा लोकपितामहः॥ वैकुंठाच्च तथा विष्णुः समानीतो मखं प्रति ॥ ५ ॥
देवेन्द्रो हि समानीत इंद्राण्या सह सुप्रभः ॥ तथा चंद्रो हि रोहिण्या वरुणःप्रियया सह ॥ ६ ॥ कुबेरः पुष्पकारूढो मृगाऽऽरूढोऽथ मारुतः ॥
बस्ताऽऽरूढः पावकश्च प्रेताऽऽरूढोऽथ निर्ऋतिः ॥ ७ ॥ एते सर्वे समायाता यज्ञवाटे द्विजन्मनः ॥ ते सर्वे सत्कृतास्तेन दक्षेण च दुरात्मना॥ ८ ॥
भवनानि महार्हाणि सुप्रभाणि महांति च ॥ त्वष्ट्रा कृतानि दिव्यानि कौशल्येन महात्मना ॥ ९ ॥ तेषु सर्वेषु धिष्ण्येषु यथाजोषं समास्थिताः
॥ १० ॥ वर्त्तमाने महायज्ञे तीर्थे कनखले तथा ॥ ऋत्विजश्च कृतास्तेन भृग्वाद्याश्च तपोधनाः ॥ ११ ॥ दीक्षायुक्तस्तदा दक्षः कृतकौतुक
मंगलः ॥ भार्यया सहितो विप्रैः कृतस्वस्त्ययनो भृशम् ॥ १२ ॥ रेजे महत्त्वेन तदा सुहृद्भिः परितः सदा ॥ एतस्मिन्नंतरे तत्र दधीचिर्वाक्य
मब्रवीत् ॥ १३ ॥ ॥ दधीचिरुवाच ॥ ॥ एते सुरेशा ऋषयो महत्तराः सलोकपालाश्च समागतास्तव ॥ तथाऽपि यज्ञस्तु न शोभते भृशं
पिनाकिना तेन महात्मना विना ॥ १४ ॥ येनैव सर्वाण्यपि मंगलानि जातानि शंसंति महाविपश्चितः ॥ सोऽसौ न दृष्टोऽत्र पुमान्पुराणो
वृषध्वजो नीलकण्ठः कपर्दी ॥ १५ ॥ अमंगलान्येव च मंगलानि भवंति येनाधिकृतानि दक्ष ॥ त्रियंबकेनाथ सुमंगलानि भवंति सद्यो
ह्यपमंगलानि ॥ १६ ॥ तस्मात्त्वयैव कर्तव्यमाह्वानं परमेष्ठिना ॥ त्वरितं चैव शक्रेण विष्णुना प्रभविष्णुना ॥ १७ ॥ सर्वैरेव हि
गंतव्यं यत्र देवो महेश्वरः ॥ १८ ॥ दाक्षायण्या समेतं तमानयध्वं त्वरान्विताः ॥ तेन सर्वं पवित्रं स्याच्छंभुना योगिना भृशम् ॥ १९ ॥
यस्य स्मृत्या च नामोक्त्या समग्रं सुकृतं भवेत् ॥ तस्मात्सर्वप्रयत्नेन समानेयो वृषध्वजः ॥ २० ॥ तस्य तद्वचनं श्रुत्वा प्रहसन्नाह दुष्टधीः ॥ मूलं
विष्णुर्हि देवानां यत्र धर्मः सनातनः ॥२१॥ यस्मिन्वेदाश्च यज्ञाश्च कर्माणि विविधानि च ॥ प्रतिष्ठितानि सर्वाणि सोऽसौ विष्णुरिहागतः ॥ २२ ॥
सत्यलोकात्समायातो ब्रह्मा लोकपितामहः ॥ वेदैश्चोपनिषद्भिश्च आगमैर्विविधैः सह ॥ २३ ॥ तथा सुरगणैः साकमागतः सुरराट् स्वयम् ॥
तथा यूयं समायाता ऋषयो वीतकल्मषाः॥२४॥ येये यज्ञोचिताः शांतास्तेते सर्वे समागताः॥ वेदवेदार्थतत्त्वज्ञाः सर्वे यूयं दृढव्रताः ॥२५॥ अत्रैव
च किमस्माकं रुद्रेणापि प्रयोजनम् ॥ कन्या दत्ता मया विप्रा ब्रह्मणा नोदितेन हि ॥ २६ ॥ अकुलीनो ह्यसौ विप्रा नष्टो नष्टप्रियः सदा ॥

भूतप्रेतपिशाचानां पतिरेको दुरत्ययः ॥२७॥आत्मसंभावितो मूढः स्तब्धो मौनी समत्सरः ॥ कर्मण्यस्मिन्नयोग्योऽसौ नानीतो हि मयाऽधुना ॥२८॥ तस्मात्त्वया न वक्तव्यं पुनरेवं वचो द्विज॥सर्वैर्भवद्भिः कर्तव्यो यज्ञो मे सफलो महान् ॥२९॥ एतच्छ्रुत्वा वचस्तस्य दधीचिर्वाक्यमब्रवीत् ॥३०॥ ॥ दधीचिरुवाच ॥ ॥ सर्वेषामृपिवर्याणां सुराणां भावितात्मनाम् ॥ अनयोऽयं महाञ्जातो विना तेन महात्मना ॥३१॥ विनाशोऽपि महान्सद्यो ह्यत्र त्यानां भविष्यति॥एवमुक्त्वा दधीचोऽसा[1]वेक एव विनिर्गतः॥३२॥यज्ञवाटाच्च दक्षस्य त्वरितः स्वाश्रमं ययौ॥मुनौ विनिर्गते दक्षः प्रहसन्निदमब्रवीत् ॥ ३३ ॥ गतः शिवप्रियो वीरो दधीचिर्नाम नामतः ॥ आविष्टचित्ता मंदाश्च मिथ्यावादरताः खलाः ॥ ३४ ॥ वेदबाह्या दुराचारास्त्याज्यास्ते ह्यत्र कर्मणि ॥ वेदवादरता यूयं सर्वे विष्णुपुरोगमाः ॥ ३५ ॥ यज्ञं मे सफलं विप्राः कुर्वंतु ह्यचिरादिव ॥ तदा ते देवयजनं चक्रुः सर्वे सहर्षयः ॥ ३६ ॥ एतस्मिन्नंतरे तत्र पर्वते गंधमादने ॥ धारागृहे विमानेन सखीभिः परिवारिता॥ ३७ ॥ दाक्षायणी महादेवी चकार विविधास्तदा ॥ क्रीडा विमानमध्यस्था कन्दुकाद्याः सहस्रशः ॥ ३८ ॥ क्रीडासक्ता तदा देवी ददर्शाथ महासती ॥ यज्ञं प्रयांतं सोमं च रोहिण्या सहितं प्रभुम् ॥ ३९ ॥ क्व गमिष्यति चंद्रोऽयं विजये पृच्छ सत्वरम् ॥ तयोक्ता विजया देवी तं पप्रच्छ यथोचितम् ॥ ४० ॥ कथितं तेन तत्सर्वं दक्षस्यैव मखादिकम् ॥ तच्छ्रुत्वा त्वरिता देवी विजया जातसंभ्रमा ॥ कथयामास तत्सर्वं यदुक्तं शशिना भृशम् ॥ ४१ ॥ विमृश्य कारणं देवी किमाह्वानं करोति न ॥ दक्षः पिता मे माता च विस्मृता मां कुतोऽधुना ॥ ४२ ॥ पृच्छामि शंकरं चाद्य कारणं कृतनिश्चया ॥ स्थापयित्वा सखीस्तत्र आगता शंकरं प्रति ॥ ४३ ॥ ददर्श तं सभामध्ये त्रिलोचनमवस्थितम् ॥ गणैः परिवृतं सर्वैश्चंडमुंडादिभिस्तदा ॥ ४४ ॥ बाणो भृंगिस्तथा नंदी शैलादो हि महातपाः ॥ महाकालो महाचंडो महामुंडो महाशिराः॥४५॥ धूम्राक्षो धूम्रकेतुश्च धूम्रपादस्तथैव च ॥ एते चान्ये च बहवो गणा रुद्रानुवर्तिनः ॥४६॥ केचिद्व्यानका रौद्राः कबंधाश्च तथा परे ॥ विलोचनाश्च केचिच्च वक्षोहीनास्तथा परे॥४७॥ एवंभूताश्च शतशः सर्वे ते कृत्तिवाससः॥जटाकलापसंभूपाः सर्वे रुद्राक्षभूपणाः ॥४८॥ जितेंद्रिया वीतरागाः सर्वे विषयवैरिणः॥एभिः सर्वैः परिवृतः शंकरो लोकशंकरः॥दृष्टस्तया उपाविष्ट आसने परमाद्भुते॥४९॥आक्षिप्तचित्ता सहसा जगाम शिवसंनिधिम्॥ शिवेन स्थापिता स्वांके प्रीतियुक्तेन वल्लभा॥५०॥ प्रेम्णोदिता वचोभिः सा बहुमानपुरःसरम्॥ किमागमनकार्यं मे वद शीघ्रं सुमध्यमे ॥५१॥ एवमुक्ता तदा तेन उवाचासितलोचना ॥५२॥ ॥ सत्युवाच ॥ ॥ पितुर्मम महायज्ञे कस्मात्तव न रोचते ॥ गमनं देवदे

१-अकारान्तोऽप्ययं दधीचशब्दः, इकारान्तोऽपि च, चान्तोऽपि च ।

वेश तत्सर्वं कथय प्रभो ॥ ५३ ॥ सुहृदामेष वै धर्मः सुहृद्भिः सह संगतिम् ॥ कुर्वंति यन्महादेव सुहृदां प्रीतिवर्धिनीम् ॥ ५४ ॥ तस्मात्सर्वप्रयत्नेन अनाहूतोऽपि गच्छ भोः ॥ यज्ञवाटं पितुर्मेऽद्य वचनान्मे सदाशिव ॥ ५५ ॥ तस्यास्तद्वचनं श्रुत्वा बभाषे सूनृतं वचः ॥ त्वया भद्रे न गंतव्यं दक्षस्य यजनं प्रति ॥ ५६ ॥ तस्य ये मानिनः सर्वे ससुरासुरकिंनराः ॥ ते सर्वे यजनं प्राप्ताः पितुस्तव न संशयः ॥५७॥अनाहूताश्च ये सुभ्रु गच्छंति परम न्दिरम् ॥अपमानं प्राप्नुवन्ति मरणादधिकं ततः॥५८॥ परेषां मंदिरं प्राप्त इंद्रोपि लघुतां व्रजेत् ॥ तस्मात्त्वया न गंतव्यं दक्षस्य यजनं शुभे ॥५९॥ एवमुक्ता सती तेन महेशेन महात्मना ॥ उवाच रोषसंयुक्तं वाक्यं वाक्यविदां वरा ॥ ६० ॥ यज्ञो हि सत्यं लोके त्वं स त्वं देववरेश्वर ॥ अनाहूतोऽसि तेनाद्य पित्रा मे दुष्टचारिणा ॥ तत्सर्वं ज्ञातुमिच्छामि तस्य भावं दुरात्मनः ॥६१॥ तस्माच्चाद्यैव गच्छामि यज्ञवाटं पितुर्म्मम ॥ अनुज्ञां देहि मे नाथ देवदेव जगत्पते ॥ ६२ ॥ इत्युक्तो भगवान्रुद्रस्तया देव्या शिवः स्वयम् ॥ विज्ञाताखिलदृग्द्रष्टा भगवान्भूतभावनः ॥ ६३ ॥ स तामुवाच देवेशो महेशः सर्वसिद्धिदः ॥ गच्छ देवि त्वरायुक्ता वचनान्मम सुव्रते ॥ ६४ ॥ एतं नंदिनमारुह्य नानाविधगणान्विता ॥ गणाः षष्टिसहस्राणि जग्मू रौद्राः शिवाज्ञया ॥ ६५ ॥ तैर्गणैः संवृता देवी जगाम पितृमंदिरम् ॥ निरीक्ष्य तद्बलं सर्वं महादेवोतिविस्मितः ॥६६॥ भूषणानि महार्हाणि तेभ्यो देव्यै परंतपः ॥ प्रेषयामास चाव्यग्रो महादेवोऽनु पृष्ठतः ॥ ६७ ॥ देव्या गतं वै स्वपितुर्गृहं तदा विमृश्य सर्वं भगवान्महेशः ॥ दाक्षायणी पित्रवमानिता सती न यास्यतीति स्वपुरं पुनर्जगौ ॥६८॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे दक्षयज्ञं प्रति सतीदेव्यागमनवर्णनंनाम द्वितीयोऽध्यायः ॥२॥ ॥ लोमश उवाच ॥ ॥ दाक्षायणी गता तत्र यत्र यज्ञो महानभूत् ॥ तत्पितुः सदनं गत्वा नानाश्चर्यसमन्वितम्॥ १॥द्वारि स्थिता तदा देवा अवतीर्य निजासनात्॥ नंदिनो हि महाभागा देवलोकं निरीक्ष्य च ॥२॥ मातरं पितरं दृष्ट्वा सुहृत्संबंधिबांधवान् ॥ अभिवाद्यैव पितरं मातरं च मुदान्विता ॥ ३ ॥ बभाषे वचनं देवी प्रस्तावसदृशं तदा॥ अनाहूतस्त्वया कस्माच्छंभुः परमशोभनः ॥४॥ येन पूतमिदं सर्वं समग्रं सचराचरम् ॥ यज्ञो यज्ञविदां श्रेष्ठो यज्ञांगो यज्ञदक्षिणः ॥५ ॥ द्रव्यं मंत्रादिकं सर्वं हव्यं कव्यं च यन्मयम् ॥ विना तेन कृतं सर्वमपवित्रं भविष्यति ॥ ६ ॥ शंभुना हि विना तात कथं यज्ञः प्रवर्तते ॥एते कथं समायाता ब्रह्मणा सहिताः पितः ॥ ७ ॥ हे भृगो त्वं न जानासि हे कश्यप महामते॥अत्रे वशिष्ठ एकस्त्वं शक्र किं कृतमद्य ते ॥८॥ हे विष्णो त्वं महादेवं जानासि परमेश्वरम् ॥ ब्रह्मन्किं त्वं न जानासि महादेवस्य विक्रमम् ॥ ९ ॥ पुरा पंचमुखो भूत्वा गर्वितोसि सदाशिवम् ॥ कृतश्चतुर्मुखस्तेन विस्मृतोऽसि तदद्भुतम् ॥ १० ॥ भिक्षाटनं कृतं येन पुरा दारुवने

विभुः॥शप्तोयं भिक्षुको रुद्रो भवद्भिः सखिभिस्तदा ॥११॥ शप्तेनापि च रुद्रेण भवद्भिर्विस्मृतं कथम् ॥ यस्यावयवमात्रेण पूरितं सचराचरम् ॥१२॥ लिंगभूतं जगत्सर्वं जातं तत्क्षणमेव हि॥लयनाल्लिंगमित्याहुः सर्वे देवाः सवासवाः॥१३॥सर्वे देवाश्च संभूता यतो देवस्य शूलिनः ॥ सोऽसौ वेदांतगो देवस्त्वया ज्ञातुं न पार्यते ॥१४॥ तस्या वचनमाकर्ण्य दक्षः क्रुद्धोऽब्रवीद्वचः॥किं त्वया बहुनोक्तेन कार्यं नास्तीह सांप्रतम् ॥ १५ ॥ गच्छ वा तिष्ठ वा भद्रे कस्मात्त्वं हि समागता ॥ अमंगलो हि भर्ता ते अशिवोसौ सुमध्यमे ॥ १६ ॥ अकुलीनो वेदबाह्यो भूतप्रेतपिशाचराट् ॥ तस्मान्नाकारितो भद्रे यज्ञार्थं चारुभाषिणि ॥ १७ ॥ मया दत्तासि सुश्रोणि पापिना मंदबुद्धिना ॥ रुद्रायाविदितार्थाय उद्धताय दुरात्मने ॥ १८ ॥ तस्मात्कायं परित्यज्य स्वस्था भव शुचिस्मिते ॥ दक्षेणोक्ता तदा पुत्री सा सती लोकपूजिता ॥ १९ ॥ निंदायुक्तं स्वपितरं विलोक्य रुषिता भृशम् ॥ चिंतयंती तदा देवी कथं यास्यामि मंदिरे ॥ २० ॥ शंकरं द्रष्टुकामाहं किं वक्ष्ये तेन पृच्छिता ॥ यो निंदति महादेवं निंद्यमानं शृणोति यः ॥ ताबुभौ नरके यातो यावच्चन्द्रदिवाकरौ ॥ २१ ॥ तस्मात्त्यक्ष्याम्यहं देहं प्रवेक्ष्यामि हुताशनम् ॥ २२ ॥ एवं मीमांसमाना सा शिवरुद्रेतिभाषिणी ॥ अपमानाभिभूता सा प्रविवेश हुताशनम् ॥ २३ ॥ हाहाकारेण महता व्याप्तमासीद्दिगंतरम् ॥ सर्वे ते मंचमारूढाः शस्त्रैर्व्याप्ता निरंतराः ॥ २४ ॥ शस्त्रैः स्वैर्जघ्नुरात्मानं स्वानि देहानि चिच्छिदुः ॥ केचित्करतले गृह्य शिरांसि स्वानि चोत्सुकाः ॥ २५ ॥ नीराजयंतस्त्वरिता भस्मीभूताश्च जज्ञिरे ॥ एवमूचुस्तदा सर्वे जगज्जुरतिभीषणम् ॥ २६ ॥ शस्त्रप्रहारैः स्वांगानि चिच्छिदुश्चातिभीषणाः ॥ ते तथा विलयं प्राप्ता दाक्षायण्या समं तदा ॥ २७ ॥ गणास्तत्रायुते द्वे च तदद्भुतमिवाभवत् ॥ ते सर्वे ऋषयो देवा इंद्राद्याः समरुद्गणाः ॥ २८ ॥ विश्वेऽश्विनौ लोकपालास्तूष्णींभूतास्तदाभवन् ॥ विष्णुं वरेण्यं केचिच्च प्रार्थयंतः समंततः ॥ २९ ॥ एवंभूतस्तदा यज्ञो जातस्तस्य दुरात्मनः ॥ दक्षस्य ब्रह्मबंधोश्च ऋषयो भयमागताः ॥ ३० ॥ एतस्मिन्नंतरे विप्रा नारदेन महात्मना ॥ कथितं सर्वमेवैतद्दक्षस्य च विचेष्टितम् ॥ ३१ ॥ तदाकर्ण्येश्वरो वाक्यं नारदस्य मुखोद्गतम् ॥ चुकोप परमं क्रुद्ध आसनादुत्पतन्निव ॥ ३२ ॥ उद्धृत्य च जटां रुद्रो लोकसंहारकारकः ॥ आस्फोटयामास रुषा पर्वतस्य शिरोपरि ॥ ३३ ॥ ताडनाच्च समुद्भूतो वीरभद्रो महायशाः ॥ तथा काली समुत्पन्ना भूतकोटिभिरावृता ॥ ३४ ॥ कोपान्निःश्वसितेनैव रुद्रस्य च महात्मनः ॥ जातं ज्वराणां च शतं सन्निपातास्त्रयोदश ॥ ३५ ॥ विज्ञप्तो वीरभद्रेण रुद्रो रौद्रपराक्रमः ॥ किं कार्यं भवतः कार्यं शीघ्रमेव वद प्रभो ॥ ३६ ॥ इत्युक्तो भगवान्रुद्रः प्रेषयामास सत्वरम् ॥ गच्छ वीर महा

बाहो दक्षयज्ञं विनाशय ॥ ३७ ॥ शासनं शिरसा धृत्वा देवदेवस्य शूलिनः ॥ कालिकाऽऽलिहितो वीरः सर्वभूतैः समावृतः ॥ वीरभद्रो महातेजा ययौ दक्षमखं प्रति ॥ ३८ ॥ तदानीमेव सहसा दुर्निमित्तानि चाभवन् ॥ रूक्षो ववौ तदा वायुः शर्कराभिः समावृतः ॥ ३९ ॥ असृग्वर्षति देवश्च तिमिरेणाऽऽवृता दिशः ॥ उल्कापाताश्च बहवः पेतुरुर्व्यां सहस्रशः ॥ ४० ॥ एवंविधान्यरिष्टानि ददृशुर्विबुधादयः ॥ दक्षोऽपि भयमापन्नो विष्णुं शरणमाययौ ॥ ४१ ॥ रक्षरक्ष महाविष्णो त्वं हि नः परमो गुरुः ॥ यज्ञोऽसि त्वं सुरश्रेष्ठ भयान्मां परिमोचय ॥ ४२ ॥ दक्षेण प्रार्थ्यमानो हि जगाद मधुसूदनः ॥ मया रक्षा विधातव्या भवतो नात्र संशयः ॥ ४३ ॥ अवज्ञा हि कृता दक्ष त्वया धर्ममजानता ॥ ईश्वरावज्ञया सर्वं विफलं च भविष्यति ॥ ४४ ॥ अपूज्या यत्र पूज्यंते पूजनीयो न पूज्यते ॥ त्रीणि तत्र प्रवर्तंते दुर्भिक्षं मरणं भयम् ॥ ४५ ॥ तस्मात्सर्वप्रयत्नेन माननीयो वृषध्वजः ॥ अमानितान्महेशात्त्वां महद्भयमुपस्थितम् ॥ ४६ ॥ अधुनैव वयं सर्वे प्रभवो न भवामहे ॥ भवतो दुर्नयेनैव नात्र कार्या विचारणा ॥ ४७ ॥ विष्णोस्तद्वचनं श्रुत्वा दक्षश्चिंतापरोऽभवत् ॥ विवर्णवदनो भूत्वा तूष्णीमासीद्भुवि स्थितः ॥ ४८ ॥ वीरभद्रो महाबाहू रुद्रेणैव प्रचोदितः ॥ काली कात्यायनीशाना चामुंडा मुंडमर्दिनी ॥ ४९ ॥ भद्रकाली तथा भद्रा त्वरिता वैष्णवी तथा ॥ नवदुर्गादिसहितो भूतानां च गणो महान् ॥ ५० ॥ शाकिनी डाकिनी चैव भूतप्रमथगुह्यकाः ॥ तथैव योगिनीचक्रं चतुःषष्ट्या समन्वितम् ॥ ५१ ॥ निर्जग्मुः सहसा तत्र यज्ञवाटं महाप्रभम् ॥ वीरभद्रसमेता ये गणाः शतसहस्रशः ॥ ५२ ॥ पार्षदाः शंकरस्यैते सर्वे रुद्रस्वरूपिणः ॥ पंचवक्त्रा नीलकंठाः सर्वे ते शस्त्रपाणयः ॥ ५३ ॥ छत्रचामरसंवीताः सर्वे हरपराक्रमाः ॥ दशबाहवस्त्रिनेत्रा जटिला रुद्रभूषणाः ॥ ५४ ॥ अर्धचंद्रधराः सर्वे सर्वे चैव महौजसः ॥ सर्वे ते वृषभारूढाः सर्वे ते वेषभूषणाः ॥ ५५ ॥ सहस्रबाहुर्भुजगाधिपैर्वृतस्त्रिलोचनो भीमबलो भयावहः ॥ एभिः समेतश्च तदा महात्मा स वीरभद्रोऽभिजगाम यज्ञम् ॥५६॥ युग्यानां च सहस्रेण द्विप्रमाणेन स्यंदनम् ॥ सिंहानां प्रयुतेनैव वाह्यमानं च तस्य तत् ॥५७॥ तथैव दंशिताः सिंहा बहवः पार्श्वरक्षकाः ॥ शार्दूला मकरा मत्स्या गजाश्चैव सहस्रशः ॥ छत्राणि विविधान्येव चामराणि तथैव च ॥ ५८ ॥ मूर्द्धनि ध्रियमाणानि सर्वतोग्राणि सर्वशः ॥ ततो भेरीमहानादाः शंखाश्च विविधस्वनाः ॥ पटहा गोमुखाश्चैव शृंगाणि विविधानि च ॥ ५९ ॥ ततोऽवाद्यंत तान्येव घनानि सुषिराणि च ॥ कलगानपराः सर्वे सर्वे मृदंगवादिनः ॥ ६० ॥ अनेकलास्यसंयुक्ता वीरभद्राग्रतोऽभवन् ॥ रणवादित्र

१ देवः—पर्जन्य इत्यर्थः ।

निर्घोषैर्जगर्ज्जरमितौजसः ॥ ६१ ॥ तेन नादेन महता नादितं भुवनत्रयम् ॥ एवं सर्वे समायाता गणा रुद्रप्रणोदिताः ॥ ६२ ॥ यज्ञवाटं च दक्षस्य विनाशार्थं प्रहारिणः ॥ रजसा चाऽऽवृतं व्योम तमसा च वृता दिशः ॥६३॥ सप्तद्वीपवती पृथ्वी चचाल साद्रिकानना ॥ ते दृष्ट्वा महदाश्चर्य्यं लोकक्षयकरं तदा ॥ ६४ ॥ उत्तस्थुर्युगपत्सर्वे देवदैत्यनिशाचराः ॥ ते वै ददृशुरायांतीं रुद्रसेनां भयावहाम् ॥ ६५ ॥ पृथ्वीं केचित्समायाता गगने केचिदागताः ॥ दिशश्च प्रदिशश्चैव समावृत्य तथापरे ॥ ६६ ॥ अनंता ह्यक्षयाः सर्वे शूरा रुद्रसमा युधि ॥ एवंभूतं च तत्सैन्यं रुद्रैश्च परिवारितम् ॥ दृष्ट्वोचुर्विस्मिताः सर्वे यामोऽद्य शस्त्रपाणयः ॥६७॥ इंद्रो हि गजमारूढो मृगारूढः सदागतिः ॥ यमो महिषमारूढो यमदंडसमन्वितः ॥ ६८ ॥ कुबेरः पुष्पकारूढः पाशी मकरमेव च ॥ अग्निर्बस्तसमारूढो निर्ऋतिः प्रेतमेव च ॥ ६९ ॥ तथान्ये सुरसंघाश्च यक्षचारणगुह्यकाः ॥ आरुह्य वाहनान्येव स्वानिस्वानि प्रतापिनः ॥७०॥ तेषामुद्योगमालोक्य दक्षश्चाश्रुमुखस्ततः ॥ दंडवत्पतितो भूमौ सर्वानेवाभ्यभाषत ॥७१॥ युष्मद्बलेनैव मया यज्ञः प्रारंभितो महान् ॥ सत्कर्मसिद्धये यूयं प्रमाणं सुमहाप्रभाः ॥ ७२ ॥ विष्णो त्वं कर्मणः साक्षाद्यज्ञानां परिपालकः ॥ धर्मस्य वेदगर्भस्य ब्रह्मण्यस्त्वं च माधव ॥ ७३ ॥ तस्माद्रक्षा विधातव्या यज्ञस्याऽस्य महाप्रभो ॥ दक्षस्य वचनं श्रुत्वा उवाच मधुसूदनः ॥ ७४ ॥ मया रक्षा विधातव्या धर्मस्य परिपालने ॥ तत्सत्यं तु त्वयोक्तं हि किं तु तस्य व्यतिक्रमः ॥ ७५ ॥ यातस्त्वद्यैव यज्ञस्य यत्त्वयोक्तं सदाशिवम् ॥ नैमिषेऽनिमिषक्षेत्रे तदा किं न स्मृतं त्वया ॥ ७६ ॥ योऽयं रुद्रो महातेजा यज्ञरूपः सदाशिवः ॥ यज्ञबाह्यः कृतो मूढ तच्च दुर्म्मंत्रितं तव ॥ ७७ ॥ रुद्रकोपाच्च को ह्यत्र समर्थो रक्षणे तव ॥ न पश्यामि च तं विप्र त्वां वै रक्षति दुर्म्मतिम् ॥ ७८ ॥ किं कर्म्म किमकर्म्मेति तन्न पश्यसि दुर्म्मते ॥ समर्थं केवलं कर्म न भविष्यति सर्वदा ॥ ७९ ॥ सेश्वरं कर्म विद्ध्येतत्समर्थत्वेन जायते ॥ न ह्यन्यः कर्म्मणो दाता ईश्वरेण विना भवेत् ॥ ८० ॥ ईश्वरस्य च ये भक्ताः शांतास्तद्गतमानसाः ॥ कर्म्मणो हि फलं तेषां प्रयच्छति सदाशिवः ॥८१॥ केवलं कर्म चाश्रित्य निरीश्वरपरा जनाः ॥ निरयं ते च गच्छंति कोटियज्ञशतैरपि ॥ ८२ ॥ पुनः कर्ममयैः पाशैर्बद्धा जन्मनिजन्मनि ॥ निरयेषु प्रपच्यंते केवलं कर्म्मरूपिणः ॥ ८३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे वीरभद्रप्रादुर्भाववर्णनंनाम तृतीयोऽध्यायः ॥३॥ ॥ लोमश उवाच ॥ ॥ विष्णुनोक्तं वचः श्रुत्वा दक्षो वचनमब्रवीत् ॥ वेदानामप्रमाणं च कृतं ते मधुसूदन ॥ १ ॥ वैदिकं कर्म चोत्सृज्य कथं सेश्वरतां व्रजेत् ॥ तदुच्यतां महाविष्णो येन धर्मः प्रतिष्ठितः ॥२॥ दक्षेणोक्तो महाविष्णुरुवाच परिसांत्वयन् ॥ त्रैगुण्यविषया वेदाः संभवंति न चान्यथा ॥३॥ वेदोदितानि कर्माणि ईश्वरेण

विना कथम् ॥ सफलानि भविष्यंति विफलान्येव तानि च ॥४॥ तस्मात्सर्वप्रयत्नेन ईश्वरं शरणं व्रज॥एवं ब्रुवति गोविन्द आगतः सैन्यसागरः॥ वीरभद्रेण सहशो ददृशुस्तं तदा सुराः॥ ५ ॥ इंद्रोपि प्रहसन्विष्णुमात्मवादरतं तदा ॥ वज्रपाणिः सुरैः सार्द्धं योद्धुकामोऽभवत्तदा ॥ ६ ॥ भृगुणा चारितः शीघ्रमुच्चाटनपरेण हि ॥ तदा गणाः सुरैः सार्धं युयुधुस्ते गणान्विताः ॥ ७ ॥ शरतोमरनाराचैर्जघ्नुस्ते च परस्परम् ॥ नेदुःशंखाश्च बहुश स्तस्मिन्रणमहोत्सवे ॥ ८ ॥ तथा दुन्दुभयो नेदुः पटहा डिंडिमादयः ॥ तेन शब्देन महता श्लाघ्यमानास्तदा सुराः ॥ लोकपालैश्च सहिता जघ्नुस्ता ञ्छिवकिंकरान् ॥ ९ ॥ खड्गैश्चापि हताः केचिद्गदाभिश्च विपोथिताः ॥ देवैः पराजिताः सर्वे गणाः शतसहस्रशः ॥ १० ॥ इंद्राद्यैर्लोकपालैश्च गणा स्ते च पराङ्मुखाः ॥ कृताश्च तत्क्षणादेव भृगोर्मंत्रबलेन हि ॥११॥ उच्चाटनं कृतं तेषां भृगुणा यज्विना तदा ॥ यजनार्थं च देवानां तुष्ट्यर्थं दीक्षित स्य च ॥ १२ ॥ तेनैव देवा जयिनो जातास्तत्क्षणमेव हि ॥ स्वानां पराजयं दृष्ट्वा वीरभद्रो रुषान्वितः ॥१३॥ भूतान्प्रेतान्पिशाचांश्च कृत्वा तानेव पृष्ठतः ॥ वृषभस्थान्पुरस्कृत्य स्वयं चैव महाबलः ॥ तीक्ष्णं त्रिशूलमादाय पातयामास तान्रणे ॥ १४ ॥ देवान्यक्षान्पिशाचांश्च गुह्यकान्राक्षसां स्तथा ॥ शूलघातैश्च ते सर्वे गणा देवान्प्रजघ्निरे ॥ १५ ॥ केचिद्द्विधाकृताः खड्गैर्मुद्गरैश्चापि पोथिताः ॥ परश्वधैः खंडशश्च कृताः केचिद्रणाजिरे ॥ ॥ १६ ॥ शूलैर्भिन्नाश्च शतशः केचिच्च शकलीकृताः ॥ एवं पराजिताः सर्वे पलायनपरायणाः ॥ १७ ॥ परस्परं परिष्वज्य गतास्तेपि त्रिविष्टपम् ॥ केवलं लोकपालाश्च इंद्राद्यास्तस्थुरुत्सुकाः ॥ बृहस्पतिं पृच्छमानाः कुतोस्माकं जयो भवेत् ॥१८॥ बृहस्पतिरुवाचेदं सुरेंद्रं त्वरितस्तदा ॥ ॥ बृहस्पति रुवाच ॥ ॥ यदुक्तं विष्णुना पूर्वं तत्सत्यं जातमद्य वै ॥ १९ ॥ अस्ति चेदीश्वरः कश्चित्फलरूप्यस्य कर्म्मणः ॥ कर्तारं भजते सोपि न ह्यकर्तुः प्रभुर्हिसः ॥ २० ॥ न मंत्रौषधयः सर्वे नाभिचारा न लौकिकाः ॥ न कर्माणि न वेदाश्च न मीमांसाद्वयं तथा ॥ २१ ॥ ज्ञातुमीशाः संभवंति भक्त्याज्ञेयस्त्वनन्यया ॥ शांत्या च परया तुष्ट्या ज्ञातव्यो हि सदाशिवः ॥ २२ ॥ तेन सर्वं संभवंति सुखदुःखात्मकं जगत् ॥ परंतु संवदिष्यामि कार्याकार्यविवक्षया ॥ २३ ॥ त्वमिंद्र बालिशो भूत्वा लोकपालैः सहाद्य वै ॥ आगतो बालिशो भूत्वा इदानीं किं करिष्यसि ॥ २४ ॥ एते रुद्रसहायाश्च गणाः परमशोभनाः ॥ कुपिताश्च महाभागा न तु शेषं प्रकुर्वते ॥ २५ ॥ एवं बृहस्पतेर्वाक्यं श्रुत्वा तेऽपि दिवौकसः ॥ चिंतामापेदिरे सर्वे लोकपाला महेश्वराः ॥ २६ ॥ ततो ऽब्रवीद्वीरभद्रो गणैः परिवृतो भृशम् ॥ सर्वे यूयं बालिशत्वादवदानार्थमागताः ॥ २७ ॥ अवदानानि दास्यामि तृप्त्यर्थं भवतां त्वरन् ॥ एवमुक्त्वा शितैर्बाणैर्जघानाथ रुषान्वितः ॥ २८ ॥ तैर्बाणैर्निहताः सर्वे जग्मुस्ते च दिशो दश ॥ २९ ॥

गतेषु लोकपालेषु विद्रुतेषु सुरेषु च ॥ यज्ञवाटे समायातो वीरभद्रो गणान्वितः ॥ ३० ॥ तदा त ऋषयः सर्वे सर्वमेवेश्वरेश्वरम् ॥ विज्ञप्तुकामाः सहसा ऊचुरेवं जनार्दनम् ॥३१॥ रक्ष यज्ञं हि दक्षस्य यज्ञोसि त्वं न संशयः॥एतच्छ्रुत्वा तु वचनमृषीणां वै जनार्दनः ॥३२॥ योद्धुकामः स्थितो युद्धे विष्णुर ध्यात्मदीपकः ॥ वीरभद्रो महाबाहुः केशवं वाक्यमब्रवीत् ॥३३॥ अत्र त्वयागतं कस्माद्विष्णो वेत्रा महाबलम् ॥ दक्षस्य पक्षमाश्रित्य कथं जेष्यसि तद्वद ॥ ३४ ॥ दाक्षायण्या कृतं यच्च न दृष्टं किं त्वयानघ ॥ त्वं चापि यज्ञे दक्षस्य अवदानार्थमागतः ॥ अवदानं प्रयच्छामि तव चापि महाभुज ॥ ३५ ॥ एवमुक्त्वा प्रणम्यादौ विष्णुं सद्दशरूपिणम् ॥ वीरभद्रोऽग्रतो भूत्वा विष्णुं वाक्यमथाब्रवीत् ॥ ३६ ॥ यथा शंभुस्तथा त्वं हि मम नास्त्यत्र संशयः ॥ तथापि त्वं महाबाहो योद्धुकामोऽग्रतः स्थितः ॥ नेष्याम्यपुनरावृत्तिं यदि तिष्ठेस्त्वमात्मना ॥ ३७ ॥ तस्य तद्वचनं श्रुत्वा वीरभद्रस्य धीमतः ॥ उवाच प्रहसन्देवो विष्णुः सर्वेश्वरेश्वरः ॥३८॥ ॥ विष्णुरुवाच ॥ ॥ रुद्रतेजःप्रसूतोसि पवित्रोऽसि महामते ॥ अनेन प्रार्थितः पूर्वं यज्ञार्थं च पुनःपुनः ॥ ३९ ॥ अहं भक्तपराधीनस्तथा सोऽपि महेश्वरः ॥ तेनैव कारणेनात्र दक्षस्य यजनं प्रति ॥ ४० ॥ आगतोऽहं वीरभद्र रुद्रकोपसमुद्भव ॥ अहं निवारयामि त्वां त्वं वा मां विनिवारय ॥ ४१ ॥ इत्युक्तवति गोविंदे प्रहस्य स महाभुजः ॥ प्रश्रयावनतो भूत्वा इदमाह जनार्दनम् ॥ ४२ ॥ यथा शिवस्तथा त्वं हि यथा त्वं च तथा शिवः ॥ सेवकाश्च वयं सर्वे तव वा शंकरस्य च ॥ ४३ ॥ तच्छ्रुत्वा वचनं तस्य सोऽच्युतः संप्रहस्य च ॥ इदं विष्णुर्महावाक्यं जगाद परमेश्वरः ॥४४॥ योधयस्व महाबाहो मया सार्धमशंकितः ॥ तवास्त्रैः पूर्यमाणोऽहं गच्छामि भवनं स्वकम् ॥ ४५ ॥ तथेत्युक्त्वा तु वीरोऽसौ वीरभद्रो महाबलः ॥ गृहीत्वा परमास्त्राणि सिंहनादैर्जगर्ज ह ॥ ४६ ॥ विष्णुश्चापि महाघोषं शंखनादं चकार सः ॥ तच्छ्रुत्वा ये गता देवा रणं हित्वाऽऽययुः पुनः ॥ ४७ ॥ व्यूहं चक्रुस्तदा सर्वे लोकपालाः सवासवाः ॥ तदेन्द्रेण हतो नंदी वज्रेण शतपर्वणा ॥ ४८ ॥ नंदिना च हतः शक्रस्त्रिशूलेन स्तनांतरे ॥ वायुना च हतो भृंगी भृंगिणा वायुराहतः ॥४९॥ शूलेन सितधारेण संनद्धो दण्डधारिणा ॥ यमेन सह संग्रामं महाकालो बलान्वितः ॥ ५० ॥ कुबेरेण च संगम्य कूष्मांडानां पतिः स्वयम् ॥ वरुणेन समं युद्धं मुंडश्चैव महा बलः ॥५१॥ युयुधे परया शक्त्या त्रैलोक्यं विस्मयन्निव ॥ नैर्ऋतेन समागम्य चंडश्च बलवत्तरः ॥ ५२ ॥ युयुधे परमास्त्रेण नैर्ऋत्यं च विडंबयन् ॥ योगिनीचक्रसंयुक्तो भैरवो नायको महान् ॥५३॥ विदार्य देवानखिलान्पपौ शोणितमद्भुतम् ॥ क्षेत्रपालास्तथा चान्ये भूतप्रमथगुह्यकाः ॥ ५४ ॥ शाकिनी डाकिनी रौद्रा नवदुर्गास्तथैव च ॥ योगिन्यो यातुधान्यश्च तथा कूष्मांडकादयः ॥ नेदुः पपुः शोणितं च बुभुजुः पिशितं बहु ॥ ५५ ॥

भक्ष्यमाणं तदा सैन्यं विलोक्य सुरराट्स्वयम् ॥ विहाय नंदिनं पश्चाद्वीरभद्रं समाक्षिपत् ॥ ५६ ॥ वीरभद्रो विहायैव विष्णुं देवेन्द्रमास्थितः ॥ तयोर्युद्धमभूद्घोरं बुधांगारकयोरिव ॥ ५७ ॥ वीरभद्रं यदा शक्रो हंतुकामस्त्वरान्वितः ॥ तावच्छक्रं गजस्थं हि पूरयामास मार्गणैः ॥ ५८ ॥ वीरभद्रो रुषाविष्टो दुर्निवार्यो महाबलः ॥ तदेंद्रेणाहतः शीघ्रं वज्रेण शतपर्वणा ॥ ५९ ॥ सगजं च सवज्रं च वासवं ग्रस्तुमुद्यतः ॥ हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ॥ ६० ॥ वीरभद्रं तथाभूतं हंतुकामं पुरंदरम् ॥ त्वरमाणस्तदा विष्णुर्वीरभद्राग्रतः स्थितः ॥ ६१ ॥ शक्रं च पृष्ठतः कृत्वा योधयामास वै तदा ॥ वीरभद्रस्य विष्णोश्च युद्धं परमभूत्तदा ॥ ६२ ॥ शस्त्रास्त्रैर्विविधाकारैर्योधयामासतुस्तदा ॥ पुनर्नंदिनमालोक्य शक्रो युद्धविशारदः ॥ ६३ ॥ द्वंद्वयुद्धं सुतुमुलं देवानां प्रमथैः सह ॥ प्रमथा मथिता देवैः सर्वे ते प्राद्रवन्रणात् ॥६४॥ गणान्पराङ्मुखान्दृष्ट्वा सर्वे ते व्याधयो भृशम् ॥ रुद्रकोपात्समुद्भूता देवाश्चापि प्रदुद्रुवुः ॥ ६५ ॥ ज्वरैस्तु पीडितान्देवान्दृष्ट्वा विष्णुर्हसन्निव ॥ जीवग्राहेण जग्राह देवांस्तांश्च पृथक्पृथक् ॥ ॥ ६६ ॥ देवाश्विनौ तदाहूय व्याधीन्हंतुं तदा भृतिम् ॥ ददौ ताभ्यां प्रयत्नेन गणयित्वा सुबुद्धिमान् ॥ ६७ ॥ ज्वरांश्च सन्निपातांश्च अन्ये भूतद्रुहस्तदा ॥ तान्सर्वान्निगृहीत्वाथ अश्विनौ तौ मुदान्वितौ ॥ विज्वरानथ देवांश्च कृत्वा मुमुदतुश्चिरम् ॥ ६८ ॥ तैर्जितं योगिनीचक्रं भैरवं व्याकुलीकृतम् ॥ तीक्ष्णाग्रैः पातयामासुः शरैर्भूतगणानपि ॥ ६९ ॥ सुरैर्विद्रावितं सैन्यं विलोक्य पतितं भुवि ॥ वीरभद्रो रुषाविष्टो विष्णुं वचनमब्रवीत् ॥ ७० ॥ त्वं शूरोसि महाबाहो देवानां पालको ह्यसि ॥ युध्यस्व मां प्रयत्नेन यदि ते मतिरीदृशी ॥ ७१ ॥ इत्युक्त्वा तं समासाद्य विष्णुं सर्वेश्वरेश्वरम् ॥ ववर्ष निशितैर्बाणैर्वीरभद्रो महाबलः ॥ ७२ ॥ तदा चक्रेण भगवान्वीरभद्रं जघान सः ॥ आयांतं चक्रमालोक्य ग्रसितं तत्क्षणाच्च तत् ॥ ७३ ॥ ग्रसितं चक्रमालोक्य विष्णुः परपुरंजयः ॥ मुखं तस्य परामृज्य विष्णुनोद्गिलितं पुनः ॥ ७४ ॥ स्वचक्रमादाय महानुभावो दिवं गतोऽथो भुवनैकभर्ता ॥ ज्ञात्वा च तत्सर्वमिदं च विष्णुः कृती कृतं दुष्प्रसहं परेषाम् ॥ ७५ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे वीरभद्रादीनां विष्ण्वादिभिः सह युद्धवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥

लोमश उवाच ॥ ॥ विष्णौ गते तदा सर्वे देवाश्च ऋषिभिः सह ॥ विनिर्जिता गणैः सर्वे ये च यज्ञोपजीविनः ॥ १ ॥ भृगुं च पातयामास श्मश्रूणां लुंचनं कृतम् ॥ द्विजांश्चोत्पाटयामास पूष्णो विकृतविक्रियान् ॥ २ ॥ विडंबिता स्वधा तत्र ऋषयश्च विडंबिताः ॥ ववृषुस्ते पुरीषेण वितानाग्नौ रुषान्विताः ॥३॥ अनिर्वाच्यं तदा चक्रुर्गणाः क्रोधसमन्विताः ॥ अंतर्वेद्यंतरगतो दक्षो वै महतो भयात् ॥ ४ ॥ तं निलीनं समाज्ञाय

आनिनाय रुपान्वितः ॥ कपोलेषु गृहीत्वा तं खड्गेनोपहतं शिरः ॥ ५ ॥ अभेद्यं तच्छिरो मत्वा वीरभद्रः प्रतापवान् ॥ स्कंधं पद्भ्यां समाक्रम्य कंधरेऽ
पीडयत्तदा ॥ ६ ॥ कंधरात्पाव्यमानाच्च शिरश्छिन्नं दुरात्मनः ॥ दक्षस्य च तदा तेन वीरभद्रेण धीमता ॥ तच्छिरः सुहुतं कुंडे ज्वलिते तत्क्षणा
त्तदा ॥ ७ ॥ ये चान्य ऋषयो देवाः पितरो यक्षराक्षसाः ॥ गणैरुपद्रुताः सर्वे पलायनपरा ययुः ॥ ८ ॥ चंद्रादित्यगणाः सर्वे ग्रहनक्षत्रतारकाः ॥
सर्वे विचलिता ह्यासन्गणैस्तेपि ह्युपद्रुताः ॥ ९ ॥ सत्यलोकं गतो ब्रह्मा पुत्रशोकेन पीडितः ॥ चिंतयामास चाव्यग्रः किं कार्यं कार्यमद्य मे ॥
॥ १० ॥ मनसा दूयमानेन शं न लेभे पितामहः ॥ ज्ञात्वा सर्वं प्रयत्नेन दुष्कृतं तस्य पापिनः ॥ ११ ॥ गमनाय मतिं चक्रे कैलासं पर्वतं प्रति ॥
हंसारूढो महातेजाः सर्वदेवैः समन्वितः ॥ १२ ॥ प्रविष्टः पर्वतश्रेष्ठं स ददर्श सदाशिवम् ॥ एकांतवासिनं रुद्रं शैलादेन समन्वितम् ॥ १३ ॥
कपर्दिनं श्रिया युक्तं वेदांगानां च दुर्गमम् ॥ तथाविधं समालोक्य ब्रह्मा क्षोभपरोऽभवत् ॥ १४ ॥ दंडवत्पतितो भूमौ क्षमापयितुमुद्यतः ॥ संस्पृशं
स्तत्पदाब्जं च चतुर्मुकुटकोटिभिः ॥ स्तुतिं कर्तुं समारेभे शिवस्य परमात्मनः ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमो रुद्राय शांताय ब्रह्मणे परमा
त्मने ॥ त्वं हि विश्वसृजां स्रष्टा धाता त्वं प्रपितामहः ॥ १६ ॥ नमो रुद्राय महते नीलकंठाय वेधसे ॥ विश्वाय विश्वबीजाय जगदानंदहेतवे ॥
॥ १७ ॥ ओंकारस्त्वं वषट्कारः सर्वारंभप्रवर्तकः ॥ यज्ञोसि यज्ञकर्मासि यज्ञानां च प्रवर्तकः ॥ १८ ॥ सर्वेषां यज्ञकर्तॄणां त्वमेव प्रतिपालकः ॥
शरण्योसि महादेव सर्वेषां प्राणिनां प्रभो ॥ रक्ष रक्ष महादेव पुत्रशोकेन पीडितम् ॥ १९ ॥ ॥ महादेव उवाच ॥ ॥ शृणुष्वावहितो भूत्वा मम वाक्यं
पितामह ॥ दक्षस्य यज्ञभंगोयं न कृतश्च मया क्वचित् ॥ २० ॥ स्वीयेन कर्मणा दक्षो हतो ब्रह्मन्न संशयः ॥ २१ ॥ परेषां क्लेशदं कर्म न कार्यं
तत्कदाचन ॥ परमेष्ठिन्परेषां यदात्मनस्तद्भविष्यति ॥ २२ ॥ एवमुक्त्वा तदा रुद्रो ब्रह्मणा सहितः सुरैः ॥ ययौ कनखलं तीर्थं यज्ञवाटं प्रजापतेः ॥
॥ २३ ॥ रुद्रस्तदा ददर्शाथ वीरभद्रेण यत्कृतम् ॥ स्वाहा स्वधा तथा पूषा भृगुर्मतिमतां वरः ॥ २४ ॥ तदान्य ऋषयः सर्वे पितरश्च तथाविधाः ॥
येऽन्ये च बहवस्तत्र यक्षगंधर्वकिन्नराः ॥ २५ ॥ त्रोटिता लुंचिताश्चैव मृताः केचिद्रणाजिरे ॥ २६ ॥ शंभुं समागतं दृष्ट्वा वीरभद्रो गणैः सह ॥
दंडप्रणामसंयुक्तस्तस्थावग्रे सदाशिवम् ॥ २७ ॥ दृष्ट्वा पुरः स्थितं रुद्रो वीरभद्रं महाबलम् ॥ उवाच प्रहसन्वाक्यं किं कृतं वीर नन्विदम् ॥ २८ ॥
दक्षमानय शीघ्रं भो येनेदं कृतमीदृशम् ॥ यज्ञे विलक्षणं तात यस्येदं फलमीदृशम् ॥ २९ ॥ एवमुक्तः शंकरेण वीरभद्रस्त्वरान्वितः ॥ कबंध
मानयित्वाथ शंभोरग्रे तदाक्षिपत् ॥ ३० ॥ तदोक्तः शंकरेणैव वीरभद्रो महामनाः ॥ शिरः केना पनीतं च दक्षस्यास्य दुरात्मनः ॥ ३१ ॥ दास्या

मि जीवनं वीर कुटिलस्यापि चाधुना ॥ एवमुक्तः शंकरेण वीरभद्रोऽब्रवीत्पुनः ॥ ३२ ॥ मया शिरो हुतं चाग्नौ तदानीमेव शंकर ॥ अवशिष्टं शिरः शंभो पशोश्च विकृताननम् ॥३३॥ इति ज्ञात्वा ततो रुद्रः कबंधोपरि चाक्षिपत् ॥ शिरः पशोश्च विकृतं कूर्चयुक्तं भयावहम् ॥ ३४ ॥ स दक्षो जीवितं लेभे प्रसादाच्छंकरस्य च ॥ स दृष्ट्वाग्रे तदा रुद्रं दक्षो लज्जासमन्वितः ॥ तुष्टाव प्रणतो भूत्वा शंकरं लोकशंकरम् ॥ ३५ ॥ ॥ दक्ष उवाच ॥ ॥ नमामि देवं वरदं वरेण्यं नमामि देवेशवरं सनातनम् ॥ नमामि देवाधिपमीश्वरं हरं नमामि शंभुं जगदेकबंधुम् ॥ ३६ ॥ नमामि विश्वेश्वरविश्वरूपं सनातनं ब्रह्म निजात्मरूपम् ॥ नमामि सर्वं निजभावभावं वरं वरेण्यं वरदं नतोऽस्मि ॥ ३७ ॥ ॥ लोमश उवाच ॥ ॥ दक्षेण संस्तुतो रुद्रो बभाषे प्रहसन्हरः ॥ ३८ ॥ ॥ हर उवाच ॥ ॥ चतुर्विधा भजंते मां जनाः सुकृतिनः सदा ॥ आर्तो जिज्ञासुरर्थार्थी ज्ञानी च द्विजसत्तम ॥ ३९ ॥ तस्मान्मे ज्ञानिनः सर्वे प्रियाः स्युर्नात्र संशयः ॥ विना ज्ञानेन मां प्राप्तुं यतंते ते हि बालिशाः ॥ ४० ॥ केवलं कर्मणा त्वं हि संसारात्तर्तुमिच्छसि ॥ ४१ ॥ न वेदैश्च न दानैश्च न यज्ञैस्तपसा क्वचित् ॥ न शक्नुवंति मां प्राप्तुं मूढाः कर्म्मवशा नराः ॥ ४२ ॥ तस्माज्ज्ञानपरो भूत्वा कुरु कर्म्म समाहितः ॥ सुखदुःखसमो भूत्वा सुखी भव निरंतरम् ॥ ४३ ॥ ॥ लोमश उवाच ॥ ॥ उपदिष्टस्तदा तेन शंभुना परमेष्ठिना ॥ दक्षं तत्रैव संस्थाप्य ययौ रुद्रः स्वपर्वतम् ॥ ४४ ॥ ब्रह्मणापि तथा सर्वे भृग्वाद्याश्च महर्षयः ॥ आश्वासिता बोधिताश्च ज्ञानिनश्चाभवन्क्षणात् ॥ ४५ ॥ गतः पितामहो ब्रह्मा ततश्च सदनं स्वकम् ॥ ४६ ॥ दक्षोपि च स्वयं वाक्यात्परं बोधमुपागतः शिवध्यानपरो भूत्वा तपस्तेपे महामनाः ॥ ४७ ॥ तस्मात्सर्वप्रयत्नेन संसेव्यो भगवाञ्छिवः ॥ ४८ ॥ संमार्जनं च कुर्वंति नरा ये च शिवांगणे ॥ ते वै शिवपुरं प्राप्य जगद्वंद्या भवंति च ॥ ४९ ॥ ये शिवाय प्रयच्छंति दर्प्पणं सुमहाप्रभम् ॥ भविष्यंति शिवस्याग्रे पार्षदत्वेन ते नराः ॥ ५० ॥ चामराणि प्रयच्छंति देवदेवस्य शूलिनः ॥ चामरैर्वीज्यमानास्ते भविष्यंति जगत्रये ॥ ५१ ॥ दीपदानं प्रयच्छंति महादेवालये नराः ॥ तेजस्विनो भविष्यंति ते त्रैलोक्यप्रदीपकाः ॥ ५२ ॥ धूपं ये वै प्रयच्छन्ति शिवाय परमात्मने ॥ यशस्विनो भविष्यंति उद्धरन्ति कुलद्वयम् ॥ ५३ ॥ नैवेद्यं ये प्रयच्छंति भक्त्या हरिहराग्रतः ॥ सिक्थेसिक्थे क्रतुफलं प्राप्नुवंति हि ते नराः ॥ ५४ ॥ भग्नं शिवालयं ये च प्रकुर्वंति[१] नरोत्तमाः ॥ प्राप्नुवंति फलं ते वै द्विगुणं नात्र संशयः ॥ ५५ ॥ नूतनं ये प्रकुर्वंति इष्टकैरश्मनापि वा ॥ स्वर्गे हि ते

१ प्रकुर्वंति—जीर्णोद्धारं प्रकुर्वन्ति—इत्यर्थः ।

प्रमोदंते यावत्तिष्ठति निर्मलम् ॥ यशो भूमौ द्विजश्रेष्ठा नात्र कार्या विचारणा ॥ ५६ ॥ कारयंति च ये विप्राः प्रासादं बहुभूमिकम् ॥ शिवस्याथ महाप्राज्ञाः प्राप्नुवंति परां गतिम् ॥ ५७ ॥ शुद्धं धवलितं ये च कुर्वन्ति हरमंदिरम् ॥ स्वीयं परकृतं चापि तेऽपि यांति परां गतिम् ॥ ५८ ॥ वितानं ये प्रयच्छंति नराः सुकृतिनोपि हि ॥ तारयंति कुलं कृत्स्नं शिवलोकं गताः पुनः ॥ ५९ ॥ क्षे च नादमयीं घंटां निबध्नंति शिवालये ॥ तेजस्विनः कीर्तिमंतो भविष्यंति जगत्रये ॥ ६० ॥ एककालं द्विकालं वा त्रिकालं चानुपश्यति ॥ आढ्यो वापि दरिद्रो वा सुखं दुःखात्प्रमुच्यते ॥ ६१ ॥ श्रद्धावान्भजते यो वा शिवाय परमात्मने ॥ कुलकोटिं समुद्धृत्य शिवेन सह मोदते ॥ ६२ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ ऐंद्रद्युम्नेश्च संवादं यमस्य च महात्मनः ॥ ६३ ॥ पुरा कृतयुगे ह्यासीदिन्द्रसेनो नराधिपः ॥ प्रतिष्ठानाधिपो वीरो मृगयारसिकः सदा ॥ ६४ ॥ अब्रह्मण्यः सदा क्रूरः केवलासुतृपः सदा ॥ परप्राणैर्निजप्राणान्पुष्णाति स खलः सदा ॥ ६५ ॥ परस्त्रीलंपटोऽत्यंतं परद्रव्येषु लोलुपः ॥ ब्राह्मणा घातितास्तेन सुरापश्च निरंतरम् ॥ ६६ ॥ गुरुतल्पगतोत्यर्थं सदा सौवर्णतस्करः ॥ तथाभूतानुगाः सर्वे राज्ञस्तस्य दुरात्मनः ॥ ६७ ॥ एवं बहुविधं राज्यं चकार स दुरात्मवान् ॥ ततः कालेन महता पंचत्वं प्राप दुर्मतिः ॥६८॥ तदा याम्यैश्च नीतोऽसाविंद्रसेनो दुरात्मवान् ॥ यमान्तिकमनुप्राप्तस्तदा राजा सकल्मषः ॥ ६९ ॥ यमेन दृष्टस्तत्रासाविंद्रसेनोग्रतः स्थितः ॥ अभ्युत्थानपरो भूत्वा ननाम शिरसा शिवम् ॥ ७० ॥ दूतान्संभर्त्सयामास यमो धर्मभृतां वरः ॥ पाशैर्बद्धं चंद्रसेनं मुक्त्वा प्रोवाच धर्मराट् ॥ ७१ ॥ गच्छ पुण्यतमाँल्लोकान्भुंक्ष्व राजन्यसत्तम ॥ यावदिंद्रश्च नाकेऽस्ति यावत्सूर्यो नभस्तले ॥ ७२ ॥ पंचभूतानि यावच्च तावत्त्वं च सुखी भव ॥ सुकृती त्वं महाराज शिवभक्तोऽसि नित्यदा ॥ ७३ ॥ यमस्य वचनं श्रुत्वा इंद्रसेनोभ्यभाषत ॥ अहं शिवं न जानामि मृगयारसिको ह्यहम् ॥ ७४ ॥ तच्छ्रुत्वा वचनं तस्य यमो भाष्यमभाषत ॥ आहर प्रहरस्वेति उक्तं चेदं सदा त्वया ॥ ७५ ॥ तेन कर्मविपाकेन सदा पूतोसि मानद ॥ तस्मात्त्वं गच्छ कैलासं पर्वतं शंकरं प्रति ॥ ७६ ॥ एवं संभाषमाणस्य यमस्य च महात्मनः ॥ आगताः शिवदूतास्ते वृषारूढा महाप्रभाः ॥७७॥ नीलकंठा दशभुजाः पंचवक्त्रास्त्रिलोचनाः ॥ कपर्दिनः कुंडलिनः शशांकांकितमौलयः ॥७८॥ तान्दृष्ट्वा सहसोत्थाय यमो धर्मभृतां वरः ॥ पूजयामास तान्सर्वान्महेंद्रप्रतिमांस्तदा ॥ ७९ ॥ त्वरितेनैव ते सर्वे ऊचुर्वैवस्वतं यमम् ॥ अत्रागतो महाभाग इंद्रसेनोऽमितद्युतिः ॥ नाम्नः प्रवर्त्तको नित्यं रुद्रस्य च महात्मनः ॥८०॥ श्रुत्वा च वचनं तेषां यमेन च पुरस्कृतः ॥ इंद्रसेनो विमानस्थः प्रेपितो हि

शिवालयम् ॥ ८१ ॥ आनीतोयं तदा तैश्च पार्षदप्रवरोत्तमैः ॥ शंभुना हि तदा दृष्ट इंद्रसेनोऽमितद्युतिः ॥ ८२ ॥ अभ्युत्थायागतो रुद्रः परिष्वज्य तदा नृपम् ॥ अर्द्धासनगतं कृत्वा इंद्रसेनं ततोऽब्रवीत् ॥ ८३ ॥ किं दातव्यं नृपश्रेष्ठ प्रयच्छामि तवेप्सितम् ॥ इति श्रुत्वा वचस्तस्य महेशस्य तदा नृपः ॥ आनंदाश्रुकणान्मुंचन्प्रेम्णा नोवाच किंचन ॥ ८४ ॥ तदा कृतो महेशेन पार्षदो हि महात्मना ॥ चंडो नाम्ना च विख्यातो मुण्डस्य च सखा प्रियः॥८५॥नामोच्चारणमात्रेण रुद्रस्य परमात्मनः॥सिद्धिं प्राप्तो हि पापिष्ठ इन्द्रसेनो नराधिपः ॥८६॥ हरे हरेति वै नाम्ना शंभोश्चक्रधरस्य च ॥ रक्षिता बहवो मर्त्याः शिवेन परमात्मना ॥ ८७ ॥ महेशान्नापरो देवो दृश्यते भुवनत्रये ॥ तस्मात्सर्वप्रयत्नेन पूजनीयः सदाशिवः॥८८॥पत्रैः पुष्पैः फलैर्वापि जलैर्वा विमलैः सदा॥ करवीरैः पूज्यमानः शंकरो वरदो भवेत् ॥८९॥ करवीराद्दशगुणमर्कपुष्पं विशिष्यते॥ विभूत्यादिकृतं सर्वं जगदेतच्चराचरम् ॥ ९० ॥ शिवस्यांगणलग्ना या तस्मात्तां धारयेत्सदा ॥ ततस्त्रिपुंड्रे यत्पुण्यं तच्छृणुध्वं द्विजोत्तमाः ॥ ९१ ॥ सर्वपापहरं पुण्यं तच्छृणुध्वं द्विजोत्तमाः ॥ स्तेनः कोऽपि महापापो घातितो राजदूतकैः ॥ ९२ ॥ तं खादितुं समायातः श्वा शिरस्युपर्या...गः॥ नखांतरालसंलग्ना रक्षा तस्यैव पापिनः ॥ ९३ ॥ ललाटे पतिता तस्य त्रिपुंड्रांकितमुद्रया ॥ चैतन्येन विना तस्य देहमात्रैकलग्नया ॥ ९४ ॥ कैलासं तस्करो नीतो रुद्रदूतैस्ततस्तदा ॥ विभूतेर्महिमानं तु को विशेषितुमर्हति ॥ ९५ ॥ विभूत्या मंडितांगानां नराणां पुण्यकर्मणाम् ॥ मुखे पंचाक्षरो येषां रुद्रास्ते नात्र संशयः ॥ ९६ ॥ जटाकलापिनो ये च ये रुद्राक्षविभूषणाः ॥ ते वै मनुष्यरूपेण रुद्रा नास्त्यत्र संशयः ॥ ॥ ९७ ॥ तस्मात्सदाशिवः पुंभिः पूजनीयो हि नित्यशः ॥ प्रातर्मध्याह्नकाले च सायं संध्या विशिष्यते ॥ ९८ ॥ प्रातस्तु दर्शनाच्छंभोर्नैशमेनो व्यपोहति ॥ मध्याह्ने दर्शनाच्छंभोः सप्तजन्मार्जितं नृणाम् ॥ पापं प्रणाशमायाति निशायां नैव गण्यते ॥ ९९ ॥ शिवेति द्व्यक्षरं नाम महापापप्रणाशनम् ॥ येषां मुखोद्गतं नृणां तैरिदं धार्यते जगत् ॥ १०० ॥ शिवांगणे तु या भेरी स्थापिता पुण्यकर्मभिः ॥ तस्या नादेन पूता वै ये च पापरता जनाः ॥ पाषंडिनोऽप्यसद्वादास्तेऽपि यांति परां गतिम् ॥ १०१ ॥ पशोर्यस्य च संबद्धा चर्मणा च शिवालये ॥ नृभिर्या स्थापिता भेरी मृदंगमुरजादि च ॥ स पशुः शिवसान्निध्यमाप्नोत्यत्र न संशयः ॥ १०२ ॥ तस्मात्ततं च विततं घनं सुषिरमेव च ॥ चामराणि महार्हाणि मंचकाः शयनानि च ॥ १०३ ॥ गाथाश्च इतिहासाश्च गायनं च यथाविधि ॥ बहुरूपादिकं शंभोः प्रियान्येतानि कल्पयेत् ॥ १०४ ॥ कल्पयित्वा च गच्छंति शिवलोकं हि पापिनः ॥ सुधर्माणो महात्मानः शिवपूजाविशारदाः ॥ १०५ ॥ गुरोर्मुखाच्च संप्राप्तशिवपूजारताश्च ये ॥

शिवरूपेण ये विश्वं पश्यंति कृतनिश्चयाः ॥ १०६ ॥ सम्यग्बुद्ध्या समाचारा वर्णाश्रमयुता नराः ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्ये तथा नराः ॥ १०७ ॥ श्वपचोऽपि वरिष्ठः स शंभोः प्रियतरो भवेत् ॥ शंभुनाधिष्ठितं सर्वं जगदेतच्चराचरम् ॥ १०८ ॥ तस्मात्सर्वं शिवमयं ज्ञातव्यं सुविशेषतः ॥ वेदैः पुराणैः शास्त्रैश्च तथौपनिषदैरपि ॥१०९॥ आगमैर्विविधैः शंभुर्ज्ञातव्यो नात्र संशयः ॥ निष्कामैश्च सकामैश्च पूजनीयः सदा शिवः ॥ ११० ॥ ॥ लोमश उवाच ॥ ॥ कथयामि पुरावृत्तमितिहासं पुरातनम्॥नंदी नाम पुरा वैश्यो ह्यवंतीपुरमावसत् ॥ १११ ॥ शिवध्यानपरो भूत्वा शिवपूजां चकार सः ॥ नित्यं तपोवनस्थं हि लिंगमेकं समर्चयत् ॥ ११२ ॥ उपस्युपसि चोत्थाय प्रत्यहं शिववल्लभः ॥ नंदी लिंगार्चनरतो बभूवातिशयेन हि ॥ ११३ ॥ लिंगं पंचामृतेनैव यथोक्तेनाभ्यपेचयत् ॥ विप्रैः समावृतो नित्यं वेदवेदांगपारगैः ॥ ११४ ॥ यथाशास्त्रेण विधिना लिंगार्चनपरोऽभवत् ॥ स्नापयित्वा ततः पुष्पैर्नानाश्चर्यसमन्वितैः ॥ ११५ ॥ मुक्ताफलैरिंद्रनीलैर्गोमेदैश्च निरंतरम् ॥ वैडूर्यैश्चैव नीलैश्च माणिक्यैश्च तथार्चयत् ॥ ११६ ॥ एवं नंदी महाभागो बहून्यब्दानि चार्चयत् ॥ विजनस्थं तदा लिंगं नानाभोगसमन्वितम् ॥ ११७ ॥ एकदा मृगयासक्तः किरातो भूतहिंसकः ॥ अविवेकपरो भूत्वा मृगयारसिकः सदा ॥ ११८ ॥ पापी पापसमाचारो विचरन्गिरिकंदरे ॥ अनेकश्वापदाकीर्णे हन्यमान इतस्ततः ॥ ११९ ॥ एवं विचरमाणोऽसौ किरातो भूतहिंसकः ॥ यदृच्छयागतस्तत्र यत्र लिंगं सुपूजितम् ॥ १२० ॥ उदकं वीक्षमाणोऽसौ तृपया पीडितो भृशम् ॥ ततो वने सरः शीघ्रं दृष्ट्वा तोये समाविशत् ॥ १२१ ॥ तीरे संस्थाप्य दुष्टात्मा तत्सर्वं मृगयादिकम् ॥ गंडूपोत्सर्जनं कृत्वा पीत्वा तोयं च निर्गतः ॥ १२२ ॥ शिवालयं ददर्शाग्रे अनेकाश्चर्यमंडितम् ॥ दृष्टं सुपूजितं लिंगं नानारत्नैः पृथक्पृथक् ॥ १२३ ॥ तथा लिंगं समालक्ष्य यदा पूजां समाहरत् ॥ रत्नानि सर्वभूतानि विधूतानि इतस्ततः ॥ १२४ ॥ स्नपनं तस्य लिंगस्य कृतं गंडूपवारिणा ॥ करेणैकेन पूजार्थं बिल्वपत्राणि सोऽर्पयत् ॥ १२५ ॥ द्वितीयेन करेणैव मृगमांसं समर्पयत् ॥ दण्डप्रणामसंयुक्तः संकल्पं मनसाऽकरोत् ॥ १२६ ॥ अद्यप्रभृति पूजां वै करिष्यामि प्रयत्नतः ॥ त्वं मे स्वामी च भक्तोहमद्यप्रभृति शंकर ॥ १२७ ॥ एवं नैयमिको भूत्वा किरातो गृहमागतः ॥ नन्दी ददर्श तत्सर्वं किरातेन इतस्ततः ॥ १२८ ॥ चिंतायुक्तोऽभवन्नंदी जातं किं छिद्रमद्य मे ॥ कथितानि च विघ्नानि शिवपूजारतस्य च ॥ उपस्थितानि तान्येव मम भाग्यविपर्ययात् ॥ १२९ ॥

१ औपनिषदैः—ग्रंथैः—इति विशेष्यमध्याहरणीयम् ।

एवं विमृश्य सुचिरं प्रक्षाल्य शिवमंदिरम् ॥ यथागतेन मार्गेण नंदी स्वगृहमागतः ॥ १३० ॥ ततो नंदिनमागत्य पुरोधा गतमानसम् ॥ अब्रवो द्वचनं तं तु कस्मात्त्वं गतमानसः ॥ १३१ ॥ पुरोहितं प्रति तदा नन्दी वचनमब्रवीत् ॥ १३२ ॥ अद्य दृष्टं मया विप्र अमेध्यं शिवसंनिधौ ॥ केनेदं कारितं तत्र न जानामि कथंचन ॥ ॥ १३३ ॥ ततः पुरोधा वचनं नन्दिनं चाब्रवीत्तदा ॥ येन विस्खलितं तत्र रत्नादीनां प्रपूजनम् ॥ सोऽपि मूढो न संदेहः कार्याकार्येषु मंदधीः ॥ १३४ ॥ तस्माच्चिंता न कर्तव्या त्वया अणुरपि प्रभो ॥ प्रभाते च मया सार्द्धं गम्यतां तच्छिवाल यम् ॥ १३५ ॥ निरीक्षणार्थं दुष्टस्य तत्कार्यं विदधाम्यहम् ॥ एतच्छ्रुत्वा तु वचनं नन्दी तस्य पुरोधसः ॥ १३६ ॥ आस्थितः स्वगृहे नक्तं दूयमा नेन चेतसा ॥ तस्यां राज्यां व्यतीतायामाहूय च पुरोधसम् ॥ १३७ ॥ गतः शिवालयं नन्दी समं तेन महात्मना ॥ ततो दृष्टं पूर्वदिने कृतं तेन दुरात्मना ॥ १३८ ॥ सम्यक्प्रपूजनं कृत्वा नानारत्नपरिच्छदम् ॥ पञ्चोपचारसंयुक्तं चैकादश्यन्वितं[1] तथा ॥ १३९ ॥ अनेकस्तुतिभिः स्तुत्वा गिरीशं ब्राह्मणैः सह ॥ तदा यामद्वयं जातं स्तूयमानस्य नंदिनः ॥ १४० ॥ आयातो हि महाकालस्तथारूपो महाबलः ॥ कालरूपो महारौद्रो धनुष्पाणिः प्रतापवान् ॥ १४१ ॥ तं दृष्ट्वा भयवित्रस्तो नन्दी स विललाप ह ॥ पुरोधाश्चैव सहसा भयभीतस्तदाभवत् ॥ १४२ ॥ किरातेन कृतं तत्र यथापूर्वमविस्खलम् ॥ तां पूजां प्रपदाहत्य बिल्वपत्रं समर्पयत् ॥१४३॥ स्नपनं तस्य कृत्वा च ततो गंडूषवारिणा ॥ नैवेद्यं तत्पलं चैव किरातः शिवमर्पयत् ॥ १४४ ॥ दण्डवत्पतितो भूमावुत्थाय स्वगृहं गतः ॥ तद्दृष्ट्वा महदाश्चर्यं चिंतयामास वै चिरम् ॥ १४५ ॥ पुरोधसा सह तदा नंदी व्याकुलचेतसा ॥ तेन चाकारिता विप्रा बहवो वेदवादिनः ॥ १४६ ॥ निवेद्य तेषु तत्सर्वं किरातेन च यत्कृतम् ॥ किं कार्यमथ भो विप्राः कथ्य तां च यथातथम् ॥ १४७॥ संप्रधार्य ततः सर्वे मिलित्वा धर्मशास्त्रतः ॥ ऊचुः सर्वे तदा विप्रा नंदिनं चातिशंकिनम् ॥ १४८ ॥ इदं विघ्नं समुत्पन्नं दुर्निवार्यं सुरैरपि ॥ तस्मादानय लिंगं त्वं स्वगृहं वैश्यसत्तम ॥ १४९ ॥ तथेति मत्वासौ नंदी शिवस्योत्पाटनं तदा ॥ कृत्वा स्वगृह मानीय प्रतिष्ठाप्य यथाविधि ॥ १५० ॥ सुवर्णपीठिकां कृत्वा नवरत्नसुशोभिताम् ॥ उपचारैरनेकैश्च पूजयामास वै तदा ॥ १५१ ॥ अथापरे द्युरायातः किरातः शिवमंदिरम् ॥ यावद्विलोकयामास लिंगमैशं न दृष्टवान् ॥ १५२ ॥ मौनं विहाय सहसा ह्याक्रोशन्निदमब्रवीत् ॥ हे शंभो क्व ग तोसि त्वं दर्शयात्मानमद्य वै ॥१५३॥ न दृष्टोसि मया त्वं हि त्यजाम्यद्य कलेवरम्॥ हे शंभो हे जगन्नाथ त्रिपुरांतकर प्रभो ॥१५४॥ हे रुद्र हे महादेव

१ एकादश्यन्वितम्—रुद्रैकादशिन्यभिषेकसमन्वितम्—इत्यर्थः ।

दर्शयात्मानमात्मना ॥ १५५ ॥ एवं साक्षेपमधुरैर्वाक्यैः क्षिप्तः सदाशिवः ॥ किरातेन ततो रंगैर्वीरोसौ जठरं स्वकम् ॥ १५६ ॥ बिभेदाशु ततो बाहूनास्फोट्यैव रुषाब्रवीत् ॥ हे शंभो दर्शयात्मानं कुतो मां त्यज्य यास्यसि ॥ १५७ ॥ इति क्षित्वा ततोंत्राणि मांसमुकृत्त्य सर्वतः ॥ तां मन्गर्ते करेणैव किरातः सहसाक्षिपत् ॥१५८॥स्वस्थं च हृदयं कृत्वा सस्नौ तत्सरसि ध्रुवम् ॥ तथैव जलमानीय बिल्वपत्रं त्वरान्वितः॥ १५९॥पूजयित्वा यथान्यायं दंडवत्पतितो भुवि ॥ १६० ॥ ध्यानस्थितस्ततस्तत्र किरातः शिवसंनिधौ ॥ प्रादुर्भूतस्तदा रुद्रः प्रमथैः परिवारितः ॥ १६१ ॥ कर्पूरगौरो द्युतिमान्कपर्दी चंद्रशेखरः ॥ तं गृहीत्वा करे रुद्र उवाच परिसांत्वयन् ॥१६२॥ भोभो वीर महाप्राज्ञ मद्भक्तोसि महामते ॥ वरं वृणीष्वात्म हितं यत्तेऽभिलषितं महत् ॥ १६३ ॥ एवमुक्तः स रुद्रेण महाकालो मुदान्वितः ॥ पपात दंडवद्भूमौ भक्त्या परमया युतः ॥ १६४ ॥ ततो रुद्रं बभाषे स वरं सम्प्रार्थयाम्यहम् ॥ अहं दासोस्मि ते रुद्र त्वं मे स्वामी न संशयः ॥ १६५ ॥ एतद्बुद्ध्यात्मनो भक्तिं देहि जन्मनिजन्मनि ॥ त्वं माता च पिता त्वं च त्वं बंधुश्च सखा हि मे ॥ १६६ ॥ त्वं गुरुस्त्वं महामंत्रो मंत्रवेद्योऽसि सर्वदा ॥ तस्मात्त्वदपरं नान्यत्त्रिषु लोकेषु किंचन ॥ ॥ १६७ ॥ निष्कामं वाक्यमाकर्ण्य किरातस्य तदा भवः ॥ ददौ पार्षदमुख्यत्वं द्वारपालत्वमेव च ॥ १६८ ॥ तदा डमरुनादेन नादितं भुवन त्रयम् ॥ भेरीभांकारशब्देन शंखानां निनदेन च ॥ १६९ ॥ तदा दुंदुभयो नेदुः पटहाश्च सहस्रशः ॥ नंदी तं नादमाकर्ण्य विस्मयात्त्वरितो ययौ ॥ १७० ॥ तपोवनं यत्र शिवः स्थितः प्रमथसंवृतः ॥ किरातो हि तथा दृष्टो नंदिना च तदा भृशम् ॥ १७१ ॥ उवाच प्रश्रितो वाक्यं स नंदी विस्मयान्वितः ॥ किरातं स्तोतुकामोऽसौ परमेण समाधिना ॥ १७२ ॥ इहानीतस्त्वया शंभुस्त्वं भक्तोसि परंतप ॥ त्वं भक्तोऽहमिह प्राप्तो मां निवेदय शंकरे ॥ १७३ ॥ तच्छ्रुत्वा वचनं तस्य किरातस्त्वरयान्वितः ॥ नंदिनं च करे गृह्य शंकरं समुपागतः ॥ १७४ ॥ प्रहस्य भगवान्रुद्रः किरातं वाक्यमब्रवीत् ॥ कोऽयं त्वया समानीतो गणानामिह सन्निधौ ॥ १७५ ॥ ॥ किरात उवाच ॥ ॥ विज्ञप्तोऽसौ किरातेन शंकरो लोकशंकरः ॥ तव भक्तः सदा देव तव पूजारतो ह्यसौ ॥ १७६ ॥ प्रत्यहं रत्नमाणिक्यैः पुष्पैश्चोच्चावचैरपि ॥ जीवितेन धनेनापि पूजितोऽसि न संशयः ॥ १७७॥ तस्माज्जानीहि मन्मित्रं नंदिनं भक्तवत्सल ॥ १७८ ॥ ॥ महादेव उवाच ॥ ॥ न जानामि महाभाग नंदिनं वैश्यचर्चितम् ॥ त्वं मे भक्तः सखा चेति महाकाल महामते ॥ १७९ ॥ उपाधिरहिता ये च येऽपि चैव मनस्विनः ॥ तेऽतीव मे प्रिया भक्तास्ते विशिष्टा नरोत्त

१ रङ्गैः—नखैः—इत्यर्थोऽत्र प्रकरणात्कथंचिदवगन्तव्यः।

माः ॥ १८० ॥ तव भक्तो ह्यहं तात स च मे प्रियकृत्तरः ॥ तावुभौ स्वीकृतौ तेन पार्षदत्वेन शंभुना॥१८१॥ ततो विमानानि बहूनि तत्र समा
गतान्येव महाप्रभाणि ॥ किरातवर्येण स वैश्यवर्य उद्धारितस्तेन महाप्रभेण ॥ १८२ ॥ कैलासं पर्वतं प्राप्तौ विमानैर्वेगवत्तरैः ॥ सारूप्यमेव संप्रा
प्तावीश्वरेण महात्मना ॥ १८३ ॥ नीराजितौ गिरिजया शिवेन सहितौ तदा ॥ उवाचेदं ततो देवी प्रहस्य गजगामिनी ॥ १८४ ॥ यथा त्वं हि
महादेव तथा चैतौ न संशयः ॥ स्वरूपेण च गत्या च हास्यभावैः सुपूजितौ ॥१८५॥ मया त्वमेक एवासीः सेवितो वै न संशयः ॥ देव्यास्तद्वचनं
श्रुत्वा किरातो वैश्य एव च ॥ १८६ ॥ सद्यः पराङ्मुखौ भूत्वा शंकरस्य च पश्यतः ॥ भवावस्त्वनुकंप्यौ च भवता हि त्रिलोचन ॥ १८७ ॥
तव द्वारि स्थितौ नित्यं भवावस्ते नमोनमः ॥ १८८ ॥ तयोर्भावं स भगवान्विदित्वा प्रहसन्भवः ॥ उवाच परया भक्त्या भवतोरस्तु वांछितम् ॥
॥ १८९ ॥ तदा प्रभृति तावेतौ द्वारपालौ बभूवतुः ॥ शिवद्वारि स्थितौ विप्रा मध्याह्ने शिवदर्शिनौ ॥ १९० ॥ एको नंदी महाकालो द्वावेतौ
शिववल्लभौ ॥ ऊचतुस्तौ मुदायुक्तावेक एव सदाशिवः ॥ १९१ ॥ एकांगुलिं समुद्धृत्य महादेवोभ्यभाषत ॥ तथा नंदी उवाचेदमुद्धृत्य स्वांगुलिद्व
यम् ॥ १९२ ॥ एवं संज्ञान्वितौ द्वारि तिष्ठतस्तौ महात्मनः ॥ शंकरस्य महाभागाः शृण्वंतु ऋषयो ह्यमी ॥ १९३ ॥ शैलादेन पुरा प्रोक्तं शिवध
र्ममनंतकम् ॥ प्राणिनां कृपया विप्राः सर्वेषां दुष्कृतात्मनाम् ॥१९४॥ ये पापिनोऽप्यधर्मिष्ठा अंधा मूकाश्च पंगवः ॥ कुलहीना दुरात्मानः श्वपचा
अपि मानवाः ॥ १९५ ॥ यादृशास्तादृशाश्चान्ये शिवभक्तिपुरस्कृताः ॥ तेऽपि गच्छंति सांनिध्यं देवदेवस्य शूलिनः ॥१९६॥ लिंगं सिकतामयं ये
पूजयंति विपश्चितः ॥ ते रुद्रलोकं गच्छंति नात्र कार्या विचारणा ॥ १९७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे
माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवभक्तिमाहात्म्यवर्णनंनाम पंचमोऽध्यायः ॥ ५ ॥छ॥ ॥ ऋषय ऊचुः ॥ ॥ लिंगे प्रतिष्ठा च कथं शिवं
हित्वा प्रवर्तिता ॥ तत्कथ्यतां महाभाग परं शुश्रूषतां हि नः ॥ १ ॥ ॥ लोमश उवाच ॥ ॥ यदा दारुवने शंभुर्भिक्षार्थं प्राचरत्प्रभुः ॥ २ ॥
दिगंबरो मुक्तजटाकलापो वेदांतवेद्यो भुवनैकभर्ता ॥ स ईश्वरो ब्रह्मकलापधारो योगीश्वराणां परमः परश्च ॥ ३ ॥ अणोरणीयान्महतो मही
यान्महानुभावो भुवनाधिपो महान् ॥ स ईश्वरो भिक्षुरूपी महात्मा भिक्षाटनं दारुवने चकार ॥ ४ ॥ मध्याह्ने ऋषयो विप्रास्तीर्थं जग्मुः
स्वकाश्रमात् ॥ तदानीमेव सर्वास्ता ऋषिभार्याः समागताः ॥ ५ ॥ विलोकयंत्यः शंभुं तमाचख्युश्च परस्परम् ॥ कोऽसौ भिक्षुक
रूपोयमागतोऽपूर्वदर्शनः ॥ ६ ॥ अस्मै भिक्षां प्रयच्छामो वयं च सखिभिः सह ॥ तथेति गत्वा सर्वास्ता गृहेभ्य आनयन्मुदा ॥ ७ ॥

भिक्षान्नं विविधं श्लक्ष्णं सोपचारं च शक्तितः ॥ प्रदत्तं भिक्षितं तेन देवदेवेन शूलिना ॥ ८ ॥ काचित्प्रियतमं शंभुं बभाषे विस्मयान्विता ॥ कोसि त्वं भिक्षुको भूत्वा आगतोत्र महामते ॥ ९ ॥ ऋषीणामाश्रमं शुद्धं किमर्थं नो निषीदसि ॥ तयोक्तोऽपि तदा शंभुर्बभाषे प्रहसन्निव ॥ १० ॥ ईश्वरोहं सुकेशांते पावनं प्राप्तवानिमम् ॥ ईश्वरस्य वचः श्रुत्वा ऋषिभार्या उवाच तम् ॥ ११ ॥ ईश्वरोऽसि महाभाग कैलासपतिरेव च ॥ एकाकिनः कथं देव भिक्षार्थमटनं तव ॥ १२ ॥ एवमुक्तस्तया शंभुः पुनस्तामब्रवीद्वचः ॥ दाक्षायण्या विरहितो विचरामि दिगंबरः ॥ १३ ॥ भिक्षाटनार्थं सुश्रोणि संकल्परहितः सदा ॥ तया सत्या विना किंचित्स्त्रीमात्रं मम भामिनि ॥ न रोचते विशालाक्षि सत्यं प्रतिवदामि ते ॥ १४ ॥ तस्योक्तं वचनं श्रुत्वा उवाच कमलेक्षणा ॥ स्त्रियो हि सुखसंस्पर्शाः पुरुषस्य न संशयः ॥ १५ ॥ तास्त्रियो वर्जिताः शंभो त्वादृशेन विपश्चिता ॥ १६ ॥ इति च प्रमदाः सर्वा मिलिता यत्र शंकरः ॥ भिक्षापात्रं च तच्छंभोः पूरितं च महागुणैः ॥१७॥ अन्नैश्चतुर्विधैः पड्भी रसैश्च परिपूरितम् ॥ यदा शंभुर्गंतुकामः कैलासं पर्वतं प्रति ॥ तदा सर्वा विप्रपत्न्यो ह्यन्वगच्छन्मुदान्विताः ॥ १८ ॥ गृहकार्यं परित्यज्य चेरुस्तद्गतमानसाः ॥ गतासु तासु सर्वासु पत्नीषु ऋषिसत्तमाः ॥ १९ ॥ यावदाश्रममभ्येत्य तावच्छून्यं व्यलोकयन् ॥ परस्परमथोचुस्ते पत्न्यः सर्वाः कुतो गताः ॥ २० ॥ न विदामोऽथ वै सर्वाः केन नष्टेन चाहृताः ॥ एवं विमृश्यमानास्ते विचिन्वंतस्ततस्ततः ॥ २१ ॥ समपश्यंस्ततः सर्वे शिवस्यानुगताश्च ताः ॥ शिवं दृष्ट्वा तु संप्राप्ता ऋषयस्ते रुषान्विताः ॥ २२ ॥ शिवस्याथाग्रतो भूत्वा ऊचुः सर्वे त्वरान्विताः ॥ किं कृतं हि त्वया शंभो विरक्तेन महात्मना ॥ परदारापहर्त्तासि त्वमृषीणां न संशयः ॥ २३ ॥ एवं क्षिप्तः शिवो मौनी गच्छमानोऽपि पर्वतम् ॥ तदा स ऋषिभिः प्राप्तो महादेवोऽव्ययस्तथा ॥ यस्मात्कलत्रहर्ता त्वं तस्मात्पंढो भव त्वरम् ॥ २४ ॥ एवं शप्तः स मुनिभिर्लिंगं तस्यापतद्भुवि ॥ भूमिप्राप्तं च तल्लिंगं ववृधे तरसा महत् ॥ २५ ॥ आवृत्य सप्त पातालान्क्षणाल्लिंगमधोर्ध्वतः ॥ व्याप्य पृथ्वीं समग्रां च अंतरिक्षं समावृणोत् ॥ २६ ॥ स्वर्गाः समावृताः सर्वे स्वर्गातीतमथाभवत् ॥ न मही न च दिक्चक्रं न तोयं न च पावकः ॥ २७ ॥ न च वायुर्न वाकाशं नाहंकारो न वा महत् ॥ न चाव्यक्तं न कालश्च न महाप्रकृतिस्तथा ॥ २८ ॥ नासीद्द्वैतविभागं च सर्वं लीनं च तत्क्षणात् ॥ यस्माल्लीनं जगत्सर्वं तस्मिँल्लिंगे महात्मनः ॥ २९ ॥ लयनाल्लिंगमित्येवं प्रवदंति मनीषिणः ॥ तथाभूतं वर्द्धमानं दृष्ट्वा तेऽपि सुरर्षयः ॥ ३० ॥ ब्रह्मेंद्रविष्णुवाय्वग्निलोकपालाः सपन्नगाः ॥ विस्मयाविष्टमनसः परस्परमथाब्रुवन् ॥३१॥ किमायामं च विस्तारं क चांतः क च पीठिका॥इति चिंतान्विता विष्णुमूचुः सर्वे सुरास्तदा ॥३२॥

॥ देवा ऊचुः ॥ ॥ अस्य मूलं त्वया विष्णो पद्मोद्भव च मस्तकम् ॥ युवाभ्यां च विलोक्यं स्यात्स्थाने स्यात्परिपालकौ॥३३॥ श्रुत्वा तु तौ महाभागौ वैकुंठकमलोद्भवौ॥विष्णुर्गतो हि पातालं ब्रह्मा स्वर्गं जगाम ह ॥३४॥स्वर्गं गतस्तदा ब्रह्मा अवलोकनतत्परः ॥ नापश्यत्तत्र लिंगस्य मस्तकं च विचक्षणः ॥ ३५ ॥ तथा गतेन मार्गेण प्रत्यावृत्त्याब्जसंभवः ॥ मेरुपृष्ठमनुप्राप्तः सुरभ्या लक्षितस्ततः ॥ ३६ ॥ स्थिता या केतकीच्छायामुवाच मधुरं वचः॥तस्या वचनमाकर्ण्य सर्वलोकपितामहः॥उवाच प्रहसन्वाक्यं छलोक्त्या सुरभिं प्रति॥३७॥लिंगं महाद्भुतं दृष्टं येन॰ याप्तं जगत्त्रयम् ॥ दर्शनार्थं च तस्यांतं देवैः संप्रेषितोस्म्यहम् ॥ ३८॥ न दृष्टं मस्तकं तस्य व्यापकस्य महात्मनः ॥ किं वक्ष्येऽहं च देवाग्रे चिंता मे चाति वर्तते ॥ ॥ ३९ ॥ लिंगस्य मस्तकं दृष्टं देवानां च मृषा वदेः ॥ ते सर्वे यदि वक्ष्यंति इंद्राद्या देवतागणाः ॥ ४० ॥ ते संति साक्षिणो देवा अस्मिन्नर्थे वद त्वरम् ॥ अर्थेऽस्मिन्भव साक्षी त्वं केतक्या सह सुव्रते॥४१॥तद्वचः शिरसा गृह्य ब्रह्मणः परमेष्ठिनः॥ केतकीसहिता तत्र सुरभी तदमानयत् ॥४२॥ एवं समागतो ब्रह्मा देवाग्रे समुवाच ह ॥ ४३ ॥ ॥ ब्रह्मोवाच ॥ ॥ लिंगस्य मस्तकं देवा दृष्टवानहमद्भुतम्॥समीचीनं चार्चितं च केतकीदलसंयुतम् ॥ ४४ ॥ विशालं विमलं श्लक्ष्णं प्रसन्नतरमद्भुतम् ॥ रम्यं च रमणीयं च दर्शनीयं महाप्रभम् ॥ ४५ ॥ एतादृशं मया दृष्टं न दृष्टं तद्विना क्वचित् ॥ ब्रह्मणो हि वचः श्रुत्वा सुरा विस्मयमाययुः॥४६॥एवं विस्मयपूर्णास्ते इंद्राद्या देवतागणाः ॥ तिष्ठंति तावत्सर्वेशो विष्णुरध्यात्मदीपकः ॥ ४७॥ पातालादागतः सद्यः सर्वेषामवदत्त्वरम् ॥ तस्याप्यंतो न दृष्टो मे ह्यवलोकनतत्परः ॥ ४८॥ विस्मयो मे महाञ्जातः पातालात्परतश्चरन् ॥ अतलं सुतलं चापि नितलं च रसातलम् ॥४९॥ तथा गतस्तलं चैव पातालं च तथातलम् ॥ तलातलानि तान्येवं शून्यवद्यद्विभाव्यते ॥५०॥ शून्यादपि च शून्यं च तत्सर्वं सुनिरीक्षितम् ॥ न मूलं च न मध्यं च न चांतो ह्यस्य विद्यते ॥ ५१ ॥ लिंगरूपी महादेवो येनेदं धार्यते जगत् ॥ यस्य प्रसादादुत्पन्ना यूयं च ऋषयस्तथा ॥ ५२ ॥ श्रुत्वा सुराश्च ऋषयस्तस्य वाक्यमपूजयन् ॥ तदा विष्णुरुवाचेदं ब्रह्माणं प्रहसन्निव ॥ ५३ ॥ दृष्टं हि चेत्त्वया ब्रह्मन्मस्तकं परमार्थतः ॥ साक्षिणः के त्वया तत्र अस्मिन्नर्थे प्रकल्पिताः ॥ ५४ ॥ आकर्ण्य वचनं विष्णोर्ब्रह्मा लोकपितामहः ॥ उवाच त्वरितेनैव केतकी सुरभीति च ॥ ५५ ॥ ते देवा मम साक्षित्वे जानीहि परमार्थतः ॥ ब्रह्मणो हि वचः श्रुत्वा सर्वे देवास्त्वरान्विताः ॥ ५६ ॥ आह्वानं चक्रिरे तस्याः सुरभ्याश्च तया सह ॥ आगते तत्क्षणादेव कार्यार्थं ब्रह्मणस्तदा ॥ ५७ ॥ इंद्राद्यैश्च तदा देवैरुक्ता च सुरभी ततः ॥ उवाच केतकीसार्द्धं दृष्टो वै ब्रह्मणा सुराः ॥ ५८ ॥ लिंगस्य मस्तको देवाः केतकीदलपूजितः ॥ तदा नभोगता वाणी सर्वेषां

शृण्वतामभूत् ॥ ५९ ॥ सुरभ्या चैव यत्प्रोक्तं केतक्या च तथा सुराः ॥ तन्मृषोक्तं च जानीध्वं न दृष्टो ह्यस्य मस्तकः ॥ ६० ॥ तदा सर्वेऽथ विबुधाः सेंद्रा वै विष्णुना सह ॥ शेपुश्च सुरभीं रोषान्मृषावादनतत्पराम् ॥ ६१ ॥ मुखेनोक्तं त्वयाद्यैवमनृतं च तथा शुभे ॥ अपवित्रं मुखं तेऽस्तु सर्वधर्मबहिष्कृतम् ॥ ६२ ॥ सुगंधकेतकी चापि अयोग्या त्वं शिवार्चने ॥ भविष्यसि न संदेहो अनृता चैव भामिनि ॥ ६३ ॥ तदा नभोगता वाणी ब्रह्माणं च शशाप वै ॥ मृषोक्तं च त्वया मंद किमर्थं बालिशेन हि ॥ ६४ ॥ भृगुणा ऋषिभिः साकं तथैव च पुरोधसा ॥ तस्माद्यूयं न पूज्याश्च भवेयुः क्लेशभागिनः ॥ ६५ ॥ ऋषयोऽपि च धर्मिष्ठास्तत्त्ववाक्यबहिष्कृताः ॥ विवादनिरता मूढा अतत्त्वज्ञाः समत्सराः ॥ ६६ ॥ याचकाश्चावदान्याश्च नित्यं स्वज्ञानघातकाः ॥ आत्मसंभाविताः स्तब्धाः परस्परविनिंदकाः ॥ ६७ ॥ एवं शप्ताश्च मुनयो ब्रह्माद्या देवतास्तथा ॥ शिवेन शप्तास्ते सर्वे लिंगं शरणमाययुः ॥ ६८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे श्रीशिवलिङ्गमाहात्म्ये ब्रह्मादिशापवृत्तान्तवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ तदा च ते सुराः सर्व ऋषयोपि भयान्विताः ॥ ईडिरे लिंगमैशं च ब्रह्माद्या ज्ञानविह्वलाः ॥ १ ॥ ॥ ब्रह्मोवाच ॥ ॥ त्वं लिंगरूपी तु महाप्रभावो वेदांतवेद्योसि महात्मरूपी ॥ येनैव सर्वं जगदात्ममूलं कृतं सदानंदपरेण नित्यम् ॥ २ ॥ त्वं साक्षी सर्वलोकानां हर्ता त्वं च विचक्षणः ॥ रक्षणोसि महादेव भैरवोसि जगत्पते ॥ ३ ॥ त्वया लिंगस्वरूपेण व्याप्तमेतज्जगत्त्रयम् ॥ क्षुद्राश्चैव वयं नाथ मायामोहितचेतसः ॥ ४ ॥ अहं सुराऽसुराः सर्वे यक्षगंधर्वराक्षसाः ॥ पन्नगाश्च पिशाचाश्च तथा विद्याधरा ह्यमी ॥ ५ ॥ त्वंहि विश्वसृजां स्रष्टा त्वं हि देवो जगत्पतिः ॥ कर्ता त्वं भुवनस्यास्य त्वं हर्ता पुरुषः परः ॥ ६ ॥ त्राह्यस्माकं महादेव देवदेव नमोऽस्तु ते ॥ एवं स्तुतो हि वै धात्रा लिंगरूपी महेश्वरः ॥ ७ ॥ ऋषयः स्तोतुकामास्ते महेश्वरमकल्मषम् ॥ अस्तुवन्गीर्भिरग्र्याभिः श्रुतिगीताभिरादृताः ॥ ८ ॥ ॥ ऋषय ऊचुः ॥ ॥ अज्ञानिनो वयं कामान्न विंदामोऽस्य संस्थितिम् ॥ त्वं ह्यात्मा परमात्मा च प्रकृतिस्त्वं विभाविनी ॥ ९ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बंधुश्च सखा त्वमेव ॥ त्वमीश्वरो वेदविदेकरूपो महानुभावैः परिचिंत्यमानः ॥ १० ॥ त्वमात्मा सर्वभूतानामेको ज्योतिरिवैधसाम् ॥ सर्वं भवति यस्मात्त्वत्तस्मात्सर्वोऽसि नित्यदा ॥ ११ ॥ यस्माच्च संभवत्येतत्तस्माच्छंभुरिति प्रभुः ॥ १२ ॥ त्वत्पादपंकजं प्राप्ता वयं सर्वे सुरादयः ॥ ऋषयो देवगंधर्वा विद्याधरमहोरगाः ॥ १३ ॥ तस्माच्च कृपया शंभो पाह्यस्माञ्जगतः पते ॥ १४ ॥ ॥ महादेव उवाच ॥ ॥ शृणुध्वं तु वचो मेऽद्य क्रियतां च

त्वरान्वितैः ॥ विष्णुं सर्वे प्रार्थयंतु त्वरितेन तपोधनाः ॥ १५ ॥ तस्य तद्वचनं श्रुत्वा शंकरस्य महात्मनः ॥ विष्णुं सर्वे नमस्कृत्य ईडिरे च तदा सुराः ॥ १६ ॥ ॥ देवा ऊचुः ॥ ॥ विद्याधराः सुरगणा ऋषयश्च सर्वे त्रातास्त्वयाद्य सकलजगदेकबंधो ॥ तद्वत्कृपाकर जनान्परिपालयाद्य त्रैलोक्यनाथ जगदीश. जगन्निवास ॥ १७ ॥ प्रहस्य भगवान्विष्णुरुवाचेदं वचस्तदा ॥ दैत्यैः प्रपीडिता यूयं रक्षिताश्च पुरा मया ॥ १८ ॥ अद्यैव भयमुत्पन्नं लिंगादस्माच्चिरंतनम् ॥ न शक्यते मया त्रातुमस्माल्लिंगभयात्सुराः ॥ १९ ॥ अच्युतेनैवमुक्तास्ते देवा श्चिंतान्विताभवन्॥तदा नभोगता वाणी उवाचाश्वास्य वै सुरान्॥२०॥ एतल्लिंगं संवृणुष्व पूजनाय जनार्दन॥पिंडीभूत्वा महाबाहो रक्षस्व सचराचरम्॥ तथेति मत्वा भगवान्वीरभद्रोऽभ्यपूजयत् ॥ २१ ॥ ब्रह्मादिभिः सुरगणैः सहितैस्तदानीं संपूजितः शिवविधानरतो महात्मा ॥ स वीरभद्रः शशिशेखरोऽसौ शिवप्रियो रुद्रसमस्त्रिलोक्याम् ॥ २२ ॥ लिंगस्यार्चनयुक्तोऽसौ वीरभद्रोऽभवत्तदा ॥ तद्रूपस्यैव लिंगस्य येन सर्वमिदं जगत् ॥ २३ ॥ उद्भाति स्थितिमाप्नोति तथा विलयमेति च ॥ तल्लिंगं लिंगमित्याहुर्लयनात्तत्त्ववित्तमाः ॥ २४ ॥ ब्रह्माण्डगोलकैर्व्याप्तं तथा रुद्राक्षभूषितम् ॥ तथा लिंगं महज्जातं सर्वेषां दुरतिक्रमम् ॥ २५ ॥ तदा सर्वेऽथ विबुधा ऋषयो वै महाप्रभाः ॥ तुष्टुवुश्च महालिंगं वेदवादैः पृथक्पृथक् ॥ २६ ॥ अणोरणीयांस्त्वं देव तथा त्वं महतो महान् ॥ तस्मात्त्वया विधातव्यं सर्वैषां लिंगपूजनम् ॥ २७ ॥ तदानीमेव सर्वेण लिंगं च बहुशः कृतम् ॥ सत्ये ब्रह्मेश्वरं लिंगं वैकुण्ठे च सदाशिवः ॥ २८ ॥ अमरावत्यां सुप्रतिष्ठममरेश्वरसंज्ञकम् ॥ वरुणेश्वरं च वारुण्यां याम्यां कालेश्वरं प्रभुम् ॥ २९ ॥ नैर्ऋतेश्वरं च नैर्ऋत्यां वायव्यां पावनेश्वरम् ॥ केदारं मृत्युलोके च तथैव अमरेश्वरम् ॥ ३० ॥ ओंकारं नर्मदायां च महाकालं तथैव च ॥ काश्यां विश्वेश्वरं देवं प्रयागे ललितेश्वरम् ॥ ३१ ॥ त्रियम्बकं ब्रह्मगिरौ कलौ भद्रेश्वरं तथा ॥ द्राक्षारामेश्वरं लिंगं गंगासागरसंगमे ॥ ३२ ॥ सौराष्ट्रे च तथा लिंगं सोमेश्वरमिति स्मृतम् ॥ तथा सर्वेश्वरं विन्ध्ये श्रीशैले शिखरेश्वरम् ॥ कान्त्यामल्लालनाथं च सिंहनाथं च सिंगले ॥ ३३ ॥ विरूपाक्षं तथा लिंगं कोटिशङ्करमेव च ॥ त्रिपुरान्तकं भीमेशममरेश्वरमेव च ॥३४॥ भोगेश्वरं च पाताले हाटकेश्वरमेव च ॥ एवमादीन्यनेकानि लिंगानि भुवनत्रये ॥ स्थापितानि तदा देवैर्विश्वोपकृतिहेतवे ॥ ३५ ॥ लिंगेशैश्च तथा सर्वैः पूर्णमासीज्जगत्रयम् ॥ तथा च वीरभद्रांशाः पूजार्थममरैः कृताः ॥ ॥ ३६ ॥ तत्र विंशतिसंस्कारास्तेषामष्टाधिकाभवन् ॥ कथिताः शंकरेणैव लिंगस्यार्चनसूचकाः ॥ ३७ ॥ संति रुद्रेण कथिताः शिवधर्माः सना

१ सर्वेषाम्– हे सर्व–एषाम् इति पदच्छेदः । हे सर्व शंकर–एषां देवादीनाम्–देवादिभिः–कर्त्रर्थे षष्ठी । लिंगपूजनं यथा सुकरं भविष्यति तथा–इत्यध्याहरणीयम् । कर्तव्यम्–उपकर्तव्यम्–इत्यर्थयोजना अत्रानुसंधेया ।

तनाः ॥ वीरभद्रो यथा रुद्रस्तथान्ये गुरवः स्मृताः ॥ ३८ ॥ गुरोर्जाताश्च गुरवो विख्याता भुवनत्रये ॥ लिंगस्य महिमानं तु नन्दी जानाति तत्त्वतः ॥३९॥ तथा स्कन्दो हि भगवानन्ये ते नामधारकाः ॥ यथोक्ताः शिवधर्मा हि नन्दिना परिकीर्त्तिताः ॥ ४० ॥ शैलादेन महाभागा विचित्रा लिंगधारकाः ॥ शवस्योपरि लिंगं च ध्रियते च पुरातनैः ॥ ४१ ॥ लिंगेन सह पञ्चत्वं लिंगेन सह जीवितम् ॥ एते धर्माः सुप्रतिष्ठाः शैलादेन प्रतिष्ठिताः ॥४२॥ धर्मः पाशुपतः श्रेष्ठः स्कन्देन प्रतिपालितः ॥४३॥ शुद्धा पञ्चाक्षरी विद्या प्रासादी तदनन्तरम् ॥ षडक्षरी तथा विद्या प्रासादस्य[1] च दीपिका ॥४४॥ स्कन्दात्तत्समनुप्राप्तमगस्त्येन महात्मना॥पश्चादाचार्यभेदेन ह्यागमा बहवोऽभवन् ॥ ४५ ॥ किं नु वै बहुनोक्तेन शिव इत्यक्षरद्वयम्॥ उच्चारयंति ये नित्यं ते रुद्रा नात्र संशयः ॥४६॥ सतां मार्गं पुरस्कृत्य ये सर्वे ते पुरांतकाः॥ वीरा माहेश्वरा ज्ञेयाः पापक्षयकरा नृणाम् ॥४७॥ प्रसंगेनानुषंगेण श्रद्धया च यदृच्छया ॥ शिवभक्तिं प्रकुर्वन्ति ये वै ते यांति सद्गतिम् ॥ ४८ ॥ शृणुध्वं कथयामीह इतिहासं पुरातनम् ॥ कृतं शिवालये यच्च पतंग्या मार्जनं पुरा ॥ ४९ ॥ आगता भक्षणार्थं हि नैवेद्यं केन चार्पितम् ॥ मार्जनं रजसस्तस्याः पक्षाभ्यामभवत्पुरा ॥ ५० ॥ तेन कर्मविपाकेन उत्तमं स्वर्गमागता ॥ भुक्त्वा स्वर्गसुखं चोग्रं पुनः संसारमागता ॥ ५१ ॥ काशिराजसुता जाता सुन्दरीनाम विश्रुता ॥ पूर्वाभ्यासाच्च कल्याणी बभूव परमा सती ॥ ५२ ॥ उषस्युषसि तन्वंगी शिवद्वाररता सदा ॥ संमार्जनं च कुरुते भक्त्या परमया युता ॥ ५३ ॥ स्वयमेव तदा देवी सुन्दरी राजकन्यका ॥ तथाभूतां च तां दृष्ट्वा ऋषिरुद्दालकोऽब्रवीत् ॥ ५४ ॥ सुकुमारी सती बाले स्वयमेव कथं शुभे ॥ संमार्जनं च कुरुषे कन्यके त्वं शुचिस्मिते ॥ ५५ ॥ दासी दास्यश्च बहवः संति देवि तवाग्रतः ॥ तवाज्ञया करिष्यंति सर्वं संमार्जनादिकम् ॥ ५६ ॥ ऋषेस्तद्वचनं श्रुत्वा प्रहस्येदमुवाच ह ॥ ५७ ॥ शिवसेवां प्रकुर्वाणाः शिवभक्तिपुरस्कृताः ॥ ये नराश्चैव नार्य्यश्च शिवलोकं व्रजंति वै ॥ ५८ ॥ संमार्जनं च पाणिभ्यां पद्भ्यां यानं शिवालये ॥ तस्मान्मया च क्रियते संमार्जनमतंद्रितम् ॥ ५९ ॥ अन्यत्किञ्चिन्न जानामि एकं संमार्जनं विना ॥ ऋषिस्तद्वचनं श्रुत्वा मनसा च विमृश्य हि ॥ ६० ॥ अनया किं कृतं पूर्वं केयं कस्य प्रसादतः ॥ तदा ज्ञातं च ऋषिणा तत्सर्वं ज्ञानचक्षुषा ॥ विस्मयेन समाविष्टस्तूष्णींभूतोऽभवत्तदा ॥ ६१ ॥ सविस्मयोऽभूदथ तद्विदित्वा उद्दालको ज्ञानवतां वरिष्ठः ॥ शिवप्रभावं मनसा विचिंत्य ज्ञानात्परं बोधमवाप शांतः ॥ ६२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे सप्तमोऽध्यायः॥ ७ ॥छ॥

[1] प्रासादः प्रणवः—इति मन्त्रशास्त्रे प्रणवस्य प्रासादबीजसंज्ञा ।

॥ ॥ लोमश उवाच ॥ ॥ तस्करोऽपि पुरा ब्रह्मन्सर्वधर्मबहिष्कृतः ॥ ब्रह्मघ्नोऽसौ सुरापश्च सुवर्णस्य च तस्करः ॥ १ ॥ लंपटो हि महापाप उत्तमस्त्रीषु सर्वदा ॥ द्यूतकारी सदा मंदः कितवैः सह संगतः ॥ २ ॥ एकदा क्रीडता तेन हारितं द्यूतमद्भुतम् ॥ कितवैर्मर्द्यमानो हि तदा नोवाच किञ्चन ॥ ३ ॥ पीडितोऽप्यभवत्तूष्णीं तैरुक्तः पापकृत्तमः ॥ द्यूते त्वया च तद्द्रव्यं हारितं किं प्रयच्छसि ॥ ॥ ४ ॥ नो वा तत्कथ्यतां शीघ्रं याथातथ्येन दुर्मते ॥ यद्धारितं प्रयच्छामि रात्रावित्यब्रवीच्च सः ॥ ५ ॥ तैर्मुक्तस्तेन वाक्येन गतास्ते कितवादयः ॥ तदा निशीथसमये गतोऽसौ शिवमंदिरम् ॥ ६ ॥ शिरोधिरुह्य शम्भोश्च घण्टामादातुमुद्यतः ॥ तावत्कैलासशिखरे शंभुः प्रोवाच किंकरान् ॥ ७ ॥ अनेन यत्कृतं चाद्य सर्वेषामधिकं भुवि ॥ सर्वेषामेव भक्तानां वरिष्ठोऽयं च मत्प्रियः ॥ ८ ॥ इति प्रोक्तान यामास वीरभद्रादिभिर्गणैः ॥ ते सर्वे त्वरिता जग्मुः कैलासाच्छिववल्लभात् ॥ ९ ॥ सर्वैर्डमरुनादेन नादितं भुवनत्रयम् ॥ तान्दृष्ट्वा सहसोत्तीर्य तस्करोसौ दुरात्मवान् ॥ लिंगस्य मस्तकात्सद्यः पलायनपरोऽभवत् ॥ १० ॥ पलायमानं तं दृष्ट्वा वीरभद्रः समाह्वयत् ॥ ११ ॥ कस्माद्बिभेषि रे मन्द देवदेवो महेश्वरः ॥ प्रसन्नस्तव जातोद्य उदारचरितो ह्यसौ ॥ १२ ॥ इत्युक्त्वा तं विमाने च कृत्वा कैलासमाययौ ॥ पार्षदो हि कृतस्तेन तस्करो हि महात्मना ॥ १३ ॥ तस्माद्भाव्या शिवे भक्तिः सर्वेषामपि देहिनाम् ॥ पशवोऽपि हि पूज्याः स्युः किं पुनर्मानवा भुवि ॥ १४ ॥ ये तार्किकास्तर्कपरास्तथा मीमांसकाश्च ये ॥ अन्योन्यवादिनश्चान्ये चान्ये वात्मवितर्ककाः ॥१५॥ एकवाक्यं न कुर्वंति शिवार्चनबहिष्कृताः ॥ तर्को हि क्रियते यैश्च ते सर्वे किं शिवं विना ॥ १६ ॥ तथा किं बहुनोक्तेन सर्वेऽपि स्थिरजंगमाः ॥ प्राणिनोऽपि हि जायंते केवलं लिंगधारिणः ॥ १७ ॥ पिण्डीयुक्तं यथा लिंगं स्थापितं च यथाऽभवत् ॥ तथा नरा लिंगयुक्ताः पिण्डीभूतास्तथा स्त्रियः ॥ १८ ॥ शिवशक्तियुतं सर्वं जगदेतच्चराचरम् ॥ तं शिवं मौढ्यतस्त्यक्त्वा मूढाश्चान्यं भजंति ये ॥ १९ ॥ धर्ममात्यंतिकं तुच्छं नश्वरं क्षणभंगुरम् ॥ यो विष्णुः स शिवो ज्ञेयो यः शिवो विष्णुरेव सः ॥ २० ॥ पीठिका विष्णुरूपं स्याल्लिंगरूपी महेश्वरः ॥ तस्माल्लिंगार्चनं श्रेष्ठं सर्वेषामपि वै द्विजाः ॥ २१ ॥ ब्रह्मा मणिमयं लिंगं पूजयत्यनिशं शुभम् ॥ इन्द्रो रत्नमयं लिंगं चन्द्रो मुक्तामयं तथा ॥ २२ ॥ भानुस्ताम्रमयं लिंगं पूजयत्यनिशं शुभम् ॥ रौक्मं लिंगं कुबेरश्च पाशी चारक्तमेव च ॥ २३ ॥ यमो नीलमयं लिंगं राजतं नैर्ऋतस्तथा ॥ काश्मीरं पवनो लिंगमर्चयत्यनिशं विभोः ॥ २४ ॥ एवं ते

लिंगिताः सर्वे लोकपालाः सवासवाः ॥ तथा सर्वेऽपि पाताले गंधर्वाः किंनरैः सह ॥ २५ ॥ दैत्यानां वैष्णवाः केचित्प्रह्लादप्रमुखा द्विजाः ॥ तथाहि
राक्षसानां च विभीषणपुरोगमाः ॥ २६ ॥ बलिश्च नमुचिश्चैव हिरण्यकशिपुस्तथा ॥ वृषपर्वा वृषश्चैव संह्रादो बाण एव च ॥ २७ ॥ एते चान्ये
च बहवः शिष्याः शुक्रस्य धीमतः ॥ एवं शिवार्चनरताः सर्वे ते दैत्यदानवाः ॥२८॥ राक्षसा एव ते सर्वे शिवपूजान्विताः सदा ॥ हेतिः प्रहेतिः संया
तिर्विघसः प्रघसस्तथा ॥ २९ ॥ विद्युज्जिह्वस्तीक्ष्णदंष्ट्रो धूम्राक्षो भीमविक्रमः ॥ माली चैव सुमाली च माल्यवानतिभीषणः ॥ ३० ॥ विद्युत्केश
स्तडिज्जिह्वो रावणश्च महाबलः ॥ कुंभकर्णो दुराधर्षो वेगदर्शी प्रतापवान् ॥ ३१ ॥ एते हि राक्षसाः श्रेष्ठाः शिवार्चनरताः सदा ॥ लिंगमभ्यर्च्य च
सदा सिद्धिं प्राप्ताः पुरा तु ते ॥ ३२ ॥ रावणेन तपस्तप्तं सर्वेषामपि दुःसहम् ॥ तपोधिपो महादेवस्तुतोष च तदा भृशम् ॥ ३३ ॥ वरान्प्राय
च्छत तदा सर्वेषामपि दुर्लभान् ॥ ज्ञानं विज्ञानसहितं लब्धं तेन सदाशिवात् ॥ ३४ ॥ अजेयत्वं च संग्रामे द्वैगुण्यं शिरसामपि ॥ पंचवक्त्रो महा
देवो दशवक्त्रोऽथ रावणः ॥ ३५ ॥ देवानृषीन्पितॄंश्चैव निर्जित्य तपसा विभुः ॥ महेशस्य प्रसादाच्च सर्वेषामधिकोऽभवत् ॥ ३६ ॥ राजा त्रिकूटा
धिपतिर्महेशेन कृतो महान् ॥ सर्वेषां राक्षसानां च परमासनमास्थितः ॥ ३७ ॥ तपस्विनां परीक्षार्थे यदृषीणां विहिंसनम् ॥ कृतं तेन तदा विप्रा
रावणेन तपस्विना ॥ ३८ ॥ अजेयो हि महाञ्जातो रावणो लोकरावणः ॥ सृष्ट्यंतरं कृतं येन प्रसादाच्छंकरस्य च ॥ ३९ ॥ लोकपाला जिता
स्तेन प्रतापेन तपस्विना ॥ ब्रह्मापि विजितो येन तपसा परमेण हि ॥ ४० ॥ अमृतांशुकरो भूत्वा जितो येन शशी द्विजाः ॥ दाहकत्वाज्जितो
वह्निरीशः कैलासतोलनात् ॥ ४१ ॥ ऐश्वर्येण जितश्चेन्द्रो विष्णुः सर्वगतस्तथा ॥ लिंगार्चनप्रसादेन त्रैलोक्यं च वशीकृतम् ॥ ४२ ॥ तदा सर्वे
सुरगणा ब्रह्मविष्णुपुरोगमाः ॥ मेरुपृष्ठं समासाद्य सुमंत्रं चक्रिरे तदा ॥ ४३ ॥ पीडिताः स्मो रावणेन तपसा दुष्करेण वै ॥ गोकर्णाख्ये गिरौ
देवाः श्रूयतां परमाद्भुतम् ॥४४॥ साक्षाल्लिंगार्चनं येन कृतमस्ति महात्मना ॥ ज्ञानज्ञेयं ज्ञानगम्यं यद्यत्परममद्भुतम् ॥ तत्कृतं रावणेनैव सर्वेषां दुर
तिक्रमम् ॥ ४५ ॥ वैराग्यं परमास्थाय औदार्यं च ततोऽधिकम् ॥ तेनैव ममता त्यक्ता रावणेन महात्मना ॥ ४६ ॥ संवत्सरसहस्राच्च स्वशिरो हि
महाभुजः ॥कृत्त्वा करेण लिंगस्य पूजनार्थं समर्पयत् ॥४७॥ रावणस्य कबंधं च तदग्रे च समीपतः ॥ योगधारणया युक्तं परमेण समाधिना॥४८॥

१ दैत्यानां मध्ये इति शेषः । ते वैष्णवा अपि प्रह्लादाद्याः शिवलिङ्गं पूजयंत्येव—विभीषणादिसाहचर्येण चैतत्सुस्पष्टमवगम्यते । लिङ्गपूजने पिण्डिकारूपेण विष्णोरपि पूजनस्य सहजसिद्धत्वात् । अतो न वैष्णवानां शिवलिङ्गपूजनपराङ्मुखत्वमुचितमित्याधुनिकैराग्रहग्रस्तैर्वैष्णवैः साधु मनसि विचारणीयम् ।

लिंगे लयं समाधाय कयापि कलया स्थितम् ॥ अन्यच्छिरो विवृश्च्यैवं तेनापि शिवपूजनम् ॥ कृतं नैवान्यमुनिना तथा चैवापरेण हि ॥ ४९ ॥ एवं शिरांस्येव बहूनि तेन समर्पितान्येव शिवार्चनार्थे ॥ भूत्वा कबंधो हि पुनः पुनश्च तदा शिवोऽसौ वरदो बभूव ॥५०॥ मया विनासुरस्तत्र पिंडीभूतेन वै पुरा ॥ वरान्वरय पौलस्त्य यथेष्टं तान्ददाम्यहम् ॥५१॥ रावणेन तदा चोक्तः शिवः परममंगलः ॥ यदि प्रसन्नो भगवन्देयो मे वर उत्तमः ॥ ५२ ॥ न कामयेऽन्यं च वरमाश्रये त्वत्पदांबुजम् ॥ यथा तथा प्रदातव्यं यद्यस्ति च कृपा मयि ॥ ५३ ॥ तदा सदाशिवेनोक्तो रावणो लोकरावणः ॥ मत्प्रसादाच्च सर्वं त्वं प्राप्स्यसे मनसेप्सितम् ॥५४॥ एवं प्राप्तं शिवात्सर्वं रावणेन सुरेश्वराः ॥ तस्मात्सर्वैर्भवद्भिश्च तपसा परमेण हि ॥५५॥ विजेतव्यो रावणोयमिति मे मनसि स्थितम् ॥ अच्युतस्य वचः श्रुत्वा ब्रह्माद्या देवतागणाः ॥ ५६ ॥ चिंतामापेदिरे सर्वे चिरं ते विषयान्विताः ॥ ब्रह्मापि चेंद्रियग्रस्तः सुतां रमितुमुद्यतः ॥ ५७ ॥ इंद्रो हि जारभावाच्च चंद्रो हि गुरुतल्पगः ॥ यमः कदर्यभावाच्च चंचलत्वात्सदागतिः ॥ ५८ ॥ पावकः सर्वभक्षित्वात्तथान्ये देवतागणाः ॥ अशक्ता रावणं जेतुं तपसा च विजृंभितम् ॥ ५९ ॥ शैलादो हि महातेजा गणश्रेष्ठः पुरातनः ॥ बुद्धिमान्नीतिनिपुणो महाबलपराक्रमी ॥ ६० ॥ शिवप्रियो रुद्ररूपी महात्मा ह्युवाच सर्वानथ चेंद्रमुख्यान् ॥ कस्माद्यूयं संभ्रमादागताश्च एतत्सर्वं कथ्यतां विस्तरेण ॥ ६१ ॥ नंदिना च तदा सर्वे पृष्टाः प्रोचुस्त्वरान्विताः ॥ ६२ ॥ ॥ देवा ऊचुः ॥ ॥ रावणेन वयं सर्वे निर्जिता मुनिभिः सह ॥ प्रसादयितुमायाताः शिवं लोकेश्वरेश्वरम् ॥ ६३ ॥ प्रहस्य भगवान्नंदी ब्रह्माणं वै ह्युवाच ह ॥ क्व यूयं क्व शिवः शंभुस्तपसा परमेण हि ॥ द्रष्टव्यो हृदि मध्यस्थः सोऽद्य द्रष्टुं न पार्यते ॥ ६४ ॥ यावद्भावा ह्यनेकाश्च इंद्रियार्थास्तथैव च ॥ यावच्च ममताभावस्तावदीशो हि दुर्लभः ॥६५॥ जितेंद्रियाणां शांतानां तन्निष्ठानां महात्मनाम् ॥ सुलभो लिंगरूपी स्याद्भवतां हि सुदुर्लभः ॥ ६६ ॥ तदा ब्रह्मादयो देवा ऋषयश्च विपश्चितः ॥ प्रणम्य नंदिनं प्राहुः कस्मात्त्वं वानराननः ॥ तत्सर्वं कथयान्यं च रावणस्य तपोबलम् ॥६७॥ ॥ नंदीश्वर उवाच ॥ ॥ कुबेरोऽधिकृतस्तेन शंकरेण महात्मना ॥ धनानामाधिपत्ये च तं द्रष्टुं रावणोऽत्र वै ॥६८॥ आगच्छत्त्वरया युक्तः समारुह्य स्ववाहनम् ॥ मां दृष्ट्वा चाब्रवीत्क्रुद्धः कुबेरो ह्यत्र आगतः ॥ ६९ ॥ त्वया दृष्टोऽथ वात्रासौ कथ्यतामविलंबितम् ॥ किं कार्यं धनदेनाद्य इति पृष्टो मया हि सः ॥ ७० ॥ तदोवाच महातेजा रावणो लोकरावणः ॥ मय्यश्रद्धान्वितो भूत्वा विषयात्मा सुदुर्मदः ॥७१॥ शिक्षापयितुमारब्धो मैवं कार्यमिति प्रभो ॥ यथाहं च श्रिया युक्त आढ्योऽहं बलवानहम् ॥ तथा त्वं भव रे मूढ मा मूढत्वमुपार्जय ॥ ७२ ॥ अहं मूढः कृतस्तेन कुबेरेण महात्मना ॥ मया निराकृतो रोषात्तपस्तेपे स गुह्यकः ॥७३॥

कुबेरः स हि नंदिन्किमागतस्तव मंदिरम् ॥ दीयतां च कुबेरोद्य नात्र कार्या विचारणा ॥ ७४ ॥ रावणस्य वचः श्रुत्वा ह्यवोचं त्वरितोऽप्यहम् ॥ लिंगकोसि महाभाग त्वमहं च तथाविधः ॥ ७५ ॥ उभयोः समतां ज्ञात्वा वृथा जल्पसि दुर्मते ॥ यथोक्तः स त्ववादीन्मां वदनार्थे बलोद्धतः ॥ ॥ ७६ ॥ यथा भवद्भिः पृष्टोऽहं वदनार्थे महात्मभिः ॥ पुरावृत्तं मया प्रोक्तं शिवार्चनविधेः फलम् ॥ शिवेन दत्तं सारूप्यं न गृहीतं मया तदा ॥७७॥ याचितं च मया शंभोर्वदनं वानरस्य च ॥ शिवेन कृपया दत्तं मम कारुण्यशालिना ॥ ७८ ॥ निराभिमानिनो ये च निर्दंभा निष्परिग्रहाः ॥ शंभोः प्रियास्ते विज्ञेया ह्यन्ये शिवबहिष्कृताः ॥७९॥तथावदन्मया सार्द्धं रावणस्तपसो बलात् ॥ मया च याचितान्येव दश वक्त्राणि धीमता ॥८०॥ उपहासकरं वाक्यं पौलस्त्यस्य तदा सुराः॥ मया तदा हि शप्तोऽसौ रावणो लोकरावणः॥८१॥ ईदृशान्येव वक्त्राणि येषां वै संभवंति हि ॥ तैः समेतो यदा कोऽपि नरवर्यो महातपाः ॥ मां पुरस्कृत्य सहसा हनिष्यति न संशयः ॥ ८२ ॥ एवं शप्तो मया ब्रह्मन्रावणो लोकरावणः ॥ अर्चितं केवलं लिंगं विना तेन महात्मना ॥ ८३ ॥ पीठिकारूपसंस्थेन विना तेन सुरोत्तमाः ॥ विष्णुना हि महाभागास्तस्मात्सर्वं विधास्यति ॥ ८४ ॥ देवदेवो महादेवो विष्णुरूपी महेश्वरः ॥ सर्वे यूयं प्रार्थयंतु विष्णुं सर्वगुहाशयम् ॥ ८५ ॥ अहं हि सर्वदेवानां पुरोवर्ती भवाम्यतः ॥ ते सर्वे नंदिनो वाक्यं श्रुत्वा मुदितमानसाः ॥ वैकुंठमागता गीर्भिर्विष्णुं स्तोतुं प्रचक्रिरे ॥ ८६ ॥ ॥ देवा ऊचुः ॥ ॥ नमो भगवते तुभ्यं देवदेव जगत्पते ॥ त्वदाधारमिदं सर्वं जगदेतच्चराचरम् ॥ ८७ ॥ एतल्लिंगं त्वया विष्णो धृतं वै पिण्डिरूपिणा ॥ महाविष्णुस्वरूपेण घातितौ मधुकैटभौ ॥ ८८ ॥ तथा कमठरूपेण धृतो वै मंदराचलः ॥ वराहरूपमास्थाय हिरण्याक्षो हतस्त्वया ॥ ८९ ॥ हिरण्यकशिपुर्दैत्यो हतो नृहरिरूपिणा ॥ त्वया चैव बलिर्बद्धो दैत्यो वामनरूपिणा ॥ ९० ॥ भृगूणामन्वये भूत्वा कृतवीर्यात्मजो हतः ॥ इतोप्यस्मान्महाविष्णो तथैव परिपालय ॥ ९१ ॥ रावणस्य भयादस्मात्त्रातुं भूयोर्हसि त्वरम् ॥ ९२ ॥ एवं संप्रार्थितो देवैर्भगवान्भूतभावनः ॥ उवाच च सुरान्सर्वान्वासुदेवो जगन्मयः ॥ ९३ ॥ हे देवाः श्रूयतां वाक्यं प्रस्तावसदृशं महत् ॥ शैलादिं च पुरस्कृत्य सर्वे यूयं त्वरान्विताः ॥ अवतारान्प्रकुर्वन्तु वानरीं तनुमाश्रिताः ॥ ९४ ॥ अहं हि मानुषो भूत्वा ह्यज्ञानेन समावृतः ॥ संभविष्याम्ययोध्यायां गृहे दशरथस्य च ॥ ब्रह्मविद्यासहायोस्मि भवतां कार्यसिद्धये ॥ ९५ ॥ जनकस्य गृहे साक्षाद्ब्रह्मविद्या जनिष्यति ॥ भक्तो हि रावणः साक्षाच्छिवध्यानपरायणः ॥ ९६ ॥ तपसा महता युक्तो ब्रह्मविद्यां यदेच्छति ॥ तदा सुसाध्यो भवति पुरुषो धर्मनिर्जितः ॥ ९७ ॥ एवं संभाष्य भगवान्विष्णुः परममङ्गलः ॥ वाली चेन्द्रांशसंभूतः सुग्रीवो

शुमतः सुतः ॥ ९८ ॥ तथा ब्रह्मांशसंभूतो जाम्बवान्नृक्षकुञ्जरः ॥ शिलादतनयो नंदी शिवस्यानुचरः प्रियः ॥ ९९ ॥ यो वै चैकादशो रुद्रो हनूमान्स महाकपिः ॥ अवतीर्णः सहायार्थं विष्णोरमिततेजसः ॥ १०० ॥ मैंदादयोऽथ कपयस्ते सर्वे सुरसत्तमाः ॥ एवं सर्वे सुरगणा अवतेरुर्यथा तथम् ॥ १०१ ॥ तथैव विष्णुरुत्पन्नः कौशल्यानंदवर्द्धनः ॥ विश्वस्य रमणाच्चैव राम इत्युच्यते बुधैः ॥ १०२ ॥ शेषोपि भक्त्या विष्णोश्च तपसाऽवातरद्भुवि ॥ १०३ ॥ दोर्दण्डावपि विष्णोश्च अवतीर्णौ प्रतापिनौ ॥ शत्रुघ्नभरताख्यौ च विख्यातौ भुवनत्रये ॥ १०४ ॥ मिथिलाधिपतेः कन्या या उक्ता ब्रह्मवादिभिः ॥ सा ब्रह्मविद्यावतरत्सुराणां कार्य्यसिद्धये ॥ सीता जाता लांगलस्य इयं भूमिविकर्षणात् ॥ १०५ ॥ तस्मात्सीतेति विख्याता विद्या सान्वीक्षिकी तदा ॥ मिथिलायां समुत्पन्ना मैथिलीत्यभिधीयते ॥ १०६ ॥ जनकस्य कुले जाता विश्रुता जनकात्मजा ॥ [1]ख्याता वेदवती पूर्वं ब्रह्मविद्याघनाशिनी ॥ १०७ ॥ सा दत्ता जनकेनैव विष्णवे परमात्मने ॥ १०८ ॥ तयाथ विद्यया सार्द्धं देवदेवो जगत्पतिः ॥ उग्रे तपसि लीनोऽसौ विष्णुः परममङ्गलः ॥ १०९ ॥ रावणं जेतुकामो वै रामो राजीवलोचनः ॥ अरण्यवासमकरोद्देवानां कार्यसिद्धये ॥ ॥ ११० ॥ शेषावतारोऽपि महांस्तपः परमदुष्करम् ॥ ततापं परया शक्त्या देवानां कार्यसिद्धये ॥ १११ ॥ शत्रुघ्नो भरतश्चैव तेपतुः परमं तपः ॥ ११२ ॥ ततोऽसौ तपसा युक्तः सार्द्धं तैर्देवतागणैः ॥ सगणं रावणं रामः षड्भिर्मासैरजीहनत् ॥ विष्णुना घातितः शस्त्रैः शिवसारूप्यमाप्तवान् ॥ ॥ ११३ ॥ सगणः स पुनः सद्यो बंधुभिः सह सुव्रताः ॥ ११४ ॥ शिवप्रसादात्सकलं द्वैताद्वैतमवाप ह ॥ द्वैताद्वैतविवेकार्थमृषयोप्यत्र मोहिताः ॥ तत्सर्वं प्राप्नुवंतीह शिवार्चनरता नराः ॥ ११५ ॥ येऽर्चयंति शिवं नित्यं लिंगरूपिणमेव च ॥ स्त्रियो वाप्यथ वा शूद्राः श्वपचा ह्यंत्य वासिनः ॥ तं शिवं प्राप्नुवंत्येव सर्वदुःखोपनाशनम् ॥ ११६ ॥ पशवोऽपि परं याताः किं पुनर्मानुषादयः ॥ ११७ ॥ ये द्विजा ब्रह्मचर्येण तपः परममास्थिताः ॥ वर्षैरनेकैर्यज्ञानां तेऽपि स्वर्गपरा भवन् ॥ ११८ ॥ ज्योतिष्टोमो वाजपेयो ह्यतिरात्रादयो ह्यमी ॥ यज्ञाः स्वर्गं प्रयच्छंति सत्रिणां नात्र संशयः ॥ ११९ ॥ तत्र स्वर्गसुखं भुक्त्वा पुण्यक्षयकरं महत् ॥ पुण्यक्षयेऽपि यज्वानो मर्त्यलोकं पतंति वै ॥ १२० ॥ पतितानां च संसारे दैवाद्बुद्धिः प्रजायते ॥ गुणत्रयमयी विप्रास्तासुतास्त्विह योनिषु ॥ १२१ ॥ यथा सत्त्वं संभवति सत्त्वयुक्तभवं नराः ॥ राजसाश्च तथा ज्ञेयास्ता मसाश्चैव ते द्विजाः ॥ १२२ ॥ एवं संसारचक्रेऽस्मिन्भ्रमिता बहवो जनाः ॥ यदृच्छया दैवगत्या शिवं संसेवते नरः ॥ १२३ ॥ शिवध्यानपं

१ अङभाव आर्पः ।

राणां च नराणां यतचेतसाम् ॥ मायानिरसनं सद्यो भविष्यति न चान्यथा ॥ १२४ ॥ मायानिरसनात्सद्यो नश्यत्येव गुणत्रयम् ॥ यदा गुणत्रयातीतो भवतीति स मुक्तिभाक् ॥ १२५ ॥ तस्माल्लिङ्गार्चनं भाव्यं सर्वेषामपि देहिनाम् ॥ लिङ्गरूपी शिवो भूत्वा त्रायते सचराचरम् ॥ ॥ १२६ ॥ पुरा भवद्भिः पृष्टोऽहं लिङ्गरूपी कथं शिवः ॥ तत्सर्वं कथितं विप्रा याथातथ्येन संप्रति ॥ १२७ ॥ कथं गरं भक्षितवाञ्छिवो लोकमहेश्वरः ॥ तत्सर्वं श्रूयतां विप्रा यथावत्कथयामि वः ॥ १२८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वर खण्डे केदारखंडे शिवशास्त्रे शिवलिङ्गार्चनमाहात्म्यकथने श्रीरामावतारकथावर्णनंनामाष्टमोऽध्यायः ॥ ८ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ एकदा तु सभामध्य आस्थितो देवराट् स्वयम् ॥ लोकपालैः परिवृतो देवैश्च ऋषिभिस्तथा ॥ १ ॥ अप्सरोगणसंवीतो गंधर्वैश्च पुरस्कृतः ॥ उपगीयमानविजयः सिद्धविद्याधरैरपि ॥ २ ॥ तदा शिष्यैः परिवृतो देवराजगुरुः सुधीः ॥ आगतोऽसौ महाभागो बृहस्पतिरुदारधीः ॥ ३ ॥ तं दृष्ट्वा सहसा देवाः प्रणेमुः समुपस्थिताः ॥ इंद्रोपि ददृशे तत्र प्राप्तं वाचस्पतिं तदा ॥ ४ ॥ नोवाच किंचिद्दुर्मेधा वचो मानपुरःसरम् ॥ नाह्वानं नासनं तस्यै न विसर्जनमेव च ॥ ५ ॥ शक्रं प्रमत्तं ज्ञात्वाथ मदाद्राज्यस्य दुर्मतिम् ॥ तिरोधानमनुप्राप्तो बृहस्पती रुपान्वितः ॥ ६ ॥ गते देवगुरौ तस्मिन्विमनस्काऽभवन्सुराः ॥ यक्षा नागाः सगंधर्वा ऋषयोऽपि तथा द्विजाः ॥ ७ ॥ गांधर्वस्यावसाने तु लब्धसंज्ञो हरिः सुरान् ॥ पप्रच्छ त्वरितेनैव क्व गतो हि महातपाः ॥ ८ ॥ तदैव नारदेनोक्तः शक्रो देवाधिपस्तथा ॥ त्वया कृता ह्यवज्ञा च गुरोर्नास्त्यत्र संशयः ॥ ९ ॥ गुरोरवज्ञया राज्यं गतं ते बलसूदन ॥ तस्मात्क्षमापनीयोऽसौ सर्वभावेन हि त्वया ॥ १० ॥ एतच्छ्रुत्वा वचस्तस्य नारदस्य महात्मनः ॥ आसनात्सहसोत्थाय तैः सर्वैः परिवारितः ॥ आगच्छत्त्वरया शक्रो गुरोर्गेहमतंद्रितः ॥ ११ ॥ पृष्ट्वा तारां प्रणम्यादौ क्व गतो हि महातपाः ॥ न जानामीत्युवाचेदं तारा शक्रं निरीक्षती ॥ १२ ॥ तदा चिंतान्वितो भूत्वा शक्रः स्वगृहमाव्रजत् ॥ एतस्मिन्नंतरे स्वर्गे ह्यनिष्टान्यद्भुतानि च ॥ १३ ॥ अभवन्सर्वदुःखार्थे शक्रस्य च महात्मनः ॥ पातालस्थेन बलिना ज्ञातं शक्रस्य चेष्टितम् ॥ १४ ॥ ययौ दैत्यैः परिवृतः पातालादमरावतीम् ॥ तदा युद्धमतीवासीद्देवानां दानवैः सह ॥१५॥ देवाः पराजिता दैत्यै राज्यं शक्रस्य तत्क्षणात् ॥ संप्राप्तं सकलं तस्य मूढस्य च दुरात्मनः ॥ १६ ॥ नीतं सर्वप्रयत्नेन पातालं त्वरितं गताः ॥ शुक्रप्रसादात्ते सर्वे तथा विजयिनोऽभवन् ॥ १७ ॥ शक्रोऽपि निःश्रिको जातो देवैस्त्यक्तस्ततो भृशम् ॥ देवी तिरोधानगता बभूव कमलेक्षणा ॥ १८ ॥ ऐरावतो महानागस्तथैवोच्चैःश्रवा हयः ॥

एवमादीनि रत्नानि अनेकानि बहून्यपि ॥ नीतानि सहसा दैत्यैर्लोभादसाधुवृत्तिभिः ॥ १९ ॥ पुण्यभांजि च तान्येव पतितानि च सागरे ॥
तदा स विस्मयाविष्टो बलिराह गुरुं प्रति ॥ २० ॥ देवान्निर्जित्य चास्माभिरानीतानि बहूनि च ॥ रत्नानि तु समुद्रेऽथ पतितानि तदद्भुतम्
॥ २१ ॥ बलेस्तद्वचनं श्रुत्वा उशना प्रत्युवाच तम् ॥ अश्वमेधशतेनैव सुरराज्यं भविष्यति ॥ दीक्षितस्य न संदेहस्तस्माद्धोक्ता स एव च ॥ २२ ॥
अश्वमेधं विना किंचित्स्वर्गं भोक्तुं न पार्यते ॥ २३ ॥ गुरोर्वचनमाज्ञाय तूष्णींभूतो बलिस्ततः ॥ बभूव देवैः सार्द्धं च यथोचितमकारयत् ॥२४॥
इन्द्रोपि शोच्यतां प्राप्तो जगाम परमेष्ठिनम् ॥ विज्ञापयामास तथा सर्वं राज्यभयादिकम् ॥ २५ ॥ शक्रस्य वचनं श्रुत्वा परमेष्ठी उवाच ह ॥
॥ २६ ॥ संमिलित्वा सुरान्सर्वांस्त्वया साकं त्वरान्विताः ॥ आराधनार्थं गच्छामो विष्णुं सर्वेश्वरेश्वरम् ॥ २७ ॥ तथेति गत्वा ते सर्वे शक्राद्या
लोकपालकाः ॥ ब्रह्माणं च पुरस्कृत्य तटं क्षीरार्णवस्य च ॥ प्राप्योपविश्य ते सर्वे हरिं स्तोतुं प्रचक्रमुः ॥ २८ ॥ ॥ ब्रह्मोवाच ॥ ॥ देवदेव
जगन्नाथ सुरासुरनमस्कृत ॥ पुण्यश्लोकाव्ययानंत परमात्मन्नमोऽस्तु ते ॥ २९ ॥ यज्ञोऽसि यज्ञरूपोऽसि यज्ञांगोऽसि रमापते ॥ ततोऽद्य कृपया
विष्णो देवानां वरदो भव ॥ ३० ॥ गुरोरवज्ञया चाद्य भ्रष्टराज्यः शतक्रतुः ॥ जातः सुरर्षिभिः साकं तस्मादेनं समुद्धर ॥ ३१ ॥ ॥ श्रीभगवा
नुवाच ॥ ॥ गुरोरवज्ञया सर्वं नश्यतीति किमद्भुतम् ॥ ये पापिनो ह्यधर्मिष्ठाः केवलं विषयात्मकाः ॥ पितरौ निंदितौ यैश्च निर्दैवास्ते न
संशयः ॥ ३२ ॥ अनेन यत्कृतं ब्रह्मन्सद्यस्तत्फलमागतम् ॥ कर्मणा चास्य शक्रस्य सर्वेषां संकटागमः ॥ ३३ ॥ विपरीतो यदा कालः पुरुषस्य
भवेत्तदा ॥ भूतमैत्रीं प्रकुर्वंति सर्वकार्यार्थसिद्धये ॥ ३४ ॥ तेन वै कारणेनेंद्र मदीयं वचनं कुरु ॥ कार्यहेतोस्त्वया कार्यो दैत्यैः सह समागमः ॥
॥ ३५ ॥ एवं भगवतादिष्टः शक्रः परमबुद्धिमान् ॥ अमरावतीं ययौ हित्वा सुतलं दैवतैः सह ॥ ३६ ॥ इन्द्रं समागतं श्रुत्वा इंद्रसेनो रुषान्वितः ॥
बभूव सह सैन्येन हंतुकामः पुरंदरम् ॥ ३७ ॥ नारदेन तदा दैत्या बलिश्च बलिनां वरः ॥ निवारितस्तद्वधाच्च वाक्यैरुच्चावचैस्तथा ॥ ३८ ॥
ऋषेस्तस्यैव वचनात्त्यक्तमन्युर्बलिस्तदा ॥ बभूव सह सैन्येन आगतो हि शतक्रतुः ॥ ३९ ॥ इन्द्रसेनेन दृष्टोऽसौ लोकपालैः समावृतः ॥
उवाच त्वरया युक्तः प्रहसन्निव दैत्यराट् ॥ ४० ॥ कस्मादिहागतः शक्र सुतलं प्रति कथ्यताम् ॥ तस्यैतद्वचनं श्रुत्वा स्मयमान उवाच
तम् ॥ ४१ ॥ वयं कश्यपदायादा यूयं सर्वे तथैव च ॥ यथा वयं तथा यूयं विग्रहो हि निरर्थकः ॥ ४२ ॥ मम राज्यं क्षणेनैव नीतं
दैववशात्त्वया ॥ तथा ह्येतानि तान्येव रत्नानि सुबहून्यपि ॥ गतानि तत्क्षणादेव यन्नानीतानि वै त्वया ॥ ४३ ॥ तस्माद्विमर्शः कर्तव्यः

पुरुषेण विपश्चिता ॥ विमर्शाज्जायते ज्ञानं ज्ञानान्मोक्षो भविष्यति ॥ ४४ ॥ किं तु मे बत उक्तेन जाने न च तवाग्रतः ॥ शरणार्थी ह्यहं प्राप्तः सुरैः सह तवांतिकम् ॥ ४५ ॥ एतच्छ्रुत्वा तु शक्रस्य वाक्यं वाक्यविदां वरः ॥ प्रहस्योवाच मतिमाञ्छक्रं प्रति विदां वरः ॥ ४६ ॥ त्वमागतोसि देवेंद्र किमर्थं तन्न वेद्म्यहम् ॥ ४७ ॥ शक्रस्तद्वचनं श्रुत्वा ह्यश्रुपूर्णाकुलेक्षणः ॥ किंचिन्नोवाच तत्रैनं नारदो वाक्यमब्रवीत् ॥ ४८ ॥ बले त्वं किं न जानासि कार्याकार्यविचारणाम् ॥ धर्मो हि महतामेष शरणागतपालनम् ॥ ४९ ॥ शरणागतं च विप्रं च रोगिणं वृद्धमेव च ॥ य एतान्न च रक्षंति ते वै ब्रह्महणो नराः ॥ ५० ॥ शरणागतशब्देन आगतस्तव सन्निधौ ॥ संरक्षणाय योग्यश्च त्वया नास्त्यत्र संशयः ॥ एवमुक्तो नारदेन तदा दैत्यपतिः स्वयम् ॥ ५१ ॥ विमृश्य परया बुद्ध्या कार्याकार्यविचारणाम् ॥ शक्रं प्रपूजयामास बहुमानपुरःसरम् ॥ लोकपालैः समेतं च तथा सुरगणैः सह ॥ ५२ ॥ प्रत्ययार्थं च सत्त्वानि ह्यनेकानि व्रतानि वै ॥ बलिप्रत्ययभूतानि स चकार पुरंदरः ॥ ५३ ॥ एवं स समयं कृत्वा शक्रः स्वार्थपरायणः ॥ बलिना सह चावात्सीदर्थशास्त्रपरो महान् ॥ ५४ ॥ एवं निवसतस्तस्य सुतलेऽपि शतक्रतोः ॥ वत्सरा बहवो ह्यासंस्तदा बुद्धिमकल्पयत् ॥ संस्मृत्य वचनं विष्णोर्विमृश्य च पुनःपुनः ॥ ५५ ॥ एकदा तु सभामध्य आसीनो देवराट्स्वयम् ॥ उवाच प्रहसन्वाक्यं बलिमुद्दिश्य नीतिमान् ॥ ५६ ॥ प्राप्तव्यानि त्वया वीर अस्माकं च त्वया बले ॥ गजादीनि बहून्येव रत्नानि विविधानि च ॥ ५७ ॥ गतानि तत्क्षणादेव सागरे पतितानि वै ॥ प्रयत्नो हि प्रकर्तव्यो ह्यस्माभिस्त्वरयान्वितैः ॥ ५८ ॥ तेषां चोद्धरणे दैत्य रत्नानामिह सागरात् ॥ तर्हि निर्मथनं कार्यं भवता कार्यसिद्धये ॥ ५९ ॥ बलिः प्रवर्तितस्तेन शक्रेण सुरसूदनः ॥ उवाच शक्रं त्वरितः केनेदं मथनं भवेत् ॥ ६० ॥ तदा नभोगता वाणी मेघगंभीरनिःस्वना ॥ उवाच देवा दैत्याश्च मंथध्वं क्षीरसागरम् ॥ ६१ ॥ भवतां बलवृद्धिश्च भविष्यति न संशयः ॥ ६२ ॥ मंदरं चैव मंथानं रज्जुं कुरुत वासुकिम् ॥ पश्चाद्देवाश्च दैत्याश्च मेलयित्वा विमथ्यताम् ॥ ६३ ॥ नभोगतां च तां वाणीं निशम्याथ तदा सुराः ॥ दैत्यैः सार्द्धं ततः सर्वे उद्यमं चक्रुरुद्यताः ॥ ६४ ॥ पातालान्निर्गताः सर्वे तदा तेऽथ सुरासुराः ॥ आजग्मुरतुलं सर्वे मंदरं पर्वतोत्तमम् ॥ ६५ ॥ दैत्याश्च कोटिसंख्याकास्तथा देवा न संशयः ॥ उद्युक्ताः सहसा प्राऽयुर्मंदरं कनकप्रभम् ॥ ६६ ॥ सरत्नं वर्तुलाकारं स्थूलं चैव महाप्रभम् ॥ अनेकरत्नसंवीतं नानाद्रुमनिषेवितम् ॥६७॥ चंदनैः पारिजातैश्च नागपुन्नागचंपकैः ॥ नानामृगगणाकीर्णं सिंहशार्दूलसेवितम् ॥ ६८ ॥ एवंविधं

१ इदं सर्वं पद्यं पुनरुक्तमिवाभाति । तथाऽपि पाठक्रमस्य विभिन्नत्वेन गृहे परिगृहीतमतो न दुष्यतीत्यवधेयम् ।

महाशैलं दृष्ट्वा ते सुरसत्तमाः ॥ ऊचुः प्रांजलयः सर्वे तदा ते सुरसत्तमाः ॥ ६९ ॥ ॥ देवा ऊचुः ॥ ॥ अद्रे सुरा वयं सर्वे विज्ञप्तुमिह चागताः ॥ तच्छृणुष्व महाशैल परेषामुपकारकः ॥७०॥ एवमुक्तस्तदा शैलो देवैर्दैत्यैः स मंदरः ॥ उवाच निःसृतो भूत्वा परं विग्रहवान्वचः ॥ ७१ ॥ तेन रूपेण रूपी स पर्वतो मंदराचलः ॥ किमर्थमागताः सर्वे मत्समीपं तदुच्यताम् ॥ ७२ ॥ तदा बलिरुवाचेदं प्रस्तावसदृशं वचः ॥ इंद्रोपि त्वरया युक्तो बभाषे सूनृतं वचः ॥ ७३ ॥ अस्माभिः सह कार्यार्थे भव त्वं मंदराचल ॥ अमृतोत्पादनार्थे त्वं मंथानं भव सुव्रत ॥ ७४ ॥ तथेति मत्वा तद्वाक्यं देवानां कार्यसिद्धये ॥ ऊचे देवासुरांश्चेदमिन्द्रं प्रति विशेषतः ॥ ७५ ॥ छेदितौ च त्वया पक्षौ वज्रेण शतपर्वणा ॥ गंतुं कथं समर्थोऽहं भवतां कार्यसिद्धये ॥ ७६ ॥ तदा देवासुराः सर्वे स्तूयमाना महाचलम् ॥ उत्पाटयेयुरतुलं मंदरं च ततोद्भुतम् ॥ ७७ ॥ क्षीरार्णवं नेतुकामा ह्यशक्तास्ते ततोऽभवन् ॥ पर्वतः पतितः सद्यो देवदैत्योपरि ध्रुवम् ॥ ७८ ॥ केचिद्भग्ना मृताः केचित्केचिन्मूर्छापरा भवन् ॥ परीवादरताः केचित्केचित्क्लेशत्वमागताः ॥ ७९ ॥ एवं भग्नोद्यमा जाता असुराः सुरदानवाः ॥ चेतनां परमां प्राप्तास्तुष्टुवुर्जगदीश्वरम् ॥ ८० ॥ रक्षरक्ष महाविष्णो शरणागतवत्सल ॥ त्वया ततमिदं सर्वं जंगमाजंगमं च यत् ॥ ८१ ॥ देवानां कार्यसिद्ध्यर्थं प्रादुर्भूतो हरिस्तदा ॥ तान्दृष्ट्वा सहसा विष्णुर्गरुडोपरि संस्थितः ॥ ८२ ॥ लीलया पर्वतश्रेष्ठमुत्तभ्यारोपयत्क्षणात् ॥ गरुत्मति तदा देवः सर्वेषामभयं ददौ ॥ ८३ ॥ तत उत्थाय तान्देवान्क्षीरोदस्योत्तरं तटम् ॥ नीत्वा तं पर्वतं वृद्धं निक्षिप्याप्सु ततो ययौ ॥ ८४ ॥ तदा सर्वे सुरगणाः स्वागत्य असुरैः सह ॥ वासुकिं च समादाय चक्रिरे समयं च तम् ॥ ८५ ॥ मंथानं मंदरं चैव वासुकिं रज्जुमेव च ॥ कृत्वा सुराऽसुराः सर्वे ममंथुः क्षीरसागरम् ॥ ८६ ॥ क्षीराब्धेर्मथ्यमानस्य पर्वतो हि रसातलम् ॥ गतः स तत्क्षणादेव कूर्मो भूत्वा रमापतिः ॥ उद्धृतस्तत्क्षणादेव तदद्भुतमिवाभवत् ॥ ८७ ॥ भ्राम्यमाणस्ततः शैलो नोदितः सुरदानवैः ॥ भ्रममाणो निराधारो बोधश्चेव गुरुं विना ॥ ८८ ॥ परमात्मा तदा विष्णुराधारो मंदरस्य च ॥ दोर्भिश्चतुर्भिः संगृह्य ममंथाब्धिं सुखावहम् ॥ ८९ ॥ तदा सुरासुराः सर्वे ममंथुः क्षीरसागरम् ॥ एकीभूत्वा बलेनैवमतिमात्रं बलोत्कटाः ॥ ९० ॥ पृष्ठकंठोरुजान्वंतः कमठस्य महात्मनः ॥ तथासौ पर्वतश्रेष्ठो वज्रसारमयो दृढः ॥ उभयोर्घर्षणादेव वडवाग्निः समुत्थितः ॥ ९१ ॥ हलाहलं च संजातं तद्दृष्ट्वा नारदेन हि ॥ ततो देवानुवाचेदं देवर्षिरमितद्युतिः ॥९२॥ न कार्यं मथनं चाब्धेर्भवद्भिरधुनाऽखिलैः ॥ प्रार्थयध्वं शिवं देवाः सर्वे दक्षस्य याजनम् ॥ तद्विस्मृतिं च वो यातं वीरभद्रेण यत्कृतम् ॥ ९३ ॥ तस्माच्छिवः स्मर्यतां चाशु देवाः परः पराणामपि वा परश्च ॥ परात्परः परमानंदरूपो योगिध्येयो निष्प्रपंचो

ह्यरूपः ॥ ९४ ॥ ते मथ्यमानास्त्वरिता देवाः स्वात्मार्थसाधकाः ॥ अभिलाषपराः सर्वे न शृण्वंति यतो जडाः ॥ ९५ ॥ उपदेशैश्च बहुभिर्नोप देश्याः कदाचन ॥ ते रागद्वेषसंघाताः सर्वे शिवपराङ्मुखाः ॥ ९६ ॥ केवलोद्यमसंवीता ममंथुः क्षीरसागरम् ॥ अतिनिर्मथनाज्जातं क्षीराब्धेश्च हलाहलम् ॥ ९७ ॥ त्रैलोक्यदहने प्रौढं प्राप्तं हंतुं दिवौकसः ॥ अत ऊर्ध्वं दिशः सर्वा व्याप्तं कृत्स्नं नभस्तलम् ॥ ग्रसितुं सर्वभूतानां कालकूटं समभ्ययात् ॥ ९८ ॥ दृष्ट्वा बृहंतं स्वकरस्थमोजसा तं सर्पराजं सह पर्वतेन ॥ तत्रैव हित्वापययुस्तदानीं पलायमाना ह्यसुरैः समेताः ॥ ९९ ॥ तथैव सर्व ऋषयो भृग्वाद्याः शतशस्ततः ॥ दक्षस्य यजनं तेन यथा जातं तथाभवत् ॥ १०० ॥ सत्यलोकं गताः सर्वे भृगुणा नोदिता भृशम् ॥ वेदवाक्यैश्च विविधैः कालकूटं प्रशाम्यति ॥ देवा नास्त्यत्र संदेहः सत्यं सत्यं वदामि वः ॥ १०१ ॥ भृगुणोक्तं वचः श्रुत्वा कालकूटविषार्दिताः ॥ सत्यलोकं समासाद्य ब्रह्माणं शरणं ययुः ॥ १०२ ॥ तदा जाज्वल्यमानं वै कालकूटं प्रभोज्वलम् ॥ दृष्ट्वा ब्रह्माथ तान्दृष्ट्वा ह्यकर्मज्ञान्सुरासुरान् ॥ तेषां शपितुमारेभे नारदेन निवारितः ॥ १०३ ॥ ॥ ब्रह्मोवाच ॥ ॥ अकार्यं किं कृतं देवाः कस्मात्क्षोभोयमुद्यतः ॥ ईश्वरस्य च जातोऽद्य नान्यथा मम भाषितम् ॥ १०४ ॥ ततो देवैः परिवृतो वेदोपनिषदैस्तथा ॥ नानागमैः परिवृतः कालकूटभयाद्ययौ ॥ १०५ ॥ ततश्चिंतान्विता देवा इदमूचुः परस्परम् ॥ अविद्याकामसंवीताः कुर्यामः शंकरं च कम् ॥ १०६ ॥ ब्रह्माणं च पुरस्कृत्य तदा देवास्त्वरान्विताः ॥ वैकुण्ठमाव्रजन्सर्वे कालकूट भयार्दिताः ॥ १०७ ॥ ब्रह्मादयश्चर्षिगणाश्च तदा परेशं विष्णुं पुराणपुरुषं प्रभविष्णुमीशम् ॥ वैकुण्ठमाश्रितमधोक्षजमाधवं ते सर्वे सुरासु रगणाः शरणं प्रयाताः ॥ १०८ ॥ तावत्प्रवृद्धं सुमहत्कालकूटं समभ्ययात् ॥ दग्ध्वादो ब्रह्मणो लोकं वैकुण्ठं च ददाह वै ॥ १०९ ॥ कालकूटा ग्निना दग्धो विष्णुः सर्वगुहाशयः ॥ पार्षदैः सहितः सद्यस्तमालसदृशच्छविः ॥ ११० ॥ वैकुण्ठं च सुनीलं च सर्वलोकैः समावृतम् ॥ जलकल्म षसंवीताः सर्वे लोकास्तदाभवन् ॥ १११ ॥ अष्टावरणसंवीतं ब्रह्मांडं ब्रह्मणा सह ॥ भस्मीभूतं चकाराशु जलकल्मषमद्भुतम् ॥ ११२ ॥ नो भूमिर्न जलं चाग्निर्न वायुर्न नभस्तदा ॥ नाहंकारो न च महान्मूलाविद्या तथैव च ॥ शिवस्य कोपात्संजातं तदा भस्माकुलं जगत् ॥ ११३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथममाहेश्वरखण्डान्तर्गते केदारखण्डे नवमोऽध्यायः ॥ ९ ॥ छ ॥ मुनय ऊचुः ॥ ॥ यत्त्वया कथितं ब्रह्मन्ब्रह्मांडं सचराचरम् ॥ भस्मीभूतं रुद्रकोपात्कालकूटाग्निनाऽखिलम् ॥ १ ॥ ब्रह्मांडांतरतः किं तु रुद्रं मन्यामहे वयम् ॥ तदा चराचरं नष्टं ब्रह्मविष्णुपुरोगमम् ॥ २ ॥ भस्मीभूतं रुद्रकोपात्कथं सृष्टिः प्रवर्तिता ॥ कुतो ब्रह्मा च विष्णुश्च कुतश्चंद्रपुरोगमाः ॥ ३ ॥ अन्ये सुरा

सुराः कुत्र भस्मीभूता लयं गताः ॥ अत ऊर्ध्वं किमभवत्तत्सर्वं वक्तुमर्हसि ॥ ४ ॥ व्यासप्रसादात्सकलं वेत्थ त्वं नापरो हि तत् ॥ तस्माज्ज्ञानमयं शास्त्रं तज्जानासि न चापरः ॥ ५ ॥ इति पृष्टस्तदा सर्वैर्मुनिभिर्भावितात्मभिः ॥ सूतो व्यासं नमस्कृत्य वाक्यं चेदमथाब्रवीत् ॥ ६ ॥ ॥ लोमश उवाच ॥ ॥ यदा ब्रह्मांडमध्यस्था व्याप्ता देवा विषाग्निना ॥ हरिब्रह्मादयो ह्येते लोकपालाः सवासवाः ॥ तदा विज्ञापितः शंभुर्हेरंबेन महात्मना ॥७॥ ॥ हेरंब उवाच ॥ ॥ हे रुद्र हे महादेव हे स्थाणो हे जगत्पते ॥ मया विघ्नं विनोदेन कृतं तेषां सुदुर्जयम् ॥ ८ ॥ भयेन मतिमोहात्त्वां नार्चयंति च मामपि ॥ उद्योगं ये प्रकुर्वन्ति तेषां क्लेशोऽधिको भवेत् ॥९ ॥ एवमभ्यर्थितस्तेन पिनाकी वृषभध्वजः ॥ विघ्नांधकारसूर्येण गणाधिपतिना तदा ॥ १० ॥ लिंगरूपोऽब्रवीच्छंभुर्निराकारो निरामयः ॥ निरंजनो व्योमकेशः कपर्दी नीललोहितः ॥ ११ ॥ ॥ महेश्वर उवाच ॥ ॥ हेरंब शृणु मे वाक्यं श्रद्धया परया युतः ॥ अहंकारात्मकं चैव जगदेतच्चराचरम् ॥ १२ ॥ स्थितिं करोत्यहंकारः प्रलयोत्पत्तिमेव च ॥ जगदादौ गणपते तदा विज्ञप्तिमात्रतः॥१३॥ मायाविरहितं शांतं द्वैताद्वैतपरं सदा ॥ ज्ञप्तिमात्रस्वरूपं तत्सदानंदैकलक्षणम् ॥ १४ ॥ ॥ गणपतिरुवाच ॥ ॥ यदि त्वं केवलो ह्यात्मा परमानन्दलक्षणः ॥ तस्मात्त्वदपरं किंचिन्नान्यदस्ति परंतप ॥ १५ ॥ नानारूपं कथं जातं सुरासुरविलक्षणम् ॥ विचित्रं मोहजननं त्रिभिर्देवैश्च लक्षितम् ॥ १६ ॥ भूतग्रामैश्चतुर्भिश्च नानाभेदैः समन्वितैः ॥ जातं संसारचक्रं च नित्यानित्यविलक्षणम् ॥ १७ ॥ परस्परविरोधेन ज्ञानवादेन मोहिताः ॥ कर्मवादरताः केचित्केचित्स्वगुणमाश्रिताः ॥ १८ ॥ ज्ञाननिष्ठाश्च ये केचित्परस्परविरोधिनः ॥ एवं संशयमापन्नं त्राहि मां वृषभध्वज ॥ १९ ॥ अहं गणश्च कुत्रत्याः क्व चायं वृषभः प्रभो ॥ एते चान्ये च बहवः कुतो जाताश्च कुत्र वै ॥ २० ॥ कृताः सर्वे महाभागाः सात्त्विका राजसाश्च वै ॥ प्रहस्य भगवाञ्छंभुर्गणेशं वक्तुमुद्यतः ॥ २१ ॥ ॥ महेश्वर उवाच ॥ ॥ कालशक्त्या च जातानि रजःसत्त्वतमांसि च ॥ तैरावृतं जगत्सर्वं सदेवासुरमानुषम् ॥ २२ ॥ परिदृश्यमानमेतच्चानश्वरं परमार्थतः ॥ विद्ध्येतत्सर्वंसिद्ध्यैव कृतकत्वाच्च नश्वरम् ॥२३ ॥ लोमश उवाच ॥ यावद्गणेशसंयुक्तो भाषमाणः सदाशिवः ॥ लिंगरूपी विश्वरूपः प्रादुर्भूता सदाशिवात् ॥२४॥ शिवरूपा जगद्योनिः कार्यकारणरूपिणी ॥ लिंगरूपी स भगवान्निमग्नस्तत्क्षणादभूत् ॥२५॥ एका स्थिता परा शक्तिर्ब्रह्मविद्यात्मलक्षणा ॥ गणेशो विस्मयाविष्टो ह्यवलोकनतत्परः ॥ २६ ॥ ॥ ऋषय ऊचुः ॥ ॥ प्रकृत्यन्तर्गतं सर्वं जगदेतच्चराचरम् ॥ गणेशस्य पृथक्त्वं च कथं जातं तदुच्यताम् ॥ २७ ॥ ॥ लोमश उवाच ॥ ॥ साक्षात्प्रकृत्याः संभूतो गणेशो भगवानभूत् ॥ यथारूपः शिवः साक्षात्तद्रूपो हि गणेश्वरः ॥ २८ ॥

शिवेन सह संग्रामो ह्यभूत्तस्य महात्मनः ॥ अज्ञानात्प्राकृतो भूत्वा बहुकालं निरन्तरम् ॥ २९ ॥ तस्य दृष्ट्वा ह्यजेयत्वं गजारूढस्य तत्तदा ॥
त्रिशूलेनाहनच्छंभुः सगजं तमपातयत् ॥ ३० ॥ तदा स्तुतो महादेवः परशक्त्या परंतपः ॥ परशक्तिमुवाचेदं वरं वरय शोभने [1]॥ ३१ ॥ तदा
वृतो महादेवो वरेण परमेण हि ॥ योऽयं त्वया हतो देव मम पुत्रो न संशयः ॥ ३२ ॥ त्वां न जानात्ययं मूढः प्रकृत्यंशसमुद्भवः [1]॥ तस्मात्पुत्रं
जीवयेमं मम तुष्ट्यर्थमेव च ॥ ३३ ॥ प्रहस्य भगवान्रुद्रो मायापुत्रमजीवयत् ॥ सिंधुरवदनेनैव मुखे स समयोजयत् ॥ ३४ ॥ तदा गजाननो
जातः प्रसादाच्छंकरस्य च ॥ मायापुत्रोऽपि निर्मायो ज्ञानवान्संबभूव ह ॥ ३५ ॥ आत्मज्ञानामृतेनैव नित्यतृप्तो निरामयः ॥ समाधिसंस्थितो
रौद्रः कालकालांतकोऽभवत् ॥ ३६ ॥ योगदंडार्थमुत्पाट्य स्वकीयं दशनं महत् ॥ करे गृह्य गणाध्यक्षः शब्दब्रह्मातिवर्तते ॥ ऋद्धिसिद्धिद्वयेनैव एक
त्वेन विराजितः ॥ ३७ ॥ ये ते गणाश्च विघ्नाश्च ये चान्येऽभ्यधिका भुवि ॥ तेषामपि पतिर्जातः कृतोऽसौ शंभुना तदा ॥ ३८ ॥ तस्माद्वि
लोकयामास प्रकृतिं विश्वरूपिणीम् ॥ पृथक्स्थित्वाग्रतो जानाल्लिंगं प्रकृतिमेव च ॥ ददर्श विमलं लिंगं प्रकृतिस्थं स्वभावतः ॥ ३९ ॥ आत्मानं
च गणैः सार्द्धं तथैव च जगत्त्रयम् ॥ लीनं लिंगे समस्तं तद्धेरम्बो ज्ञानवानपि ॥ ४० ॥ मुमोह च पुनः संज्ञां प्रतिलभ्य प्रयत्नतः ॥ ननाम
शिरसा ताभ्यामीशाभ्यां स गणेश्वरः ॥ ४१ ॥ तदा ददर्श तत्रैव लोकसंहारकारकम् ॥ ब्रह्माणं चैव रुद्रं च विष्णुं चैव सदाशिवम् ॥ ४२ ॥
ददर्श प्रेततुल्यानि लिंगशक्त्यात्मकानि च ॥ ब्रह्माण्डगोलकान्येव कोटिशः परमाणुवत् ॥ ४३ ॥ लीयंते च विलीयंते महेशे लिंगरूपिणि ॥
प्रकृत्यंतर्गतं लिंगं लिंगस्यांतर्गता च सा ॥ ४४ ॥ शक्त्या लिंगं च संछन्नं तदा सर्वमदृश्यत ॥ लिंगेन शक्तिः संछन्ना परस्परमवर्तत ॥ ४५ ॥
शिवाभ्यां संश्रितं लोकं जगदेतच्चराचरम् ॥ गणेशो वापि तज्ज्ञानं न परेऽपि तथाविदन् ॥ ४६ ॥ तदोवाच महातेजा गणाध्यक्षो गणैः सह ॥ सश
क्तिकं स्तूयमानः शक्त्या च परया तदा ॥ ४७ ॥ ॥ गणेश उवाच ॥ ॥ नमामि देवं शक्त्यान्वितं ज्ञानरूपं प्रसन्नं ज्ञानात्परं परमं
ज्योतिरूपम् ॥ रूपात्परं परमं तत्त्वरूपं तत्त्वात्परं परमं मंगलं च आनंदाख्यं निष्कलं निर्विषादम् ॥ ४८ ॥ धूमात्परमयोवह्निर्धूमवत्प्रतिभासते ॥
प्रकृत्यंतर्गतस्त्वं हि लक्ष्यसे ज्ञानसंभवः ॥ प्रकृत्यंतर्गतस्त्वं हि मायाव्यक्तिरितीयसे ॥ ४९ ॥ एवंविधस्त्वं भगवन्स्वमायया सृजस्यथोलुंपसि
पासि विश्वम् ॥ अस्माद्वरात्सर्वमिदं प्रनष्टं सब्रह्मविष्ण्विंद्रयुतं चराचरम् ॥ ५० ॥ यथा पुरासीर्भगवान्महेशस्त्रैलोक्यनाथोऽसि चराचरात्मा ॥

१ इदं पद्यं वा गद्यं वा—इति न निश्चेतुं शक्यते—परं पद्यवत्प्रतिभाति ।

कुरुष्व शीघ्रं सहजीवकोशं चराचरं तत्सकलं प्रदग्धम् ॥ ५१ ॥ ॥ लोमश उवाच ॥ ॥ एवं स्तुतो गणेशेन भगवान्भूतभावनः ॥ यदुत्थितं
कालकूटं लोकसंहारकारकम् ॥५२॥ लिंगरूपेण तद्ग्रस्तं विमलं चाकरोत्तदा ॥ सदेवासुरमर्त्यांश्च सर्वाणि त्रिजगन्ति च॥तत्क्षणाद्रक्षितान्येव कृपया
परया युतः ॥ ५३ ॥ ब्रह्मा विष्णुः सुरेंद्रश्च लोकपालाः सहर्षयः ॥ यक्षा विद्याधराः सिद्धा गंधर्वाप्सरसां गणाः ॥ उत्थिताश्चैव ते सर्वे निद्रापरि
गता इव ॥ ५४ ॥ विस्मयेन समाविष्टा बभूवुर्जातसाध्वसाः ॥ सर्वे देवासुराश्चैव ऊचुराश्चर्यवत्ततः ॥ ५५ ॥ क्व कालकूटं सुमहद्येन विद्राविता
वयम् ॥ मृतप्रायाः कृताः सद्यः सलोकपालका ह्यमी ॥ ५६ ॥ इत्यब्रुवंस्तदा दैत्यास्तूष्णींभूतास्तदा स्थिताः ॥ शक्रादयो लोकपाला विष्णुं सर्वे
श्वरेश्वरम् ॥ ब्रह्माणं च पुरस्कृत्य इदमूचुः समेधिताः ॥ ५७ ॥ केनेदं कारितं विष्णो न विदामोऽल्पमेधसः ॥ तदा प्रहस्य भगवान्ब्रह्मणा सह तैः
सुरैः ॥ ५८ ॥ समाधिमगमन्सर्वेऽप्येकाग्रमनसस्तदा ॥ तत्त्वज्ञानेन निर्हृत्य कामक्रोधादिकान्द्विजाः ॥ ५९ ॥ तदात्मनि स्थितं लिंगमपश्यन्वि
बुधादयः ॥ विष्णुं पुरस्कृत्य तदा तुष्टुवुः परमार्थतः ॥ ६० ॥ आत्मना परमात्मानं योगिनः पर्युपासते ॥ ६१ ॥ लिंगमेव परं ज्ञानं लिंगमेव
परं तपः ॥ लिंगमेव परो धर्मो लिंगमेव परा गतिः ॥ तस्माल्लिंगात्परतरं यच्च किंचिन्न विद्यते ॥ ६२ ॥ एवं ब्रुवंतो हि तदा सुरासुराः सलोकपाला
ऋषिभिश्च साकम्॥विष्णुं पुरस्कृत्य तमालवर्णं शंभुं शरण्यं शरणं प्रपन्नाः ॥६३॥ त्राहित्राहि महादेव कृपालो परमेश्वर॥पुरा त्राता यथा सर्वे तथा
त्वं त्रातुमर्हसि ॥६४॥ तद्देवदेव भवतश्चरणारविंदं सेवानुबंधमहिमानमनंतरूपम् ॥ त्वदाश्रितं यत्परमानुकंपया नमोऽस्तु ते देववर प्रसीद ॥६५॥
लिंगस्वरूपमध्यस्थो भगवान्भूतभावनः ॥ सर्वैः सुरगणैः साकं बभाषेदं रमापतिः ॥ ६६ ॥ त्वं लिंगरूपी भगवाञ्जगतामभयप्रदः ॥ विष्णुना
संस्तुतो देवो लिंगरूपी महेश्वरः ॥ ६७ ॥ मृताश्त्राता गरात्सर्वे तस्मान्मृत्युंजय प्रभो ॥ रक्षरक्ष महाकाल त्रिपुरांत नमोस्तु ते ॥ ६८ ॥ विष्णुना
संस्तुतो देवो लिंगरूपी महेश्वरः ॥ प्रादुर्बभूव सांबोऽथ बोधयन्निव तान्सुरान् ॥६९॥ हे विष्णो हे सुराः सर्व ऋषयः श्रूयतामिदम् ॥ मन्यतेऽपि हि
संसारे अनित्ये नित्यताकुलम् ॥ ७० ॥अविलोकयताऽऽत्मानमात्मना विबुधादयः ॥ किं यज्ञैः किं तपोभिश्च किमुद्योगेन कर्मणाम् ॥ ७१ ॥
एकत्वेन पृथक्त्वेन किंचिन्नैव प्रयोजनम् ॥ यस्माद्भवद्भिर्मिलितैः कृतं यत्कर्म दुष्करम् ॥ ७२ ॥ क्षीराब्धेर्मथनं तच्च अमृतार्थं कथं कृतम् ॥ मृत्युं
जयं निराकृत्य अवज्ञाय च मां सदा ॥ ७३ ॥ तस्मात्सर्वे मृत्युमुखं पतिता वै न संशयः ॥ अस्माभिर्निर्मितो देवो गणेशः कार्यसिद्धये ॥ ७४ ॥

१ यतः—इति शेषः ।

न नमंति गणेशं च दुर्गां चैव तथाविधाम् ॥ क्लेशभाजो भविष्यति नात्र कार्या विचारणा ॥७५॥ यूयं सर्वे त्वधर्मिष्ठाः स्तब्धाः पंडितमानिनः ॥ कार्याकार्यमविज्ञाय केवलं मानमोहिताः ॥ ७६ ॥ तस्मात्कालमखे सर्वे पतिता नात्र संशयः ॥ सर्वे श्रुतिपरा यूयमिंद्राद्या देवतागणाः ॥ ७७॥ प्ररोचनपराः सर्वे क्षुद्राश्चेंद्रादयो वृथा ॥ नात्मानं च प्रपंचेन वेत्सि त्वं हि शचीपते ॥ ७८ ॥ कृतः प्रयत्नो हि महानमृतार्थं त्वया शठ ॥ अश्वमेधशतेनैव यद्राज्यं प्राप्तवानसि ॥ अपि तच्च पराधीन तन्न जानासि दुर्मते ॥ ७९ ॥ यैर्वेदवाक्यैस्त्वं मूढ संस्तुतोऽसि तपस्विभिः ॥ ते मूढास्तो पयंति त्वां तत्तद्रागपरायणाः ॥ ८० ॥ विष्णो त्वं च पक्षपातान्न जानासि हिताहितम् ॥ केचिद्धतास्त्वया विष्णो रक्षिताश्चैव केचन ॥ ८१ ॥ इच्छायुक्तस्त्वमत्रैव सदा बालकचेष्टितः ॥ येऽन्ये च लोकपाः सर्वे तेषां वार्ता कुतस्त्विह ॥ ८२ ॥ अन्यथा हि कृते ह्यर्थे अन्यथात्वं भविष्यति ॥ कार्यसिद्धिर्भवेद्येन भवद्भिर्विस्मृतं च तत् ॥ ८३ ॥ येनाद्य रक्षिताः सर्वे कालकूटमहाभयात् ॥ येन नीलीकृतो विष्णुर्येन सर्वे पराजिताः ॥ ८४॥ लोका भस्मीकृता येन तस्माद्येनापि रक्षिताः ॥ तस्यार्चनाविधिः कार्यो गणेशस्य महात्मनः ॥ ८५ ॥ कर्मारंभे तु विघ्नेशं ये नार्चंति गणाधिपम् ॥ कार्यसिद्धिर्न तेषां वै भवेत्तु भवतां यथा ॥ ८६ ॥ एतन्महेशस्य वचो निशम्य सुरासुराः किंनरचारणाश्च ॥ पूजाविधानं परमार्थतोऽपि पप्रच्छुरेनं च तदा गिरीशम् ॥ ८७ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे समुद्रमंथनाख्याने शिवकृतविपभक्षणवृत्तान्तवर्णनंनाम दशमोऽध्यायः ॥ १० ॥ छ ॥ ॥ महेश्वर उवाच ॥ ॥ प्रतिपक्षे चतुर्थ्यां तु पूजनीयो गणाधिपः ॥ स्नात्वा शुक्लतिलैः शुद्धैः शुक्लपक्षे सदा नृभिः ॥ १ ॥ कृत्वा चावश्यकं सर्वं गणेशस्यार्चनक्रियाम् ॥ प्रयत्नेनैव कुर्वीत गंधमाल्याक्षतादिभिः ॥ २ ॥ ध्यानमादौ प्रकर्तव्यं गणेशस्य यथाविधि ॥ आगमा बहवो जाता गणेशस्य यथा मम ॥ ३ ॥ बहुधोपासका यस्मात्तमःसत्त्वरजोन्विताः ॥ गणभेदेन तान्येव नामानि बहुधाऽभवन् ॥ ४ ॥ पंचवक्त्रो गणाध्यक्षो दशबाहुस्त्रिलोचनः ॥ कांतस्फटिकसंकाशो नीलकंठो गजाननः ॥ ५ ॥ मुखानि तस्य पंचैव कथयामि यथातथम् ॥ ६ ॥ मध्यमं तु मुखं गौरं चतुर्दन्तं त्रिलोचनम् ॥ शुंडादंडमनोज्ञं च पुष्करे मोदकान्वितम् ॥ ७ ॥ तथान्यत्पीतवर्णं च नीलं च शुभलक्षणम् ॥ पिंगलं च तथा शुभ्रं गणेशस्य शुभाननम् ॥ ८ ॥ तथा दशभुजेष्वेव ह्यायुधानि ब्रवीमि वः ॥ पाशं परशुपद्मे च अंकुशं दंतमेव च ॥ ९ ॥ अक्षमालां लांगलं च मुसलं वरदं तथा ॥ पूर्णं च मोदकैः पात्रं पाणिना च विचिंतयेत् ॥ १० ॥ लंबोदरं विरूपाक्षं निवीतं मेखलान्वितम् ॥ योगासने चोपविष्टं चंद्रलेखां

कशेखरम् ॥ ११ ॥ ध्यानं च सात्त्विकं ज्ञेयं राजसं हि नृणामिव ॥ शुद्धचामीकराभासं गजाननमलौकिकम् ॥ १२ ॥ चतुर्भुजं त्रिनयनमेकदंतं महोदरम् ॥ पाशांकुशधरं देवं दंतमोदकपात्रकम् ॥ १३ ॥ नीलं च तामसं ध्यानमेवं त्रिविधमुच्यते ॥ ततः पूजा प्रकर्तव्या भवद्भिः शीघ्रमेव च ॥ १४ ॥ एकविंशतिदूर्वाभिर्द्वाभ्यां नाम्ना पृथक्पृथक् ॥ सर्वनामभिरेकैव दीयते गणनायके ॥ १५ ॥ तथैव नामभिर्देया एकविंशतिमोदकाः ॥ दशनामान्यहं वक्ष्ये पूजनार्थं पृथक्पृथक् ॥ १६ ॥ गणाधिप नमस्तेस्तु उमापुत्राघनाशन ॥ विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ॥ १७ ॥ एकदंतेभवक्रेति तथा मूषकवाहन ॥ कुमारगुरवे तुभ्यं पूजनीयः प्रयत्नतः ॥ १८ ॥ एवमुक्त्वा सुरान्सद्यः परिष्वज्य च सादरम् ॥ विष्णुं गुहाशयं सद्यो ब्रह्माणं च सदाशिवः ॥ १९ ॥ तिरोधान गतः सद्यः शंभुः परमशोभनः ॥ प्रणम्य शंभुं ते सर्वे गणाध्यक्षार्चने रताः ॥ २० ॥ ततः संपूज्य विधिवद्गणाध्यक्षार्चने रताः ॥ उपचारैरनेकैश्च दूर्वाभिश्च पृथक्पृथक् ॥ २१ ॥ संतुष्टो हि गणाध्यक्षो देवानां वरदोऽभवत् ॥ प्रदक्षिणं नमस्कृत्य तैः सर्वैरभितोषितः ॥ २२ ॥ तमोगुणान्विताः सर्वे ह्यसुरा नाभ्यपूजयन् ॥ उपहासपरास्ते वै देवान्प्रत्यसुरोत्तमाः ॥ २३ ॥ पूजयित्वा शांकरिं ते पुनः क्षीरार्णवं ययुः ॥ ब्रह्मा विष्णुश्च ऋषयो देवदैत्याः सुरोत्तमाः ॥ २४ ॥ मंथानं मंदरं कृत्वा रज्जुं कृत्वाथ वासुकिम् ॥ ममंथुश्च तदा देवा विष्णुं कृत्वाथ सन्निधौ ॥ २५ ॥ मथ्यमाने तदाब्धौ च निर्गतश्चंद्र अग्रतः ॥ पीयूषपूर्णः सर्वेषां देवानां कार्यसिद्धये ॥ २६ ॥ ॥ शौनक उवाच ॥ ॥ अर्णवे किं पुरा चंद्रो निक्षिप्तः केन सुव्रत ॥ गजादिकानि रत्नानि कथितानि त्वया पुरा ॥ २७ ॥ एतत्सर्वं समासेन आदौ कथय मे प्रभो ॥ ज्ञात्वा सर्वे वयं सूत पश्चादावर्णयामहे ॥ २८ ॥ तेषां तद्वचनं श्रुत्वा सूतो वाक्यमुपाददे ॥ २९ ॥ चंद्र आपोमयो विप्रा अत्रिपुत्रो गुणान्वितः ॥ उत्पन्नो ह्यनसूयायां ब्रह्मणोऽशात्समुद्भवः ॥ रुद्रस्यांशाद्धि दुर्वासा विष्णोरंशात्तु दत्तकः ॥ ३० ॥ क्षीराब्धिं मथ्यमानं तु दृष्ट्वा चंद्रो मुदान्वितः ॥ क्षीराब्धिरपि चंद्रं च दृष्ट्वा सोऽप्युत्सुकोऽभवत् ॥ ३१ ॥ प्रविष्टश्चोभयप्रीत्या शृण्वतां भो द्विजोत्तमाः॥ चंद्रो ह्यमृत पूर्णोभूदग्रतो देवसन्निधौ ॥३२॥ दृष्ट्वा च कांतिं त्वरितोऽथ चंद्रो नीराजितो देवगणैस्तदानीम् ॥ वादित्रघोषैस्तुमुलैरनेकैर्मृदंगशंखैः पटहैरनेकैः॥३३॥ नमश्चक्रुश्च ते सर्वे ससुरासुरदानवाः ॥ तदा गर्गं पृच्छमाना बलं चंद्रस्य तत्त्वतः ॥३४॥ गर्गेणोक्तास्तदा देवाः सर्वेषां बलमद्य वै ॥ केंद्रस्थानगताः सर्वे भवतामुत्तमा ग्रहाः ॥ ३५ ॥ चंद्रं गुरुः समायातो बुधश्चैव समागतः ॥ आदित्यश्च तथा शुक्रः शनिरंगारको महान् ॥ ३६ ॥ तस्माच्चंद्रबलं श्रेष्ठं भवतां कार्यसिद्धये ॥ गोमंतसंज्ञकोनाम मुहूर्तोऽयं जयप्रदः ॥ ३७ ॥ एवमाश्वासिता देवा गर्गेणैव महात्मना ॥ ममंथुरब्धिं त्वरिता गर्जमाना

महाबलाः ॥ ३८ ॥ द्विगुणं बलमापन्ना महात्मानो दृढव्रताः ॥ महेशं स्मरमाणास्ते गणेशं च पुनःपुनः ॥ ३९ ॥ निर्मथ्यमानादुदधेर्गर्जमानाच्च सर्वशः ॥ निर्गता सुरभिः साक्षाद्देवानां कार्यसिद्धये ॥ ४० ॥ तुष्टा कपिलवर्णा सा ऊधोभारेण भूयसा ॥ तरंगोपरि गच्छंती शनकैः शनकैस्ततः ॥ ४१ ॥ कामधेनुं समायांतीं दृष्ट्वा सर्वे सुरासुराः ॥ पुष्पवर्षेण महता ववर्षुरमितप्रभाम् ॥ ४२ ॥ तदा तूर्याण्यनेकानि नेदुर्वाद्यान्यनेकशः ॥ आनीता जलमध्याच्च संवृता गोशतैरपि ॥ ४३ ॥ तासु नीलाश्च कृष्णाश्च कपिलाश्च कपिंजलाः ॥ बभ्रवः श्यामका रक्ता जंबूवर्णाश्च पिंगलाः ॥ आभिर्युक्ता तदा गोभिः सुरभिः प्रत्यदृश्यत ॥ ४४ ॥ असुरासुरसंवीतां कामधेनुं ययाचिरे ॥ ऋषयो हर्षसंयुक्ता देवान्दैत्यांश्च तत्क्षणात् ॥ ४५ ॥ सर्वेभ्यश्चैव विप्रेभ्यो नानागोत्रेभ्य एव च ॥ सुरभीसहिता गावो दातव्या नात्र संशयः ॥ ४६ ॥ तैर्याचितास्तेऽत्र सुरासुराश्च ददुश्च ता गाः शिवतोषणाय ॥ तैः स्वीकृतास्ता ऋषिभिः सुमंगलैर्महात्मभिः पुण्यतमैः सुरभ्यः ॥ ४७ ॥ पुण्याहं मुनिभिः सर्वैः कारितास्ते तदा सुराः ॥ देवानां कार्यसिद्ध्यर्थमसुराणां क्षयाय च ॥ ४८ ॥ पुनः सर्वे सुसंरब्धा ममंथुः क्षीरसागरम् ॥ मथ्यमानात्तदा तस्मादुदधेश्च तथाऽभवत् ॥ ४९ ॥ कल्पवृक्षः पारिजातश्चूतः संतानकस्तथा ॥ तान्द्रुमानेकतः कृत्वा गन्धर्वनगरोपमान् ॥ ममंथुरुग्रं त्वरिताः पुनः क्षीरार्णवं बुधाः ॥ ५० ॥ निर्मथ्यमानादुदधेरभवत्सूर्यवर्चसम् ॥ रत्नानामुत्तमं रत्नं कौस्तुभाख्यं महाप्रभम् ॥ ५१ ॥ स्वकीयेन प्रकाशेन भासयंतं जगत्त्रयम् ॥ चिंतामणिं पुरस्कृत्य कौस्तुभं ददृशुर्हि ते ॥ ५२ ॥ सर्वे सुरा ददुस्तं वै कौस्तुभं विष्णवे तदा ॥ चिंतामणिं ततः कृत्वा मध्ये चैव सुरासुराः ॥ ममंथुः पुनरेवाब्धिं गर्जतस्ते बलोत्कटाः ॥ ५३ ॥ मथ्यमानात्ततस्तस्मादुच्चैःश्रवाः समद्भुतम् ॥ बभूव अश्वो रत्नानां पुनश्चैरावतो गजः ॥ ५४ ॥ तथैव गजरत्नं च चतुःषष्ट्या समन्वितम् ॥ गजानां पांडुराणां च चतुर्दन्तं मदान्वितम् ॥ ५५ ॥ तान्सर्वान्मध्यतः कृत्वा पुनश्चैव ममंथिरे ॥ निर्मथ्यमानादुदधेर्निर्गतानि बहून्यथ ॥ ५६ ॥ मदिरा विजया भृंगी तथा लशुनगृंजनाः ॥ अतीव उन्मादकरो धत्तूरः पुष्करस्तथा ॥ ५७ ॥ स्थापिता नैकपद्येन तीरे नदनदीपतेः ॥ पुनश्च ते तत्र महासुरेन्द्रा ममंथुरब्धिं सुरसत्तमैः सह ॥ ५८ ॥ निर्मथ्यमानादुदधेस्तदासीत्सा दिव्य लक्ष्मीर्भुवनैकनाथा ॥ आन्वीक्षिकीं ब्रह्मविदो वदंति तथा चान्ये मूलविद्यां गृणंति ॥ ५९ ॥ ब्रह्मविद्यां केचिदाहुः समर्थाः केचित्सिद्धिमृद्धिमाज्ञा मथाशाम् ॥ यां वैष्णवीं योगिनः केचिदाहुस्तथा च मायां मायिनो नित्ययुक्ताः ॥६०॥ वदंति सर्वे केनसिद्धांतयुक्तां[१] यां योगमायां ज्ञानशक्त्या

१ केनसिद्धान्तयुक्ताम्--केनोपनिषत्प्रतिपाद्योमाशब्दवाच्यब्रह्मविद्याम्--इत्यर्थः ।

न्विता ये ॥६१॥ ददृशुस्तां महालक्ष्मीमायांतीं शनकैस्तदा ॥ गौरां च युवतीं स्निग्धां पद्मकिंजल्कभूषणाम् ॥ ६२ ॥ सुस्मितां सुद्विजां श्यामां नव यौवनभूषणाम् ॥ विचित्रवस्त्राभरणरत्नानेकोद्यतप्रभाम् ॥ ६३ ॥ बिंबोष्ठीं सुनसां तन्वीं सुग्रीवां चारुलोचनाम् ॥ सुमध्यां चारुजघनां बृहत्कटितटां तथा ॥ ६४ ॥ नानारत्नप्रदीपैश्च नीराजितमुखांबुजाम् ॥ चारुप्रसन्नवदनां हारनूपुरशोभिताम् ॥ ६५ ॥ मूर्द्धनि ध्रियमाणेन च्छत्रेणापि विराजिताम् ॥ चामरैर्वीज्यमानां तां गंगाकल्लोललोहितैः ॥ ६६ ॥ पांडुरं गजमारूढां स्तूयमानां महर्षिभिः ॥ सुरद्रुमपुष्पमालां बिभ्रतीं मल्लिकायुताम् ॥ ॥ ६७ ॥ कराग्रे ध्रियमाणां तां दृष्ट्वा देवाः समुत्सुकाः ॥ आलोकनपरा यावत्तावत्तान्ददृशे ह्यसौ ॥ ६८ ॥ देवांश्च दानवांश्चैव सिद्धचारणपन्नगान् ॥ यथा माता स्वपुत्रांश्च महालक्ष्मीस्तथा सती ॥ ६९ ॥ आलोकितास्तथा देवास्तया लक्ष्म्या श्रियान्विताः ॥ सञ्जातास्तत्क्षणादेव राज्यलक्षणलक्षिताः ॥ दैत्यास्ते निःश्रिका जाता ये श्रियाऽनवलोकिताः ॥ ७० ॥ निरीक्ष्यमाणा च तदा मुकुन्दं तमालनीलं सुकपोलनासम् ॥ विभ्राजमानं वपुषा परेण श्रीवत्सलक्ष्मं सदयावलोकम् ॥ ७१ ॥ दृष्ट्वा तदैव सहसा वनमालयान्विता लक्ष्मीर्गजादवततार सुविस्मयंती ॥ कंठे ससर्ज पुरुषस्य परस्य विष्णोर्मालां श्रिया विरचितां भ्रमरैरुपेताम् ॥ ७२ ॥ वामांगमाश्रित्य तदा महात्मनः सोपाविशत्तत्र समीक्ष्य ता उभौ ॥ सुराः सदैत्या मुदमापुरद्भुतां सिद्धाप्सरःकिंनरचारणाश्च ॥ ७३ ॥ सर्वेषामेव लोकानामैकपद्येन सर्वशः ॥ हर्षो महानभूत्तत्र लक्ष्मीनारायणागमे ॥ ७४ ॥ लक्ष्म्या वृतो महाविष्णुर्लक्ष्मीस्तेनैव संवृता ॥ एवं परस्परं प्रीत्या ह्यवलोकनतत्परौ ॥ ७५ ॥ शंखाश्च पटहाश्चैव मृदंगानकगोमुखाः ॥ भेर्यश्च झर्झरीणां च स शब्दस्तुमुलोऽभवत् ॥ ७६ ॥ बभूव गायकानां च गायनं सुमहत्तदा ॥ ततानि विततान्येव घनानि सुषिराणि च ॥ ७७॥ एवं वाद्यप्रभेदैश्च विष्णुं सर्वात्मना हरिम् ॥ अतोषयन्सुगीतज्ञा गंधर्वाप्सरसां गणाः ॥ ७८ ॥ तथा जगुर्नारदतुंबुरादयो गंधर्वयक्षाः सुरसिद्धसंघाः ॥ संसेवमानाः परमात्मरूपं नारायणं देवमगाधबोधम् ॥ ७९ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे समुद्रमन्थनाख्याने लक्ष्मीप्रादुर्भाववर्णनंनामैकादशोऽध्यायः ॥ ११ ॥ ॥ लोमश उवाच ॥ ॥ प्रणम्य परमात्मानं रमायुक्तं जनार्दनम् ॥ अमृतार्थं ममंथुस्ते सुरासुरगणाः पुनः ॥१॥ उदधेर्मथ्यमानाच्च निर्गतः सुमहायशाः ॥ धन्वंतरिरिति ख्यातो युवा मृत्युञ्जयः परः ॥२॥ पाणिभ्यां पूर्णकलशं सुधायाः परिगृह्य वै ॥ यावत्सर्वे सुराः सर्वे निरीक्षंते मनोहरम् ॥ ३ ॥ तदा दैत्याः समं गत्वा हर्तुकामा बलादिव ॥ सुधया पूर्णकलशं धन्वंतरिकरे स्थितम् ॥ ४ ॥ यावत्तरंगमालाभिरावृतोऽभूद्विषक्तमः ॥ शनैःशनैः समायातो दृष्टोऽसौ वृषपर्वणा ॥ ५ ॥

करस्थः कलशस्तस्य हृतस्तेन बलादिव ॥ असुराश्च ततः सर्वे जगर्जुरतिभीषणम् ॥ ६ ॥ कलशं सुधया पूर्णं गृहीत्वा ते समुत्सुकाः ॥ दैत्याः पातालमाजग्मुस्तदा देवा भ्रमान्विताः ॥ ७ ॥ अनुजग्मुः सुसंनद्धा योद्धुकामाश्च तैः सह ॥ तदा देवान्समालोक्य बलिरेवमभाषत ॥ ८ ॥ ॥ ॥ बलिरुवाच ॥ ॥ वयं तु केवलं देवाः सुधया परितोषिताः ॥ शीघ्रमेव प्रगंतव्यं भवद्भिश्च सुरोत्तमैः ॥ ९ ॥ त्रिविष्टपं मुदा युक्तैः किमस्माभिः प्रयोजनम् ॥ पुरास्माभिः कृतं मैत्रं भवद्भिः स्वार्थतत्परैः ॥ अधुना विदितं तच्च नात्र कार्या विचारणा ॥ १० ॥ एवं निर्भर्त्सितास्तेन बलिना सुर सत्तमाः ॥ यथागतेन मार्गेण जग्मुर्नारायणं प्रभुम् ॥ ११ ॥ तं दृष्ट्वा विष्णुना सर्वे सुरा भग्नमनोरथाः ॥ आश्वासिता वचोभिश्च नानानुनयकोविदैः ॥ १२ ॥ मा त्रासं कुरुतात्रार्थं आनयिष्यामि तां सुधाम् ॥ एवमाभाष्य भगवान्मुकुन्दोऽनाथसंश्रयः ॥ १३ ॥ स्थापयित्वा सुरान्सर्वांस्तत्रैव मधुसूदनः ॥ मोहनीरूपमास्थाय दैत्यानामग्रतोऽभवत् ॥१४॥ तावद्दैत्याः सुसंरब्धाः परस्परमथाब्रुवन् ॥ विवादः सर्वदैत्यानाममृतार्थे तदाऽभवत् ॥ ॥१५॥ एवं प्रवर्तमाने तु मोहिनीरूपमाश्रिताम् ॥ दृष्ट्वा योषां तदा दैवात्सर्वभूतमनोरमाम् ॥ १६ ॥ विस्मयेन समाविष्टा बभूवुस्तृषितेक्षणाः ॥ तां संमान्य तदा दैत्यराजो बलिरुवाच ह ॥ १७ ॥ ॥ बलिरुवाच ॥ ॥ सुधा त्वया विभक्तव्या सर्वेषां गतिहेतवे ॥ शीघ्रत्वेन महाभागे कुरुष्व वचनं मम ॥ १८ ॥ एवमुक्ता ह्युवाचेदं स्मयमाना बलिं प्रति ॥ स्त्रीणां नैव च विश्वासः कर्तव्यो हि विपश्चिता ॥ १९ ॥ अनृतं साहसं माया मूर्खत्वमतिलोभता ॥ अशौचं निर्घृणत्वं च स्त्रीणां दोषाः स्वभावजाः ॥ २० ॥ निःस्नेहत्वं च विज्ञेयं धूर्तत्वं चैव तत्त्वतः ॥ स्वस्त्रीणां चैव विज्ञेया दोषा नास्त्यत्र संशयः ॥ २१ ॥ यथैव श्वापदानां च वृका हिंसापरायणाः ॥ काका यथांडजानां च श्वापदानां च जंबुकाः ॥ धूर्ता तथा मनुष्याणां स्त्री ज्ञेया सततं बुधैः ॥ २२ ॥ मया सह भवद्भिश्च कथं सख्यं प्रवर्तते ॥ सर्वथात्र न विज्ञेयाः के यूयं चैव का ह्यहम् ॥ २३ ॥ तस्माद्भवद्भिः संचिंत्य कार्याकार्यविचक्षणैः ॥ कर्तव्यं परया बुद्ध्या प्रयातासुरसत्तमाः ॥ २४ ॥ ॥ बलिरुवाच ॥ ॥ यास्त्वया कथिता नार्यो ग्राम्या ग्राम्यजनप्रियाः ॥ तासां त्वं कथ्यमानानां मध्यगा नासि शोभने ॥ २५ ॥ किं त्वया बहुनोक्तेन कुरुष्व वचनं हि नः ॥ सा मोहिनीदं प्रोवाच बलेर्वाक्यादनंतरम् ॥ २६ ॥ करिष्यामि च ते वाक्यं सूक्तासूक्तमिति प्रभो ॥ २७ ॥ ॥ बलिरुवाच ॥ ॥ अद्यामृतं च सर्वेषां विभजस्व यथातथम् ॥ त्वया दत्तं च गृह्णीमः सत्यंसत्यं वदामि ते ॥ २८ ॥ एवमुक्ता तदा देवी मोहिनी सर्वमंगला ॥ उवाचाथासुरान्सर्वांल्लोचयल्लौकिकीं स्थितिम् ॥ २९ ॥ ॥ भगवानुवाच ॥ ॥ यूयं सर्वे कृतार्थाश्च जाता दैवेन केनचित् ॥ अद्योपवाससंयुक्ता अमृतस्याधिवासनम् ॥ ३० ॥ क्रियताम्

सुराः श्रेष्ठाः शुभेच्छा किंचिदस्ति वः ॥ श्वोभूते पारणं कुर्याद्व्रतार्चनरतिश्च वः ॥ ३१ ॥ न्यायोपार्जितवित्तेन दशमांशेन धीमता ॥ कर्तव्यो विनियोगश्च ईशप्रीत्यर्थहेतवे ॥ ३२ ॥ तथेति मत्वा ते सर्वे यथोक्तं देवमायया ॥ चक्रुस्तथैव दैतेया मोहिता नातिकोविदाः ॥ ३३ ॥ मयासुरेण च तदा भवनानि कृतानि वै ॥ मनोज्ञानि महार्हाणि सुप्रभाणि महांति च ॥ ३४ ॥ तेषूपविष्टास्ते सर्वे सुस्नाताः समलंकृताः ॥ स्थापयित्वा सुसंरब्धाः पूर्णं कलशमग्रतः ॥ ३५ ॥ रात्रौ जागरणं सर्वैः कृतं परमया मुदा ॥ अथोषसि प्रवृत्ते च प्रातःस्नानयुता भवन् ॥ ३६ ॥ असुरा बलिमुख्याश्च पंक्तिभूता यथाक्रमम् ॥ सर्वमावश्यकं कृत्वा तदा पानरता भवन् ॥ ३७ ॥ बलिश्च वृष पर्वा च नमुचिः शंख एव च ॥ सुदंष्ट्रश्चैव संह्लादी कालनेमिर्विभीषणः ॥ ३८ ॥ वातापिरिल्वलः कुम्भो निकुम्भः प्रच्छदस्तथा ॥ तथा सुन्दोपसुन्दौ च निशुम्भः शुम्भ एव च ॥ ३९ ॥ महिषो महिषाक्षश्च बिडालाक्षः प्रतापवान् ॥ चिक्षुराख्यो महाबाहुर्जंभणोऽथ वृषासुरः ॥ ४० ॥ विबाहुर्बाहुको घोरस्तथा वै घोरदर्शनः ॥ एते चान्ये च बहवो दैत्यदानवराक्षसाः ॥ यथाक्रमं चोपविष्टा राहुः केतुस्तथैव च ॥ ४१ ॥ तेषां तु कोटिसंख्यानां दैत्यानां पंक्तिरास्थिता ॥ ४२ ॥ ततस्तया तदा देव्या अमृतार्थं हि वै द्विजाः ॥ यज्जातं तच्छृणुध्वं हि तया देव्या कृतं महत् ॥४३॥ सर्वे विज्ञापिताः सद्यो गृहीतकलशा तदा ॥ शोभया परया युक्ता साक्षात्सा विष्णुमोहिनी ॥ ४४ ॥ करस्थेन तदा देवी कलशेन विराजिता ॥ शुशुभे परया कांत्या जगन्मंगलमंगला ॥४५॥ परिवेषधराः सर्वे सुरास्ते ह्यसुरांतिकम् ॥ आगतास्तत्क्षणादेव यत्र ते ह्यसुरोत्तमाः ॥ ४६ ॥ तान्दृष्ट्वा मोहिनी सद्य उवाच प्रमदोत्तमा ॥ ४७ ॥ ॥ मोहिन्युवाच ॥ ॥ एते ह्यतिथयो ज्ञेया धर्म्मसर्वस्वसाधनाः ॥ एभ्यो देयं यथाशक्त्या यदि सत्यं वचो मम ॥ प्रमाणं भवतां चाद्य कुरुध्वं मा विलंबथ ॥ ४८ ॥ परेषामुपकारं च ये कुर्वंति स्वशक्तितः ॥ धन्यास्ते चैव विज्ञेयाः पवित्रा लोकपालकाः ॥ ४९ ॥ केवलात्मोदरार्थाय उद्योगं ये प्रकुर्वते ॥ ते क्लेशभागिनो ज्ञेया नात्र कार्या विचारणा ॥ ॥ ५० ॥ तस्माद्विभजनं कार्यं मयैतस्य शुभव्रताः ॥ देवेभ्यश्च प्रयच्छध्वं यद्धि चात्मप्रियाप्रियम् ॥ ५१ ॥ इत्युक्ते वचने देव्या तथा चक्रुरतं द्रिताः ॥ आह्वयामासुरसुराः सर्वान्देवान्सवासवान् ॥ ५२ ॥ उपविष्टाश्च ते सर्वे अमृतार्थं च भो द्विजाः ॥ तेषूपविश्यमानेषु ह्युवाच परमं वचः ॥ मोहिनी सर्वधर्म्मज्ञा असुराणां स्मयन्निव ॥ ५३ ॥ ॥ मोहिन्युवाच ॥ ॥ आदौ ह्यभ्यागताः पूज्या इति वै वैदिकी श्रुतिः ॥ ५४ ॥ तस्माद्यूयं वेदपराः सर्वे देवपरायणाः ॥ ब्रुवंतु त्वरितेनैव आदौ केषां ददाम्यहम् ॥ अमृतं हि महाभागा बलिमुख्या वदंतु भोः ॥ ५५ ॥ बलिनोक्ता तदा देवी

यत्ते मनसि रोचते ॥ स्वामिनी त्वं न संदेहो ह्यस्माकं सुंदरानने ॥ ५६ ॥ एवं संमानिता तेन बलिना भावितात्मना ॥ परिवेपणकार्यार्थं कलशं गृह्य सत्वरा ॥ ५७ ॥ तस्मान्नरेन्द्रकरभोरुलसद्दुकूला श्रोणीतटालसगतिर्मदविह्वलांगी ॥ सा कूजती कनकनूपुरसिंजितेन कुंभस्तनी कलशपाणिरथाविवेश ॥ ५८ ॥ तदा तु देवी परिवेपयंती सा मोहिनी देवगणाय साक्षात् ॥ ववर्ष देवेषु सुधारसं पुनःपुनः सुधाहाररसामृतं यथा ॥ ५९ ॥ पुनश्च ते देवगणाः सुधारसं दत्तं तया परया विश्वमूर्त्या ॥ देवेंद्रमुख्याः सह लोकपाला गंधर्वयक्षाप्सरसां गणाश्च ॥ ६० ॥ सर्वे दैत्या आसनस्थास्तदानीं चिंतान्विताः क्षुधया पीडिताश्च ॥ तूष्णींभूता वलिमुख्या द्विजेंद्रा मनस्विनो ध्यानपरा बभूवुः ॥ ६१ ॥ ततस्तथाविधान्दृष्ट्वा दैत्यांस्तान्मोहमाश्रितान् ॥ तदा राहुश्च केतुश्च द्वावेतौ दैत्यपुंगवौ ॥ ६२ ॥ देवानां रूपमास्थाय अमृतार्थं त्वरान्वितौ ॥ उपविष्टौ तदा पङ्क्त्यां देवानाममृतार्थिनौ ॥ ६३ ॥ यदामृतं पातुकामो राहुः परमदुर्जयः ॥ चन्द्रार्काभ्यां प्रकथितो विष्णोरमिततेजसः ॥ ६४ ॥ तदा तस्य शिरश्छिन्नं राहोर्दुर्विग्रहस्य च ॥ शिरो गगनमापेदे कबंधं च महीतले ॥ भ्रममाणं तदा ह्यद्रींश्चूर्णयामास वै तदा ॥ ६५ ॥ साद्रिश्च सर्वभूलोकश्चूर्णितश्च तदाऽभवत् ॥ तया तेन च देहेन चूर्णितं सचराचरम् ॥ ६६ ॥ दृष्ट्वा तदा महादेवस्तस्योपरि तु संस्थितः ॥ निवासः सर्वदेवानां तस्याः पादतलेऽभवत् ॥ ६७ ॥ पीडनं तत्समीपेथ निवास इति नाम वै ॥ ६८ ॥ महतामालयं यस्माद्यस्यास्तच्चरणांबुजम् ॥ महालयेति विख्याता जगत्त्रयविमोहिनी ॥ ६९ ॥ केतुश्च धूमरूपोऽसावाकाशे विलयं गतः ॥ सुधां समर्प्य चंद्राय तिरोधानगतोऽभवत् ॥ ७० ॥ वासुदेवो जगद्योनिर्जगतां कारणं परम् ॥ विष्णोः प्रसादात्तज्जातं सुराणां कार्यसिद्धिदम् ॥ ७१ ॥ असुराणां विनाशाय जातं दैवविपर्ययात् ॥ विना दैवेन जानीध्वमुद्यमो हि निरर्थकः ॥ ७२ ॥ यौगपद्येन तैः सर्वैः क्षीराब्धेर्मंथनं कृतम् ॥ सिद्धिर्जाता हि देवानामसिद्धिरसुरान्प्रति ॥ ७३ ॥ ततश्च ते देववरान्प्रकोपिता दैत्याश्च मायाप्रविमोहिताः पुनः ॥ अनेकशस्त्रास्त्रयुतास्तदाऽभवन्विष्णौ गते गर्जमानास्तदानीम् ॥ ७४ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे समुद्रमंथनाख्याने देवानाममृतप्राशनवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ ततस्ते गर्जमानाश्च आक्षिपंतः सुरान्रणे ॥ शतक्रतुप्रमुख्यांस्तान्महाबलपराक्रमान् ॥ १ ॥ विमानमारुह्य तदा महात्मा वैरोचनिः सर्वबलेन सार्द्धम् ॥ दैत्यैः समेतो विविधैर्महाबलैः सुरान्प्रदुद्राव महाभयावहम् ॥ २ ॥ स्वानि रूपाणि बिभ्रंतः समापेतुः स

१-तया-मोहिन्या-इत्यर्थः । २ आर्षोऽत्र नुम्-बिभ्रतः-इत्यपेक्षितम् ।

हस्रशः ॥ केचिद्व्याघ्रान्समारूढा महिषांश्च तथा परे ॥ ३ ॥ अश्वान्केचित्समारूढा द्विपान्केचित्तथा परे ॥ सिंहांस्तथा परे रूढाः शार्दूलाञ्छरभां स्तथा ॥ ४ ॥ मयूरान्राजहंसांश्च कुक्कुटांश्च तथा परे ॥ केचिद्धयान्समारूढा उष्ट्रानश्वतरानपि ॥ ५ ॥ गजान्खरान्परे चैव शकटांश्च तथा परे ॥ पादाता बहवो दैत्याः खड्गशक्त्यृष्टिपाणयः ॥६॥ परिघायुधिनः पाशशूलमुद्गरपाणयः ॥ असिलोमान्विताः केचिद्भुशुंडीपरिघायुधाः ॥ ७ ॥ हयनागरथाश्वान्ये समारूढाः प्रहारिणः ॥ विमानानि समारूढा बलिमुख्याः सहस्रशः ॥ ८ ॥ स्पर्द्धमानास्तथान्योन्यं गर्जंतश्च मुहुर्मुहुः ॥ वृषपर्वा ह्युवाचेदं बलिनं दैत्यपुंगवम् ॥ ९ ॥ त्वया कृतं महाबाहो इंद्रेण सह संगमम् ॥ विश्वासो नैव कर्तव्यो दुर्हृदा च कथंचन ॥ १० ॥ ऊनेनापि हि तुच्छेन वैरिणापि कथंचन ॥ मैत्री बुद्धिमता कार्या आपद्यपि निवर्तते ॥११॥ न विश्वसेत्पूर्वविरोधिना क्वचित्पराजिताः स्मोऽथ बले त्वयाधुना ॥ पुराणदुष्टाः कथमद्य वै पुनर्मंत्रं विकर्तुं न च ते यतेरन् ॥ १२ ॥ इत्यूचुस्ते दुराधर्षा योद्धुकामा व्यवस्थिताः ॥ ध्वजैश्छत्रैः पताकैश्च रणभूमिम मंडयन् ॥ १३ ॥ चामरैश्च दिशः सर्वा लोपितं च रणस्थलम् ॥ तथा सर्वे सुरास्तत्र दैत्यान्प्रति समुत्सुकाः ॥१४॥ पीत्वामृतं महाभागा वाहान्यारुह्य दंशिताः ॥ गजारूढो महेंद्रोपि वज्रपाणिः प्रतापवान् ॥ सूर्यश्चोच्चैःश्रवारूढो मृगा रूढश्च चन्द्रमाः॥१५॥छत्रचामरसंवीताः शोभिता विजयश्रिया ॥ प्रणम्य विष्णुं ते सर्व इंद्राद्या जयकांक्षिणः ॥ १६ ॥ ते विष्णुना ह्यनुज्ञाता असुरान्प्रति वै रुषा ॥ असुराश्च महाकाया भीमाक्षा भीमविक्रमाः ॥ ॥ १७ ॥ तेषां घोरमभूद्युद्धं देवानां दानवैः सह ॥ तुमुलं च महाघोरं सर्वभूतभयावहम् ॥ १८ ॥ शरधारान्वितं सर्वं बभूव परमाद्भुतम् ॥ ततश्च टचटाशब्दा बभूवुश्च दिशोदश ॥ १९ ॥ ततो निमिषमात्रेण शरघातयुता भंवन्[1] ॥ शरतोमरनाराचैराहताश्चापतन्भुवि ॥ २० ॥ विध्यमानास्तथा केचिद्विविधुश्चापराञ्रणे ॥ भल्लैर्भग्नाश्च पतिता नाराचैः शकलीकृताः ॥ २१ ॥ क्षुरप्रहारिताः केचिद्दैत्या दानवराक्षसाः ॥ शिलीमुखैर्मारिताश्च भग्नाः केचिच्च दानवाः ॥ २२ ॥ एवं भग्नं दानवानां च सैन्यं दृष्ट्वा देवा गर्जमानाः समंतात् ॥ हृष्टाः सर्वे संमिलित्वा तदानीं लब्ध्वा युद्धे ते जयं श्लावयन्ते ॥ २३ ॥ शंखवादित्रघोषेण पूरितं च जगत्रयम् ॥ देवान्प्रति कृतामर्षा दानवास्ते महाबलाः ॥ २४ ॥ बलिप्रभृतयः सर्वे संभ्रमेणोत्थिताः पुनः ॥विमानैः सूर्यसंकाशैरनेकैश्च समन्विताः ॥ २५ ॥ द्वंद्वयुद्धं सुतुमुलं देवानां दानवैः सह ॥ संप्रवृत्तं पुनश्चैव परस्परजिगीषया ॥ २६ ॥ बलिना दानवेंद्रेण महेंद्रो युयुधे तदा॥तथा यमो महाबाहुर्नमुच्या सह संगतः ॥२७॥ नैर्ऋतः प्रघसेनैव पाशी कुंभेन संगतः॥ निकुंभेनैव सुमहद्युद्धं

१ भवन्–अभवन्–अडभाव आर्पः ।

चक्रे सदारयः ॥ २८ ॥ सोमेन सह राहुश्च युद्धं चक्रे सुदारुणम् ॥ राहुणा चन्द्रदेहोत्थममृतं भक्षितं तदा ॥ संपर्कादमृतस्यैव यथा राहुस्तथाऽभवत् ॥
॥ २९ ॥ तानि सर्वाणि दृष्टानि शंभुना परमेष्ठिना ॥ आश्रयोऽहं च सर्वेपां भूतानां नात्र संशयः ॥ असुराणां सुराणां च सर्वेपामपि वल्लभः
॥ ३० ॥ एवमुक्तस्तदा राहुः प्रणम्य शिरसा शिवम् ॥ मौलौ स्थितस्तदा चंद्रो अमृतं व्यसृजद्भयात् ॥ ३१ ॥ तेन तस्य हि जातानि
शिरांसि सुबहून्यपि ॥ ऐकपद्येन तेपां च स्रजं कृत्वा मनोहराम् ॥ बबंध शंभुः शिरसि शिरोभूपणवत्कृतम् ॥ ३२ ॥ अशनात्कालकूटस्य
नीलकंठोऽभवत्तदा ॥ देवानां कार्यसिद्ध्यर्थं मुंडमाला तथा कृता ॥ ३३ ॥ दधार शिरसा तां च मुण्डमालां महेश्वरः ॥३४॥ तया स्रजाऽसौ शुशुभे
महात्मा देवादिदेवस्त्रिपुरांतको हरः ॥ गजासुरो येन निपातितो महानथांधको येन कृतश्च चूर्णः ॥ ३५ ॥ गंगा धृता येन शिरस्सुमध्ये चंद्रं च चूडे
कृतवान्भयापहः ॥ वेदाः पुराणानि तथागमाश्च तथैव नानाश्रुतयोऽथ शास्त्रम् ॥ ३६ ॥ जल्पंति नानागमभेदभेदैर्मीमांसमानाश्च भवंति मूकाः ॥
नानागमाचार्यमतप्रभेदैर्निरूप्यमाणो जगदेकबंधुः ॥ ३७ ॥ शिवं हि नित्यं परमात्मदेवं वेदैकवेद्यं परमात्मदिव्यम् ॥ विहाय तं मूढजनाः प्रमत्ताः
शिवं न जानंति परात्मरूपम् ॥ ३८ ॥ येनैव सृष्टं विधृतं च येन येन श्रितं येन कृतं समग्रम् ॥ यस्यांशभूतं हि जगत्कदाचिद्वेदांतवेद्यः
परमात्मा शिवश्च ॥ ३९ ॥ आढ्यो वापि दरिद्रो वा उत्तमो ह्यधमोऽपि वा ॥ शिवभक्तिरतो नित्यं शिव एव न संशयः ॥ ४० ॥ यो वा परकृतां
पूजां शिवस्योपरि शोभिताम् ॥ दृष्ट्वा संतोपमायाति दायं प्राप्नोति तत्समम् ॥ ४१ ॥ ये दीपमालां कुर्वंति कार्तिक्यां श्रद्धयान्विताः ॥
यावत्कालं प्रज्वलंति दीपास्ते लिंगमग्रतः ॥ तावद्युगसहस्राणि दाता स्वर्गे महीयते ॥ ४२ ॥ कौसुंभतैलसंयुक्ता दीपा दत्ताः शिवालये ॥ दाता
रस्तेऽपि कैलासे मोदन्ते शिवसंनिधौ ॥ ४३ ॥ अतसीतैलसंयुक्ता दीपा दत्ताः शिवालये ॥ दातारस्तेऽपि कैलासे मोदन्ते शिवसंनिधौ ॥ ४४ ॥
ज्ञानिनोऽपि हि जायंते दीपदानफलेन हि ॥ ४५ ॥ तिलतैलेन संयुक्ता दीपा दत्ताः शिवालये ॥ ते शिवं यांति संयुक्ताः कुलानां च शतेन वै
॥ ४६ ॥ घृताक्ता यैः कृता दीपा दीपिताश्च शिवालये ॥ ते यांति परमं स्थानं कुललक्षसमन्विताः ॥ ४७ ॥ कर्पूरागुरुधूपैश्च ये यजंति सदा
शिवम् ॥ आरार्तिकां सकर्पूरां ये कुर्वंति दिनेदिने ॥ ते प्राप्नुवंति सायुज्यं नात्र कार्या विचारणा ॥ ४८ ॥ एककालं द्विकालं वा त्रिकालं
ये ह्यतंद्रिताः ॥ लिंगार्चनं प्रकुर्वंति ते रुद्रा नात्र संशयः ॥४९॥ रुद्राक्षधारणं ये च कुर्वंति शिवपूजने ॥ दाने तपसि तीर्थे च पर्वकाले ह्यतंद्रिताः ॥
तेपां यत्सुकृतं सर्वमनंतं भवति द्विजाः ॥ ५० ॥ रुद्राक्षा ये शिवेनोक्तास्ताञ्छृणुध्वं द्विजोत्तमाः ॥ आरभ्यैकमुखं तावद्यावद्वक्त्राणि षोडश ॥ एतेपां

द्रौ च विज्ञेयौ श्रेष्ठौ तारयितुं द्विजाः ॥ ५१ ॥ रुद्राक्षाणां पंचमुखस्तथा चैकमुखः स्मृतः ॥ ये धारयंत्येकमुखं रुद्राक्षमनिशं नराः ॥ रुद्रलोकं च गच्छंति मोदन्ते रुद्रसंनिधौ ॥५२॥ जपस्तपः क्रिया योगः स्नानं दानार्चनादिकम् ॥ क्रियते यच्छुभं कर्म्म ह्यनंतं चाक्षधारणात् ॥५३॥ शुनः कंठनिबद्धोऽपि रुद्राक्षो यदि वर्तते ॥ सोऽपि संतारितस्तेन नात्र कार्या विचारणा ॥ ५४ ॥ तथा रुद्राक्षसंबंधात्पापमपि क्षयं व्रजेत् ॥ एवं ज्ञात्वा शुभं कर्म कार्यं रुद्राक्षबंधनात् ॥ ५५ ॥ त्रिपुण्ड्रधारणं येषां विभूत्या मन्त्रपूतया ॥ ते रुद्रलोके रुद्राश्च भविष्यंति न संशयः ॥ ५६ ॥ कपिलायाश्च संगृह्य गोमयं चांतरिक्षगम् ॥ शुष्कं कृत्वाथ संदाह्य विभूत्यर्थं शिवप्रियैः ॥५७॥ विभूतीति समाख्याता सर्वपापप्रणाशिनी ॥ ललाटेंऽगुष्ठरेखा च आदौ भाव्या प्रयत्नतः ॥ ५८ ॥ मध्यमां वर्जयित्वा तु अंगुलीकद्वयेन च ॥ एवं त्रिरेखासंयुक्तो ललाटे यस्य दृश्यते ॥ स शैवः शिववज्ज्ञेयो दर्शनात्पापनाशनः ॥ ५९ ॥ जटाधराश्च ये शैवाः सप्त पंच तथा नव ॥ जटा ये स्थापयिष्यंति शैवेन विधिना युताः ॥ ६० ॥ ते शिवं प्राप्नुवंतीह नात्र कार्या विचारणा ॥ रुद्राक्षधारणं कार्यं शिवभक्तैर्विशेषतः ॥ ६१ ॥ अल्पेन वा महत्त्वेन पूजितो वा सदाशिवः ॥ कुलकोटिं समुद्धृत्य शिवेन सह मोदते ॥ ६२ ॥ तस्माच्छिवात्परतरं नास्ति किंचिद्द्विजोत्तमाः ॥ यदेवमुच्यते शास्त्रे तत्सर्वं शिवकारणम् ॥ ६३ ॥ शिवो दाता हि लोकानां कर्ता चैवानुमोदिता ॥ शिवशक्त्यात्मकं विश्वं जानीध्वं हि द्विजोत्तमाः ॥ ६४ ॥ शिवेति द्व्यक्षरं नाम त्रायते महतो भयात् ॥ तस्माच्छिवाश्चित्यतां वै स्मर्यतां च द्विजोत्तमाः ॥ ६५ ॥ ॥ ऋषय ऊचुः ॥ ॥ सोमनाथस्य माहात्म्यं ज्ञातं तस्य प्रसादतः ॥ राहोः शिरोभयात्सर्वे रक्षिताः परमेष्ठिना ॥ ६६ ॥ सुराश्चेंद्रादयश्चान्ये तस्मिन्युद्धे सुदारुणे ॥ अत ऊर्ध्वं सुराः सर्वे किमकुर्वत उच्यताम् ॥ ६७ ॥ शिवस्य महिमा सर्वः श्रुतस्तव मुखोद्गतः ॥ अथ युद्धस्य वृत्तान्तः कथ्यतां परमार्थतः ॥ ६८ ॥ ॥ लोमश उवाच ॥ ॥ यदा हि दैत्यैश्च पराजिताः सुराः शम्भुं च सर्वे शरणं प्रपन्नाः ॥ शिवं प्रणेमुः सहसा सुरोत्तमा युद्धाय सर्वे च मनो दधुस्तदा ॥ ६९ ॥ तथैव दैत्या अपि युध्यमाना उत्साहयुक्तातिबलाश्च सर्वे ॥ देवैः समेताश्च पुनः पुनश्च युद्धं प्रचक्रुः परमास्त्रयुक्ताः ॥७०॥ एवं च सर्वे ह्यसुराः सुराश्च शक्त्यृष्टिशूलैः परिघैः परश्वधैः ॥ जया[illegible]युताः परस्परं सिंहा यथा हैमवतीं दुरत्ययाः ॥ निहन्यमाना ह्यसुराः सुरैस्तदा नानास्त्रयोगैः पर[illegible]तुः ॥ ७१ ॥ च[illegible]स्ते सकलां[illegible] मांसशोणितकर्दमाम् ॥ महीं वृक्षाद्रिसंयुक्तां ससागरवनाकराम् ॥ ७२ ॥ शिरांसि च कबन्धानि [illegible]वानि महांति च ॥ ध्वजा रथाः पताकाश्च गजवाजिशिरांसि च ॥ ७३ ॥ वहन्त्यश्चापगा ह्यासन्नद्यो भीरुभयावहाः ॥ अगाधाः शोणितोदाश्च तरंतो ब्रह्मराक्षसाः ॥ त

यंति परान्भूतप्रेतप्रमथराक्षसान् ॥ ७४ ॥ शाकिनीडाकिनीसंघा यक्षिण्योऽथ सहस्रशः ॥ नानाकेलिषु संयुक्ताः परस्परमुदान्विताः ॥ ७५ ॥
एवं संक्रीडमानास्ते भूतप्रमथराक्षसाः ॥ रणे तस्मिन्महारौद्रे देवासुरसमागमे ॥ ७६ ॥ बलिना सह देवेन्द्रो युयुधेऽद्भुतविक्रमः ॥ शक्त्या जघान
देवेंद्रं वैरोचनिरमर्षणः ॥ ७७ ॥ तां शक्तिं वञ्चयामास महेन्द्रो लघुविक्रमः ॥ जघान स बलिं यत्नाद्दैत्येंद्रं परमेण हि ॥ ७८ ॥ वज्रेण शितधारेण
बाहुं चिच्छेद विक्रमी ॥ गतासुरपतद्भूमौ विमानात्सूर्यसंनिभात् ॥ ७९ ॥ पतितं च बलिं दृष्ट्वा वृषपर्वा रुषान्वितः ॥ ववर्ष शरधा
राभिः पयोद इव पर्वतम् ॥ ८० ॥ महेंद्रं सगजं चैव सहमानं शिताञ्छरान् ॥ तदा युद्धमभूद्घोरं महेन्द्रवृषपर्वणोः ॥ ८१ ॥
निपात्य वृषपर्वाणमिंद्रः परबलार्दनः ॥ ८२ ॥ ततो वज्रेण महता दानवानवधीद्रणे ॥ शिरसि च्छेदिताः केचित्केचित्कंधरतो हताः ॥ ८३ ॥
विह्वलाश्च कृताः केचिदिंद्रेण कुपितेन च ॥ तथा यमेन निहता वायुना वरुणेन च ॥ ८४ ॥ कुबेरेण हताश्चान्ये नैर्ऋतेन तथा परे ॥ अग्निना
निहताः केचिदीशेनैव विदारिताः ॥ ८५ ॥ एवं तदा तैर्निहता बलीयसो महासुरा विक्रमशालिनश्च ॥ सुरैस्तु सर्वैः सह लोकपालैः शिवप्रसादा
भिहतास्तदानीम् ॥८६॥ ततो महादैत्यवरो दुरात्मा स कालनेमिः परमास्त्रयुक्तः ॥ ययौ तदानीं सुरसत्तमांस्तान्हंतुं सदा क्रूरमतिः स एकः ॥८७॥
सिंहारूढो दंशितश्च त्रिशूलेन हि संयुतः ॥ दैत्यानामर्बुदेनैव सिंहारूढेन संवृतः ॥ ८८ ॥ ते सिंहा दंशिताः सर्वे महाबलपराक्रमाः ॥ तेषु
सिंहेषु चारूढा महादैत्याश्च तत्समाः ॥ ८९ ॥ आयांतीं दैत्यसेनां तां सर्वां सिंहविभूषिताम् ॥ कालनेमियुतां दृष्ट्वा देवा इंद्रपुरोगमाः ॥ भयमाज
ग्मुरतुलं तदा ध्यानपरा भवन्[1] ॥ ९० ॥ किं कुर्मोऽद्य वयं सर्वे कथं जेष्याम चाद्भुतम् ॥ एतादृशमसंख्याकमनीकं सिंहसंवृतम् ॥ ९१ ॥ एवं
विचिंत्यमानास्ते ह्यागतस्तत्र नारदः ॥ नारदेन च तत्सर्वं पुरावृत्तं महत्तरम् ॥ ९२ ॥ कथितं च महेंद्राय कालनेमेस्तपोबलम् ॥ अजेयत्वं च
संग्रामे वरदानबलेन तु ॥ ९३ ॥ विष्णुं विना वयं देवा अशक्ता रणमंडले ॥ जेतुं च स ततो विष्णुः स्मर्यतां परमेश्वरः ॥ तमालनीलो वरदः सर्वै
र्विजयकांक्षिभिः ॥९४॥ नारदस्य वचः श्रुत्वा तदा देवास्त्वरान्विताः॥ध्यानेन च महाविष्णुं ततः परबलार्दनम् ॥ स्मरंतः परमात्मानमिदमूचुश्च तं
विभुम् ॥ ९५ ॥ ॥ देवा ऊचुः ॥ ॥ नमस्तुभ्यं भगवते नमस्ते विश्वमंगलम् ॥ श्रीनिवास नमस्तुभ्यं श्रीपते ते नमोनमः ॥९६॥ अद्यास्मान्भयभी
तांस्त्वं कालनेमिभयार्दितान् ॥ त्रातुमर्हसि दैत्याच्च देवानामभयप्रद ॥९७॥ एवं ध्यातः संस्मृतश्च प्रादुर्भूतो हरिस्तदा ॥ नीलो गरुडमारुह्य जगता

१ अडभाव आर्षः—अभवन् ।

मभयप्रदः ॥ ९८ ॥ चक्रपाणिस्तदायातो देवानां विजयाय च ॥ गगनस्थं महाविष्णुं गरुडोपरि संस्थितम् ॥ श्रीवासमेनं दुर्द्धर्षं योद्धुकामं दद
र्शिरे ॥ ९९ ॥ तथा दृष्ट्वा कालनेमिस्तदानीं प्रहस्यमानोऽतिरुषा बलान्वितः ॥ कस्त्वं महाभाग वरेण्यरूपः श्यामो युवा वारणमत्तविक्रमः ॥ करे
गृहीतं निशितं महाप्रभं चक्रं च कस्मात्कथयस्व मे प्रभो ॥ १०० ॥ ॥ श्रीभगवानुवाच ॥ ॥ युद्धार्थमिह चायातो देवानां कार्यसिद्धये ॥
त्वं स्थिरो भव रे मंद दहाम्यद्य न संशयः ॥ १०१ ॥ श्रुत्वा भगवतो वाक्यं कालनेमिः प्रतापवान् ॥ उवाच रुषितो भूत्वा भगवंतमधोक्षजम् ॥
॥ १०२ ॥ मूलभूतो हि देवानां भगवान्युद्धदुर्मदः ॥ युद्धं कुरु मया सार्द्धं यदि शूरोऽसि संप्रति ॥ १०३ ॥ प्रहस्य भगवान्विष्णुरुवाचेदं महाप्रभः ॥
गगनस्थो भव त्वं हि महीस्थोऽहं भवामि वै ॥ १०४ ॥ अप्रशस्तं च विषमं युद्धं चैव यथा भवेत् ॥ तथा कुरु महाबाहो गगने वा महीतले ॥
॥ १०५ ॥ तथेति मत्वा हि महानुभावो दैत्यैः समेतोऽर्बुदसंख्यकैश्च ॥ सिंहोपरिस्थैश्च महानुभावैर्महाबलैः क्रूरतरैस्तदानीम् ॥ १०६ ॥ गगनमथ
जगाहे मंदमंदं महात्मा ह्यसुरगणसमेतो विश्वरूपं जिघांसुः ॥ त्रिशिखमपरमुग्रं गृह्य संदेशचेष्टादशनविकृतवक्त्रो योद्धुकामो हरिं सः ॥ १०७ ॥
इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे समुद्रमंथनाख्याने देवासुरसंग्रामवर्णनंनाम त्रयो
दशोऽध्यायः ॥ १३ ॥ ॥ लोमश उवाच ॥ ॥ ततो युद्धमतीवासीदसुरैर्विष्णुना सह ॥ ततः सिंहाः सपक्षास्ते दंशिताः परमाद्भुताः ॥ १ ॥
असुरैरुह्यमानास्ते गरुत्मंतं व्यदारयन् ॥ सिंहास्ते दारितास्तेन खंडशश्च विदारिताः ॥ २ ॥ विष्णुना च तदा दैत्याश्चक्रेण शकलीकृताः ॥
हतांस्तानसुरान्दृष्ट्वा कालनेमिः प्रतापवान् ॥ ३ ॥ त्रिशूलेनाहनद्विष्णुं रोषपर्याकुलेक्षणः ॥ तमायांतं च जगृहे मुकुंदोऽनाथसंश्रयः ॥ ४ ॥
करेण वामेन जघान लीलया तं कालनेमिं ह्यसुरं महाबलम् ॥ तेनैव शूलेन समाहतोऽसौ मूर्च्छान्वितोऽसौ सहसा पपात ॥ ५ ॥ पतितः
पुनरुत्थाय शनैरुन्मील्य लोचने ॥ पुरतः स्थितमालोक्य विष्णुं सर्वगुहाशयम् ॥ ६ ॥ लब्धसंज्ञोऽब्रवीद्वाक्यं कालनेमिर्महाबलः ॥
तव युद्धं न दास्यामि नास्ति लोके स्पृहा मम ॥ ७ ॥ ये येऽसुरा हता युद्धे अक्षयं लोकमाप्नुयुः ॥ ब्रह्मणो वचनात्सद्य इंद्रेण सह संगताः
॥ ८ ॥ भुंजतो विविधान्भोगान्देववद्विचरंति ते ॥ इंद्रेण सहिताः सर्वे संसारे च पतंत्यथ ॥ ९ ॥ तस्माद्युद्धेन मरणं न कांक्षे क्षणभंगुरम् ॥
अन्यजन्मनि मे वीर वैरभावान्न संशयः ॥ दातुमर्हसि मे नाथ कैवल्यं केवलं परम् ॥ १० ॥ तथेति दैत्यप्रवरो निपातितः परेण पुंसा
परमार्थदेन ॥ दत्त्वाऽभयं देवतानां तदानीं तथा सुधां देवताभ्यः प्रदत्त्वा ॥ ११ ॥ कालनेमिर्हतो दैत्यो देवा जाता ह्यकंटकाः ॥ शल्यरूपो

महान्सद्यो विष्णुना प्रभविष्णुना ॥ १२ ॥ तिरोधानं गतः सद्यो भगवान्कमलेक्षणः ॥ इंद्रोऽपि कदनं कृत्वा दैत्यानां परमाद्भुतम् ॥ १३ ॥
पतितानां क्लीबरूपाणां भग्नानां भीतचेतसाम् ॥ मुक्तकच्छशिखानां च चक्रे स कदनक्रियाम् ॥ १४ ॥ अर्थशास्त्रपरो भूत्वा महेंद्रो दुरतिक्रमः ॥
दैत्यानां कालरूपोऽसौ शचीपतिरुदारधीः ॥ १५ ॥ एवं निहन्यमानानामसुराणां शचीपतेः ॥ निवारणार्थं भगवानागतो नारदस्तदा ॥ १६ ॥
॥ ॥ नारद उवाच ॥ ॥ युद्धहताश्च ये वीरा ह्यसुरा रणमण्डले ॥ तेषामनु कथं कर्ता भीतानां च विहिंसनम् ॥ १७ ॥ ये भीतांश्च प्रपन्नांश्च
घातयंति मदोद्धताः ॥ ब्रह्मघ्नास्तेऽपि विज्ञेया महापातकसंयुताः ॥ १८ ॥ तस्मात्त्वया न कर्त्तव्यं मनसापि विहिंसनम् ॥ एवमुक्तस्तदा शक्रो
नारदेन महात्मना ॥ १९ ॥ सुरसेनान्वितः सद्य आगतो हि त्रिविष्टपम् ॥ तदा सर्वे सुरगणाः सुहृद्भ्यश्च परस्परम् ॥ बभूवुर्मुदिताः सर्वे
यक्षगंधर्वकिंनराः ॥ २० ॥ तदा इंद्रोऽमरावत्यां सह शच्याऽभिषेचितः ॥ २१ ॥ देवर्षिप्रमुखैश्चैव ब्रह्मर्षिप्रमुखैस्तथा ॥ शक्रोऽपि विजयं प्राप्तः
प्रसादाच्छंकरस्य च ॥ २२ ॥ तदा महोत्सवो विप्रा देवलोके महानभूत् ॥ शंखाश्च पटहाश्चैव मृदंगा मुरजा अपि ॥ तथानकाश्च भेर्यश्च नेदुर्दुंदु
भयः समम् ॥ २३ ॥ गायकाश्चैव गंधर्वाः किन्नराश्चाप्सरोगणाः ॥ ननृतुर्जगुस्तुष्टुवुश्च सिद्धचारणगुह्यकाः ॥ २४ ॥ एवं विजयमापन्नः शक्रो
देवेश्वरस्तदा ॥ देवैर्हतास्तदा दैत्याः पतितास्ते महीतले ॥ २५ ॥ गतासवो महात्मानो बलिप्रमुखतो ह्यमी ॥ तपस्तप्तुं पुरा विप्रो भार्गवो मान
सोत्तरम् ॥ २६ ॥ गतः शिष्यैः परिवृतस्तस्माद्युद्धं न वेद तत् ॥ अवशेषाश्च ये दैत्यास्ते गता भार्गवं प्रति ॥ २७ ॥ कथितं वै महद्वृत्तमसुराणां
क्षयावहम् ॥ निशम्य मन्युमाविष्टो ह्यागतो भृगुनंदनः ॥ २८ ॥ शिष्यैः परिवृतो भूत्वा मृतांस्तानसुरानपि ॥ विद्यया मृतजीविन्या पतितान्स
मजीवयत् ॥ २९ ॥ निद्रापायगता[1] यद्वदुत्थितास्ते तदाऽसुराः ॥ उत्थितः स बलिः प्राह भार्गवं ह्यमितद्युतिम् ॥ ३० ॥ जीवितेन किमद्यैव मम
नास्ति प्रयोजनम् ॥ पातितस्त्रिदशेंद्रेण यथा कापुरुषस्तथा ॥ ३१ ॥ बलिनोक्तं वचः श्रुत्वा शुक्रो वचनमब्रवीत् ॥ मनस्विनो हि ये शूराः
पतंति समरे बुधाः ॥३२॥ ये शस्त्रेण हताः सद्यो म्रियमाणा व्रजंति वै ॥ त्रिविष्टपं न संदेह इति वेदानुशासनम् ॥ ३३ ॥ एवमाश्वासयामास
बलिनं भृगुनंदनः ॥ तपस्तताप विविधं दैत्यानां सिद्धिदायकम् ॥ ३४ ॥ तथा दैत्या गताः सर्वे भृगुणा च प्रचोदिताः ॥ पातालमवसन्सर्वे

१ निद्रापायगताः--निद्रान्तं गताः निद्रावस्थातो जाग्रदवस्थामापन्नाः--इत्यर्थः ।

बलिमुख्याः सुखेन वै ॥ ३५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे देवासुरसंग्रामे भार्गवेण मृतदैत्यसंजीवनवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥ ॥ ऋषय ऊचुः ॥ ॥ राज्यं प्राप्तो हि देवेंद्रः कथितस्ते गुरुं विना ॥ गुरोरवज्ञया जातो राज्यभ्रंशो हि तस्य तु ॥ १ ॥ केन प्रणोदितश्चेंद्रो बभूव चिरमासने ॥ तत्सर्वं कथयाशु त्वं परं कौतूहलं हि नः ॥ २ ॥ ॥ लोमश उवाच ॥ ॥ गुरुणापि विना राज्यं कृतवान्स शचीपतिः ॥ विश्वरूपोक्तविधिना इंद्रो राज्ये स्थितो महान् ॥ ॥ ३ ॥ विश्वकर्मसुतो विप्रा विश्वरूपो महानृपः ॥ पुरोहितोऽथ शक्रस्य याजकश्चाभवत्तदा ॥ ४ ॥ तस्मिन्यज्ञेऽवदानैश्च यजने असुरान्सुरान् ॥ मनुष्यांश्चैव त्रिशिरा अपरोक्षं शचीपतेः ॥ ५ ॥ देवान्ददाति साक्रोशं दैत्यांस्तूष्णीमथाददात् ॥ मनुष्यान्मध्यपातेन प्रत्यहं स ग्रहान्द्विजः ॥ ६ ॥ एकदा तु महेंद्रेण सूचितो गुरुलाघवात् ॥ अलक्ष्यमाणेन तदा ज्ञातं तस्य चिकीर्षितम् ॥ ७ ॥ दैत्यानां कार्यसिद्ध्यर्थमवदानं प्रयच्छति ॥ असौ पुरोहितोऽस्माकं परेषां च फलप्रदः ॥ ८ ॥ इति मत्वा तदा शक्रो वज्रेण शतपर्वणा ॥ चिच्छेद तच्छिरांस्येव तत्क्षणादभवद्वधः ॥ ९ ॥ येनाकरोत्सोमपानमजायंत कपिंजलाः ॥ ततोन्येन सुरापानात्कलविंका भवन्मुखात् ॥ १० ॥ अन्याननादजायंत तित्तिरा विश्वरूपिणः ॥ एवं हतो विश्वरूपः शक्रेण मंदभागिना ॥ ११ ॥ ब्रह्महत्या तदोद्भूता दुर्धर्षा च भयावहा ॥ दुर्धर्षा दुर्मुखा दुष्टा चण्डालरजसान्विता ॥ १२ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः ॥ इत्येषामप्यघवतामिदमेव च निष्कृतिः ॥ १३ ॥ नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ त्रिशिरा धूम्रहस्ता सा शक्रं ग्रस्तुमुपाययौ ॥ १४ ॥ ततो भयेन महता पलायनपरोऽभवत् ॥ पलायमानं तं दृष्ट्वा ह्यनुयाता भयावहा ॥ १५ ॥ यतो धावति साऽधावत्तिष्ठंतमनुतिष्ठति ॥ अंगकृता यथा छाया शक्रस्य परिवेष्टितुम् ॥ आयाति तावत्सहसा इंद्रोऽप्यप्सु न्यमज्जत ॥ १६ ॥ शीघ्रत्वेन यथा विप्राश्चिरंतनजलेचरः ॥ १७ ॥ एवं दिव्यशतं पूर्णं वर्षाणां च शचीपतेः ॥ वसतस्तस्य दुःखेन तथा चैव शतद्वयम् ॥ अराजकं तदा जातं नाकपृष्ठे भयावहम् ॥ १८ ॥ तदा चिंतान्विता देवा ऋषयोऽपि तपस्विनः ॥ त्रैलोक्यं चाऽऽपदा ग्रस्तं बभूव च तदा द्विजाः ॥ १९ ॥ एकोऽपि ब्रह्महा यत्र राष्ट्रे वसति निर्भयः ॥ अकालमरणं तत्र साधूनामुपजायते ॥ २० ॥ राजा पापयुतो यस्मिन्राष्ट्रे वसति तत्र वै ॥ दुर्भिक्षं चैव मरणं तथैवोपद्रवा द्विजाः ॥ २१ ॥ भवंति बहवोऽनर्थाः प्रजानां नाशहेतवे ॥ तस्माद्राज्ञा तु कर्तव्यो धर्म्मः श्रद्धापरेण हि ॥ २२ ॥ तथा प्रकृ

१ अडभात्र आर्षः । २ संबोधनमिदम्—हे द्विजाः ।

तयो राज्ञः शुचित्वेन प्रतिष्ठिताः ॥ इन्द्रेण च कृतं पापं तेन पापेन वै द्विजाः ॥ नानाविधैर्महातापैः सोपद्रवमभूज्जगत् ॥ २३ ॥ ॥ शौनक उवाच ॥ ॥ अश्वमेधशतेनैव प्राप्तं राज्यं महत्तरम् ॥ देवानामखिलं सूत कस्माद्विघ्नमजायत ॥ शक्रस्य च महाभाग यथावत्कथयस्व नः ॥२४॥ ॥ सूत उवाच ॥ ॥ देवानां दानवानां च मनुष्याणां विशेषतः ॥ कर्म्मैव सुखदुःखानां हेतुभूतं न संशयः ॥ २५ ॥ इन्द्रेण च कृतं विप्रा मह द्भूतं जुगुप्सितम् ॥ गुरोरवज्ञा च कृता विश्वरूपवधः कृतः ॥ २६ ॥ गौतमस्य गुरोः पत्नी सेविता तस्य तत्फलम् ॥ प्राप्तं महेंद्रेण चिरं यस्य नास्ति प्रतिक्रिया ॥ २७ ॥ ये हि दुष्कृतकर्म्माणो न कुर्वंति च निष्कृतिम् ॥ दुर्दशां प्राप्नुवन्त्येते यथैवेन्द्रः शतक्रतुः ॥ २८ ॥ दुष्कृतोपार्जितस्या तः प्रायश्चित्तं हि तत्क्षणात् ॥ कर्तव्यं विधिवद्विप्राः सर्वपापोपशांतये ॥ २९ ॥ उपपातकमध्यस्तं महापातकतां व्रजेत् ॥ ३० ॥ ततः स्व[1]धर्मनिष्ठां च ये कुर्वंति सदा नराः ॥ प्रातर्मध्याह्नसायाह्ने तेषां पापं विनश्यति ॥ ३१ ॥ प्राप्नुवंत्युत्तमं लोकं नात्र कार्या विचारणा ॥ तस्मादसौ दुराचारः प्राप्तो वै कर्मणः फलम् ॥ ३२ ॥ स प्रधार्य तदा सर्वे[2] लोकपालास्त्वरान्विताः ॥ बृहस्पतिमुपागम्य सर्वमात्मनि धिष्ठितम् ॥ कथयामासुरव्यग्रा इंद्रस्य च गुरुं प्रति ॥ ३३ ॥ देवैरुक्तं वचो विप्रा निशम्य च बृहस्पतिः ॥ अराजकं च संप्राप्तं चिंतयामास बुद्धिमान् ॥ ३४ ॥ किं कार्यं चाद्य कर्तव्यं कथं श्रेयो भविष्यति ॥ देवानां चाद्य लोकानामृषीणां भावितात्मनाम् ॥ ३५ ॥ मनसैव च तत्सर्वं कार्याकार्यं विचार्य च ॥ जगाम शक्रं त्वरितो देवैः सह महायशाः ॥ ३६ ॥ प्राप्तो जलाशयं तं च यत्रास्ते हि पुरंदरः ॥ यस्य तीरे स्थिता हत्या चंडालीव भयावहा ॥ ३७ ॥ तत्रोपविष्टास्ते सर्वे देवा ऋषिगणान्विताः ॥ आह्वानं च कृतं तस्य शक्रस्य गुरुणा स्वयम् ॥ ३८ ॥ समुत्थितस्ततः शक्रो ददर्श स्वगुरुं तदा ॥ बाष्पपूरितवक्त्रो हि बृहस्पतिमभाषत ॥ ३९ ॥ प्रणिपत्य च तत्रत्यान्कृताञ्जलिरभाषत ॥ तदा दीनमुखो भूत्वा मनसा संविमृश्य च ॥ ४० ॥ स्वयमेव कृतं पूर्वमज्ञानलक्षणं महत् ॥ अधुनैव मया कार्यं किं कर्तव्यं वद प्रभो ॥ ४१ ॥ प्रहस्योवाच भगवान्बृहस्पति रुदारधीः ॥ पुरा त्वया कृतं यच्च तस्येदं कर्मणः फलम् ॥ ४२ ॥ मां च उद्दिश्य भो इंद्र तद्भोगादेव संक्षयः ॥ प्रायश्चित्तं हि हत्याया न दृष्टं स्मृति कारिभिः ॥ ४३ ॥ अज्ञानतो हि यज्जातं पापं तस्य प्रतिक्रिया ॥ कथिता धर्म्मशास्त्रज्ञैः सकामस्य न विद्यते ॥ ४४ ॥ सकामेन कृतं पापमकामं नैव जायते ॥ ताभ्यां विषयभेदेन प्रायश्चित्तं विधीयते ॥ ४५ ॥ मरणांतो विधिः कार्यो कामेन हि कृतेन हि ॥ अज्ञानजनिते पापे प्रायश्चित्तं

१ स्वधर्मनिष्ठां--नित्यं स्नानसन्ध्यावन्दनादिरूपाम्--इत्यर्थः । २ सर्वम्--इत्यस्य कथयामासुः--इत्यनेन सम्बन्धः ।

विधीयते ॥ ४६ ॥ तस्मात्त्वया कृतं यच्च स्वयमेव हतो द्विजः ॥ पुरोहितश्च विद्वांश्च तस्मान्नास्ति प्रतिक्रिया ॥ ४७ ॥ यावन्मरणमप्येति तावदप्सु स्थिरो भव ॥ ४८ ॥ शताश्वमेधसंज्ञं च यत्फलं तव दुर्मते ॥ तन्नष्टं तत्क्षणादेव घातितो हि द्विजो यदा ॥ ४९ ॥ सच्छिद्रे च यथा तोयं न तिष्ठति घटेऽण्वपि ॥ तथैव सुकृतं पापे हीयते च प्रदक्षिणम् ॥ ५० ॥ तस्माच्च दैवसंयोगात्प्राप्तं स्वर्गादिकं च यैः ॥ यथोक्तं तद्भवे त्तेषां धर्मिष्ठानां न संशयः ॥ ५१ ॥ एतच्छ्रुत्वा वचस्तस्य शक्रो वचनमब्रवीत् ॥ कुकर्मणा मदीयेन प्राप्तमेतन्न संशयः ॥ ५२ ॥ अमरावतीमाशु त्वं गच्छ देवर्षिभिः सह ॥ लोकानां कार्यसिद्ध्यर्थं देवानां च बृहस्पते ॥ इंद्रं कुरु महाभाग यस्ते मनसि रोचते ॥ ५३ ॥ यथा मृतस्तथाहं वै ब्रह्महत्यावृतो महान् ॥ रागद्वेषसमुत्थेन पापेनास्मि परिप्लुतः ॥ ५४ ॥ तस्मात्त्वरान्विता यूयं देवराजानमाशु वै ॥ कुर्वंतु मदनुज्ञाताः सत्यं प्रतिवदामि वः ॥ ५५ ॥ एवमुक्तास्तदा सर्वे बृहस्पतिपुरोगमाः ॥ एत्यामरावतीं तूर्णं पुरंदरविचेष्टितम् ॥ कथयामासुरव्यग्राः शचीं प्रति यथा तथा ॥ ५६ ॥ राज्यस्य हेतोः किं कार्यं विमृशंतः परस्परम् ॥ ५७ ॥ एवं विमृश्यमानानां देवानां तत्र नारदः ॥ यदृच्छयागतस्तत्र देवर्षिरमितद्युतिः ॥ ५८ ॥ उवाच पूजितो देवान्कस्माद्यूयं विचेतसः ॥ तेनोक्ताः कथयामासुः सर्वं शक्रस्य चेष्टितम् ॥ ५९ ॥ गतमिंद्रस्य चेंद्रत्वमेनसा परमेण तु ॥ ततः प्रोवाच तान्देवान्देवर्षिर्नारदो वचः ॥ ६० ॥ यूयं देवाश्च सर्वज्ञास्तपसा विक्रमेण च ॥ तस्मादिंद्रो हि कर्तव्यो नहुषः सोमवंशजः ॥ ६१ ॥ सोऽस्मिन्राष्ट्रे प्रतिष्ठाप्यस्त्वरितेनैव निर्जराः ॥ एकोनमश्वमेधानां शतं तेन महात्मना ॥ कृतमस्ति महाभागा नहुषेण च यज्वना ॥ ६२ ॥ शच्या श्रुतं च तद्वाक्यं नारदस्य मुखोद्गतम् ॥ गतांतःपुरमव्यग्रा बाष्पपूरितलोचना ॥ ६३ ॥ नारदस्य वचः श्रुत्वा सर्वे देवान्वमोदयन्[1] ॥ ६४ ॥ नहुषं राज्यमारोढुमैकपद्येन ते यदा ॥ आनीतो हि तदा राजा नहुषो ह्यमरावतीम् ॥ ६५ ॥ राज्यं दत्तं महेंद्रस्य सुरैः सर्वैर्महर्षिभिः ॥ तदागस्त्यादयः सर्वे नहुषं पर्युपासत ॥ ६६ ॥ गंधर्वाप्सरसो यक्षा विद्याधरमहोरगाः ॥ यक्षाः सुपर्णाः पतगा ये चान्ये स्वर्गवासिनः ॥ ६७ ॥ तदा महोत्सवो जातो देवपुर्यां निरंतरः ॥ शंखतूर्यमृदंगानि नेदुर्दुंदुभयः समम् ॥ ६८ ॥ गायकाश्च जगुस्तत्र तथा वाद्यानि वादकाः ॥ नर्तका ननृतुस्तत्र तथा राज्यमहोत्सवे ॥ ६९ ॥ अभिषिक्तस्तदा तत्र बृहस्पतिपुरोगमैः ॥ ७० ॥ अर्चितो देवसूक्तैश्च यथावद्ग्रहपूजनम् ॥ कृतवांश्चैव ऋषिभिर्विद्वद्भिर्भावितात्मभिः ॥ ७१ ॥ तथा च सर्वैः परिपूजितो महान्राजा सुराणां नहुषस्तदानीम् ॥ इंद्रासने चेंद्र

१ सन्धिरार्षः—देवाः अन्वमोदयन्—इति पदच्छेदः ।

समानरूपः संस्तूयमानः परमेण वर्चसा ॥ ७२ ॥ सुगंधदीपैश्च सुवाससा युतोऽलंकारभोगैः सुविराजितांगः ॥ बभौ तदानीं नहुषो मुनींद्रैः संस्तूयमानो हि तथाऽमरेंद्रैः ॥ ७३ ॥ इति परमकलान्वितोऽसौ सुरमुनिवरगणैश्च पूज्यमानः ॥ नहुषनृपवरोऽभवत्तदानीं हृदि महता हृच्छयेन तप्तः ॥ ७४ ॥ ॥ नहुष उवाच ॥ ॥ इंद्राणी कथमद्यैव नायाति मम सन्निधौ ॥ तां चाह्वयत शीघ्रं भो मा विलंबितुमर्हथ ॥ ७५ ॥ नहुपस्य वचः श्रुत्वा बृहस्पतिरुदारधीः ॥ शचीभवनमासाद्य उवाच च सविस्तरम् ॥ ७६ ॥ शक्रस्य दुर्निमित्तेन ह्यानीतो नहुषोऽत्र वै ॥ राज्यार्थे भामिनि त्वं च अर्द्धासनगता भव ॥ ७७ ॥ शची प्रहस्य चोवाच बृहस्पतिमकल्मषम् ॥ असौ न परिपूर्णो हि यज्ञैः शक्रासने स्थितः ॥ एकोनमश्वमेधानां शतं कृतमनेन वै ॥ ७८ ॥ तस्मान्न योग्यो मां प्राप्तुं तत्त्वतो हि विमृश्यताम् ॥ यदि मां साभिलाषो हि परस्त्रियमचेतनः ॥ अवाह्यवाहनेनैव अत्रागत्य लभेत माम् ॥ ७९ ॥ तथेति गत्वा त्वरितो बृहस्पतिरुवाच तम् ॥ नहुषं कामसंतप्तं शच्योक्तं च यथातथम् ॥ ८० ॥ तथेति मत्वा राजासौ नहुषः काममोहितः ॥ विमृश्य परया बुद्ध्या अवाह्यं किं प्रशस्यते ॥ ८१ ॥ स बुद्ध्या च चिरं स्मृत्वा ब्राह्मणाश्च तपस्विनः ॥ अवाह्याश्च भवंत्यस्मादात्मानं वाहयाम्यहम् ॥ ८२ ॥ द्वाभ्यां च तस्याः प्राप्त्यर्थमिति मे हृदि वर्तते ॥ शिबिकां च ददौ ताभ्यां द्विजाभ्यां काममोहितः ॥ ८३ ॥ उपविश्य तदा तस्यां शिबिकायां समाहितः ॥ सर्पसर्पेति वचनान्नोदयामास तौ तदा ॥ ८४ ॥ अगस्त्यः शिबिकावाही ततः क्रुद्धोऽशपन्नृपम् ॥ विप्राणामवमंता त्वमुन्मत्तोऽजगरो भव ॥ ८५ ॥ शापोक्तिमात्रतो राजा पतितो ब्राह्मणस्य हि ॥ तत्रैवाजगरो भूत्वा विप्रशापो दुरत्ययः ॥ ८६ ॥ यथा हि नहुषो जातस्तथा सर्वेऽपि तादृशाः ॥ विप्राणामवमानेन पतन्ति निरयेऽशुचौ ॥ ॥ ८७ ॥ तस्मात्सर्वप्रयत्नेन पदं प्राप्य विचक्षणैः ॥ अप्रमत्तैर्नरैर्भाव्यमिहामुत्र च लब्धये ॥ ८८ ॥ तथैव नहुषः सर्पो जातोरण्ये महाभये ॥ एवं चैवाभवत्तत्र देवलोके ह्यराजकम् ॥ ८९ ॥ तथैव ते सुराः सर्वे विस्मयाविष्टचेतसः ॥ अहो बत महत्कष्टं प्राप्तं राज्ञा ह्यनेन वै ॥ ९० ॥ न मर्त्यलोको न स्वर्गो जातो ह्यस्य दुरात्मनः ॥ सतामवज्ञया सद्यः सुकृतं दग्धमेव हि ॥ ९१ ॥ याज्ञिको ह्यपरो लोके कथ्यतां च महामुने ॥ तदोवाच महातेजा नारदो मुनिसत्तमः ॥ ९२ ॥ ययातिं च महाभागा आनयध्वं त्वरान्विताः ॥ देवदूतास्तु वै तूर्णं ययातिं द्रुतमानयन् ॥ ९३ ॥ विमानमारुह्य तदा महात्मा ययौ दिवं देवदूतैः समेतः ॥ पुरस्कृतो देववरैस्तदानीं तथोरगैर्यक्षगंधर्वसिद्धैः ॥ ९४ ॥ आयातः सोऽमरावत्यां त्रिदशैरभितोषितः ॥ इंद्रासने चोपविष्टो बभाषे च स सत्वरम् ॥ ९५ ॥ नारदेनैवमुक्तस्तु त्वं राजा याज्ञिको ह्यसि ॥ सतामवज्ञया प्राप्तो नहुषो

दंदशूकताम् ॥ ९६ ॥ ये प्राप्नुवंति धर्मिष्ठा दैवेन परमं पदम् ॥ प्राक्तनेनैव मूढास्ते न पश्यंति शुभाशुभम् ॥ ९७ ॥ पतंति नरके घोरे स्तब्धा वै नात्र संशयः ॥ ९८ ॥ ॥ ययातिरुवाच ॥ ॥ यैः कृतं चामितं पुण्यं तेषां विघ्नः प्रजायते ॥ अल्पकत्वेन देवर्षे विद्धि सर्वं परं मम ॥ ९९ ॥ महादानानि दत्तानि अन्नदानयुतानि च ॥ गोदानानि बहून्येव भूमिदानयुतानि च ॥ १०० ॥ तथैव सर्वाण्यपि चोत्तमानि दानानि चोक्तानि मनीषिभिर्यदा ॥ एतानि सर्वाणि मया तदैव दत्तानि काले च महाविधानतः ॥ १०१ ॥ यज्ञैरिष्टं वाजपेयातिरात्रैर्ज्योतिष्टोमै राजसूयादिभिश्च ॥ शास्त्रप्रोक्तैरश्वमेधादिभिश्च यूपैरेषालंकृता भूः समंतात् ॥ १०२ ॥ देवदेवो जगन्नाथ इष्टो यज्ञैरनेकशः ॥ गालवाय पुरे दत्ता कन्या त्वेषा च माधवी ॥ १०३ ॥ पत्नीत्वेन चतुर्भ्यश्च दत्ताः कन्या मुने तदा ॥ गालवस्य गुरोरर्थे विश्वामित्रस्य धीमतः ॥ १०४ ॥ एवं भूतान्यनेकानि सुकृतानि मया पुरा ॥ महांति च बहून्येव तानि वक्तुं न पार्यते ॥ १०५ ॥ भूयः पृष्टः सर्वदेवैः स राजा कृतं सर्वं गुप्तमेवं यथार्थम् ॥ विज्ञातुमिच्छाम यथार्थतोपि सर्वे वयं श्रोतुकामा ययाते ॥ १०६ ॥ वचो निशम्य देवानां ययातिरमितद्युतिः ॥ कथयामास तत्सर्वं पुण्यशेषं यथार्थतः ॥ १०७ ॥ कथितं सर्वमेतच्च निःशेषं व्यासवत्तदा ॥ स्वपुण्यकथनेनैव ययातिरपतद्भुवि ॥ १०८ ॥ तत्क्षणादेव सर्वेषां सुराणां तत्र पश्यताम् ॥ एवमेव तथा जातमराजकमतंद्रितम् ॥ १०९ ॥ अन्यो न दृश्यते लोके याज्ञिको यो हि तत्र वै ॥ शक्रासनेऽभिषेकार्थं श्रूयतां हि द्विजोत्तमाः ॥ ११० ॥ सर्वे सुराश्च ऋषयोऽथ महाफणींद्रा गन्धर्वयक्षखगचारणकिंनराश्च ॥ विद्याधराः सुरगणाप्सरसां गणाश्च चिंतापराः समभवन्मनुजास्तथैव ॥ १११ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे देवेन्द्रस्वाराज्याभिषेकवृत्तान्ते देवेन्द्रस्य ब्रह्महत्ययोपद्रुतौ नहुषशापययातिभूपपुण्यक्षयवृत्तान्तवर्णनंनाम पंचदशोऽध्यायः ॥ १५ ॥ छ ॥

॥ ॥ लोमश उवाच ॥ ॥ ततः शची तान्प्रोवाच वाचं धर्मार्थसंयुताम् ॥ मा चिंता क्रियतां देवा बृहस्पतिपुरोगमाः ॥ १ ॥ गच्छत त्वरिताः सर्वे शक्रं द्रष्टुं विचक्षणाः ॥ ब्रह्महत्याभिभूतोऽसौ यत्रास्ते सुरसत्तमः ॥ २ ॥ बहूनां कारणेनैव विश्वरूपो हि मंदधीः ॥ हतस्तेन महेंद्रेण सर्वैः सोऽपि निराकृतः ॥ ३ ॥ तस्मात्सर्वैर्भवद्भिश्च गंतव्यं यत्र स प्रभुः ॥ अवज्ञा हि कृता पूर्वं महेंद्रेण तवानघ ॥ ४ ॥ अवज्ञामात्रक्षुब्धेन त्वया शप्तः पुरंदरः ॥ तथैव शापितश्चासि मया त्वं हि बृहस्पते ॥ ५ ॥ निरस्तोऽपि हि तस्मात्त्वमवसानपरो भव ॥ ६ ॥ यथा मदर्थमानीतौ शक्रे जीवति तावुभौ ॥ त्वयि जीवति भो ब्रह्मन्कार्यं तव करिष्यति ॥ ७ ॥ कोऽपि सौभाग्यवाँल्लोके तव क्षेत्रे जनिष्यति ॥ पुत्रं विख्यातनामानमत्र

नैवास्ति संशयः ॥ ८ ॥ गच्छ शीघ्रं सुरैः सार्द्धं शक्रमानय मा चिरम् ॥ प्रयासि त्वरितो नो चेत्पुनः शापं ददामि ते ॥ ९ ॥ शच्योक्तं वचनं श्रुत्वा सुरैः सार्द्धं जगाम सः ॥ पुरंदरं गताः सर्वे ब्रह्महत्याभिपीडितम् ॥ १० ॥ सरस्वतीरमासाद्य ते शक्रं चाभ्यवादयन् ॥ दृष्टाः शक्रेण ते सर्वे तदा ह्यप्सु स्थितेन वै ॥ ११ ॥ उवाच देवान्देवेशः कस्माद्यूयमिहागताः ॥ अहं हि पातकग्रस्तो ब्रह्महत्यापरिप्लुतः ॥ अप्सु तिष्ठामि भो देवा एकाकी तपसान्वितः ॥ १२ ॥ तच्छ्रुत्वा वचनं तस्य सर्वे देवाः शतक्रतोः ॥ ऊचुर्विह्वलिता एनं देवराजानमद्भुतम् ॥ १३ ॥ एतादृशं न वाच्यं ते परेषामुपकारतः ॥ कृतं त्वयैव यत्कर्म विश्वरूपवधादिकम् ॥ १४ ॥ विश्वकर्मसुतेनैव कृतं याजनमद्भुतम् ॥ येन देवाः क्षयं यांति ऋषयोऽपि महाप्रभाः ॥ १५ ॥ तस्माद्धतस्त्वया देव परेषामुपकारतः ॥ ततः सर्वे वयं प्राप्तास्त्वां नेतुममरावतीम् ॥ १६ ॥ एवं विवदमानेषु देवेषु च तदाऽब्रवीत् ॥ ब्रह्महत्या त्वरायुक्ता देवेंद्रं वरयाम्यहम् ॥ १७ ॥ तदा बृहस्पतिर्वाक्यमुवाच सहसैव तु ॥ १८ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ वासार्थं च करिष्यामः स्थानानि तव सांप्रतम् ॥ प्रसांत्विता तदा हत्या देवैस्तत्कार्यगौरवात् ॥ १९ ॥ विमृश्य सर्वे विभेजुश्चतुर्द्धा[1] हत्यां सुरास्ते ऋषयो मनीषिणः ॥ यक्षाः पिशाचा उरगाः पतंगास्तथा च सर्वे सुरसिद्धचारणाः ॥२०॥ आदौ क्षमां प्रति तदा ऊचुः सर्वे दिवौकसः ॥ हे क्षमेंऽशस्त्वया[2] ग्राह्यो हत्यायाः कार्यसिद्धये ॥ २१ ॥ सुराणां तद्वचः श्रुत्वा धरित्री कंपिताऽवदत् ॥ कथं ग्राह्यो मया ह्यंशो हत्यायास्तद्विमृश्यताम् ॥ ॥ २२ ॥ अहं हि सर्वभूतानां धात्री विश्वं धराम्यहम् ॥ अपवित्रा भविष्यामि एनसा संवृता भृशम् ॥ २३ ॥ पृथ्व्यास्तद्वचनं श्रुत्वा बृहस्पतिरुवाच ताम् ॥ मा भैषीश्चारुसर्वांगि निष्पापासि न चान्यथा ॥ २४ ॥ यदा यदुकुले श्रीमान्वासुदेवो भविष्यति ॥ तदा तत्पदविन्यासान्निष्पापा त्वं भविष्यसि ॥ २५ ॥ कुरु वाक्यं त्वमस्माकं नात्र कार्या विचारणा ॥ २६ ॥ इत्युक्ता पृथिवी तेषां निष्पापा साकरोद्वचः ॥ ततो वृक्षान्समाहूय सर्वे देवाऽब्रुवन्वचः ॥ २७ ॥ हत्यांशो हि ग्रहीतव्यो भवद्भिः कार्यसिद्धये ॥ एवमुक्ताऽब्रुवन्वृक्षा देवान्सर्वे समागताः ॥ २८ ॥ वयं सर्वे तथा भूतास्तापसानां फलप्रदाः ॥ तदा हत्यान्विताः सर्वे भविष्यंति तपस्विनः ॥ २९ ॥ पापिनो हि महाभागास्तस्मात्सर्वं विमृश्यताम् ॥ तदा पुरोधसा चोक्ताः सर्वे वृक्षाः समागताः ॥ ३० ॥ मा चिंता क्रियतां सर्वैः प्रसादाच्च शतक्रतोः ॥ छेदिताश्चैव सर्वे वै ह्यनेकांशतवमागताः[3] ॥३१॥ ततो विटपिनो नित्यं यूयं सर्वे भविष्यथ ॥ इत्युक्तास्ते तदा सर्वेऽगृह्णन्हत्यां विभागशः ॥ ३२ ॥ ततो ह्यपः समाहूय ऊचुः

१ विभजुः इत्यत्रैत्वाभाव आर्षश्छन्दोनुरोधेन, विभेजुः इति त्वपेक्षितम्। २ सन्धिरार्षः आर्षो वाऽभावः। ३ सन्धिरार्षः।

सर्वे दिवौकसः ॥ अद्भिश्च गृह्यतामद्य हत्यांशः कार्यसिद्धये ॥ ३३ ॥ तदा ह्यापो मिलित्वाथ ऊचुः सर्वाः पुरोधसम् ॥ यानि कानि च पापानि तथा दुश्चरितानि च ॥ ३४ ॥ अस्मत्संपर्कसंबंधात्स्नानशौचाशनादिभिः ॥ पुनंति प्राणिनः सर्वे पापेन परिवेष्टिताः ॥ ३५ ॥ तासां वचनमाकर्ण्य बृहस्पतिरुवाच ह ॥ मा भयं क्रियतामाप एनसा दुस्तरेण हि ॥ ३६ ॥ आपः पुनंतु सर्वेषां चराचरनिवासिनाम् ॥ तदा स्त्रियः[1] समाहूय बृहस्पतिरुवाच ह ॥ ३७ ॥ अद्यैव ग्राह्यो हत्यांशः सर्वकार्यार्थसिद्धये ॥ निशम्य तद्गुरोर्वाक्यमूचुः सर्वाश्च योषितः ॥ ३८ ॥ पापमाचरते योषा तेन पापेन नान्यथा ॥ लिप्यंते बहवः पक्षा इति वेदानुशासनम् ॥ ३९ ॥ श्रुतमस्ति न ते किंचिद्धे पुरोधो विमृश्यताम् ॥ योषिद्भिः प्रोच्यमानोऽपि उवाचाथ बृहस्पतिः ॥ ४० ॥ मा भयं क्रियतां सर्वाः पापादस्मात्सुलोचनाः ॥ भविष्याणां तथान्येषां भविष्यति फलप्रदः ॥ हत्यांशो यो हि सर्वासां यथाकामित्वमेव च ॥४१॥ एवमंशाश्च हत्यायाश्चत्वारः कल्पिताः सुरैः ॥ निवासमकरोत्सद्यस्तेषुतेषु द्विजोत्तमाः ॥ ४२ ॥ निष्पापो हि तदा जातो महेंद्रो ह्यभिषेचितः ॥ देवपुर्यां सुरगणैस्तथैव ऋषिभिः सह ॥ ४३ ॥ शच्या समेतो हि तदा पुरंदरो बभूव विश्वाधिपतिर्महात्मा ॥ देवैः समेतो हि महानुभावैर्मुनीश्वरैः सिद्धगणैस्तदानीम् ॥ ४४ ॥ तदाग्नयः शोभना वायवश्च सर्वे ग्रहाः सुप्रभाः शांतियुक्ताः ॥ जाताः सद्यः पृथिवी शोभमाना तथाद्रयो मणिप्रभवा बभूवुः ॥ ४५ ॥ प्रसन्नानि तथा ह्यासन्मनांसि च मनस्विनाम् ॥ ४६ ॥ नद्यश्चामृतवाहिन्यो वृक्षा ह्यासन्सदाफलाः ॥ अकृष्टपच्यौषधयो बभूवुश्चामृतोपमाः ॥ ४७ ॥ एकपद्येन सर्वेषामिंद्रलोकनिवासिनाम् ॥ बभूव परमोत्साहो महामोदकरस्तथा ॥ ४८ ॥ ॥ लोमश उवाच ॥ ॥ एतस्मिन्नंतरे त्वष्टा दृष्ट्वा चेंद्रमहोत्सवम् ॥ बभूव रुषितो[2]ऽतीव पुत्रशोकप्रपीडितः ॥ ४९ ॥ जगाम निर्वेदपरस्तपस्तप्तुं सुदारुणम् ॥ तपसा तेन संतुष्टो ब्रह्मा लोकपितामहः ॥ ५० ॥ त्वष्टारमब्रवीत्तुष्टो वरं वरय सुव्रत ॥ तदा वव्रे वरं त्वष्टा सर्वलोकभयावहम् ॥ वरं पुत्रो हि दातव्यो देवानां हि भयावहः ॥ ५१ ॥ तथेति च वरो दत्तो ब्रह्मणा परमेष्ठिना ॥ वरदानात्सद्य एव बभूव पुरुषस्तदा ॥ ५२ ॥ वृत्रनामांकितस्तत्र दैत्यो हि परमाद्भुतः ॥ धनुषां शतमात्रं हि प्रत्यहं ववृधेऽसुरः ॥ ॥ ५३ ॥ पातालान्निर्गता दैत्या ये पुराऽमृतमंथने ॥ घातिताः सुरसंघैश्च भृगुणा जीवितास्त्वरात् ॥ ५४ ॥ सर्वं महीतलं व्याप्तं तेनैकेन महात्मना ॥ ५५ ॥ तदा सर्वेऽपि ऋषयो वध्यमानास्तपस्विनः ॥ ब्रह्माणं त्वरिताः सर्वे ऊचुर्व्यसनमागतम् ॥ ५६ ॥ तथा चेंद्रादयो देवा गंधर्वाः सम

---

१ सा हत्या-इति शेषः । २ रुषितः-क्रुद्धः-इत्यर्थः ।

रुद्गणाः ॥ ब्रह्मणा कथितं सर्वं त्वष्टुश्चैतच्चिकीर्षितम् ॥ ५७ ॥ भवद्वधार्थं जनितस्तपसा परमेण तु ॥ वृत्रोनाम महातेजाः सर्वदैत्याधिपो महान् ॥
॥ ५८ ॥ तथापि यत्नः क्रियतां यथा वध्यो भवेदसौ ॥ निशम्य ब्रह्मणो वाक्यमूचुर्देवाः सवासवाः ॥ ५९ ॥ ॥ देवा ऊचुः ॥ ॥ यदा इंद्रो हि
हत्याया विमुक्तः स्थापितो दिवि ॥ तदास्माभिरकार्यं वै कृतमस्ति दुरासदम् ॥ ६० ॥ शस्त्राण्यस्त्राण्यनेकानि संक्षिप्तानि ह्यबुद्धितः ॥ दधीच
स्याश्रमे ब्रह्मन्किं कार्यं करवामहे ॥ ६१ ॥ तच्छ्रुत्वा प्रहसन्वाक्यं देवान्ब्रह्मा तदाऽब्रवीत् ॥ चिरं स्थितानि विज्ञायागच्छध्वं तानि वै सुराः ॥ ६२ ॥
गत्वा देवास्तदा सर्वे नापश्यन्स्वं स्वमायुधम् ॥ पप्रच्छुश्च दधीचिं ते सोऽवादीन्नैव वेद्म्यहम् ॥ ६३ ॥ पुनर्ब्रह्माणमागत्य ऊचुः सर्वे मुनेर्वचः ॥
॥ ६४ ॥ ब्रह्मोवाच तदा देवान्सर्वेषां कार्यसिद्धये ॥ तस्यास्थीन्येव याचध्वं प्रदास्यति न संशयः ॥ ६५ ॥ तच्छ्रुत्वा ब्राह्मणो वाक्यं शक्रो वचन
मब्रवीत् ॥ ६६ ॥ विश्वरूपो हतो देव देवानां कार्यसिद्धये ॥ एक एव तदा ब्रह्मन्पापिष्ठोऽहं कृतः सुरैः ॥ ६७ ॥ तथा पुरोधसा चैव
निःश्रीकस्तत्क्षणात्कृतः ॥ दिष्ट्या परमया चाहं प्रविष्टो निजमंदिरम् ॥ ६८ ॥ दधीचं घातयित्वा वै तस्यास्थीनि बहून्यपि ॥
अस्त्राणि तानि भगवन्कृतानि ह्यशुभानि वै ॥ ६९ ॥ त्वष्ट्रा हि जनितो यो वै वृत्रो नामैष दैत्यराट् ॥ कथं तं घातयाम्येवं सततं
पापभीरुणा ॥ शक्रेणोक्तं निशम्याथ ब्रह्मा वाक्यमुवाच ह ॥ ७० ॥ अर्थशास्त्रपरेणैव विधिना तमबोधयत् ॥ आततायिनमायांतं ब्राह्मणं वा
तपस्विनम् ॥ हंतुकामं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ ७१ ॥ ॥ इन्द्र उवाच ॥ ॥ दधीचस्य वधाद्ब्रह्मन्नहं भीतो न संशयः ॥ तस्माद्ब्रह्म
वधात्सत्यं महदेनो भविष्यति ॥ ७२ ॥ अतो न कार्यमस्माभिर्ब्राह्मणानां तु हेलनम् ॥ हेलनाद्बहवो दोषा भविष्यंति न चान्यथा ॥ ७३ ॥
अदृष्टं परमं धर्म्यं विधिना परमेण हि ॥ कर्तव्यं मनसा चैवं पुरुषेण विजानता ॥७४॥ निःस्पृहं तस्य तद्वाक्यं श्रुत्वा ब्रह्मा ह्युवाच तम् ॥ शक्र
स्वबुद्ध्या वर्तस्व दधीचिं गच्छ सत्वरम् ॥७५॥ याचस्व तस्य चास्थीनि दधीचेः कार्यगौरवात् ॥ गुरुणा सहितः शक्रो देवैः सह समन्वितः ॥७६॥
तथेति गत्वा ते सर्वे दधीचस्याश्रमं शुभम् ॥ नानासत्त्वसमायुक्तं वैरभावविवर्जितम् ॥ ७७ ॥ मार्जारमूषकाश्चैव परस्परमुदान्विताः ॥ ऐकपद्येन
सिंहाश्च गजिन्यः कलभैः सह ॥ ७८ ॥ तथा जात्यश्च विविधाः क्रीडायुक्ताः परस्परम् ॥ नकुलैः सह सर्पाश्च क्रीडायुक्ताः परस्परम् ॥ ७९ ॥
एवंविधान्यनेकानि ह्याश्चर्याणि तदाश्रमे ॥ पश्यंतो विबुधाः सर्वे विस्मयं परमं ययुः ॥ ८० ॥ अथासने मुनिश्रेष्ठं ददृशुः परमास्थितम् ॥ तेजसा

परमेणैव भ्राजमानं यथा रविम् ॥ ८१ ॥ विभावसुं द्वितीयं वां सुवर्चासहितं तदा ॥ यथा ब्रह्मा हि सावित्र्या तथासौ मुनिसत्तमः ॥ ८२ ॥ तं प्रणम्य ततो देवा वचनं चेदमब्रुवन् ॥ त्वं दाता त्रिषु लोकेषु त्वत्सकाशमिहागताः ॥ ८३ ॥ निशम्य वचनं तेषां देवानां मुनिरब्रवीत् ॥ किमर्थमागताः सर्वे वदध्वं तत्सुरोत्तमाः ॥ ८४ ॥ प्रयच्छामि न संदेहो नान्यथा मम भाषितम् ॥ तदोचुः सहिताः सर्वे दधीचिं स्वार्थकामुकाः ॥ ८५ ॥ भयभीता वयं विप्र भवद्दर्शनकांक्षिणः ॥ त्रातारं त्वां समाकर्ण्य ब्रह्मणा नोदिता वयम् ॥८६॥ सम्प्राप्ता विद्धि तत्सर्वं दातुमर्होऽथ सुव्रत ॥ ८७ ॥ निशम्य वचनं तेषां किं दातव्यं तदुच्यताम् ॥८८॥ ततो देवाब्रुवन्विप्र दैत्यानां निधनाय नः ॥शस्त्रनिर्माणकार्यार्थं तवास्थीनि प्रयच्छ वै ॥८९॥ प्रहस्योवाच विप्रर्षिस्तिष्ठध्वं क्षणमेव हि ॥ स्वयमेव त्वहं देवास्त्यक्ष्याम्यद्य कलेवरम् ॥९०॥ इत्युक्त्वा तानथो पत्नीं समाहूय सुवर्चसम् ॥ प्रोवाच स महातेजाः शृणु देवि शुचिस्मिते ॥ ९१ ॥ अस्थ्यर्थं याचितो देवैस्त्यजाम्येतत्कलेवरम् ॥ ब्रह्मलोकं व्रजाम्यद्य परमेण समाधिना ॥ ९२ ॥ मयि याते ब्रह्मलोकं त्वं स्वधर्मेण तत्र माम् ॥ प्राप्स्यस्येव न संदेहो वृथा चिन्तां च मा कृथाः ॥ ९३ ॥ इत्युक्त्वा तां स्वपत्नीं स प्रेषयामास चाश्रमम् ॥ ततो देवाग्रतो विप्रः समाधिमगमत्तदा ॥९४॥ समाधिना परेणैव विसृज्य स्वं कलेवरम् ॥ ब्रह्मलोकं गतः सद्यः पुनर्नावर्तते यतः॥९५॥ दधीचिनामा मुनिवृंदवर्यः शिवप्रियः शिवदीक्षाभियुक्तः ॥ परोपकारार्थमिदं कलेवरं शीघ्रं स विप्रोऽत्यजदात्मना तदा ॥ ९६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे देवैरस्थिकृताऽभ्यर्थितस्य दधीचेर्योगेन स्वदेहविसर्जनंनाम षोडशोऽध्यायः॥ ॥ १६ ॥छ॥ लोमश उवाच ॥ ॥ ततः सर्वे सुरगणा दृष्ट्वा तं विलयं गतम् ॥ चिंतयंतः सुरगणाः कथं च विदधामहे ॥ १ ॥ सुरभिं चाह्वयित्वाथ तदोवाच शचीपतिः ॥ कलेवरं दधीचस्य लिह्यास्त्वं वचनान्मम ॥२॥ तथेति च वचो मत्वा तत्क्षणादेव लिह्य तत् ॥ निर्मांसं च कृतं सद्यस्तया धेन्वा कलेवरम् ॥३॥ जगृहुस्तानि चास्थीनि चक्रुः शस्त्राणि वै सुराः ॥ तस्य वंशोद्भवं वज्रं शिरो ब्रह्मशिरस्तथा ॥४॥ अन्यानि चास्थीनि बहूनि तस्य ऋषेस्तदानीं जगृहुः सुराश्च ॥ तथा शिराजालमयांश्च पाशांश्चक्रुः सुरा वैरयुताश्च दैत्यान् ॥ ५ ॥ शस्त्राणि कृत्वा ते सर्वे महाबलपराक्रमाः ॥ ययुर्देवास्त्वरायुक्ता वृत्रघातनतत्पराः ॥६॥ ततः सुवर्चाश्च दधीचिपत्नी या प्रेषिता सा सुरकार्यसिद्धये ॥ व्यलोकयत्तत्र समेत्य सर्वं मृतं पतिं देहमथो ददर्श तम् ॥ ७ ॥ ज्ञात्वा च तत्सर्वमिदं सुराणां कृत्यं तदानीं च चुकोप साध्वी ॥ ददौ सती शापमतीव रुष्टा तदा सुवर्चा ऋषिवर्यपत्नी ॥ ८ ॥

१ इवार्थे 'वा' शब्दः । २ ब्रुवन्—अब्रुवन्—अडभाव आर्षः । ३ वंशोद्भवं--पृष्ठवंशास्थ्युद्भवम्--इत्यर्थः ।

अहो सुरा दुष्टतराश्च सर्वे सर्वे ह्यशक्ताश्च तथैव लुब्धाः ॥ तस्माच्च सर्वेऽप्रजसो भवंतु दिवौकसोऽद्यप्रभृतीत्युवाच सा ॥ ९ ॥ एवं शापं ददौ तेषां सुराणां सा तपस्विनी ॥ प्रविश्याश्वत्थमूले सा स्वोदरं दारयत्तदा ॥ १० ॥ निर्गतो जठराद्गर्भो दधीचस्य महात्मनः ॥ साक्षाद्रुद्रावतारोऽसौ पिप्पलादो महाप्रभः ॥ ११ ॥ प्रहस्य जननी गर्भमुवाच रुषितेक्षणा ॥ सुवर्चा तं पिप्पलादं चिरं तिष्ठास्य सन्निधौ ॥ १२ ॥ अश्वत्थस्य महाभाग सर्वेषां सफलो भवेः ॥ तथैव भाषमाणा सा सुवर्चा तनयं प्रति ॥ पतिमन्वगमत्साध्वी परमेण समाधिना ॥ १३ ॥ एवं दधीचपत्नी सा पतिना स्वर्गमाव्रजत् ॥ १४ ॥ ते देवाः कृतशस्त्रास्त्रा दैत्यान्प्रति समुत्सुकाः ॥ आजग्मुश्चेंद्रमुख्यास्ते महाबलपराक्रमाः ॥ १५ ॥ गुरुं पुरस्कृत्य तदाज्ञया ते गणाः सुराणां बहवस्तदानीम् ॥ भुवं समागत्य च मध्यदेशमूचुश्च सर्वे परमास्त्रयुक्ताः ॥ १६ ॥ समागतानुपसृत्य देवांश्चेंद्रपुरोगमान् ॥ ययौ वृत्रो महादैत्यो दैत्यवृन्दसमावृतः ॥ १७ ॥ यथा मेरोश्च शिखरं परिपूर्णं प्रदृश्यते ॥ तथा सोऽपि महातेजा विश्वकर्म्मसुतो महान् ॥ १८ ॥ तेन दृष्टो महेन्द्रश्च महेंद्रेण महासुरः ॥ देवानां दानवानां च दर्शनं च महाद्भुतम् ॥ १९ ॥ तदा ते बद्धवैराश्च देवदैत्याः परस्परम् ॥ अन्योन्यमभिसंरब्धा जगर्जुः परमाद्भुतम् ॥ २० ॥ वादित्राणि च भीमानि वाद्यमानानि सर्वशः ॥ श्रूयंतेऽत्र गभीराणि सुरासुरसमागमे ॥ २१ ॥ वाद्यमानेषु तूर्येषु ते सर्वे त्वरयान्विताः ॥ अनेकैः शस्त्रसंघातैर्जघ्नुरन्योन्यमोजसा ॥ २२ ॥ तदा देवासुरे युद्धे त्रैलोक्यं सचराचरम् ॥ भयेन महता युक्तं बभूव गतचेतनम् ॥ २३ ॥ छेदिताः स्फोटिताश्चैव केचिच्छस्त्रैर्द्विधा कृताः ॥ नाराचैश्च तथा केचिच्छस्त्रास्त्रैः शकलीकृताः ॥ २४ ॥ भल्लैश्चैरुर्हताः केचिद्व्यंगभूता दिवौकसः ॥ रश्मयो मेघसंभूताः प्रकाशंते नभस्स्विव ॥ २५ ॥ शिरांसि पतितान्येव बहूनि च नभस्तलात् ॥ नक्षत्राणीव च यथा महाप्रलयसंकुलम् ॥ २६ ॥ प्रवर्तितं मध्यदेशे सर्वभूतक्षयावहम् ॥ शक्रेण सह संग्रामं चकार नमुचिस्तदा ॥ २७ ॥ वज्रेण जघ्ने तरसा नमुचिं देवराट् स्वयम् ॥ न रोमैकं च त्रुटितं नमुचेरसुरस्य च ॥ २८ ॥ वज्रेणापि तदा सर्वे विस्मयं परमं गताः ॥ असुराश्च सुराश्चैव महेंद्रो व्रीडितस्तदा ॥ २९ ॥ गदया नमुचिं जघ्ने गदा सापि विचूर्णिता ॥ नमुचेरंगलग्नापि पपात वसुधातले ॥ ३० ॥ तथा शूलेन महता तं जघान पुरंदरः ॥ तच्छूलं शतधा चूर्णं नमुचेरंगमाश्रितम् ॥ ३१ ॥ एवं तं विविधैः शस्त्रैराजघान सुरारिहा ॥ प्रहस्यमानो नमुचिर्न जघान पुरंदरम् ॥ ३२ ॥ तूष्णींभूतस्तदा चेंद्रश्चिंतया परया युतः ॥ किं कार्यं किमकार्यं वा इतींद्रो नाविदत्तदा ॥ ३३ ॥ एतस्मि

१ दारयत्--अदारयत्--अडभाव आर्षः ।

न्तरे तत्र महायुद्धे महाभये ॥ जाता नभोगता वाणी इंद्रमुद्दिश्य सत्वरम् ॥ ३४ ॥ जह्येनमद्याशु महेंद्र दैत्यं दिवौकसां घोरतरं भयावहम् ॥ फेनेन चैवाशु महासुरेन्द्रमपां समीपेन दुरासदेन ॥ ३५ ॥ अन्येन शस्त्रेण च आहतोऽसौ वध्यः कदाचिन्न भवत्ययं तु ॥ तस्माच्च देवेश वधार्थमस्य कुरु प्रयत्नं नमुचेर्दुरात्मनः ॥ ३६ ॥ निशम्य वाचं परमार्थयुक्तां दैवीं सदानंदकरीं शुभावहाम् ॥ चक्रे परं यत्नवतां वरिष्ठो गत्वोदधेः पारमनंतवीर्यः ॥ ३७ ॥ तत्रागतं समीक्ष्याथ नमुचिः क्रोधमूर्छितः ॥ हत्वा शूलेन देवेंद्रं प्रहसन्निदमब्रवीत् ॥ ३८ ॥ समुद्रस्य तटः[1] कस्मात्सेवितः सुरसत्तम ॥ विहाय रणभूमिं च त्यक्तशस्त्रोऽभवद्भवान् ॥ ३९ ॥ त्वदीयेनैव वज्रेण किं कृतं मम दुर्मते ॥ ॥ ४० ॥ तथान्यानि च शस्त्राणि अस्त्राणि सुबहूनि च ॥ गृहीतानि पुरा मंद हंतुं मामेव चाधुना ॥ ४१ ॥ किं करिष्यसि मां हंतुं युद्धाय समुपस्थितः ॥ केन शस्त्रेण रे मंद योद्धुमिच्छसि संयुगे ॥ ४२ ॥ त्वां घातयामि चाद्यैव यदि तिष्ठसि संयुगे ॥ नो चेद्गच्छ मया मुक्तश्चिरं जीव सुखी भव ॥ ४३ ॥ एवं स गर्वितं तस्य वाक्यमाहवशोभिनः ॥ श्रुत्वा महेंद्रोऽपि रुषा जगृहे फेनमद्भुतम् ॥ ४४ ॥ फेनं करस्थं दृष्ट्वा तु असुरा जहसुस्तदा ॥ ४५ ॥ क्षयं गतानि चास्त्राणि फेनेनैव पुरंदरः ॥ हंतुमिच्छति मामद्य शतक्रतुरुदारधीः ॥ ४६ ॥ एवं प्रहस्य नमुचिरवज्ञाय पुरंदरम् ॥ सावज्ञं पुरतस्तस्थौ नमुचिर्दैत्यपुंगवः ॥ ४७ ॥ तदैव तं स फेनेन शीघ्रमिंद्रो जघान ह ॥ ४८ ॥ हते तु नमुचौ देवाः सर्वे चैव मुदान्विताः ॥ साधुसाध्विति शब्देन ऋषयश्चाभ्यपूजयन् ॥ ४९ ॥ तदा सर्वे जयं प्राप्ता हत्वा नमुचिमाहवे ॥ दैत्यास्ते कोपसंरब्धा योद्धुकामा मुदान्विताः ॥ ५० ॥ पुनः प्रववृते युद्धं देवानां दानवैः सह ॥ शस्त्रास्त्रैर्बहुधा मुक्तैः परस्परवधैषिभिः ॥ ५१ ॥ यदा ते ह्यसुरा देवैः पातिताश्च पुनःपुनः ॥ तदा वृत्रो महातेजाः शतक्रतुमुपाव्रजत् ॥ ५२ ॥ वृत्रं दृष्ट्वा तदा सर्वे ससुरासुरमानवाः ॥ भयेन महताविष्टाः पतिता भुवि शेरते ॥५३॥ एवं भीतेषु सर्वेषु सुरसिद्धेषु वै तदा ॥ इंद्रश्चैरावणारूढो वज्रपाणिः प्रतापवान् ॥५४॥ छत्रेण ध्रियमाणेन चामरेण विराजितः ॥ तदा सर्वैः समेतो हि लोकपालैः प्रतापितः ॥ ५५ ॥ वृत्रं विलोक्य ते सर्वे लोकपाला महेश्वराः ॥ भयभीताश्च ते सर्वे शिवं शरणमन्वयुः ॥ ५६ ॥ मनसाचिंतयन्सर्वे शंकरं लोकशंकरम् ॥ लिंगं संपूज्य विधिवन्महेंद्रो जयकामुकः ॥ ५७ ॥ गुरुणा विदितः सद्यो विश्वासेन परेण हि ॥ उवाच च तदा शक्रं बृहस्पतिरुदारधीः ॥ ५८ ॥ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ कार्तिके शुक्लपक्षे तु

[1]--'तटं त्रिषु' इत्यमरात्--पुंस्त्वमपि ।

मंदवारे त्रयोदशी ॥ समग्रा यदि लभ्येत सर्वप्राप्त्यै न संशयः ॥ ५९ ॥ तस्यां प्रदोपसमये लिंगरूपी सदाशिवः ॥ पूजनीयो हि देवेंद्र सर्व कामार्थसिद्धये ॥ ६० ॥ स्नात्वा मध्याह्नसमये तिलामलकसंयुतम् ॥ शिवस्य चार्चनं कुर्याद्गंधपुष्पफलादिभिः ॥ ६१ ॥ पश्चात्प्रदोपवेलायां स्थावरं लिंगमर्च्चयेत् ॥ स्वयंभु स्थापितं चापि पौरुपेयमपौरुपम् ॥ ६२ ॥ जने वा विजने वापि अरण्ये वा तपोवने ॥ तल्लिंगमर्च्चयेद्भक्त्या प्रदोपे तु विशेपतः ॥ ६३ ॥ ग्रामाद्बहिः स्थितं लिंगं ग्रामाच्छतगुणं फलम् ॥ बाह्याच्छतगुणं पुण्यमरण्ये लिंगमद्भुतम् ॥ ६४ ॥ आरण्याच्छतगुणं पुण्यमर्चितं पार्वतं यथा ॥ पार्वताच्चैव लिंगाच्च फलं चायुतसंज्ञितम् ॥ तपोवनाश्रितं लिंगं पूजितं वा महाफलम् ॥ ६५ ॥ तस्मादेतद्विभागेन शिवपूजनार्चनं बुधैः ॥ कर्तव्यं निपुणत्वेन तीर्थस्नानादिकं तथा ॥ ६६ ॥ पंचपिंडान्समुद्धृत्य स्नानमात्रेण शोभनम् ॥ कूपे स्नानं प्रकुर्वीत उद्धृतेन विशेपतः ॥६७॥ तडागे दश पिंडांश्च उद्धृत्य स्नानमाचरेत् ॥ नदीस्नानं विशिष्टं च महानद्यां विशेपतः ॥ ६८ ॥ सर्वेपामपि तीर्थानां गंगास्नानं विशिष्यते ॥ देवखाते च तत्तुल्यं प्रशस्तं स्नानमाचरेत् ॥ ६९ ॥ प्रदीपानां सहस्रेण दीपनीयः सदाशिवः ॥ तथा दीपशतेनापि द्वात्रिंशद्दीपमालया ॥७०॥ घृतेन दीपयेद्दीपाञ्छिवस्य परितुष्टये ॥ तथा फलैश्च दीपैश्च नैवेद्यैर्गंधधूपकैः ॥७१॥ उपचारैः पोडशभिर्लिंगरूपी सदाशिवः ॥ पूज्यः प्रदोपवेलायां नृभिः सर्वार्थसिद्धये ॥ ७२ ॥ प्रदक्षिणं प्रकुर्वीत शतमष्टोत्तरं तथा ॥ नमस्कारान्प्रकुर्वीत तावत्संख्यान्प्रयत्नतः ॥७३॥ प्रदक्षिणनमस्कारैः पूजनीयः सदाशिवः ॥ नाम्नां शतेन रुद्रोऽसौ स्तवनीयो यथाविधि ॥ ७४ ॥ नमो रुद्राय भीमाय नीलकण्ठाय वेधसे ॥ कपर्दिने सुरेशाय व्योमकेशाय वै नमः ॥ ७५ ॥ वृपध्वजाय सोमाय नीलकण्ठाय वै नमः ॥ दिगंबराय भर्गाय उमाकांतकपर्दिने ॥ ७६ ॥ तपोमयाय व्याप्ताय शिपिविष्टाय वै नमः ॥ व्यालप्रियाय व्यालाय व्यालानां पतये नमः ॥ ७७ ॥ महीधराय व्याघ्राय पशूनां पतये नमः ॥ त्रिपुरांतकसिंहाय शार्दूलोग्ररवाय च ७८ ॥ मीनाय मीननाथाय सिद्धाय परमेष्ठिने ॥ कामांतकाय बुद्धाय बुद्धीनां पतये नमः ॥ ७९ ॥ कपोताय विशिष्टाय शिष्टाय परमात्मने ॥ वेदाय वेदबीजाय देवगुह्याय वै नमः ॥ ८० ॥ दीर्घाय दीर्घदीर्घाय दीर्घार्घाय महाय च ॥ नमो जगत्प्रतिष्ठाय व्योमरूपाय वै नमः ॥ ८१ ॥ गजासुरविनाशाय ह्यंधकासुरभेदिने ॥ नीललोहितशुक्लाय चण्डमुण्डप्रियाय च ॥ ८२ ॥ भक्तिप्रियाय देवाय ज्ञानज्ञानाव्ययाय च ॥ महेशाय नमस्तुभ्यं महादेवहराय च ॥ ८३ ॥ त्रिनेत्राय त्रिवेदाय वेदांगाय नमोनमः ॥ अर्थाय अर्थरूपाय परमार्थाय वै नमः ॥ ८४ ॥ विश्वरूपाय विश्वाय विश्वनाथाय वै नमः ॥ शंकराय च कालाय कालावयवरूपिणे ॥ ८५ ॥ अरूपाय च

सूक्ष्माय सूक्ष्मसूक्ष्माय वै नमः ॥ श्मशानवासिने तुभ्यं नमस्ते कृत्तिवाससे ॥ ८६ ॥ शशांकशेखरायैव रुद्रविश्वाश्रयाय च ॥ दुर्गाय दुर्गसाराय दुर्गावयवसाक्षिणे ॥ ८७ ॥ लिंगरूपाय लिंगाय लिंगानां पतये नमः ॥ नमः प्रणवरूपाय प्रणवार्थाय वै नमः ॥ ८८ ॥ नमोनमः कारणकारणाय ते मृत्युंजयायात्मभवस्वरूपिणे ॥ त्रियंबकायासितकंठ भर्ग गौरीपते सकलमंगलहेतवे नमः ॥ ८९ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ नाम्नां शतं महेशस्य उच्चार्यं व्रतिना तदा ॥ प्रदक्षिणनमस्कारैरेतत्संख्यैः प्रयत्नतः ॥ कार्यं प्रदोषसमये तुष्ट्यर्थं शंकरस्य च ॥ ९० ॥ एवं व्रतं समुद्दिष्टं तव शक्र महामते ॥ शीघ्रं कुरु महाभाग पश्चाद्युद्धं कुरु प्रभो ॥ ९१ ॥ शंभोः प्रसादात्सर्वं ते भविष्यति जयादिकम् ॥ ९२ ॥ वृत्रो ह्ययं महातेजा दैतेयस्तपसा पुरा ॥ शिवं प्रसादयामास पर्वते गंधमादने ॥ ९३ ॥ नाम्ना चित्ररथो राजा वनं चित्ररथस्य तत ॥ एतज्जानीहि भो इन्द्र शिवपुर्याः समीपतः ॥ ९४ ॥ यस्मिन्वने महाभाग न संति च षडूर्मयः ॥ तस्माच्चैत्ररथं नाम वनं परममंगलम् ॥ तस्य राज्ञः शिवेनैव दत्तं यानं महाद्भुतम् ॥ ९५ ॥ कामगं किंकिणीयुक्तं सिद्धचारणसेवितम् ॥ गंधर्वैरप्सरोयक्षैः किंनरैरुपशोभितम् ॥ ९६ ॥ ततस्तेनैव यानेन पृथिवीं पर्यटन्पुरा ॥ तथा गिरीशमुख्यांश्च द्वीपांश्च विविधांस्तथा ॥ ९७ ॥ एकदा पर्यटन्राजा नाम्ना चित्ररथो महान् ॥ कैलासमागतस्तत्र स ददर्श पराद्भुतम् ॥ ९८ ॥ सभातलं महेशस्य गणैश्चैव विराजितम् ॥ अर्द्धांगलग्नया देव्या शोभितं च महेश्वरम् ॥ ९९ ॥ निरीक्ष्य देव्या सहितं सदाशिवं देव्यान्वितं वाक्यमिदं बभाषे ॥ १०० ॥ वयं च शंभो विषयान्विताश्च मंत्र्यादयः स्त्रीजिताश्चापि चान्ये ॥ न लोकमध्ये वयमेव चाज्ञाः स्त्रीसेवनं लज्जया नैव कुर्मः ॥ १०१ ॥ एतद्वाक्यं निशम्याथ महेशः प्रहसन्निव ॥ उवाच न्यायसंयुक्तं सर्वेषामपि शृण्वताम् ॥ १०२ ॥ भयं लोकापवादाच्च सर्वेषामपि नान्यथा ॥ ग्रासितं कालकूटं च सर्वेषामपि दुर्जरम् ॥ १०३ ॥ तथापि उपहासो मे कृतो राज्ञा हि दुर्जरः ॥ तं चित्ररथमाहूय गिरिजा वाक्यमब्रवीत् ॥ १०४ ॥ ॥ गिरिजोवाच ॥ ॥ रे दुरात्मन्कथं त्वज्ञ शंकरश्चोपहासितः ॥ मया सहैव मंदात्मन्द्रक्ष्यसे कर्मणः फलम् ॥ १०५ ॥ साधूनां समचित्तानामुपहासं करोति यः ॥ देवो वाप्यथ वा मर्त्यः स विज्ञेयोऽधमाधमः ॥ १०६ ॥ एते मुनींद्राश्च महानुभावास्तथा ह्यमी ऋषयो वेदगर्भाः ॥ तथैव सर्वे सनकादयो ह्यमी अज्ञाश्च सर्वे शिवमर्चयंते ? ॥ १०७ ॥ रे मूढ सर्वेषु जनेष्वभिज्ञस्त्वमेक एवाद्य न चापरे जनाः ॥ तस्मादभिज्ञं हि करोमि दैत्यं देवैर्द्विजैश्चापि बहिष्कृतं त्वाम् ॥ १०८ ॥ एवं शप्तस्तया देव्या भवान्या राजसत्तमः ॥ राजा चित्ररथः सद्यः पपात सहसा दिवः ॥ १०९ ॥ आसुरीं योनिमासाद्य वृत्रोनाम्नाऽभवत्तदा ॥ तपसा परमेणैव त्वष्ट्रा संयोजितः

क्रमात् ॥ ११० ॥ तपसा तेन महता अजेयो वृत्र उच्यते ॥ तस्माच्छंभुं समभ्यर्च्य प्रदोषे विधिनाऽधुना ॥ १११ ॥ जहि वृत्रं महादैत्यं देवानां कार्यसिद्धये ॥ गुरोस्तद्वचनं श्रुत्वा उवाचाथ शतक्रतुः ॥ सोद्यापनविधिं ब्रूहि प्रदोषस्य च मेऽधुना ॥ ११२॥ ॥ बृहस्पतिरुवाच ॥ ॥ कार्तिके मासि संप्राप्ते मंदवारे त्रयोदशी ॥ संपूर्तिस्तु भवेत्तत्र संपूर्णव्रतसिद्धये ॥ ११३ ॥ वृषभो राजतः कार्यः पृष्ठे तस्य सुपीठकम् ॥ तस्योपरि न्यसेद्देवमुमाकांतं त्रिलोचनम् ॥ ११४ ॥ पंचवक्रं दशभुजमर्द्धांगे गिरिजां सतीम् ॥ एवं चोमामहेशं च सौवर्णं कारयेद्बुधः ॥ ११५ ॥ सवृषं ताम्रपत्रे च वस्त्रेण परिगुंठिते ॥ स्थापयित्वोमया सार्द्धं नानाभोगसमन्वितम् ॥ ११६ ॥ विधिना जागरं कुर्याद्रात्रौ श्रद्धासमन्वितः ॥ पंचामृतेन स्नपनं कार्यमादौ प्रयत्नतः ॥ ११७ ॥ गोक्षीरस्नानं देवेश गोक्षीरेण मया कृतम् ॥ स्नपनं देवदेवेश गृहाण परमेश्वर ॥ ११८ ॥ दध्ना चैव मया देव स्नपनं क्रियतेऽधुना ॥ गृहाण च मया दत्तं सुप्रसन्नो भवाद्य वै ॥ ११९ ॥ सर्पिषा च मया देव स्नपनं क्रियतेऽधुना ॥ गृहाण श्रद्धया दत्तं तव प्रीत्यर्थमेव च ॥ १२० ॥ इदं मधु मया दत्तं तव प्रीत्यर्थमेव च ॥ गृहाण त्वं हि देवेश मम शांतिप्रदो भव ॥ १२१ ॥ सितया देवदेवेश स्नपनं क्रियतेऽधुना ॥ गृहाण श्रद्धया दत्तां सुप्रसन्नो भव प्रभो ॥ १२२ ॥ एवं पंचामृतेनैव स्नपनीयो वृषध्वजः ॥ पश्चादर्घ्यं प्रदातव्यं ताम्रपात्रेण धीमता ॥ अनेनैव च मंत्रेण उमाकांतस्य तुष्टये ॥ १२३ ॥ अर्घ्योऽसि त्वमुमाकांत अर्घेणानेन वै प्रभो ॥ गृहाण त्वं मया दत्तं प्रसन्नो भव शंकर ॥ १२४ ॥ मया दत्तं च ते पाद्यं पुष्पगंधसमन्वितम् ॥ गृहाण देवदेवेश प्रसन्नो वरदो भव ॥ १२५ ॥ विष्टरं विष्टरेणैव मया दत्तं च वै प्रभो ॥ शांत्यर्थं तव देवेश वरदो भव मे सदा ॥ १२६ ॥ आचमनीयं मया दत्तं तव विश्वेश्वर प्रभो ॥ गृहाण परमेशान तुष्टो भव ममाद्य वै ॥ १२७ ॥ ब्रह्मग्रन्थिसमायुक्तं ब्रह्मकर्मप्रवर्तकम् ॥ यज्ञोपवीतं सौवर्णं मया दत्तं तव प्रभो ॥ १२८ ॥ सुगंधं चंदनं देव मया दत्तं च वै प्रभो ॥ भक्त्या परं मया शंभो सुगंधं कुरु मां भव ॥ १२९ ॥ दीपं हि परमं शंभो घृतप्रज्वलितं मया ॥ दत्तं गृहाण देवेश मम ज्ञानप्रदो भव ॥ १३० ॥ दीपं विशिष्टं परमं सर्वौषधिविजृंभितम् ॥ गृहाण परमेशान मम शांत्यर्थमेव च ॥ १३१ ॥ दीपावलिं मया दत्तां गृहाण परमेश्वर ॥ आरार्तिकप्रदानेन मम तेजःप्रदो भव ॥ १३२ ॥ फलदीपादिनैवेद्यतांबूलादिक्रमेण च ॥ पूजनीयो विधानज्ञैस्तस्यां रात्रौ प्रयत्नतः ॥ १३३ ॥ पश्चाज्जागरणं कार्यं गृहे वा देवतालये ॥ वितानमंडपं कृत्वा नानाश्चर्यसमन्वितम् ॥ गीतवादित्रनृत्येन अर्चनीयः सदाशिवः ॥ १३४ ॥ अनेनैव विधानेन प्रदोषोद्यापने विधिः ॥ कार्यो विधिमता शक्र सर्वकार्यार्थसिद्धये ॥१३५॥ गुरुणा कथितं सर्वं तच्चकार शतक्रतुः ॥ तेनैव च सहायेन इंद्रो युद्धपरायणः ॥१३६॥

वृत्रं प्रति सुरैः सार्द्धं युयुधे च शतक्रतुः ॥ तुमुलं युद्धमभवद्देवानां दानवैः सह ॥ १३७ ॥ तस्मिन्सुतुमुले गाढे देवदैत्यक्षयावहे ॥ द्वंद्वयुद्धं सुतुमुलमतिवेलं भयावहम् ॥ १३८ ॥ व्योमो यमेन युयुधे ह्यग्निना तीक्ष्णकोपनः ॥ वरुणेन महादंष्ट्रो वायुना च महाबलः ॥ १३९ ॥ द्वन्द्वयुद्धरताः सर्वे अन्योन्यबलकांक्षिणः ॥ १४० ॥ तथैव ते देववरा महाभुजाः संग्रामशूरा जयिनस्तदाऽभवन् ॥ पराजयं दैत्यवराश्च सर्वे प्रापतास्तदानीं परमं समंतात् ॥ १४१ ॥ दृष्ट्वा सुरैर्दैत्यवरान्पराजितान्पलायमानानथ कान्दिशीकान् ॥ तदैव वृत्रः परमेण मन्युना महाबलो वाक्यमिदं बभाषे ॥ १४२ ॥ ॥ वृत्र उवाच ॥ ॥ हे दैत्याः परमार्तांश्च कस्माद्यूयं भयातुराः ॥ पलायनपराः सर्वे विसृज्य रणमद्भुतम् ॥ १४३ ॥ स्वंस्वं पराक्रमं वीरा युद्धाय कृतनिश्चयाः ॥ दर्शयध्वं सुरगणास्सूदयध्वं महाबलाः॥१४४॥ गदाभिः पट्टिशैः खड्गैः शक्तितोमरमुद्गरैः ॥ असिभिर्भिंदिपालैश्च पाशतोमरमुष्टिभिः ॥ १४५ ॥ तदा देवाश्च युयुधुर्दधीचास्थिसमुद्भवैः ॥ शस्त्रैरस्त्रैश्च परमैरसुरान्समदारयन् ॥१४६॥ पुनर्दैत्या हता देवैः प्रापतास्तेपि पराजयम् ॥ पुनश्च तेन वृत्रेण नोद्यमानाः सुरान्प्रति ॥ १४७ ॥ यदा हि ते दैत्यवराः सुरेशैर्निहन्यमानाश्च विदुद्रुवुर्दिशः ॥ केचिद्दृष्ट्वा दानवास्ते तदानीं भीतित्रस्ताः क्लीबरूपाः क्रमेण॥१४८॥वृत्रेण कोपिना चैवं धिक्कृता दैत्यपुंगवाः ॥ हे पुलोमन्महाभाग वृषपर्वन्नमोस्तु ते ॥१४९॥ हे धूम्राक्ष महाकाल महादैत्य वृकासुर ॥ स्थूलाक्ष हे महादैत्य स्थूलदंष्ट्र नमोस्तु ते ॥ १५० ॥ स्वर्गद्वारं विहायैव क्षत्रियाणां मनस्विनाम् ॥ पलायध्वे किमर्थं वा संग्रामाङ्गणमुत्तमम् ॥ १५१ ॥ संगरे मरणं येषां ते यांति परमं पदम् ॥ यत्र तत्र च लिप्सेत संग्रामे मरणं बुधः ॥ १५२ ॥ त्यजन्ति संगरं ये वै ते यांति निरयं ध्रुवम् ॥ १५३ ॥ ये ब्राह्मणार्थे भृत्यार्थे स्वार्थे वै शस्त्रपाणयः ॥ संग्रामं ये प्रकुर्वंति महापातकिनो नराः ॥ १५४ ॥ शस्त्रघातहता ये वै मृता वा संगरे तथा ॥ ते यांति परमं स्थानं नात्र कार्या विचारणा ॥ १५५ ॥ शस्त्रैर्विच्छिन्नदेहा ये गवार्थे स्वामिकारणात् ॥ रणे मृताः क्षता ये वै ते यांति परमां गतिम् ॥ १५६ ॥ तस्माद्रणेऽपि ये शूराः. पापिनो निहताः पुरः ॥ प्राप्नुवंति परं स्थानं दुर्लभं ज्ञानिनामपि ॥ १५७ ॥ अथवा तीर्थगमनं वेदाध्ययनमेव च ॥ देवतार्चनयज्ञादिश्रेयांसि विविधानि च ॥ १५८ ॥ एकपद्येन तान्येव कलां नार्हंति षोडशीम् ॥ संग्रामे पतितानां च सर्वशास्त्रेष्वयं विधिः ॥ १५९॥ तस्माद्युद्धावदानं च कर्तव्यमविशंकितैः ॥ भवद्भिर्नान्यथा कार्यं देववाक्यप्रमाणतः ॥ १६० ॥ यूयं सर्वे शौरवृत्त्या समेताः कुलेन शीलेन महानुभावाः ॥ पदानि तान्येव पलायमाना गच्छंत्यशूरा रणमंडलाच्च ॥ १६१ ॥

१ अस्य श्लोकस्य पूर्वश्लोकस्थेन 'दर्शयध्वम्'—इति क्रियापदेनान्वयः ।

त एव सर्वे खलु पापलोकान्गच्छंति नूनं वचनात्स्मृतेश्च ॥ १६२ ॥ ये पापिष्ठास्त्वधर्म्मस्था ब्रह्मघ्ना गुरुतल्पगाः ॥ नरकं यांति ते पापं तथैव
रणविच्युताः ॥ १६३ ॥ तस्माद्भवद्भिर्योद्धव्यं स्वामिकार्यभरक्षमैः ॥ एवमुक्तास्तदा तेन वृत्रेणापि महात्मना ॥ १६४ ॥ चक्रुस्ते वचनं तस्य
असुराश्च सुरान्प्रति ॥ चक्रुः सुतुमुलं युद्धं सर्वलोकभयंकरम् ॥ १६५ ॥ तस्मिन्प्रवृत्ते तुमुले विगाढे वृत्रो महादैत्यपतिः स एकः ॥ उवाच रोषेण
महाद्भुतेन शतक्रतुं देववरैः समेतम् ॥ १६६ ॥ ॥ वृत्र उवाच ॥ ॥ शृणु वाक्यं मया चोक्तं धर्म्मार्थसहितं हितम् ॥ त्वं देवानां पतिर्भूत्वा न
जानासि हिताहितम् ॥ १६७ ॥ किंबलार्थपरो भूत्वा विश्वरूपो हतस्त्वया ॥ प्राप्तमद्यैव भो इंद्र तस्येदं कर्म्मणः फलम् ॥ १६८ ॥ ये दीर्घदर्शिनो
मंदा मूढा धर्मबहिष्कृताः ॥ अकल्पाः कार्यसिद्ध्यर्थं यत्कुर्वंति च निष्फलम् ॥ तत्सर्वं विद्धि देवेंद्र मनसा संप्रधार्यताम् ॥ १६९ ॥ तस्माद्ध
र्म्मपरो भूत्वा युध्यस्व गतकल्मषः ॥ भ्रातृहा त्वं ममैवेंद्र तस्मात्त्वां घातयाम्यहम् ॥ १७० ॥ मा प्रयाहि स्थिरो भूत्वा देवैश्च परिवारितः ॥ एव
मुक्तस्तु वृत्रेण शक्रोऽतीव रुषान्वितः ॥ ऐरावतं समारुह्य ययौ वृत्रजिघांसया ॥ १७१ ॥ इंद्रमायांतमालोक्य वृत्रो बलवतां वरः ॥ उवाच
प्रहसन्वाक्यं सर्वेषां शृण्वतामपि ॥ १७२ ॥ आदौ मां प्रहरस्वेति तस्मात्त्वां घातयाम्यहम् ॥ १७३ ॥ इत्येवमुक्तो देवेंद्रो जघान गदया
भृशम् ॥ वृत्रं बलवतां श्रेष्ठं जानुदेशे महाबलम् ॥ १७४ ॥ तामापतंतीं जग्राह करेणैकेन लीलया ॥ तयैवैनं जघानाशु गदया त्रिदिवेश्वरम् ॥
॥ १७५ ॥ सा गदा पातयामास सवज्रं च पुरंदरम् ॥ पतितं शक्रमालोक्य वृत्र ऊचे सुरान्प्रति ॥ १७६ ॥ नयध्वं स्वामिनं देवाः स्वपुरीमम
रावतीम् ॥ १७७ ॥ एतच्छ्रुत्वा वचः सत्यं वृत्रस्य च महात्मनः ॥ तथा चक्रुः सुराः सर्वे रणाच्चेंद्रं समुत्सुकाः ॥ १७८ ॥ अपोवाह्य गजस्थं
हि परिवार्य भयातुराः ॥ सुराः सर्वे रणं हित्वा जग्मुस्ते त्रिदिवं प्रति ॥ १७९ ॥ ततो गतेषु देवेषु ननर्त च महासुरः ॥ वृत्रो जहास च परं तेना
पूर्यत दिक्तटम् ॥ १८० ॥ चचाल च मही सर्वा सशैलवनकानना ॥ चुक्षुभे च तदा सर्वं जंगमं स्थावरं तथा ॥ १८१ ॥ श्रुत्वा प्रयातं देवेंद्रं
ब्रह्मा लोकपितामहः ॥ उपयातोऽथ देवेंद्र स्वकमण्डलुवारिणा ॥ अस्पृशल्लब्धसंज्ञोऽभूत्तत्क्षणाच्च पुरंदरः ॥ १८२ ॥ दृष्ट्वा पितामहं चाग्रे व्रीडायु
क्तोऽभवत्तदा ॥ महेंद्रं त्रपया युक्तं ब्रह्मोवाच पितामहः ॥ १८३ ॥ ॥ ब्रह्मोवाच ॥ ॥ वृत्रो हि तपसा युक्तो ब्रह्मचर्यव्रते स्थितः ॥ त्वष्टुश्च
तपसा युक्तो वृत्रश्चायं महायशाः ॥ अजेयस्तपसोग्रेण तस्मात्त्वं तपसा जय ॥१८४॥ वृत्रासुरो दैत्यपतिश्च शक्र ते समाधिना परमेणैव जय्यः ॥

१ स्वयम्-इति शेषः ।

निशम्य वाक्यं परमेष्ठिनो हरिः सस्मार देवं वृषभध्वजं तदा ॥ १८५ ॥ स्तुत्या तदा तं स्तवमानो महात्मा पुरंदरो गुरुणा नोदितो हि ॥ १८६ ॥
॥ इंद्र उवाच ॥ ॥ नमो भर्गाय देवाय देवानामतिदुर्गम ॥ वरदो भव देवेश देवानां कार्यसिद्धये ॥ १८७ ॥ एवं स्तुतिपरो भूत्वा शचीपतिरु
दारधीः ॥ स्वकार्यदक्षो मंदात्मा प्रपंचाभिरतः खलु ॥ १८८ ॥ प्रपंचाभिरता मूढाः शिवभक्तिपरा ह्यपि ॥ न प्राप्नुवंति ते स्थानं परमीशस्य
रागिणः ॥ १८९ ॥ निर्मला निरहंकारा ये जनाः पर्युपासते ॥ मृडं ज्ञानप्रदं चेशं परेशं शंभुमेव च ॥ १९० ॥ तेषां परेषां वरद इहामुत्र च
शंकरः ॥ महेंद्रेण स्तुतः शर्वो रागिणा परमेण हि ॥ १९१ ॥ रागिणां हि सदा शंभुर्दुर्लभो नात्र संशयः ॥ तस्माद्विरागिणां नित्यं सन्मुखो हि
सदाशिवः ॥ १९२ ॥ राजा सुराणां हि महानुरागी स्वकर्मसंसिद्धिमहाप्रवीणः ॥ तस्मात्सदा क्लेशपरः शचीपतिः स्वकामभावारभपरो हि
नित्यम् ॥ १९३ ॥ स्तवमानं तदा चेंद्रमब्रवीत्कार्यगौरवात् ॥ विज्ञायाखिलदृग्द्रष्टा महेशो लिंगरूपवान् ॥ १९४ ॥ इंद्र गच्छ सुरैः सार्द्धं वृत्रं
वै दानवं प्रति ॥ तपसैव च साध्योऽयं रणे जेतुं शतक्रतो ॥ १९५ ॥ ॥ इंद्र उवाच ॥ ॥ केनोपायेन साध्योऽयं वृत्रो दैत्यवरो महान् ॥
तच्छीघ्रं कथ्यतां शंभो येन मे विजयो भवेत् ॥ १९६ ॥ ॥ रुद्र उवाच ॥ ॥ रणे न शक्यते हंतुमपि देववरैरपि ॥ तस्मात्त्वया हि कर्तव्यं
कुत्सितं कर्म चाद्य वै ॥ १९७ ॥ अस्य शापः पुरा दत्तः पार्वत्या मम सन्निधौ ॥ असौ चित्ररथो नाम्ना विख्यातो भुवनत्रये ॥ १९८ ॥ पर्यटन्सु
विमानेन मया दत्तेन भास्वता ॥ उपहासादिमां योनिं संप्राप्तो दैत्यपुंगवः ॥ १९९ ॥ तस्मादजेयं जानीहि रणे रणविदां वर ॥ एवमुक्तो महें
द्रोऽयं शंभुना योगिना भृशम् ॥ २०० ॥ तथेति मत्वा शक्रोऽसौ नियमं तमुपाददे ॥ २०१ ॥ रंध्रं प्रतीक्ष्य वृत्रस्य तत्समीपे सहस्रकम् ॥ वत्स
राणां महाभागा वसन्हंतुं मनो दधे ॥ २०२ ॥ अंतर्वेद्यां बहिः स्थित्वा वज्रपाणिरनुज्ञया ॥ गुरोः पुरोधसश्चैव स्वकार्यमकरोद्भृशम् ॥
॥ २०३ ॥ एकदा नर्म्मदायां वै वृत्रो दानवपुंगवः ॥ दैत्यैः परिवृतः सर्वैः समायातो यदृच्छया ॥ २०४ ॥ इंद्रः पराभवं
प्राप्तो नीतो देवैर्दिवं प्रति ॥ अहमेव हतारिश्च नान्योस्ति सदृशो मम ॥ २०५ ॥ मन्यमानः सदा वृत्रः पौरुषेण समन्वितः ॥
प्रदोषसमये विप्रा नर्मदायामुपस्थितः ॥ २०६ ॥ दृष्टश्चेंद्रेण सुमहानसुरैः परिवारितः ॥ वृत्रो बलवतां श्रेष्ठः प्रदोषसमये तदा
॥ २०७ ॥ तस्मिन्प्रदोषे संयुक्ता मंदवारे त्रयोदशी ॥ नोदितो गुरुणा चेंद्रः करे गृह्य बृहस्पतिः ॥ २०८ ॥ प्रदक्षिणानमस्कारैर्यथोक्तविधिना
तदा ॥ पूजितो लिंगरूपी च ओंकारो नर्मदातटे ॥ २०९ ॥ प्रदोषव्रतमाहात्म्याद्वज्रपाणिः प्रतापवान् ॥ संजातस्तत्क्षणादेव प्रसादाच्छंकरस्य

च ॥ २१० ॥ वृत्रोपि तपसा युक्तः प्रदोपसमये महान् ॥ निद्रासक्तोऽभवत्तत्र शुंडेन प्रतिबोधितः ॥ २११ ॥ स्वापात्प्रदोपवेलायां तपसा चार्जितं फलम् ॥ प्रनष्टं तत्क्षणादेव निःश्रीकत्वमुपागतः ॥ २१२ ॥ देव्याः शापाच्च संजातो वृत्रो भग्नमनोरथः ॥ २१३ ॥ संध्यापादो गतो यावद्वृत्र स्तीर्थमुपाविशत् ॥ परीतो विविधैर्दैत्यैर्नानायुधसमन्वितैः ॥ २१४ ॥ तस्य तत्कर्मणश्छिद्रं छिद्रान्वेषी शचीपतिः ॥ ज्ञात्वा गतः शनैर्हंतुमात्म शत्रुं शतक्रतुः ॥ २१५ ॥ तावद्दैत्याः सुसंरब्धा भीमा भीमपराक्रमाः ॥ उत्तस्थुर्युगपत्सर्वे दुःसहाश्च शतक्रतुम् ॥ २१६ ॥ ततस्तैरभवद्युद्धमतिप्रब लदंडिभिः ॥ सर्वे देवाः सहायार्थं तदाऽऽजग्मुः शतक्रतोः ॥ २१७ ॥ तदा दैत्याश्च देवाश्च युयुधुस्ते तरस्विनः ॥ रात्रौ युद्धं समभवत्सुरासुरविम र्दनम् ॥२१८॥ अनेकशस्त्रसंवीतं महारौद्रमवर्तत ॥ एवं प्रवर्तमाने तु संग्रामे रौद्रदारुणे ॥ तदा वृत्रोऽथ सन्नद्धो गृहीत्वा शूलमुल्बणम् ॥२१९॥ इंद्र प्रमुखतो भूत्वा जगर्जातिविभीषणम् ॥ तस्य नादप्रणादेन त्रासितं भुवनत्रयम् ॥ २२० ॥ ऐरावणं समारुह्य महेंद्रः शुशुभे तदा ॥ ध्रियमाणेन च्छत्रेण चंद्रमंडलशोभिना ॥ २२१ ॥ चामरैर्वीज्यमानोऽथ बभाषे दैत्यपुंगवम् ॥ २२२ ॥ ॥ ॥ इंद्र उवाच ॥ ॥ संग्रामं कुरु मे वृत्र बलेन महता वृतः ॥ शूरस्त्वमसि शूराणां तपसा परमेण हि ॥ २२३ ॥ एवमुक्तस्तदा तेन वृत्रो वाक्यमुवाच ह ॥ आदौ प्रहर मामिंद्र पश्चात्त्वां घातयाम्यहम् ॥ २२४ ॥ तथेति मत्वा तदतीव दुःसहं वज्रं तदानीं शतधारमेव ॥ स मोक्तुकामो हि तदा पुरंदरो निवारितस्तेन महाप्रभेण ॥ पुरोधसा बुद्धिमतां वरेण तथेति मत्वा स चकार चेंद्रः ॥ २२५ ॥ गदां प्रगृह्य देवेंद्रो वृत्रं विव्याध तां गदाम् ॥ वारयामास वृत्रोसा वतिथिं कृपणो यथा ॥ २२६ ॥ व्यर्थां च स्वगदां दृष्ट्वा इंद्रश्चिंतामवाप ह ॥ २२७ ॥ तं चिंत्यमानं स तदा पुरंदरं वृत्रो बभाषे परिभर्त्सयमानः ॥ पुराकृतं शक्र महाद्भुतं त्वया जुगुप्सितं कर्म्म च विस्मृतं किम् ॥ येनैव जातोऽसि सहस्रनेत्रः शापान्महर्षेरथ गौतमस्य ॥ २२८ ॥ ये शूराश्चें द्रियग्रामं वर्तंते हि नियम्य तु ॥ ते जयं प्राप्नुवंतीह नेतरे हि भवादृशाः ॥ २२९ ॥ रणाजिरं महाघोरं पापिनां नात्र संशयः ॥ २३० ॥ एवं निर्भर्त्सयामास देवेंद्रं दैत्यपुंगवः ॥ त्रिशूलं धूनयामास देवेंद्रो हि तडित्समम् ॥ २३१ ॥ तेन शूलेन महता वृत्रोऽद्भुतपराक्रमः ॥ बभौ तीव्रेण तपसा यथा रुद्रो युगांतकृत् ॥ २३२ ॥ तथाभूतं समालक्ष्य देवराजः शतक्रतुः ॥ अभ्युद्ययौ हंतुकामो वृत्रं दानवपुंगवम् ॥ २३३ ॥ तमायांतमभिप्रेक्ष्य हंतुकामं पुरंदरम् ॥ जहास परमं तत्र शक्रस्य च भयावहम् ॥ मुखं प्रसार्य सुमहदागतो हि पुरंदरम् ॥ २३४ ॥ ग्रस्तुकामो महातेजा दैत्यानामधिपस्तदा ॥ आगत्य सहसा शक्रं ग्रासयित्वा सकुंजरम् ॥ २३५ ॥ सवज्रं सकिरीटं च ननर्त च जगर्ज्ज च ॥

निमिषांतरमात्रेण ग्रसितोऽसौ पुरंदरः ॥ २३६ ॥ हाहाकारो महानासीद्देवानां तत्र पश्यताम् ॥ भूकम्पो हि तदा ह्यासीदुल्कापातः सह स्रशः ॥ २३७ ॥ तिमिरेणावृतं सर्वं जगत्स्थावरजंगमम् ॥ नर्तमानस्तदा वृत्रो बभूव परमद्युतिः ॥ २३८ ॥ विध्यमानास्तदा सर्वे देवा ब्रह्माणमागताः ॥ शशंसुः सर्वमेवैतद्वृत्रासुरविचेष्टितम् ॥ २३९ ॥ तच्छ्रुत्वा भगवान्ब्रह्मा व्यथितोऽतीव विस्मितः ॥ कथं जातं महेंद्रस्य व्यसनं परमाद्भुतम् ॥ २४० ॥ देवैः सह तदा ब्रह्मा सर्वलोकपितामहः ॥ तुष्टाव गिरिशं देवं परमेण समाधिना ॥ २४१ ॥ ॥ ब्रह्मोवाच ॥ ॐनमो लिंगरूपाय महादेवाय वै नमः ॥ विश्वरूपाय देवाय विरूपाक्षाय वै नमः ॥ २४२ ॥ त्राहित्राहि त्रिलोकेश वृत्रग्रस्तं पुरंदरम् ॥ तदा नभोगता वाणी सर्वेषामेव शृण्वताम् ॥ २४३ ॥ उवाच हितकामाय विधिं लिंगार्चने सती ॥ प्रदोषव्रतयुक्तेन इंद्रेण विकृतं कृतम् ॥ २४४ ॥ निर्माल्यं पीठिकां चैव च्छायाप्रासादमेव च ॥ प्रदक्षिणां कृतवता पीठिकालंघनं कृतम् ॥ २४५ ॥ लंघयंति च ये मूढास्ते वै दंड्या न संशयः ॥ चंडस्य गणमुख्यस्य तस्मात्कुर्यात्प्रयत्नतः ॥ प्रदक्षिणानमस्कारौ लिंगार्चनसमन्वितः ॥ २४६ ॥ श्रेयःप्राप्त्येकबुद्ध्या वै प्रयत्नाल्लिंगपूजनम् ॥ कार्यं दीक्षापरैर्नित्यं सर्वपापोपशांतये ॥ २४७ ॥ आशरीरं च तद्वाक्यं श्रुत्वा ब्रह्मादयः सुराः ॥ पप्रच्छुस्ते प्रांजलयो नभोवाणीं शुभावहाम् ॥ २४८ ॥ कथमर्चामहे लिंगं केनैव विधिना ततः ॥ प्रातर्मध्याह्नसमये सायंकाले तथैव च ॥ २४९ ॥ कानि पुष्पाणि सायाह्ने मध्याह्ने च तथैव हि ॥ प्रातःकाले तु तान्येव कथयस्व यथातथम् ॥ २५० ॥ तदा नभोगता वाणी कथयामास विस्तरम् ॥ २५१ ॥ करवीरं चार्कपुष्पं बृहतीपुष्पमेव च ॥ धत्तूरकुसुमं चैव शतपत्रं तथैव च ॥ २५२ ॥ आरग्वधं च पुन्नागं बकुलं नागकेशरम् ॥ ब्रध्नोत्पलं[1] कदम्बं च मंदारकुसुमं तथा ॥ २५३ ॥ बहूनि वरपुष्पाणि बहूनि कमलान्यपि ॥ त्रिकाले च पवित्राणि ज्ञेयानि सततं बुधैः ॥ २५४ ॥ जातीपुष्पं मल्लिकायाश्च पुष्पं पुष्पं मोगरकं नीलपुष्पं तथैव ॥ तथा पुष्पं कुटजं कर्णिकारं कौसुम्भाख्यं वारिजं रक्तवर्णम् ॥ २५५ ॥ एतान्येव च पुष्पाणि मध्याह्ने लिंगपूजने ॥ विशिष्टानि मयोक्तानि सायाह्ने कथयाम्यहम् ॥ २५६ ॥ चंपकानि त्रिकाले च पवित्राणि न संशयः ॥ रात्रौ मोगरकाण्येव पवित्राणि न संशयः ॥ ॥ २५७ ॥ एवमर्चनभेदांश्च ज्ञात्वा तल्लिंगपूजने ॥ कार्यो विधिर्विधिज्ञैश्च सततं च शिवालये ॥ २५८ ॥ वृषभांतरितो भूत्वा पीठिकांतरमेव च ॥ प्रदक्षिणां न कुर्वीत कुर्वन्किल्बिषमश्नुते ॥ २५९ ॥ तथा ह्यनेन शक्रेण कृतं चैव प्रदक्षिणम् ॥ राजसं भावमाश्रित्य तस्माज्जातं

१ ब्रध्नोत्पलम्—सूर्यविकासि कमलम्—इत्यर्थः । ब्रह्मोत्पलम्—इति पाठान्तरम् । २ अत्र च्छन्दोभंग इवाभाति ।

च निष्फलम् ॥ २६० ॥ ग्रसितोऽद्यैव वृत्रेण सगजो हि पुरंदरः ॥ भवद्भिरेव तत्कार्यं येन इन्द्रः प्रमुच्यते ॥ २६१ ॥ महारुद्रविधानेन मुक्तो भवति तत्क्षणात् ॥ पुरंदरो ह्ययं देवा नात्र कार्या विचारणा ॥२६२॥ तेनैव वचसा देवा रुद्रमभ्यर्च्य यत्नतः॥यथोक्तेन विधानेन रुद्रसूक्तेन यत्नतः ॥ २६३ ॥ तथा चैकादशीरुद्र्या रुद्रमभ्यर्च्य वै सुराः॥हवनं प्रत्यहं चक्रुर्दशांशेन द्विजोत्तमाः॥२६४॥जपं च पूजां हवनं च चक्रुर्विमोक्तुकामाः सहसा पुरंदरम् ॥ शंभोः प्रसादात्सहसा विनिर्गतः कुक्षिं भित्त्वा देवराजस्तदानीम् ॥ २६५ ॥ तं निर्गतं समीक्ष्याथ देवदेवेंद्रमोजसा ॥ सगजं च स वज्रं च सकिरीटं सकुण्डलम् ॥ श्रिया परमया युक्तं पुरंदरं महौजसम् ॥ २६६ ॥ देवदुंदुभयो नेदुस्तथा शंखा ह्यनेकशः ॥ गंधर्वाप्सरसो यक्षा ऋषयश्च मुदान्विताः ॥ २६७ ॥ ऐकपद्येन सर्वेषां महाहर्षो दिवौकसाम् ॥ संजातस्तत्क्षणादेव यदा मुक्तः पुरंदरः ॥ तदा शची समायाता यत्र मुक्तः पुरंदरः ॥ २६८ ॥ तत्र शच्या समेतोऽसावभिषिक्तो महर्षिभिः ॥ पुण्याहवाचनं तस्य कृतं सर्वैः प्रयत्नतः ॥ २६९ ॥ एवं तदाभिषिक्तोऽसौ महेंद्र ऋषिभिः पुनः ॥ मही मंगलभूयिष्ठा तदा जाता द्विजोत्तमाः ॥ २७० ॥ दिशः प्रसन्नतां याता निर्मलं चाभवन्नभः ॥ शांतास्तदाग्नयो ह्यास न्मनांसि च महात्मनाम् ॥ २७१ ॥ एवमादीन्यनेकानि मंगलानि ततोऽभवन् ॥ मुक्ते शतक्रतौ तस्मिन्बभूव परमाद्भुतम् ॥ २७२ ॥ एवं प्रवर्तमाने तु महतां च महोत्सवे ॥ तावद्वृत्रस्य पतितं शरीरं च भयानकम् ॥ २७३ ॥ तत्रैव ब्रह्महत्या च पापिष्ठा पतिता भुवि ॥ गंगायमुनयोर्मध्ये अंतर्वेदीति कथ्यते ॥ २७४ ॥ पुण्यभूमिरिति ख्याता प्रसिद्धा लोकपावनी ॥ वृत्रहत्याप्रतिष्ठा सा यस्मिदेशे स पापवान् ॥ २७५ ॥ मलस्य बहुसंभूत्या मालावेति प्रकीर्तिता ॥ तस्यां तु मलभूम्यां वै वृत्रस्य च महच्छिरः ॥ २७६ ॥ षण्मासेष्वपतत्सर्वैः कृत्तं देवैः सवासवैः ॥ एवं वृत्रवधं कृत्वा शक्रो जयमवाप ह ॥ २७७ ॥ इंद्रासने चोपविष्टो निरातंकः शचीपतिः ॥ एतस्मिन्नंतरे दैत्याः पातालवासिनं बलिम् ॥ शशंसुः सर्वमागत्य शक्रस्य च विचेष्टितम् ॥२७८॥ तेषां तद्वचनं श्रुत्वा वैरोचनी रुषान्वितः ॥ शुक्रं पप्रच्छ स तदा कथमिंद्रो वशी भवेत् ॥ २७९ ॥ तेनोक्तं बलये राजञ्जयस्यन्दनलब्धये ॥ महायज्ञं कुरुष्वाद्य तेन ते विजयो भवेत् ॥ २८० ॥ तेनोक्तो भृगुणा चैवं बलिर्यज्ञार्थमुद्यतः ॥ दधौ यानीह द्रव्याणि यज्ञयोग्यानि तानि वै ॥ मेलयित्वा त्वरेणैव वैरोचनिरुदारधीः ॥ २८१ ॥ प्रवर्तितो महायज्ञो भार्गवेण महात्मना ॥ दीक्षायुक्तो बलिरभूज्जुहुवे हव्यवाहनम् ॥ २८२ ॥ हूयमाने तदाग्नौ तु कर्मणा विधिहेतुना ॥ तस्माद्बलेः समुत्पन्नः स्यंदनः परमाद्भुतः ॥ २८३ ॥ हयैश्चतुर्भिः संयुक्तो ध्वजे सिंहो महाप्रभः ॥ शस्त्रास्त्रैः संयुतः श्रीमान्हयैः श्वेतैरलंकृतः ॥ २८४ ॥ ततश्चावभृथस्नानं चक्रे शुक्रप्रणोदितः ॥ स्यंदनं पूजयित्वाथ आरुरोह बलि

स्तदा ॥ २८५ ॥ दैत्यैः परिवृतः सद्यो योद्धुकामः पुरंदरम् ॥ सद्य एव दिवं प्राप्तो बलिर्वैरोचनो महान् ॥ २८६ ॥ आगत्य सेनया सार्द्धमारुरोहामरावतीम् ॥ संरुद्धां तां पुरीं दृष्ट्वा तदा ते सुरसत्तमाः ॥ विमर्शयित्वा सुचिरमूचुः सर्वे बृहस्पतिम् ॥ २८७ ॥ किं कुर्मोऽद्य महाभाग आगता दैत्यपुंगवाः ॥ योद्धुकामा महाघोराः सर्वे युद्धविशारदाः ॥ २८८ ॥ तेषां तद्वचनं श्रुत्वा बृहस्पतिरभाषत ॥ २८९ ॥ एते घृतमुखा घोरा भृगुणा नोदिताः सुराः ॥ अजेयाश्चैव ते सर्वे तपसा विक्रमेण च ॥ २९० ॥ एतन्निशम्य वचनं च गुणाभियुक्तं सर्वे सुराः समभवंस्त्रपयाभियुक्ताः ॥ इंद्रोऽपि बुद्धिविकलः परिचिंतया च व्रीडायुतः समभवत्परिभर्त्स्यमानः ॥ २९१ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे बलिदैत्यस्य संग्रामोद्योगवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ कर्मणा परिभूतो हि महेंद्रो गुरुमब्रवीत् ॥ विना यत्नेन संक्लेशात्तत्तुं कर्म्म किमुच्यताम् ॥ १ ॥ बृहस्पतिरुवाचेदं त्यक्त्वा चैवामरावतीम् ॥ यास्यामोऽन्यत्र सर्वे वै सकुटुंबा जिगीषवः ॥ २ ॥ तथा चक्रुः सुराः सर्वे हित्वा चैवामरावतीम् ॥ बर्हिणो रूपमास्थाय गतः सद्यः पुरंदरः ॥ ३ ॥ काको भूत्वा यमः साक्षात्कृकलासो धनाधिपः ॥ अग्निः कपोतको भूत्वा भेको भूत्वा महेश्वरः ॥ ४ ॥ नैर्ऋतस्तत्क्षणादेव कपोतोऽभूत्ततो गतः ॥ पाशी कपिंजलो भूत्वा वायुः पारावतोऽभवत् ॥ ५ ॥ एवं नानातनुभृतो हित्वा ते त्रिदिवं गताः ॥ कश्यपस्याश्रमं पुण्यं संप्राप्तास्ते भयातुराः ॥ ६ ॥ अदितिं मातरं सर्वे शशंसुर्दैत्यचेष्टितम् ॥ ७ ॥ अप्रियं तदुपाकर्ण्य ह्यदितिः पुत्रलालसा ॥ उवाच कश्यपं सा तु सुराणां व्यसनं महत् ॥ महर्षे श्रूयतां वाक्यं श्रुत्वा तत्कर्तुमर्हसि ॥ ८ ॥ दैत्यैः पराजिता देवा हित्वा चैवामरावतीम् ॥ त्वदीयमाश्रमं प्राप्तास्तान्रक्षस्व प्रजापते ॥ ९ ॥ तस्यास्तद्वचनं श्रुत्वा कश्यपो वाक्यमब्रवीत् ॥ तपसा महता तन्वि जानीहि त्वं च भामिनि ॥ अजेया ह्यसुराः साध्वि भृगुणा ह्यनुमोदिताः ॥ १० ॥ तेषां जयो हि तपसा उग्रेणाऽऽद्येन भामिनि ॥ कुरु शीघ्रतरेणैव सुराणां कार्यसिद्धये ॥ ११ ॥ व्रतमेतन्महाभागे कथयाम्यर्थसिद्धये ॥ तत्कुरुष्व प्रयत्नेन यथोक्तविधिना शुभे ॥ १२ ॥ मासि भाद्रपदे देवि दशम्यां नियता शुचिः ॥ एकभक्तं प्रकुर्वीत विष्णोः प्रीत्यर्थमेव च ॥ १३ ॥ प्रार्थनीयो हरिः साक्षात्सर्वकामवरेश्वरः ॥ मंत्रेणानेन सुभगे तद्भक्तैर्वरवर्णिनि ॥ १४ ॥ तव भक्तोस्म्यहं नाथ दशम्यादिदिनत्रयम् ॥ व्रतं चराम्यहं विष्णो अनुज्ञां दातुमर्हसि ॥ १५ ॥ अनेनैव च मंत्रेण प्रार्थनीयो जगत्पतिः ॥ एकभक्तं प्रकुर्वीत तच्च भक्तं च केवलम् ॥ ॥ १६ ॥ रंभापत्रे च भोक्तव्यं वर्जितं लवणेन हि ॥ एकादश्यां चोपवासं प्रकुर्वीत प्रयत्नतः ॥ १७ ॥ रात्रौ जागरणं कुर्यात्प्रयत्नेन सुमध्यमे ॥

द्वादश्यां निपुणत्वेन पारणा तु विधानतः ॥ कर्तव्या ज्ञातिभिः सार्द्धं भोजयित्वा द्विजोत्तमान् ॥ १८ ॥ एवं द्वादशमासांस्तु कुर्याद्व्रतमतंद्रितः ॥ मासि भाद्रपदे प्राप्ते एकादश्यां प्रयत्नतः ॥ विष्णुमभ्यर्च्य यत्नेन कलशोपरि संस्थितम् ॥ १९ ॥ सौवर्णं राजतं वापि यथाशक्त्या प्रकल्पयेत् ॥ श्रवणेन तु संयुक्तां द्वादशीं पापनाशिनीम् ॥ व्रती उपवसेद्यत्नात्सर्वदोषप्रशांतये ॥ २० ॥ एवं हि कश्यपेनोक्तं श्रुत्वाऽदितिरथाचरत् ॥ व्रतं सांवत्सरं यावन्नियमेन समन्विता ॥ २१ ॥ वर्षांतेन व्रतेनैव परितुष्टो जनार्दनः ॥ प्रादुर्बभूव द्वादश्यां श्रवणेन तदा द्विजाः ॥ २२ ॥ बटुरूपधरः श्रीशो द्विभुजः कमलेक्षणः ॥ अतसीपुष्पसंकाशो वनमालाविभूषितः ॥ २३ ॥ तं दृष्ट्वा विस्मयाविष्टा पूजामध्येऽदितिस्तदा ॥ कश्यपेन समायुक्ता साऽस्तौपीत्कमलेक्षणा ॥२४॥ ॥ अदितिरुवाच ॥ ॥ नमोनमः कारणकारणाय ते विश्वात्मने विश्वसृजे चिदात्मने ॥ वरेण्यरूपाय परावरात्मने ह्यकुंठबोधाय नमोनमस्ते ॥ २५ ॥ इति स्मृतस्तदाऽदित्या देवानां पतिरच्युतः ॥ प्रहस्य भगवानाह अदितिं देवमातरम् ॥ २६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ तपसा परमेणैव प्रसन्नोऽहं तवानघे ॥ अमुना वपुषा चैव देवानां कार्यसिद्धये ॥ २७ ॥ श्रुत्वा भगवतो वाक्यमदितिस्तमुवाच ह ॥ भगवन्पराजिता देवा असुरैर्बलवत्तरैः ॥ तान्रक्ष शरणापन्नान्सुरान्सर्वाञ्जनार्दन ॥ २८ ॥ निशम्य वाक्यं किल तच्च तस्या विष्णुर्विकुंठाधिपतिः स एकः ॥ ज्ञात्वा च सर्वं सुरचेष्टितं तदा बलेश्च सर्वं च चिकीर्षितं च ॥ २९ ॥ किं कार्यमद्यैव मया हि कार्यं येनैव देवा जयमाप्नुवंति ॥ पराजयं दैत्यवराश्च सर्वे विष्णुः परात्मैव विचिंत्य सर्वम् ॥ ३० ॥ गदामुवाच भगवान्गच्छस्वाद्य वधं प्रति ॥ वैरोचनिं महाभागे घातयस्व त्वरान्विता ॥ ३१ ॥ गदोवाच हृषीकेशं प्रहसन्तीव भामिनी ॥ मया ह्यशक्यो वधितुं ब्रह्मण्यो हि बलिर्महान् ॥ ३२ ॥ चक्रं प्रति तदा विष्णुरुवाच परिसांत्वयन् ॥ त्वं गच्छ बलिनं हंतुं शीघ्रमेव सुदर्शन ॥ ३३ ॥ तदोवाच त्वरेणैव चक्रपाणिं सुदर्शनम् ॥ न शक्यते मया हंतुं बलिनं तं महाप्रभो ॥ ३४ ॥ ब्रह्मण्योऽसि यथा विष्णो तथासौ दैत्यपुंगवः ॥ धनुषा च तथैवोक्तः शार्ङ्गपाणिश्च विस्मितः ॥ चिंतयामास बहुधा विमृश्य सुचिरं बहु ॥ ३५ ॥ ॥ अत्रिरुवाच[1] ॥ ॥ तदा ते ह्यसुराः सर्वे किमकुर्वंस्तदुच्यताम् ॥३६॥ ॥ लोमश उवाच ॥ ॥ तदा ते ह्यसुराः सर्वे बलिप्रभृतयो दिवि ॥ रुरुधुर्नगरीं रम्यां योद्धुकामाः पुरंदरम् ॥ ३७ ॥ न विदुर्ह्यसुराः सर्वे गतान्देवांस्त्रिविष्टपात् ॥ नानारूपधरांस्तस्मात्कश्यपस्याश्रमं प्रति ॥ ३८ ॥ प्राकारमारुह्य तदा हि संभ्रमाद्दैत्याः सुरेशं प्रति हंतुकामाः ॥ यावत्प्रविष्टा ह्यमरावतीं तां शून्यामपश्यन्प

१ तेषु—नैमिषारण्ये कथाश्रवणार्थमुपविष्टेषु शौनकादिमहर्षिष्वेव मध्येऽत्रिर्नाम मुनिर्लोमशं प्रति प्रश्नमकार्षीत् । प्रसङ्गान्तरं वा संवादान्तरं वेति भ्रमितव्यम् ।

रितुष्टमानसाः ॥ ३९ ॥ इंद्रासने च शुक्रेण ह्यभिषिक्तो बलिस्तदा ॥ सहाभिषेकविधिना ह्यसुरैः परिवारितः ॥ ४० ॥ तथैवाधिष्ठितो राज्ये बलिर्वैरोचनो महान् ॥ शुशुभे परया भूत्या महेंद्राधिकृतस्तदा ॥ ४१ ॥ नागैश्चासुरसंघैश्च सेव्यमानो महेंद्रवत् ॥ सुरद्रुमो जितस्तेन कामधेनुर्मणिस्तथा ॥ ४२ ॥ दानैर्दाता च सर्वेषां येऽन्ये दानित्वमागताः ॥ सर्वेषामेव भूतानां दानैर्दाता बलिर्महान् ॥ ४३ ॥ यान्यान्कामयते कामांस्तान्सर्वान्वितरत्यसौ ॥ सर्वेभ्योऽपि स चार्थिभ्यो दानवानामधीश्वरः ॥ ४४ ॥ ॥ शौनक उवाच ॥ ॥ देवेंद्रो हि महाभाग न ददाति कदाचन ॥ कथं बलिरसौ दाता कथयस्व यथातथम् ॥ ४५ ॥ ॥ लोमश उवाच ॥ ॥ यत्नतो येन यत्किंचित्क्रियते सुकृतं नरैः ॥ शुभं वाप्यशुभं वापि ज्ञातव्यं हि विपश्चिता ॥ ४६ ॥ शक्रो हि याज्ञिको विप्रा अश्वमेधशतेन वै ॥ प्रातराज्योऽमरावत्यां केवलं भोगलोलुपः ॥ ४७ ॥ अर्थितं तत्फलं विद्धि पुनः कार्पण्यमाविशत् ॥ पुनर्मरणमाविश्य क्षीणपुण्यो भविष्यति ॥ ४८ ॥ य इंद्र कृमिरेव स्यात्कृमिरिंद्रो हि जायते ॥ तस्माद्दानात्परतरं नान्यदस्तीह मोचनम् ॥ ४९ ॥ दानाद्धि प्राप्यते ज्ञानं ज्ञानान्मोक्षो न संशयः ॥ मोक्षात्परतरा भक्तिः शूलपाणौ हि वै द्विजाः ॥ ५० ॥ ददाति सर्वं सर्वेशः प्रसन्नात्मा सदाशिवः ॥ किंचिदल्पेन तोयेन परितुष्यति शंकरः ॥ ५१ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ विरोचनसुतेनेदं कृतमस्ति न संशयः ॥ ५२ ॥ कितवो हि महापापो देवब्राह्मणनिंदकः ॥ निकृत्या परयोपेतः परदाररतो महान् ॥ ॥ ५३ ॥ एकदा तु महापापात्कैतवाच्च जितं धनम् ॥ गणिकार्थे च पुष्पाणि तांबूलं चंदनं तथा ॥५४॥ कौपीनमात्रं तस्यैव कितवस्य प्रदृश्यते ॥ कराभ्यां स्वस्तिकं कृत्वा गंधमाल्यादिकं च यत् ॥ ५५ ॥ गणिकार्थमुपादाय धावमानो गृहं प्रति ॥ तदा प्रस्खलितो भूमौ निपपात च तत्क्षणात् ॥ ५६ ॥ पतनान्मूर्छया युक्तः क्षणमात्रं तदाऽभवत् ॥ ततो मूर्छागतस्यास्य पापिनोऽनिष्टकारिणः ॥ ५७ ॥ बुद्धिः सद्यः समुत्पन्ना कर्मणा प्राक्तनेन हि ॥ निर्वेदं परमापन्नः कितवो दुःखसंयुतः ॥ ५८ ॥ भूम्यां निपतितं यच्च गंधपुष्पादिकं महत् ॥ समर्पितं शिवायेति कितवेनाप्यबुद्धिना ॥ ५९ ॥ तेनैव सुकृतेनैव याम्यैर्नीतो यमालयम् ॥ तं पापीति यमोऽवोचत्सर्वलोकभयावहः ॥ ६० ॥ पचनीयोसि मे मंद नरकेषु महत्सु च ॥ इत्युक्तो धर्मराजेन कितवो वाक्यमब्रवीत् ॥ ६१ ॥ पापाचारो हि भगवन्कश्चिन्नैव मया कृतः ॥ विमृश्यतां मे[1] सुकृतं याथातथ्येन भो यम ॥ ६२ ॥ चित्रगुप्तेन चाख्यातं दत्तमस्ति त्वया पुनः ॥ पतितं चैव देहांते शिवाय परमात्मने ॥ ६३॥ तेन कर्मविपाकेन घटिकात्रयमेव

[1] मे—मया—इत्यर्थः ।

च ॥ शचीपतेः पदं विद्धि प्राप्स्यसि त्वं न संशयः ॥ ६४ ॥ आगतस्तत्क्षणादेवः सुरैः सर्वैः समन्वितः ॥ ऐरावतं समारूढो नीतोऽसौ शक्रमंदिरम् ॥ शक्रः प्रबोधितस्तेन गुरुणा भावितात्मना ॥ ६५ ॥ घटिकात्रितयं यावत्तावत्कालं पुरंदर ॥ निजासनेऽपि संस्थाप्यः कितवोऽपि ममाज्ञया ॥ ६६ ॥ गुरोर्वचनमाकर्ण्य कृत्वा शिरसि तत्क्षणात् ॥ गतोऽन्यत्रैव शक्रोऽसौ कितवो हि प्रवेशितः ॥ भवनं देवराजस्य नानाश्चर्यसमन्वितम् ॥ ६७ ॥ शक्रासनेऽभिषिक्तोऽसौ राज्यं प्राप्तः शतक्रतोः ॥ शंभोर्गंधप्रदानाच्च पुष्पतांबूलसंयुतम् ॥ ६८ ॥ किं पुनः श्रद्धया युक्ताः शिवाय परमात्मने ॥ अर्पयंति सदा भक्त्या गंधपुष्पादिकं महत् ॥ ६९ ॥ शिवसायुज्यमायाताः शिवसेनासमन्विताः ॥ प्राप्नुवंति महामोदं शक्रो ह्येषां च किंकरः ॥ ७० ॥ शिवपूजारतानां च यत्सुखं शांतचेतसाम् ॥ ब्रह्मशक्रादिकानां च तत्सुखं दुर्लभं महत् ॥ ७१ ॥ वराकास्ते न जानंति मूढा विषयलोलुपाः ॥ वंदनीयो महादेवो ह्यर्चनीयः सदाशिवः ॥ ७२ ॥ पूजनीयो महादेवः प्राणिभिस्तत्त्ववेदिभिः ॥ तस्मादिंद्रत्वमगमत्कितवो घटिकात्रयम् ॥ ७३ ॥ पुरोधसाभिषिक्तोऽसौ पुरंदरपदे स्थितः ॥ तदानीं नारदेनोक्तः कितवोऽसौ महायशाः ॥ ७४ ॥ इन्द्राणीमानयस्त्वेति यथा राज्यं सुशोभितम् ॥ ततः प्रहस्य चोवाच कितवः शिववल्लभः ॥ ७५ ॥ इन्द्राण्या नास्ति मे कार्यं न वाच्यं ते महामते ॥ एवमुक्त्वाथ कितवः प्रदातुमुपचक्रमे ॥ ७६ ॥ ऐरावतमगस्त्याय प्रददौ शिववल्लभः ॥ विश्वामित्राय कितवो ददौ हयमुदारधीः ॥ ७७ ॥ उच्चैःश्रवससंज्ञं च कामधेनुं महायशाः ॥ ददौ वशिष्ठाय तदा चिंतामणिं महाप्रभम् ॥ ७८ ॥ गालवाय महातेजास्तदा कल्पतरुं च सः ॥ कौंडिन्याय महाभागः कितवोपि गृहं तदा ॥ ७९ ॥ एवमादीन्यनेकानि रत्नानि विविधानि च ॥ ददावृषिभ्यो मुदितः शिवप्रीत्यर्थमेव च ॥ ८० ॥ घटिकात्रितयं यावत्तावत्कालं ददौ प्रभुः ॥ घटिकात्रितयादूर्ध्वं पूर्वस्वामी समागतः ॥ ८१ ॥ पुरंदरोऽमरावत्यामुपविश्य निजासने ॥ ऋषिभिः संस्तुतश्चैव शच्या सह तदाऽभवत् ॥ ८२ ॥ शचीमुवाच दुर्मेधाः कितवेनासि भामिनि ॥ भुक्ता ह्यस्यैव कथय याथातथ्येन शोभने ॥ ८३ ॥ तदा प्रहस्य चोवाच पुरंदरमकल्मषा ॥ आत्मौपम्येन सर्वत्र पश्यसि त्वं पुरंदर ॥ ८४ ॥ असौ महात्मा कितवस्वरूपी शिवप्रसादात्परमार्थविज्ञः ॥ वैराग्ययुक्तो हि महानुभावो येनापि सर्वं परमं प्रपन्नम् ॥ ८५ ॥ राज्यादिकं मोहमयं च पाशं त्यक्त्वा परेभ्यो विजयी स जातः ॥ ८६ ॥ वचो निशम्य देवेश इंद्राण्याः स पुरंदरः ॥ व्रीडायुक्तोऽभवत्तूष्णीमिंद्रासनगतस्तदा ॥ ८७ ॥ बृहस्पतिमुवाचेदं वाक्यं वाक्यविदां वरः ॥ ऐरावतो न

१ प्रदानक्रियाविशेषणमिदम् । शम्भोः पुष्पतांबूलसंयुतं यथा स्यात्तथा गन्धप्रदानात्—इत्यन्वयो बोद्धव्यः ।

दृश्येत तथैवोच्चैःश्रवा हयः ॥ ८८ ॥ पारिजातादयः सर्वे पदार्थाः केन वा हृताः ॥ ततो गुरुरुवाचेदं कितवेन कृतं महत् ॥ ८९ ॥ ऋषिभ्यो दत्तमद्यैव यावत्सत्ता हि तस्य वै ॥ स्वसत्तायां महत्यां च स्वसत्ता ये भवंति च ॥ ९० ॥ अप्रमत्ताश्च ये नित्यं शिवध्यानपरायणाः ॥ ते प्रियाः शंकरस्यैव हित्वा कर्मफलानि वै ॥ केवलं ज्ञानमाश्रित्य ते यांति परमं पदम् ॥ ९१ ॥ एतच्छ्रुत्वा वचनं तस्य चेंद्रो बृहस्पतेर्वाक्यमिदं बभाषे ॥ प्रायो यमो वक्ष्यति सर्वमेतत्समृद्धये ह्यात्मनश्चैव शक्रः ॥ ९२ ॥ तथेति मत्वा गुरुणा सहैव राजा सुराणां सहसा जगाम ॥ स्वकार्यकामो हि तथा पुरंदरो ययौ पुरीं संयमिनीं तदानीम् ॥ ९३ ॥ यमेन पूज्यमानो हि शक्रो वाक्यमुवाच ह ॥ त्वया दत्तं मम पदं कितवाय दुरात्मने ॥ ९४ ॥ अनेनैतत्कृतं कर्म्म जुगुप्सितं महत्तरम् ॥ मदीयानि च रत्नानि यानि सर्वाण्यनेन वै ॥ एभ्य एभ्यः प्रदत्तानि धर्म्म जानीहि तत्त्वतः ॥ ९५ ॥ त्वं धर्मनामासि कथं कितवाय प्रदत्तवान् ॥ मम राज्यविनाशाय कृतमस्ति त्वयाऽधुना ॥ ९६ ॥ आनयस्व महाभाग गजादीनि च सत्वरम् ॥ अन्यानि चैव रत्नानि दत्तानि च यतस्ततः ॥ ९७ ॥ निशम्य वाक्यं शक्रस्य यमो वचनमब्रवीत् ॥ कितवं च रुषाविष्टः किं त्वया पापिना कृतम् ॥ ९८ ॥ भोगार्थं चैव यद्दत्तं शक्रराज्यं त्वयाऽधुना ॥ प्रदत्तं च द्विजातिभ्यो ह्यन्यथा वै कृतं महत् ॥ ९९ ॥ अकार्यं वै त्वया मूढ परद्रव्यापहारणम् ॥ तेन पापेन महता निरयं प्रतिगच्छसि ॥ १०० ॥ यमस्य वचनं श्रुत्वा कितवो वाक्यमब्रवीत् ॥ अहं निरयगामी च नात्र कार्या विचारणा ॥ १०१ ॥ यावत्स्वता मम विभो जाता शक्रासने तथा ॥ तावद्दत्तं हि यत्किंचिद्द्विजेभ्यो हि यथातथम् ॥ १०२ ॥ ॥ यम उवाच ॥ ॥ दानं प्रशस्तं भूम्यां च दृश्यते कर्म्मणः फलम् ॥ स्वर्गे दानं न दातव्यं केनचित्कस्यचित्कचित् ॥ तस्माद्दंड्योऽसि रे मूढ अशास्त्रीयं कृतं त्वया ॥ १०३ ॥ गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ॥ सर्वेषां पापशीलानां शास्ताऽहं नात्र संशयः ॥ १०४ ॥ एवं निर्भर्त्सयित्वा तं कितवं धर्मराट्स्वयम् ॥ उवाच चित्रगुप्तं च नरके पच्यतामयम् ॥ तदा प्रहस्य चोवाच चित्रगुप्तो यमं प्रति ॥ १०५ ॥ कथं निरयगामित्वं कितवस्य भविष्यति ॥ येन दत्तो ह्यगस्त्याय गज ऐरावतो महान् ॥ १०६ ॥ तथाश्वो ह्यब्धिसंभूतो गालवाय महात्मने ॥ विश्वामित्राय भद्रं ते चिंतामणिर्महाप्रभः ॥ १०७ ॥ एवमादीनि रत्नानि दत्तानि कितवेन हि ॥ तेन कर्मविपाकेन पूजनीयो जगत्रये ॥ १०८ ॥ शिवमुद्दिश्य यद्दत्तं स्वर्गे मर्त्ये च यैर्नरैः ॥ तत्सर्वं त्वक्षयं विद्यान्निश्छिद्रं कर्म चोच्यते ॥ तस्मान्नरकगामित्वं कितवस्य न विद्यते ॥ १०९ ॥ यानियानि च पापानि कितवस्य महात्मनः ॥ भस्मीभूतानि सर्वाणि जातानि स्मरणाच्च

वै ॥ ११० ॥ शंभोः प्रसादात्सर्वाणि सुकृतानि च तत्क्षणात् ॥ तद्वचश्चित्रगुप्तस्य निशम्य प्रेतराट् स्वयम् ॥ १११ ॥ प्रहस्यावाङ्मुखो भूत्वा इद माह शतक्रतुम् ॥ त्वं हि राजा सुरेंद्राणां स्थविरो राज्यलंपटः ॥ ११२ ॥ अश्वमेधशतेनैव एकं जन्मार्जितं कृतम् ॥ त्वया नास्त्यत्र संदेहो ह्यर्जितं तेन वै महत् ॥ ११३ ॥ प्रार्थयित्वा ह्यगस्त्यादीन्मुनीन्सर्वान्विशेषतः ॥ अर्थेन प्रणिपातेन त्वया लभ्यानि तानि च ॥ गजादिकानि रत्नानि येन त्वं च सुखी त्वरन् ॥ ११४ ॥ तथेति मत्वा वचनं पुरंदरो गतः पुरीं स्वामविवेकदृष्टिः ॥ अभ्यर्थयामास विनम्रकंधरश्चर्षींस्ततो लब्ध वान्पारिजातम् ॥ ११५ ॥ अनेनैव प्रकारेण लब्धराज्यः पुरंदरः ॥ जातस्तदामरावत्यां राजा सह महात्मभिः ॥ ११६ ॥ कितवस्य पुनर्जन्म दत्तं वैवस्वतेन हि ॥ किंचित्कर्मविपाकेन विरोचनसुतोऽभवत् ॥ ११७ ॥ सुरुचिर्जननी तस्य कितवस्याभवत्तदा ॥ विरोचनस्य महिषी दुहिता वृषपर्वणः ॥ तस्थौ जठरमास्थाय तस्याः सोऽपि महात्मनः ॥ ११८ ॥ तदाप्रभृति तस्यैव प्रह्लादस्यात्मजात्स वै ॥ सुरुचेश्च तथाप्यासीद्धर्मे दाने महामतिः ॥ ११९ ॥ तेनैव जठरस्थेन कृता मतिरनुत्तमा ॥ कितवेन कृता विप्रा दुर्लभा या मनीषिणाम् ॥ १२० ॥ एकदा वै तदा शक्रो ययौ वैरोचनं प्रति ॥ हंतुकामो हि दैत्येंद्रं विप्रो भूत्वाऽथ याचकः ॥ १२१ ॥ विरोचनगृहं प्राप्त इंद्रो वाक्यमुवाच ह ॥ स्थविरो ब्राह्मणो भूत्वा देहीति मम सुव्रत ॥ मनस्वी त्वं च दैत्येंद्र दाता च भुवनत्रये ॥ १२२ ॥ तव विप्रा महाभाग चरितं परमाद्भुतम् ॥ वर्णयन्ति समाजेषु स्थित्वा कीर्तिं च निर्मलाम् ॥ याचकोऽहं च दैत्येंद्र दातुमर्हसि सुव्रत ॥ १२३ ॥ तस्य तद्वचनं श्रुत्वा दैत्येंद्रो वाक्यमब्रवीत् ॥ किं दातव्यं तव विभो वद शीघ्रं ममाधुना ॥ १२४ ॥ इंद्रो हि विप्ररूपेण विरोचनमुवाच ह ॥ याचयामि च दैत्येंद्र यदहं परिभावितः ॥ १२५ ॥ आत्मप्रीत्या[१] च दातव्यं मम नास्त्यत्र संशयः ॥ उवाच प्रहसन्वाक्यं प्रह्लादस्यात्मजोऽसुरः ॥ १२६ ॥ ददाम्यात्मशिरो विप्र यदि कामयसेऽधुना ॥ इदं राज्यमनायासमियं श्रीर्नान्यगामिनी ॥ अहं समर्पयिष्यामि तव नास्त्यत्र संशयः ॥ १२७ ॥ इत्युक्तस्तेन दैत्येन विमृश्य च तदा हरिः ॥ उवाच देहि मे स्वीयं शिरो मुकुटसेवितम् ॥ १२८ ॥ एवमुक्ते तु वचने शक्रेण द्विजरूपिणा ॥ त्वरन्महेंद्राय तदा शिर उत्कृत्य वै मुदा ॥ स्वकरेण ददौ तस्मै प्रह्लादस्यात्मजोऽसुरः ॥ १२९ ॥ प्रह्लादेन पुरा यस्तु कृतो धर्म्मः सुदुष्करः ॥ केवलां भक्तिमाश्रित्य विष्णोस्तत्परचेतसा ॥ १३० ॥ दानात्परतरं चान्यत्कचिद्वस्तु न विद्यते ॥ तद्दानं च महापुण्यमार्तेभ्यो यत्प्रदीयते ॥ १३१ ॥ स्वशक्त्या यच्च किंचिच्च

१ आत्मप्रीत्या च दातव्यम्—यत्तव मनसोऽत्यन्तमभीष्टं स्यात्तन्मह्यं दातव्यम्—इत्यर्थः ।

तदानंत्याय कल्पते ॥ दानात्परतरं नान्यत्त्रिषु लोकेषु विद्यते ॥ १३२ ॥ सात्त्विकं राजसं चैव तामसं च प्रकीर्तितम् ॥ तथा कृतमनेनैव दानं सात्त्विकलक्षणम् ॥ १३३ ॥ शिर उत्कृत्त्य चेंद्राय प्रदत्तं विप्ररूपिणे ॥ किरीटः पतितस्तत्र मणयो हि महाप्रभाः ॥ १३४ ॥ ऐकपद्येन पतितास्ते जाता मंडलाय वै ॥ दैत्यानां च नरेंद्राणां पन्नगानां तथैव च ॥ १३५ ॥ विरोचनस्य तद्दानं त्रिषु लोकेषु विश्रुतम् ॥ गायंत्यद्यापि कवयो दैत्येंद्रस्य महात्मनः ॥ १३६ ॥ विरोचनस्य पुत्रोऽभूत्कितवोऽसौ महाप्रभः ॥ मृते पितरि जातोऽसौ माता तस्य पतिव्रता ॥ १३७ ॥ कलेवरं च तत्याज पतिलोकं गता ततः ॥ भार्गवेणाभिषिक्तोऽसौ जनकस्य निजासने ॥ १३८ ॥ नाम्ना बलिरिति ख्यातो बभूव च महायशाः ॥ तेन सर्वे सुरगणास्त्रासिताः सुमहाबलाः ॥ १३९ ॥ गतास्ते कथिताः पूर्वं कश्यपस्याश्रमं शुभम् ॥ तदा बलिरभूदिन्द्रो देवपुर्यां महायशाः ॥ १४० ॥ स्वयं ततापं तपसा सूर्यो भूत्वा तदाऽसुरः ॥ ईशो भूत्वा स्वयं चास्ते ऐशान्यां दिशि पालयन् ॥ १४१ ॥ तथा च नैर्ऋतो भूत्वा तथा त्वंबुपतिः स्वयम् ॥ धनाध्यक्ष उदीच्यां वै स्वयमास्ते बलिस्तदा ॥ एवमास्ते बलिः साक्षात्स्वयमेव त्रिलोकभुक् ॥ १४२ ॥ शिवार्चनरतेनैव कितवेन बलिर्द्विजाः ॥ पूर्वाभ्यासेन तेनैव महादानरतोऽभवत् ॥ १४३ ॥ एकदा तु सभामध्ये आस्थितो भृगुणा सह ॥ दैत्येंद्रैः संवृतः श्रीमाञ्छंडामर्कौ वचोऽब्रवीत् ॥ ॥ १४४ ॥ आवासः क्रियतामत्र असुरैर्म्मम सन्निधौ ॥ हित्वा पातालमद्यैव मा विलंबितुमर्हथ ॥ १४५ ॥ भार्गवस्तदुपश्रुत्य प्रहस्येदमुवाच ह ॥ यज्ञैश्च विविधैश्चैव स्वर्गलोके महीयते ॥१४६॥ याज्ञिकैश्च महाराज नान्यथा स्वर्गमेव हि ॥ भोक्तुं हि पार्यते राजन्नान्यथा मम भाषितम् ॥१४७॥ गुरोर्वचनमाज्ञाय दैत्येंद्रो वाक्यमब्रवीत् ॥ मया कृतं च यत्कर्म तेन सर्वे महासुराः ॥ स्वर्गे वसंतु सुचिरं नात्र कार्या विचारणा ॥ १४८ ॥ प्रहस्यो वाच भगवान्भार्गवाणां महातपाः ॥ बलिनं बालिशं मत्वा शुक्रो बुद्धिमतां वरः ॥ १४९ ॥ यत्त्वयोक्तं च वचनं बले मम न रोचते ॥ इहैव त्वं समा गत्य वस्तुं चेच्छसि सुव्रत ॥ १५० ॥ अश्वमेधशतेनैव यज त्वं जातवेदसम् ॥ कर्म्मभूमिं गतो भूत्वा मा विलंबितुमर्हसि ॥१५१॥ तथेति मत्वा स बलिर्महात्मा हित्वा तदानीं त्रिदिवं मनस्वी ॥ दैत्यैः समेतो गुरुणा च संगतो ययौ भुवं सोनुचरैः समेतः ॥ १५२ ॥ तन्नर्मदाया गुरुकुल्यसंज्ञकं तीरे महातीर्थमुदारशोभम् ॥ गत्वा तदा दैत्यपतिर्महात्मा जित्वा समग्रं वसुधातलं च ॥१५३॥ ततोऽश्वमेधैर्बहुभिर्विचक्षणो गुरुप्रयुक्तः स महायशा बलिः ॥ ईजे च दीक्षां परमामुपेतो वैरोचनिं सत्यवतां वरिष्ठः ॥ १५४ ॥ कृत्वा ब्राह्मणमाचार्यमृत्विजः षोडशाऽभवन् ॥ सुपरीक्षितेन तेनैव भार्गवेण

१ कृतेन—इत्यध्याहारः । हे द्विजाः शिवार्चनरतेन कितवेन कृतेन तेनैव पूर्वाभ्यासेन बलिः महादानरतोऽभवत्—इति समुदितवाक्यान्वयः ।

महात्मना ॥१५५॥ यज्ञानामूनमेकेन शतं दीक्षापरेण हि ॥ बलिना चाश्वमेधानां पूर्णं कर्तुं समादधे ॥ १५६ ॥ यावद्यज्ञशतं पूर्णं तस्य राज्ञो भवि
ष्यति ॥ पुरा प्रोक्तं मया चात्र ह्यदित्या व्रतमुत्तमम् ॥ १५७ ॥ व्रतेन तेन संतुष्टो भगवान्हरिरीश्वरः ॥ बटुरूपेण महता पुत्रभूतो बभूव ह॥ १५८ ॥
अदित्याः कश्यपेनैव उपनीतस्तदा प्रभुः ॥ उपनीतेऽथ संप्राप्तो ब्रह्मा लोकपितामहः ॥ १५९ ॥ दत्तं यज्ञोपवीतं च ब्रह्मणा परमेष्ठिना ॥ दंडकाष्ठं
प्रदत्तं हि सोमेन च महात्मना ॥ १६० ॥ मेखला च समानीता अजिनं च महाद्भुतम् ॥ तथा च पादुके चैव मह्या दत्ते महात्मनः ॥ १६१ ॥
तत्र भिक्षा समानीता भवान्या चार्थसिद्धये ॥ एवं भगवते दत्तं विष्णवे बटुरूपिणे ॥ १६२ ॥ अभिवंद्य तथा श्रीशो वामनो ह्यदितिं तथा ॥ कश्यपं
च महातेजा यज्ञवाटं जगाम च ॥ याज्ञिकस्य बलेराह च्छलनार्थं स्वयं प्रभुः ॥१६३॥ तदा महेशः स जगाम स्वर्गं प्रकंपयन्गां प्रपदा भरेण ॥
स वामनो बटुरूपी च साक्षाद्विष्णुः परात्मा सुरकार्यहेतोः ॥ १६४॥ गीर्भिर्यथार्थाभिरभिष्टुतो जनैर्मुनीश्वरैर्देवगणैर्महात्मा ॥ त्वरेण गच्छन्स च
यज्ञवाटं प्राप्तस्तदानीं जगदेकबंधुः ॥ १६५ ॥ उद्गापयन्साम यतो हि साक्षाच्चकार देवो बटुरूपवेषः ॥ उद्गीयमानो भगवान्स ईश्वरो वेदांत
वेद्यो हरिरीश्वरः प्रभुः ॥ १६६ ॥ ददर्श तं महायज्ञमश्वमेधं बलेस्तदा ॥ द्वारि स्थितो महातेजा वामनो बटुरूपधृक् ॥ १६७ ॥ ब्रह्मरूपेण
महता व्याप्तमासीद्दिगंतरम् ॥ पवमानस्य च बटोर्वामनस्य महात्मनः ॥ १६८ ॥ तच्छ्रुत्वा च बलिः प्राह शंडामर्कौ च बुद्धिमान् ॥ ब्राह्मणाः
कतिसंख्याश्च आगताः संति ईक्ष्यताम् ॥ १६९ ॥ तथेति मत्वा त्वरितावुत्थितौ तौ तदा द्विजाः ॥ शंडामर्कौ समागम्य मंडपद्वारि संस्थितौ
॥ १७० ॥ ददृशाते महात्मानं श्रीहरिं बटुरूपिणम् ॥ त्वरितौ पुनरायातौ बलेः शंसयितुं तदा ॥ १७१ ॥ ब्रह्मचारी समायात एक एव न
चापरः ॥ पठनादौ महाराज चागतस्तव सन्निधौ ॥ किमर्थं तन्न जानीमो जानीहि त्वं महामते ॥ १७२ ॥ एवमुक्ते तु वचने ताभ्यां स च
महामनाः ॥ उत्थितस्तत्क्षणादेव दर्शनार्थे बटुं प्रति ॥ १७३ ॥ स ददर्श महातेजा विरोचनसुतो महान् ॥ दंडवत्पतितो भूमौ ननाम शिरसा
बटुम् ॥ १७४ ॥ आनयित्वा बटुं सद्यः संनिवेश्य निजासने ॥ अर्घ्यपाद्येन महताभ्यर्चयामास तं बटुम् ॥ १७५ ॥ विनम्रकंधरो भूत्वा
उवाच श्लक्ष्णया गिरा ॥ कुतः कस्माच्च कस्यासि तच्छीघ्रं कथ्यतां प्रभो ॥ १७६ ॥ तच्छ्रुत्वा वचनं तस्य विरोचनसुतस्य वै ॥ मनसा
ह्यपितश्चासौ वामनो वक्तुमारभत् ॥ १७७ ॥ ॥ भगवानुवाच ॥ ॥ त्वं हि राजा त्रिलोकेशो नान्यो भवितुमर्हसि ॥ स्वकुलं न्यूनतां गच्छे
द्यो वै कापुरुषः स्मृतः ॥ १७८ ॥ समं वा चाधिको वापि यो गच्छेत्पुरुषः स्मृतः ॥ त्वया कृतं च यत्कर्म्म न कृतं पूर्वजैस्तव ॥ १७९ ॥ दैत्यानां

च वरिष्ठा ये हिरण्यकशिपादयः ॥ कृतं महत्तपो येन दिव्यं वर्षसहस्रकम् ॥ १८० ॥ शरीरं भक्षितं यस्य जुषाणस्य तपो महत् ॥ पिपीलिकाभिर्बहुभिर्दंशैश्चैव समावृतम् ॥१८१॥ अभवत्तस्य तज्ज्ञात्वा सुरेंद्रो ह्यगमत्पुरा ॥ नगरं तस्य च तदा सैन्येन महता वृतः ॥१८२॥ तत्सन्निधौ हताः सर्वे असुरा दैत्यशत्रुणा ॥ विंध्या तु महिषी तस्य नीयमाना निवारिता ॥ १८३ ॥ नारदेन पुरा राजन्किंचित्कार्यं चिकीर्षुणा ॥ शंभोः प्रसादादखिलं मनसा यत्समीक्षितम् ॥ दैत्येंद्रेण च तत्सर्वं तपसैव वशीकृतम् ॥ १८४ ॥ तस्याः पुत्रो महातेजा येन नीतोऽभवत्सभाम् ॥ तस्य पुत्रो महाभाग पिता ते पितृवत्सलः ॥ नाम्ना विरोचनो विद्वानिंद्रो येन महात्मना ॥ १८५ ॥ दानेन तोषितो राजन्स्वेनैव शिरसा तदा ॥ तस्यात्मजोसि भो राजन्कृतं ते परमं यशः ॥ १८६ ॥ यशोदीपेन महता दग्धाः शलभवत्सुराः ॥ इंद्रोपि निर्जितो येन त्वया नास्त्यत्र संशयः ॥ १८७ ॥ श्रुतमस्ति मया सर्वं चरितं तव सुव्रत ॥ अल्पकोऽहमिहायातो ब्रह्मचर्यव्रते स्थितः ॥ १८८ ॥ उटजार्थे च मे देहि भूमिं भूमिभृतांवर ॥ बटोस्तस्यैव तद्वाक्यं श्रुत्वा बलिरभाषत ॥ १८९ ॥ हे बटो पंडितो भूत्वा यदुक्तं वचनं पुरा ॥ शिशुत्वात्तन्न जानासि श्रुत्वा मन्ये यथार्थतः ॥ १९० ॥ वद शीघ्रं महाभाग कियन्मात्रां महीं तव ॥ दास्यामि त्वरितेनैव मनसा तद्विमृश्यताम् ॥१९१॥ तदाह वामनो वाक्यं स्मयन्मधुरया गिरा ॥ असंतोषपरा ये च विप्रा नष्टा न संशयः ॥ १९२ ॥ संतुष्टा ये हि विप्रास्ते नान्ये वेषधरा ह्यमी ॥ स्वधर्मनिरता राजन्निर्दंभा निरवग्रहाः ॥ १९३ ॥ निर्मत्सरा जितक्रोधा वदान्या हि महामते ॥ विप्रास्ते हि महाभाग तैरियं धार्यते मही ॥ १९४ ॥ मनस्वी त्वं बहुत्वाच्च दातासि भुवनत्रये ॥ तथापि मे प्रदातव्या मही त्रिपदसंमिता ॥ १९५ ॥ बहुत्वे नास्ति मे कार्यं मह्या वै सुरसूदन ॥ प्रवेशमात्रमुटजं तथा मम भविष्यति ॥ १९६ ॥ त्रिपदं पूर्यतेऽस्माकं वस्तुं नास्त्यत्र संशयः ॥ देहि मे क्रमतो राजन्यावद्भूमिभविष्यति ॥ तावत्संख्या प्रदातव्या यदि दातासि भो बले ॥ १९७ ॥ प्रहस्य तमुवाचेदं बलिर्वैरोचनात्मजः ॥ दास्यामि ते महीं कृत्स्नां सशैलवनकाननाम् ॥ १९८ ॥ मदीयां वै महाभाग मया दत्तां गृहाण वै ॥ याचकोऽसि बटो पश्य दानं दैत्यात्प्रयाचसे ॥ १९९ ॥ याचको ह्यल्पको वास्तु दाता सर्वं विमृश्य वै ॥ तथा विलोक्य चात्मानं ह्यर्थिभ्यश्च ददाति वै ॥ २०० ॥ आत्मौपम्येन सर्वत्र यो ददाति ह्युदारधीः ॥ तस्मान्न याचितव्यं हि अर्थिना मंदभागिना ॥ २०१ ॥ बटो ददाम्यहं तेऽद्य सशैलवनकाननाम् ॥ पृथ्वीं सपर्वतां साब्धिं नान्यथा मम भाषितम् ॥२०२॥ पुनः प्रोवाच स बटुर्विरोचनसुतं प्रति ॥ पूर्यते मम दैत्येंद्र क्रमतो हि पदैस्त्रिभिः ॥२०३॥

१ अदन्तोऽप्ययं स्यादत्रतु च्छन्दोऽनुरोधेन । २ यः उदारधीः पुरुषः—सः—सर्वत्र—आत्मौपम्येन ददाति—इति योजना बोद्धव्या ।

बटोस्तद्वचनं श्रुत्वा असुरेन्द्रो बलिस्तदा ॥ उवाच प्रहसन्वाक्यं मन्यमानो बलिर्भृशम् ॥ गृह्यतां च मया दत्तां पदैस्त्रिभिरलंकृताम् ॥ २०४ ॥ इत्युक्तो वामनः प्राह प्रहसन्नसुरं प्रति ॥ संकल्प्य सकलां पृथ्वीं दातुमर्हसि सुव्रत ॥ २०५ ॥ तथेति मत्वा बलिना सुपूजितः स वामनः कश्यपनंदनो महान् ॥ बलिस्तदानीं सहसा नितांतं संस्तूयमानस्त्वृषिभिर्मुनींद्रैः ॥ २०६ ॥ तं पूजयित्वा स बलिर्यावद्दातुं समुद्यतः ॥ गुरुणा वारितस्तावद्विरोचनसुतो महान् ॥ २०७ ॥ न दातव्यं त्वया दानं विष्णवे बटुरूपिणे ॥ इंद्रार्थमागतः सद्यो यज्ञविघ्नं करोति ते ॥ तस्मात्त्वया न पूज्यो हि विष्णुरध्यात्मदीपकः ॥ २०८ ॥ पुरा कृतमनेनैव मोहिनीरूपधारिणा ॥ देवेभ्यश्चामृतं दत्तं राहुर्येन हतो महान् ॥ २०९ ॥ येन विद्राविता दैत्याः कालनेमिर्हतो बली ॥ २१० ॥ एवंविधोऽयं पुरुषो महात्मा स ईश्वरो विश्वपतिः स एव ॥ विमृश्य सर्वं मनसा महामते हिताहितं कर्तुमिहार्हसि त्वम् ॥ २११ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे बलियज्ञे वामनगमनवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ एवं संबोधितो दैत्यो गुरुणा भार्गवेण हि ॥ उवाच प्रहसन्वाक्यं मेघगंभीरया गिरा ॥ १ ॥ त्वयोक्तोहं हितार्थाय यैर्वाक्यैश्चालितोऽस्म्यहम् ॥ तव वाक्यं मम प्रीत्यै हितमप्यहितं भवेत् ॥ २ ॥ दास्यामि भिक्षितं चास्मै विष्णवे बटुरूपिणे ॥ पात्रीभूतो ह्ययं विष्णुः सर्वकर्मफलेश्वरः ॥ ३ ॥ येषां हृदि स्थितो विष्णुस्ते वै पात्रतमा ध्रुवम् ॥ यस्य नाम्ना सर्वमिदं पवित्रमिव चोच्यते ॥ ४ ॥ येन वेदाश्च यज्ञाश्च मंत्रतंत्रादयो ह्यमी ॥ सर्वे संपूर्णतां यांति सोऽयं विश्वेश्वरो हरिः ॥ ५ ॥ आगतः कृपया मेद्य सर्वात्मा हरिरीश्वरः ॥ उद्धर्तुं मां न संदेह एतज्जानीहि तत्त्वतः ॥ ६ ॥ तस्य तद्वचनं श्रुत्वा चुकोप च रुषान्वितः ॥ भार्गवः शप्तुमारेभे दैत्येंद्रं धर्म्मवत्सलम् ॥ ७ ॥ मम वाक्यमतिक्रम्य दातुमिच्छस्यरिंदम ॥ विगुणो भव रे मंद तस्मात्त्वं निःश्रिको भव ॥ ८ ॥ एवं शशाप च तदा परमार्थविज्ञं शिष्यं महात्मानमगाधबोधम् ॥ स वै जगामाथ महाकविस्त्वरात्स्वमाश्रमं धर्म्मविदां वरिष्ठः ॥ ९ ॥ गते तु भार्गवे तस्मिन्बलिर्विरोचनात्मजः ॥ वामनं चार्चयित्वा स महीं दातुं प्रचक्रमे ॥ १० ॥ विंध्यावलिः समागत्य बलेरर्द्धांगशोभिता ॥ अवनिज्य बटोः पादौ प्रददौ विष्णवे महीम् ॥ ११ ॥ संकलपपूर्वेण तदा विधिना विधिकोविदः ॥ संकल्पेनैव महता ववृधे भगवानजः ॥ १२ ॥ यदैकेन मही व्याप्ता विष्णुना प्रभविष्णुना ॥ सर्वे स्वर्गा[1] द्वितीयेन व्याप्तास्तेन महात्मना ॥ १३ ॥ सत्यलोकगतो विष्णोश्चरणः परमेष्ठिना ॥ कमण्डलुगतेनैव

१ सर्वे स्वर्गाः--एकविंशतिः स्वर्गाः--इत्यर्थः ।

अंभसा चावनेनिजे ॥ १४ ॥ तत्पादसंपर्कजलाच्च जाता भागीरथी सर्वसुमंगला च ॥ यया त्रिलोकी च कृता पवित्रा यया च सर्वे सगराः समु
द्धृताः ॥ यया कपर्दः परिपूरितो वै शंभोस्तदानीं च भगीरथेन ॥ १५ ॥ तीर्थानां तीर्थमाद्यं च गंगाख्यमवतारितम् ॥ तद्विष्णोश्चरणेनैव समेतं
ब्रह्मणा कृतम् ॥ १६ ॥ त्रिविक्रमात्परो ह्यात्मा नाम्ना त्रिविक्रमोऽभवत् ॥ त्रिविक्रमक्रमाक्रांतं त्रैलोक्यं च तदाऽभवत् ॥ १७ ॥ पदद्वयेन वा पूर्णं
जगदेतच्चराचरम् ॥ विहाय तत्स्वरूपं च देवदेवो जनार्दनः ॥ पुनश्च बटुरूपोऽसावुपविश्य निजासने ॥ १८ ॥ तदा देवाः सगंधर्वा मुनयः सिद्ध
चारणाः ॥ आगताश्च बलेर्यज्ञं द्रष्टुं यज्ञपतिं प्रभुम् ॥ १९ ॥ तत्र ब्रह्मा समागत्य स्तुतिं चक्रे परात्मनः ॥ बलेस्तत्रैव चान्ये च दैत्येंद्राश्चागता
स्त्वरम् ॥ २० ॥ एभिः सर्वैः परिवृतो वामनो बलिसद्मनि ॥ उपविश्यासने सोऽथ उवाच गरुडं प्रति ॥ २१ ॥ दैत्योऽसौ बालिशो भूत्वा दत्तानेन
मही मम ॥ त्रिपदक्रमणेनैव गृहीतं च पदद्वयम् ॥ २२ ॥ पदमेकं प्रतिश्रुत्य न ददाति हि दुर्मतिः ॥ तस्मात्त्वया गृहीतव्यं तृतीयं पदमेव च ॥
॥ २३ ॥ इत्युक्तो गरुडस्तेन वामनेन महात्मना ॥ वैरोचनिं विनिर्भर्त्स्य वाक्यं चेदमुवाच ह ॥ २४ ॥ रे बले किं त्वया मूढ कृतमस्ति जुगुप्सि
तम् ॥ अविद्यमाने ह्यर्थे हि किं ददासि परमात्मने ॥ औदार्येण हि किं कार्यमल्पकेन त्वयाधुना ॥ २५ ॥ इत्युक्तो बलिराविष्टः स्मयमानः खगे
श्वरम् ॥ वक्ष्यमाणमिदं वाक्यं गरुत्मन्तं तदाऽब्रवीत् ॥ २६ ॥ समर्थोऽस्मि महापक्ष कृपणो न भवाम्यहम् ॥ येनेदं कारितं सर्वं तस्मै किं प्रददा
म्यहम् ॥ २७ ॥ असमर्थो ह्यहं तात कृतोऽनेन महात्मना ॥ तदोवाच बलिं सोऽपि तार्क्ष्यपुत्रो महामनाः ॥ २८ ॥ जानन्नपि च दैत्येंद्र गुरुणापि
निवारितः ॥ विष्णवेऽपि महीं प्रादास्त्वया किं विस्मृतं महत् ॥ २९ ॥ दातव्यं तत्पदं विष्णोस्तृतीयं यत्प्रतिश्रुतम् ॥ न ददासि कथं वीर निरये
च पतिष्यसि ॥ ३० ॥ न ददासि तृतीयं च पदं मे स्वामिनः कथम् ॥ बलाद्गृह्णामि रे मूढ इत्युक्त्वा तं महासुरम् ॥ बबंध वारुणैः पाशैर्विरोचन
सुतं तदा ॥ ३१ ॥ नितरां निष्ठुरो भूत्वा गरुडो जयतां वरः ॥ बद्धं स्वपतिमालोक्य विंध्यावलिः समभ्ययात् ॥ ३२ ॥ बाणमेकं समारोप्य वाम
नस्याग्रतः स्थिता ॥ वामनेन तदा पृष्टा केयं चात्राग्रतः स्थिता ॥ ३३ ॥ तदोवाच महातेजाः प्रह्लादो ह्यसुराधिपः ॥ बलेः पत्नीति त्वां प्राप्ता
इयं विंध्यावली सती ॥ ३४ ॥ प्रह्लादस्य वचः श्रुत्वा वामनो वाक्यमब्रवीत् ॥ ब्रूहि विंध्यावले वाक्यं किं कार्यं ते करोम्यहम् ॥ एवमुक्ता भग
वता विंध्यावलिरभाषत ॥ ३५ ॥ ॥ विन्ध्यावलिरुवाच ॥ ॥ कस्माद्बद्धो मम पतिर्गरुडेन महात्मना ॥ तत्कथ्यतां महाभाग त्वरन्नेव जना
र्दन ॥ तदोवाच महातेजा बटुवेषधरो हरिः ॥ ३६ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अनेनैव प्रदत्ता मे मही त्रिपदलक्षणा ॥ पदद्वयेन च मयाक्रांतं

त्रैलोक्यमद्य वै ॥ २७ ॥ अनेन मम दातव्यं तृतीयं पदमेव च ॥ तस्माद्बद्धो मया साध्वि गरुडेनैव ते पतिः ॥ ३८ ॥ श्रुत्वा भगवतो वाक्यमुवाच परमं वचः ॥ प्रतिश्रुतमनेनैव न दत्तं हि तव प्रभो ॥ ३९ ॥ क्रांतं त्रिभुवनं चाद्य त्वया विक्रमरूपिणा ॥ तदस्माकं विजघ्नीथाः स्वर्गे वाप्यथवा भुवि ॥ ४० ॥ किंचिन्न दत्ता हि विभो देवदेव जगत्पते ॥ प्रहस्य भगवानाह तदा विंध्यावलिं प्रभुः ॥ ४१ ॥ पदानि त्रीणि मे चाद्य दातव्यानि कुतोऽधुना ॥ शीघ्रं वद विशालाक्षि यत्ते मनसि वर्त्तते ॥ तदोवाच च सा साध्वी ह्युरुक्रममवस्थिता ॥ ४२ ॥ त्वया कुतो वेयमुरुक्रमेण क्रांता त्रिलोकी भुवनैकनाथ ॥ तथैव सर्वं जगदेकबंधो देयं किमस्माभिरतुल्यरूपिणे ॥ ४३ ॥ तस्माद्विहाय तद्विष्णो त्वमेवं कुरु संप्रति ॥ प्रतिश्रुतानि मे भर्त्रा पदानि त्रीणि चाधुना ॥ ददाति मे पतिस्तेद्य नात्र कार्या विचारणा ॥४४॥ निधेहि मे पदं त्वं हि शीर्ष्णि देववर प्रभो ॥ द्वितीयं मे शिशोस्त्वं हि कुरु मूर्ध्नि जगत्पते ॥ ४५ ॥ तृतीयं च जगन्नाथ कुरु शीर्ष्णि पतेर्मम ॥ एवं त्रीणि पदानीश तव दास्यामि केशव ॥ ४६ ॥ तस्यास्तद्वचनं श्रुत्वा परितुष्टो जनार्दनः ॥ उवाच श्लक्ष्णया वाचा विरोचनसुतं प्रति ॥ ४७ ॥ ॥ भगवानुवाच ॥ ॥ सुतलं गच्छ दैत्येन्द्र मा विलंबितुमर्हसि ॥ सर्वैश्चासुरसंघैश्च चिरं जीव सुखी भव ॥४८॥ परितुष्टोऽस्म्यहं तात किं कार्यं करवाणि ते ॥ सर्वेषामपि दातॄणां वरिष्ठोऽसि महामते ॥ ४९ ॥ वरं वरय भद्रं ते सर्वान्कामान्ददामि ते ॥ त्रिविक्रमेणैवमुक्तो विरोचनसुतस्तदा ॥ ५० ॥ विमुक्तो हि परिष्वक्तो देवदेवेन चक्रिणा ॥ तदा बलिरुवाचेदं वाक्यं वाक्यविशारदः ॥ ५१ ॥ त्वया कृतमिदं सर्वं जगदेतच्चराचरम् ॥ तस्मान्न कामये किंचित्त्वत्पदाब्जं विना प्रभो ॥ ५२ ॥ भक्तिरस्तु पदांभोजे तव देव जनार्दन ॥ भूयोभूयश्च देवेश भक्तिर्भवतु शाश्वती ॥५३॥ एवमभ्यर्थितस्तेन भगवान्भूतभावनः ॥ उवाच परमप्रीतो विरोचनसुतं तदा ॥ ५४ ॥ ॥ भगवानुवाच ॥ ॥ बले त्वं सुतलं याहि ज्ञातिसंबंधिभिर्वृतः ॥ एवमुक्तस्तदा तेन असुरो वाक्यमब्रवीत् ॥ ५५ ॥ सुतले किं नु मे कार्यं देवदेव वदस्व मे ॥ तिष्ठामि तव सांनिध्ये नान्यथा वक्तुमर्हसि ॥ ५६ ॥ तदोवाच हृषीकेशो बलिं तं कृपयाऽन्वितः ॥ अहं तव समीपस्थो भवामि सततं नृप ॥ ५७ ॥ द्वारि स्थितस्तव विभो निवसामि नित्यं मा खिद्यतामसुरवर्य बले शृणुष्व ॥ वाक्यं तु मे वरमहो वरदस्तवाद्य वैकुंठवासिभिरलं च भजामि गेहम् ॥ ५८ ॥ तच्छ्रुत्वा वचनं तस्य विष्णोरतुलतेजसः ॥ जगाम सुतलं दैत्यो ह्यसुरैः परिवारितः ॥ ५९ ॥ तदा पुत्रशतेनैव बाणमुख्येन सत्वरम् ॥ वसमानो महाबाहुर्दातॄणां च परा गतिः ॥ ६० ॥ त्रैलोक्ये याचका ये च सर्वे यांति बलिं प्रति ॥ द्वारि स्थितस्तस्य विष्णुः प्रयच्छति यथेप्सितम् ॥ ६१ ॥ भुक्तिकामाश्च ये केचिन्मुक्तिकामास्तथा परे ॥ येषां यज्ञे च ते विप्रास्तत्तेभ्यः

संप्रयच्छति ॥ ६२ ॥ एवंविधो बलिर्जातः प्रसादाच्छंकरस्य च ॥ पुरा हि कितवत्वेन यद्दत्तं परमात्मने ॥ ६३ ॥ अशुचिं भूमिमासाद्य गंधपुष्पादिकं महत् ॥ पतितं चार्प्पितं तेन शिवाय परमात्मने ॥ ६४ ॥ किं पुनः परया भक्त्या चार्चयंति महेश्वरम् ॥ गंधं पुष्पं फलं तोयं ते यांति शिवसन्निधिम् ॥ ६५ ॥ शिवात्परतरो नास्ति पूजनीयो हि भो द्विजाः ॥ ये हि मूकास्तथांधाश्च पंगवो ये जडास्तथा ॥ ६६ ॥ जातिहीनाश्च चंडालाः श्वपचा ह्यंत्यजा ह्यमी ॥ शिवभक्तिपरा नित्यं ते यांति परमां गतिम् ॥ ६७ ॥ तस्मात्सदाशिवः पूज्यः सर्वैरेव मनीषिभिः ॥ पूजनीयो हि संपूज्यो ह्यर्चनीयः सदाशिवः ॥ ६८ ॥ महेशं परमार्थज्ञाश्चिंतयंति हृदि स्थितम् ॥ यत्र जीवो भवत्येव शिवस्तत्रैव तिष्ठति ॥ ६९ ॥ विना शिवेन यत्किंचिदशिवं भवति क्षणात् ॥ ब्रह्मा विष्णुश्च रुद्रश्च गुणकार्यकरा ह्यमी ॥ ७० ॥ रजोगुणान्वितो ब्रह्मा विष्णुः सत्त्वगुणान्वितः ॥ तमोगुणाश्रितो रुद्रो गुणातीतो महेश्वरः ॥ ७१ ॥ लिंगरूपो महादेवो ह्यर्चनीयो मुमुक्षुभिः ॥ शिवात्परतरो नास्ति भुक्तिमुक्तिप्रदायकः ॥ ७२ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे बलये वरप्रदानवर्णनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥ ॥ ऋषय ऊचुः ॥ ॥ ब्रह्मा विष्णुश्च रुद्रश्च सगुणाः कीर्तितास्त्वया ॥ लिंगरूपी तथैवेशो निर्गुणोऽसौ कथं वद ॥ १ ॥ त्रिभिर्गुणैर्व्याप्तमिदं चराचरं जगन्महद्वाप्यथ वाल्पकं वा ॥ मायामयं सर्वमिदं विभाति लिंगं विना केन कुतोविभाति ॥ २ ॥ यद्दृश्यमानं महदल्पकं च तन्नश्वरं कृतकत्वाच्च सूत ॥ ३ ॥ तस्माद्विमृश्य भोः सूत संशयं छेत्तुमर्हसि ॥ व्यासप्रसादात्सकलं जानासि त्वं न चापरः ॥ ४ ॥ ॥ सूत उवाच ॥ ॥ व्यासेन कथितं सर्वमस्मिन्नर्थे शुकं प्रति ॥ ॥ शुक उवाच ॥ ॥ लिंगरूपी कथं शंभुर्निर्गुणः कथते त्वया ॥ एतन्मे संशयं तात च्छेत्तुमर्हस्यशेषतः ॥ ५ ॥ ॥ व्यास उवाच ॥ ॥ शृणु वत्स ब्रवीम्येतत्पुरा प्रोक्तं च नंदिना ॥ अगस्त्यं पृच्छमानं च येन सर्वं श्रुतं शुक ॥ ६ ॥ निर्गुणं परमात्मानं विद्धि लिंगस्वरूपिणम् ॥ परा शक्तिस्तथा ज्ञेया निर्गुणा शाश्वती सती ॥ ७ ॥ यया कृतमिदं सर्वं गुणत्रयविभावितम् ॥ एतच्चराचरं विश्वं नश्वरं परमार्थतः ॥ ८ ॥ एक एव परो ह्यात्मा लिंगरूपी निरंजनः ॥ प्रकृत्या सह ते सर्वे त्रिगुणा विलयं गताः ॥ ९ ॥ यस्मिन्नेव ततो लिंगं लयनात्कथितं पुरा ॥ तस्माल्लिंगे लयं प्राप्ता परा शक्तिः कुतोऽपरे ॥ १० ॥ लीना गुणाश्च रुद्रोक्त्या यैरिदं बद्धमेव च ॥ चराचरं महाभाग तस्माल्लिंगं प्रपूजयेत् ॥ ११ ॥ लिंगं च निर्गुणं साक्षाज्जानीध्वं भो द्विजोत्तमाः ॥ लयाल्लिंगस्य माहात्म्यं गुणानां परिकीर्त्यते ॥ १२ ॥ शंकरः सुखदाता हि उच्यमानो मनीषिभिः ॥ सर्वो हि कथ्यते विप्राः सर्वेषामाश्रयो हि

सः ॥ १३ ॥ शंभुर्हि कथ्यते विप्रा यस्माच्च शुभसंभवः ॥ १४ ॥ एवं सर्वाणि नामानि सार्थकानि महात्मनः ॥ तेनावृतं जगत्सर्वं शंभुना
परमेष्ठिना ॥ १५ ॥ ॥ ऋषय ऊचुः ॥ ॥ यदा दाक्षायणी चाग्नौ पतिता यज्ञकर्मणि ॥ दक्षस्य च महाभागा तिरोधानगता सती ॥ १६ ॥
प्रादुर्भूता कदा सूत कथ्यतां तत्त्वयाऽधुना ॥ परा शक्तिर्महेशस्य मिलिता च कथं पुनः ॥ १७ ॥ एतत्सर्वं महाभाग पूर्ववृत्तं च तत्त्वतः ॥ कथ
नीयं च अस्माकं नान्यो वक्तास्ति कश्चन ॥ १८ ॥ ॥ सूत उवाच ॥ ॥ जज्ञे दाक्षायणी ब्रह्मन्विदग्धावयवा यदा ॥ विना शक्त्या महेशोऽपि
ततापं परमं तपः ॥ १९ ॥ लीलागृहीतवपुषा पर्वते हिमवद्गिरौ ॥ भृंगिणा सह विश्वेन नंदिना च तथैव च ॥ २० ॥ तथा चंडेन मुंडेन तथान्यैर्ब
हुभिर्वृतः ॥ दशभिः कोटिगुणितैर्गणैश्च परिवारितः ॥ २१ ॥ गणानां चैव कोट्या च तथा षष्टिसहस्रकैः ॥ एवं तत्र गणैर्देव आवृतो वृषभध्वजः
॥ २२ ॥ तपो जुषाणः सहसा महात्मा हिमालयस्याग्रगतस्तथैव ॥ गणैर्वृतो वीरभद्रप्रधानैः स केवलो मूलविद्याविहीनः ॥ २३ ॥ एतस्मिन्नंतरे
दैत्याः प्रादुर्भूता ह्यविद्यया ॥ विष्णुना हि बलिर्बद्धस्तथा ते वै महाबलाः ॥ २४ ॥ जाता दैत्यास्ततो विप्रा इंद्रोपद्रवकारकाः ॥ कालखंजा महा
रौद्राः कालकायास्तथापरे ॥ २५ ॥ निवातकवचाः सर्वे खरावकसंज्ञकाः ॥ अन्ये च बहवो दैत्याः प्रजासंहारकारकाः ॥ २६ ॥ तारको नमुचेः
पुत्रस्तपसा परमेण हि ॥ ब्रह्माणं तोषयामास ब्रह्मा तस्य तुतोष वै ॥ २७ ॥ वरान्ददौ यथेष्टांश्च तारकाय दुरात्मने ॥ वरं वृणीष्व भद्रं ते सर्वान्कामा
न्ददामि ते ॥२८॥ तच्छ्रुत्वा वचनं तस्य ब्रह्मणः परमेष्ठिनः ॥ वरयामास च तदा वरं लोकभयावहम् ॥ २९ ॥ यदि मे त्वं प्रसन्नोऽसि अजरामरतां
प्रभो ॥ देहि मे यद्विजानासि अजेयत्वं तथैव च ॥ ३० ॥ एवमुक्तस्तदा तेन तारकेण दुरात्मना ॥ उवाच प्रहसन्वाक्यममरत्वं कुतस्तव ॥ ३१ ॥
जातस्य हि ध्रुवो मृत्युरेतज्जानीहि तत्त्वतः ॥ प्रहस्य तारकः प्राह अजेयत्वं च देहि मे ॥ ३२ ॥ ब्रह्मोवाच तदा दैत्यमजेयत्वं तवानघ ॥ विनाऽर्भ
केण दत्तं वै ह्यर्भकस्त्वां विजेष्यते ॥ ३३ ॥ तदा स तारकः प्राह ब्रह्माणं प्रणतः प्रभो ॥ कृतार्थोऽहं हि देवेश प्रसादात्तव संप्रति ॥ ३४ ॥ एवं
लब्धवरो भूत्वा तारको हि महाबलः ॥ देवान्युद्धार्थमाहूय युयुधे तैः सहासुरः ॥ ३५ ॥ मुचुकुन्दं समाश्रित्य देवास्ते जयिनोऽभवन् ॥ पुनःपुन
र्विकुर्वाणा देवास्ते तारकेण हि ॥ ३६ ॥ मुचुकुन्दबलेनैव जयमापुः सुरास्तदा ॥ किं कर्तव्यं हि चास्माकं युध्यमानैर्निरंतरम् ॥ ३७ ॥ भवित
व्यमिति स्मृत्वा गतास्ते ब्रह्मणः पदम् ॥ ब्रह्मणश्चाग्रतो भूत्वा ह्यब्रुवंस्ते सवासवाः ॥ ३८ ॥ ॥ देवा ऊचुः ॥ ॥ बलिना सह पातालमास्तेऽसौ
मधुसूदनः ॥ विष्णुं विना हि ते सर्वे वृषाद्याः पतिताः परैः ॥ ३९ ॥ दैत्येंद्रैश्च महाभाग त्रातुमर्हसि नः प्रभो ॥ तदा नभोगता वाणी ह्युवाच परि

सांत्व्य वै ॥ ४० ॥ हे देवाः क्रियतामाशु मम वाक्यं हि तत्त्वतः ॥ शिवात्मजो यदा देवा भविष्यति महाबलः ॥ ४१ ॥ युद्धे पुनस्तारकं च वधिष्यति न संशयः ॥ येनोपायेन भगवाञ्छंभुः सर्वगुहाशयः ॥ ४२ ॥ दारापरिग्रही देवास्तथा नीतिर्विधीयताम् ॥ क्रियतां च परो यत्नो भवद्भिर्नान्यथा वचः ॥ ४३ ॥ यूयं देवा विजानीध्वमित्युवाचाशरीरवाक् ॥ परं विस्मयमापन्ना ऊचुर्देवाः परस्परम् ॥ ४४ ॥ श्रुत्वा नभोगतां वाणीमाजग्मुस्ते हिमालयम् ॥ बृहस्पतिं पुरस्कृत्य सर्वे देवा वचोऽब्रुवन् ॥ ४५ ॥ हिमालयं महाभागाः सर्वे कार्यार्थगौरवात् ॥ हिमालय महाभाग श्रूयतां नोऽधुना वचः ॥ ४६ ॥ तारकस्त्रासयत्यस्मान्साहाय्यं तद्वधे कुरु ॥ त्वं शरण्यो भवास्माकं सर्वेषां च तपस्विनाम् ॥ तस्मात्सर्वे वयं याता महेंद्रसहिता विभो ॥ ४७ ॥ ॥ लोमश उवाच ॥ ॥ एवमभ्यर्थितो देवैर्हिमवान्गिरिसत्तमः ॥ उवाच देवान्प्रहसन्वाक्यं वाक्यविदां वरः ॥ ४८ ॥ महेन्द्रमुद्दिश्य तदा ह्युपहाससमन्वितः ॥ अक्षमाश्च वयं सर्वे महेन्द्रेण कृताः सुराः ॥ ४९ ॥ किं कुर्मः सुरकार्यं च तारकस्य वधं प्रति ॥ पक्षयुक्ता वयं सर्वे यदि स्याम सुरोत्तमाः ॥ ५० ॥ तदा वयं घातयामस्तारकं सह बांधवैः ॥ अचलोहं विपक्षश्च किं कार्यं करवाणि वः ॥ ५१ ॥ तस्य तद्वचनं श्रुत्वा सर्वे देवास्तमब्रुवन् ॥ सर्वे यूयं वयं चैव असमर्था वधं प्रति ॥ तारकस्य महाभाग एतत्कार्यं विचिंत्यताम् ॥ ५२ ॥ येन साध्यो भवेच्छत्रुस्तारको हि महाबलः ॥ तदोवाच महातेजा हिमवान्स सुरान्प्रति ॥ ५३ ॥ केनोपायेन भो देवास्तारकं हंतुमिच्छथ ॥ कथयंतु त्वरेणैव कार्यं वेत्तुं ममैव हि ॥ ५४ ॥ तदा सुरैः कथितं सर्वमेतद्वाण्या चोक्तं यत्पुरा कार्यहेतोः ॥ श्रुतं तदा गिरिणा वाक्यमेतद्वाचेदं हिमवान्पर्वतो हि ॥ ५५ ॥ शिवस्य पुत्रेण च धीमता यदा वध्यो दैत्यस्तारको वै महात्मा ॥ तदा सर्वं सुरकार्यं शुभं स्याद्वाण्या चोक्तं सत्यमेतद्भवेच्च ॥ ५६ ॥ तस्मात्तदेनत्क्रियतां भवद्भिर्यथा महेशः कुरुते परिग्रहम् ॥ कन्या यथा तस्य शिवस्य योग्या निरीक्ष्यतामाशु सुरैरिदानीम् ॥ ५७ ॥ तस्य तद्वचनं श्रुत्वा प्रहस्योचुः सुरास्तदा ॥ जनितव्या त्वया कन्या शिवार्थं कार्यसिद्धये ॥ ५८ ॥ सुराणां च गिरे वाक्यं कुरु शीघ्रं महामते ॥ आधारस्त्वं तु देवानां भविष्यसि न संशयः ॥ ५९ ॥ इत्युक्तो गिरिराजोऽथ देवैः स्वगृहमाविशत् ॥ पत्नीं मेनां च पप्रच्छ सुरकार्यं समागतम् ॥ ६० ॥ जनितव्या सुकन्यैका सुरकार्यार्थसिद्धये ॥ देवानां च ऋषीणां च तथैव च तपस्विनाम् ॥ ६१ ॥ प्रियं न भवति स्त्रीणां कन्याजननमेव च ॥ तथापि जनितव्या च कन्यका च वरानने ॥ ६२ ॥ प्रहस्य मेना प्रोवाच स्वपतिं च हिमालयम् ॥ यदुक्तं भवता वाक्यं श्रूयतां मे त्वयाऽधुना ॥ ६३ ॥ कन्या सदा दुःखकरी नृणां पते स्त्रीणां तथा शोककरी महामते ॥ तस्मा

द्विमृश्य सुचिरं स्वयमेव बुद्ध्या यथा हितं शैलपते तदुच्यताम् ॥ ६४ ॥ हिमवांस्तदुपश्रुत्य प्रियाया वचनं तदा ॥ उवाच वाक्यं मेधावी परोपक रणान्वितम् ॥ ६५ ॥ येनयेन प्रकारेण परेषामुपजीवनम् ॥ भविष्यति च तत्कार्यं धीमता पुरुषेण हि ॥ ६६ ॥ स्त्रियापि चैव तत्कार्यं परोपकर णान्वितम् ॥ एवं प्रवर्तिता तेन गिरिणा महिषी तदा ॥ दधार जठरे कन्यां मेना भाग्यवती तदा ॥ ६७ ॥ महाविद्या महामाया महामेधास्वरू पिणी ॥ रुद्रकाली च अंबा च सती दाक्षायणी परा ॥ ६८ ॥ तां विभूतिं विशालाक्षी जठरे परमां सती ॥ बभार सा महाभागा मेना चारुविलो चना ॥ ६९ ॥ स्तुतिं चक्रुस्तदा देवा ऋषयो यक्षकिन्नराः ॥ मेनाया भूरिभाग्यायास्तथा हिमवतो गिरेः ॥ ७० ॥ एतस्मिन्नंतरे जाता गिरिजा नाम नामतः ॥ प्रादुर्भूता यदा देवी सर्वेषां च सुखप्रदा ॥७१॥ देवदुंदुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥ जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ७२ ॥ पुष्पवर्षेण महता ववृषुर्विबुधास्तथा ॥ तदा प्रसन्नमभवत्सर्वं त्रैलोक्यमेव च ॥ ७३ ॥ यदावतीर्णा गिरिजा महासती तदैव दैत्या भयमाविशंस्ते ॥ प्राप्ता मुदं देवगणा महर्षयः सचारणाः सिद्धगणास्तथैव ॥ ७४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदार खण्डे श्रीभवान्युत्पत्तिवर्णनंनाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ वर्द्धमाना तदा साध्वी रराज प्रतिवासरम् ॥ अष्टवर्षा यदा जाता हिमालयगृहे सती ॥ १ ॥ महेशो हिमवद्द्रोण्यां तताप परमं तपः ॥ सर्वैर्गणैः परिवृतो वीरभद्रादिभिस्तदा ॥ २ ॥ एतत्तपो जुषाणं तं महेशं हिमवान्ययौ ॥ तत्पादपल्लवं द्रष्टुं पार्वत्या सह बुद्धिमान् ॥ ३ ॥ यावत्समागतो द्रष्टुं नंदिनासौ निवारितः ॥ द्वारि स्थितेन च तदा क्षणमेकं स्थिरोऽभवत् ॥ ४ ॥ पुनर्विज्ञापयामास नंदिना हिमवान्गिरिः ॥ विज्ञप्तो नंदिना शंभुरचलो द्रष्टुमागतः ॥ ५ ॥ तदाकर्ण्य वचस्तस्य नंदिनः परमे श्वरः ॥ आनयस्व गिरिं चात्र नंदिनं वाक्यमब्रवीत् ॥ ६ ॥ तथेति मत्वा नंदी तं पर्वतं च हिमाचलम् ॥ आनयामास स तथा शंकरं लोकशंक रम् ॥ ७ ॥ दृष्ट्वा तदाग्नीं सकलेश्वरं प्रभुं तपो जुषाणं विनिमीलितेक्षणम् ॥ ८ ॥ कपर्दिनं चंद्रकलाविभूषणं वेदांतवेद्यं परमात्मनि स्थितम् ॥ ववंद शीर्ष्णा च तदा हिमाचलः परां मुदं प्रापददीनसत्त्वः ॥ ९ ॥ उवाच वाक्यं जगदेकमंगलं हिमालयो वाक्यविदां वरिष्ठः ॥ १० ॥ सभाग्योऽहं महादेव प्रसादात्तव शंकर ॥ प्रत्यहं चागमिष्यामि दर्शनार्थं तव प्रभो ॥ ११ ॥ अनया सह देवेश अनुज्ञां दातुमर्हसि ॥ श्रुत्वा तु वचनं तस्य देवदेवो महेश्वरः ॥ १२ ॥ आगंतव्यं त्वया नित्यं दर्शनार्थं ममाचल ॥ कुमारीं च गृहे स्थाप्य नान्यथा मम दर्शनम् ॥ १३ ॥ अचलः प्रत्युवाचेदं गिरिशं नतकंधरः ॥ कस्मान्मयानया सार्द्धं नागंतव्यं तदुच्यताम् ॥ अचलं च व्रती शंभुः प्रहसन्वाक्यमब्रवीत् ॥ १४ ॥

इयं कुमारी सुश्रोणी तन्वी चारुप्रभाषिणी ॥ नानेतव्या मत्समीपे वारयामि पुनः पुनः ॥ १५ ॥ एतच्छ्रुत्वा वचनं तस्य शंभोर्निं रमयं निःस्पृहनिष्ठुरं वा ॥ तपस्विनोक्तं वचनं निशम्य उवाच गौरी च विहस्य शंभुम् ॥ १६ ॥ ॥ गौर्युवाच ॥ ॥ तपःशक्त्या न्वितः शंभो करोषि विपुलं तपः ॥ तव बुद्धिरियं जाता तपस्तप्तुं महात्मनः ॥ १७ ॥ कस्त्वं का प्रकृतिः सूक्ष्मा भगवंस्तद्विमृश्यताम् ॥ पार्वत्यास्तद्वचः श्रुत्वा महेशो वाक्यमब्रवीत् ॥ १८ ॥ तपसा परमेणैव प्रकृतिं नाशयाम्यहम् ॥ प्रकृत्या रहितः सुभ्रु अहं तिष्ठामि तत्त्वतः ॥ तस्माच्च प्रकृतेः सिद्धैर्न कार्यः संग्रहः क्वचित् ॥ १९ ॥ ॥ पार्वत्युवाच ॥ ॥ यदुक्तं परया वाचा वचनं शंकर त्वया ॥ सा किं प्रकृति नैव स्यादतीतस्तां भवान्कथम् ॥ २० ॥ यच्छृणोषि यदश्नासि यच्च पश्यसि शंकर ॥ वाग्वादेन च किं कार्यमस्माकं चाधुना प्रभो ॥ ॥ २१ ॥ तत्सर्वं प्रकृतेः कार्यं मिथ्यावादो निरर्थकः ॥ प्रकृतेः परतो भूत्वा किमर्थं तप्यते तपः ॥ २२ ॥ त्वया शंभोऽधुना ह्यस्मिन्गिरौ हिमवति प्रभो ॥ प्रकृत्या मिलितोऽसि त्वं न जानासि हि शंकर ॥ २३ ॥ वाग्वादेन च किं कार्यमस्माकं चाधुना प्रभो ॥ प्रकृतेः परतस्त्वं च यदि सत्यं वचस्तव ॥ तर्हि त्वया न भेतव्यं मम शंकर संप्रति ॥ २४ ॥ प्रहस्य भगवान्देवो गिरिजां प्रत्युवाच ह ॥ २५ ॥ ॥ महादेव उवाच ॥ ॥ प्रत्यहं कुरु मे सेवां गिरिजे साधुभाषिणि ॥ २६ ॥ इत्येवमुक्त्वा गिरिजां महेशो हिमालयं वाक्यमथो बभाषे ॥ अत्रैव सोऽहं तपसा परेण चरामि भूम्यां परमार्थभावः ॥ २७ ॥ तपस्तप्तुमनुज्ञा मे दातव्या पर्वताधिप ॥ अनुज्ञया विना किंचित्तपः कर्तुं न पार्यते ॥ २८ ॥ एतच्छ्रुत्वा वचस्तस्य देवदेवस्य शूलिनः ॥ प्रहस्य हिमवाञ्छंभुमिदं वचनमब्रवीत् ॥ २९ ॥ त्वदीयं हि जगत्सर्वं सदेवासुरमानुषम् ॥ किमहं तु महादेव तुच्छो भूत्वा ददामि ते ॥ ३० ॥ एवमुक्तो हिमवता शंकरो लोकशंकरः ॥ प्रहस्य गिरिराजं तं याहीति प्राह सादरम् ॥ ३१ ॥ शंकरेणाभ्यनुज्ञातः स्वगृहं हिमवान्ययौ ॥ सार्द्धं गिरिजया सोऽपि प्रत्यहं दर्शने स्थितः ॥ ३२ ॥ एवं कतिपयः कालो गतश्चोपासनात्तयोः ॥ ३३ ॥ सुतापित्रोश्च तत्रैव शंकरो दुरतिक्रमः ॥ पार्वतीं प्रति तत्रैव चिंतामापेदिरे सुराः ॥ ३४ ॥ ते चिंत्यमानाश्च सुरास्तदानीं कथं महेशो गिरिजां समेष्यति ॥ किं कार्यमद्यैव वयं च कुर्मो बृहस्पते तत्कथयस्व मा चिरम् ॥ ३५ ॥ बृहस्पतिरुवाचेदं महेंद्रं प्रति सद्वचः ॥ एवमेत त्त्वया कार्यं महेंद्र श्रूयतां तदा ॥ ३६ ॥ एतत्कार्यं मदनेनैव राजन्नान्यः समर्थो भविता त्रिलोके ॥ विध्नावितं तापसानां तपो हि तस्मात्त्वरात्प्रार्थ नीयो हि मारः ॥ ३७ ॥ गुरोर्वचनमाकर्ण्य आह्वयन्मदनं हरिः ॥ आह्वानादाजगामाथ मदनः कार्यसाधकः ॥ ३८ ॥ रत्या समेतः सह माधवेन

स पुष्पधन्वा पुरतः सभायाम् ॥ महेंद्रमागम्य उवाच वाक्यं सगर्वितं लोकमनोहरं च ॥ ३९ ॥ अहमाकारितः कस्माद्ब्रूहि मेऽद्य शचीपते ॥ किं कार्यं करवाण्यद्य कथ्यतां मा विलंबितम् ॥४०॥ मम स्मरणमात्रेण विभ्रष्टा हि तपस्विनः ॥ त्वमेव जानासि हरे मम वीर्यपराक्रमौ ॥ ४१ ॥ मम वीर्यं च जानाति शक्तेः पुत्रः पराशरः ॥ एवं चान्ये च बहवो भृग्वाद्या ऋषयो ह्यमी ॥ ४२ ॥ गुरुरप्यभिजानाति भार्यौतथ्यस्य चैव हि ॥ तस्यां जातो भरद्वाजो गुरुणा संकरो हि सः ॥४३॥ भरद्वाजो महाभाग इत्युवाच गुरुस्तदा ॥ जानाति मम वीर्यं च शौर्यं चैव प्रजापतिः ॥ ४४ ॥ क्रोधो हि मम बंधुश्च महाबलपराक्रमः ॥ उभाभ्यां द्रावितं विश्वं जंगमाजंगमं महत् ॥ ब्रह्मादिस्तंबपर्यंतं प्लावितं सचराचरम् ॥ ४५ ॥ ॥ देवा ऊचुः ॥ मदन त्वं समर्थोऽसि अस्माञ्जेतुं सदैव हि ॥ महेशं प्रति गच्छाशु सुरकार्यार्थसिद्धये ॥ पार्वत्या सहितं शंभुं कुरुष्वाद्य महामते ॥ ४६ ॥ एवमभ्यर्थितो देवैर्मदनो विश्वमोहनः ॥ जगाम त्वरितो भूत्वा अप्सरोभिः समन्वितः ॥ ४७ ॥ ततो जगामाशु महाधनुर्द्धरो विस्फार्य चापं कुसुमान्वितं महत् ॥ तथैव बाणांश्च मनोरमांश्च प्रगृह्य वीरो भुवनैकजेता ॥ तस्मिन्हिमाद्रौ परिदृश्यमानोऽवनौ स्मरो योधयतां वरिष्ठः ॥ ४८ ॥ तत्रागता तदा रंभा उर्वशी पुंजिकस्थली ॥ सुम्लोचा मिश्रकेशी च सुभगा च तिलोत्तमा ॥ ४९ ॥ अन्याश्च विविधा जाताः साहाय्ये मदनस्य च ॥ अप्सरसो गणैर्दृष्टा मदनेन सहैव ताः ॥ ५० ॥ सर्वे गणाश्च सहसा मदनेन विमोहिताः ॥ भृंगिणा च तदा रंभा चण्डेन सह चोर्वशी ॥ ५१ ॥ मेनका वीरभद्रेण चण्डेन पुंजिकस्थली ॥ तिलोत्तमादयस्तत्र संवृताश्च गणैस्तदा ॥५२॥ उन्मत्तभूतैर्बहुभिस्त्रपां त्यक्त्वा मनीषिभिः ॥ अकाले कोकिलाभिश्च व्याप्तमासीन्महीतलम् ॥ ५३ ॥ अशोकाश्चंपकाश्चूता यूथ्यश्चैव कदंबकाः ॥ नीपाः प्रियालाः पनसा राजवृक्षाश्चरायणाः ॥ ५४ ॥ द्राक्षा वल्ल्यः प्रदृश्यंते बहुला नागकेशराः ॥ तथा कदल्यः केतक्यो भ्रमरैरुपशोभिताः ॥ ५५ ॥ मत्ता मदनसंगेन हंसीभिः कलहंसकाः ॥ करेणुभिर्गजा ह्यासञ्छिखंडीभिः शिखंडिनः ॥ ५६ ॥ निष्कामा ह्यातुरा ह्यासञ्छिवसंपर्कजैर्गुणैः ॥ अकस्माच्च तथाभूतं कथं जातं विमृश्य च ॥ ५७ ॥ शैलादो हि महातेजा नंदी ह्यमितविक्रमः ॥ रक्षसां विबुधानां वा कृत्यमस्तीत्यचिंतयत् ॥ ५८ ॥ एतस्मिन्नंतरे तत्र मदनो हि धनुर्द्धरः ॥ पंचबाणान्समारोप्य स्वकीये धनुषि द्विजाः ॥ तरोश्छायां समाश्रित्य देवदारुगतां तदा ॥ ५९ ॥ निरीक्ष्य शंभुं परमासने स्थितं तपो जुषाणं परमेष्ठिनां पतिम् ॥ गंगाधरं नीलतमालकंठं कपर्दिनं चन्द्रकलासमेतम् ॥ ६० ॥ भुजंगभोगांकितसर्वगात्रं पंचाननं सिंहविशालविक्रमम् ॥ कर्पूरगौरं परयान्वितं च स वेद्धुकामो मदनस्तपस्विनम् ॥ ६१ ॥ दुरासदं दीप्तिमतां वरिष्ठं महेशमुग्रं सह माधवेन ॥ यावच्छिवं वेद्धुकामः शरेण तावद्याता

गिरिजा विश्वमाता ॥ सखीजनैः संवृता पूजनार्थं सदाशिवं मंगलं मंगलानाम् ॥ ६२ ॥ कनककुसुममालां संदधे नीलकंठे सितकिरणमनोज्ञा दुर्लभा सा तदानीम् ॥ स्मितविकसितनेत्रा चारुवक्रं शिवस्य सकलजनजनित्री वीक्षमाणा बभूव ॥ ६३ ॥ तावद्विद्धः शरेणैव मोहनाख्येन च त्वरात् ॥ विध्यमानस्तदा शंभुः शनैरुन्मील्य लोचने ॥ ददर्श गिरिजां देवोब्धिर्यथा शशिनः कलाम् ॥ ६४ ॥ चारुप्रसन्नवदनां बिंबोष्ठीं सस्मितेक्षणाम् ॥ सुद्विजामब्जिजां तन्वीं विशालवदनोत्सवाम् ॥ ६५ ॥ गौरीं प्रसन्नमुद्रां च विश्वमोहनमोहनाम् ॥ यया त्रिलोकरचना कृता ब्रह्मादिभिः सह ॥ ६६ ॥ उत्पत्तिपालनविनाशकरी च या वै कृत्वाग्रतः सत्त्वरजस्तमांसि ॥ सा चेतनेन ददृशे पुरतो हरेण संमोहनी सकलमंगलमंगलैका ॥ ॥ ६७ ॥ तां निरीक्ष्य भवो देवो गिरिजां लोकपावनीम् ॥ मुमोह दर्शनात्तस्या मदनेनातुरीकृतः ॥ विस्मयोत्फुल्लनयनो बभूव सहसा शिवः ॥ ॥ ६८ ॥ एवं विलोकमानोऽसौ देवदेवो जगत्पतिः ॥ मनसा दूयमानेन इदमाह सदाशिवः ॥ ६९ ॥ अनया मोहितः कस्मात्तपःस्थोऽहं निरामयः ॥ कुतः कस्माच्च केनेदं कृतमस्ति ममाप्रियम् ॥ ७० ॥ ततो व्यलोकयच्छंभुर्दिक्षु सर्वासु सादरम् ॥ तावद्दृष्टो दक्षिणस्यां दिशि ह्यात्तशरासनः ॥ ७१ ॥ चक्रीकृतधनुः सज्जं चक्रे वेद्धुं सदाशिवम् ॥ यावत्पुनः संधयति मदनो मदनांतकम् ॥ तावद्दृष्टो महेशेन सरोषेण तदा द्विजाः ॥ ७२ ॥ निरीक्षितस्तृतीयेन चक्षुषा परमेण हि ॥ मदनस्तत्क्षणादेव ज्वालामालावृतोऽभवत् ॥ हाहाकारो महानासीद्देवानां तत्र पश्यताम् ॥ ७३ ॥ ॥ देवा ऊचुः ॥ ॥ देवदेव महादेव देवानां वरदो भव ॥ गिरिजायाः सहायार्थं प्रेषितो मदनोऽधुना ॥७४॥ वृथा त्वयाथ दग्धोऽसौ मदनो हि महाप्रभः ॥ ॥ ७५ ॥ त्वया हि कार्यं जगदेकबंधो कार्यं सुराणां परमेण वर्चसा ॥ अस्यां समुत्पत्स्यति देव शंभो तेनैव सर्वं भवतीह कार्यम् ॥ ७६ ॥ तारकेण महादेव देवाः संपीडिता भृशम् ॥ तदर्थं जीवितं चास्य दत्त्वा च गिरिजां प्रभो ॥ ७७ ॥ वरयस्व महाभाग देवकार्ये भव क्षमः ॥ गजासुरात्त्वया त्राता वयं सर्वे दिवौकसः ॥ ७८ ॥ कालकूटाच्च नूनं हि रक्षिताः स्मो न चान्यथा ॥ भस्मासुराच्च सर्वेश त्वया त्राता न संशयः ॥ ७९ ॥ मदनोयं समायातः सुराणां कार्यसिद्धये ॥ तस्मात्त्वया रक्षणीय उपकारः परो हि नः ॥ ८० ॥ विना तेन जगत्सर्वं नाशमेष्यति शंकर ॥ निष्कामस्त्वं कथं शंभो स्वबुद्ध्या च विमृश्यताम् ॥ ८१ ॥ तदोवाच रुषाविष्टो देवान्प्रति महेश्वरः ॥ विना कामेन भो देवा भवितव्यं न चान्यथा ॥ ८२ ॥ यदा कामं पुरस्कृत्य सर्वे देवाः सवासवाः ॥ पदभ्रष्टाश्च दुःखेन व्याप्ता दैन्यं समाश्रिताः ॥ ८३ ॥ कामो हि नरकायैव सर्वेषां प्राणिनां ध्रुवम् ॥ दुःखरूपी ह्यनंगोऽयं जानीध्वं मम भाषितम् ॥ ८४ ॥ तारकोऽपि दुराचारो निष्कामोऽद्य भविष्यति ॥ विना

कामेन च कथं पापमाचरते नरः ॥ ८५ ॥ तस्मात्कामो मया दग्धः सर्वेषां शांतिहेतवे ॥ युष्माभिश्च सुरैः सर्वैरसुरैश्च महर्षिभिः ॥ ८६ ॥ अन्यैः प्राणिभिरेवात्र तपसे धीयतां मनः ॥ कामक्रोधविहीनं च जगत्सर्वं मया कृतम् ॥ ८७ ॥ तस्मादेनं पापिनं दुःखमूलं न जीवयिष्यामि सुराः प्रतीक्ष्यताम् ॥ निरन्तरं चात्मसुखप्रबोधमानंदलक्षणमगाधमनन्यरूपम् ॥ ८८ ॥ एवमुक्तास्तदा तेन शंभुना परमेष्ठिना ॥ ऊचुर्महर्षयः सर्वे शंकर लोकशंकरम् ॥ ८९ ॥ यदुक्तं भवता शंभो परं श्रेयस्करं हि नः ॥ किं तु वक्ष्याम देवेश श्रूयतां चावधार्यताम् ॥ ९० ॥ यथा सृष्टमिदं विश्वं कामक्रोधसमन्वितम् ॥ तत्सर्वं कामरूपं हि स कामो न तु हन्यते ॥ ९१ ॥ धर्मार्थकाममोक्षाश्च चत्वारो ह्येकरूपताम् ॥ नीता येन महादेव स कामोऽयं न हन्यते ॥ ९२ ॥ कथं त्वया हि संदग्धः कामो हि दुरतिक्रमः ॥ येन संघटितं विश्वमाब्रह्मस्थावरात्मकम् ॥ ९३ ॥ कामेन हीयते विश्वं विश्वं कामेन पाल्यते ॥ कामेनोत्पद्यते विश्वं तस्मात्कामो महाबलः ॥ ९४ ॥ यस्मात्क्रोधो भवत्युग्रो येन त्वं च वशीकृतः ॥ तस्मात्कामं महादेव संबोधयितुमर्हसि ॥ ९५ ॥ त्वया संपादितो देव मदनो हि महाबलः ॥ समर्थो हि समर्थत्वात्तत्सामर्थ्यं करिष्यति ॥ ९६ ॥ ऋषिभिश्चैवमुक्तोऽपि द्विगुणं रूपमास्थितः ॥ चक्षुषा हि तृतीयेन दग्धुकामो हरस्तदा ॥ ९७ ॥ मुनिभिश्चारणैः सिद्धैर्गणैश्चापि सदाशिवः ॥ स्तुतश्च वंदितो रुद्रः पिनाकी वृषवाहनः ॥ ९८ ॥ मदनं च तथा दग्ध्वा त्यक्त्वा तं पर्वतं रुषा ॥ हिमवंताभिधं सद्यस्तिरोधानगतोऽभवत् ॥ ९९ ॥ तिरोधानगतं देवी वीक्ष्य दग्धं च मन्मथम् ॥ सकोकिलं सचूतं च सभृंगं सहचंपकम् ॥ १०० ॥ तथैव दग्धं मदनं विलोक्य रत्या विलापं च तदा मनस्विनी ॥ सबाष्पदीर्घं विमना विमृश्य कथं स रुद्रो वशगो भवेन्मम ॥ १०१ ॥ एवं विमृश्य सुचिरं गिरिजा तदानीं संमोहमाप च सती हि तथा बभाषे ॥ संमुह्यमाना रुदतीं निरीक्ष्य रतिर्महारूपवतीं मनस्विनीम् ॥ १०२ ॥ मा विषादं कुरु सखि मदनं जीवयाम्यहम् ॥ त्वदर्थं भो विशालाक्षि तपसाऽऽराधयाम्यहम् ॥ १०३ ॥ हरं रुद्रं विरूपाक्षं देवदेवं जगद्गुरुम् ॥ मा चिंतां कुरु सुश्रोणि मदनं जीवयाम्यहम् ॥ १०४ ॥ एवमाश्वास्य तां साध्वी गिरिजां रतिरंजसा ॥ तपस्तेपे च सुमहत्पतिं प्राप्तुं सुमध्यमा ॥ १०५ ॥ मदनो यत्र दग्धश्च रुद्रेण परमात्मना ॥ तप्यमानां तपस्तत्र नारदो ददृशे तदा ॥ १०६ ॥ उवाच गत्वा सहसा भामिनीं रतिमंतिके ॥ कस्यासि त्वं विशालाक्षि केन वा तप्यते तपः ॥ १०७ ॥ तरुणी रूपसंपन्ना सौभाग्येन परेण हि ॥ नारदस्य वचः श्रुत्वा रोषेण महता तदा ॥ उवाच वाक्यं मधुरं किंचिन्निष्ठुरमेव च ॥ १०८ ॥ ॥ रतिरुवाच ॥ ॥ नारदोऽसि मया ज्ञातः

कुमारस्त्वं न संशयः ॥ स्वस्वरूपादर्शनं च कर्तुमर्हसि सुव्रत ॥ १०९ ॥ यथागतेन मार्गेण गच्छ त्वं मा विलंबितम् ॥ बटो न किंचिज्जानासि केवलं कलिकृन्महान् ॥ ११० ॥ परस्त्रीकामुकाः क्षुद्रा विटा व्यसनिनश्च ये ॥ तथा ह्यकर्मिणः स्तब्धास्तेषां मध्ये त्वमग्रणीः ॥ १११ ॥ एवं निर्भर्त्सितो रत्या नारदो मुनिसत्तमः ॥ स्वयं जगाम त्वरितं शंबरं दैत्यपुंगवम् ॥ ११२ ॥ शशंस दैत्यराजाय दग्धं मदनमेव च ॥ रुद्रेण क्रोधयुक्तेन तस्य भार्या मनस्विनी ॥ ११३ ॥ तामानय महाभाग भार्यां कुरु महाबल ॥ अतीव रूपसंपन्ना या आनीतास्त्वयानघ ॥ तासां मध्ये रूपवती रतिः सा मदनप्रिया ॥ ११४ ॥ एवमाकर्ण्य वचनं देवर्षेर्भावितात्मनः ॥ जगाम सहसा तत्र यत्रास्ते सा सुशोभना ॥ ११५ ॥ तां दृष्ट्वा सुविशालाक्षीं रतिं मदनमोहिनीम् ॥ उवाच प्रहसन्वाक्यं शंबरो देवसंकटः ॥ ११६ ॥ एहि तन्वि मया सार्द्धं राज्यं भोगान्यथेष्टतः ॥ भुंक्ष्व देवि प्रसादान्मे तपसा किं प्रयोजनम् ॥ ११७ ॥ एवमुक्ता तदा तेन शंबरेण महात्मना ॥ उवाच तन्वी मधुरं महिषी मदनस्य सा ॥ ११८ ॥ विधवाहं महाबाहो नैवं भाषितुमर्हसि ॥ राजा त्वं सर्वदैत्यानां लक्षणैः परिवारितः ॥ ११९ ॥ एतत्तद्वचनं श्रुत्वा शंबरः काममोहितः ॥ करे ग्रहीतुकामोऽसौ तदा रत्या निवारितः ॥ १२० ॥ विमृश्य मनसा सर्वमजेयत्वं च तस्य वै ॥ मा स्पृश त्वं च रे मूढ मम संस्पर्शजेन वै ॥ १२१ ॥ संपर्केण च दग्धोऽसि नान्यथा मम भाषितम् ॥ तदोवाच महातेजाः शंबरः प्रहसन्निव ॥ १२२ ॥ विभीषिकाभिर्बह्वीभिर्मां भीषयसि मानिनि ॥ गच्छ शीघ्रं मम गृहं बहूक्त्या किं प्रयोजनम् ॥ १२३ ॥ इत्युच्यमानेन तदा नीता सा प्रसभं तथा ॥ स्वपुरं परमं तन्वी शंबरेण मनस्विनी ॥ ॥ १२४ ॥ कृता महानसेऽध्यक्षा नाम्ना मायावतीति च ॥ १२५ ॥ ॥ ऋषय ऊचुः ॥ ॥ पार्वत्याधिकृतं सर्वं मदनानयनं प्रति ॥ शंबरेण हृता तन्वी मदनस्य प्रिया सती ॥ अत ऊर्ध्वं तदा सूत किं जातं तत्र वर्ण्यताम् ॥ १२६ ॥ ॥ सूत उवाच ॥ ॥ गतं तदा शिवं दृष्ट्वा दग्ध्वा मदनमोजसा ॥ पार्वती तपसा युक्ता स्थिता तत्रैव भामिनी ॥ १२७ ॥ पित्रा तेन तदा तन्वी मात्रा चैव विचारिता ॥ बाले एहि गृहे शीघ्रं मा श्रमं कर्तुमर्हसि ॥ १२८ ॥ उक्ता ताभ्यां तदा साध्वी गिरिजा वाक्यमब्रवीत् ॥ १२९ ॥ ॥ पार्वत्युवाच ॥ ॥ नागच्छामि गृहं मातस्तात मे शृणु तत्त्वतः॥ वाक्यं धर्मार्थयुक्तं च येन त्वं तोषमेष्यसि ॥१३०॥ शंभुः परेषां परमो दग्धो येन महाबलः॥मदनो मम सान्निध्यमानयेऽत्रैव तं शिवम्॥१३१॥दुर्लभो हि तदा शंभुः प्राणिनां गृहमिच्छताम्॥नागच्छामि गृहं मातस्तस्मात्सर्वं विमृश्यताम् ॥१३२॥तदोवाच महातेजा हिमवान्स्वसुतां प्रति ॥ दुराराध्यः शिवः साक्षात्सर्वदेवनमस्कृतः॥त्वया प्राप्तुमशक्यो हि तस्मात्त्वं स्वगृहं व्रज ॥१३३॥ सा बाष्पपूरितेनैव कंठेन स्वसुतां प्रति ॥ उवाच मेना तन्वंगि

याहि शीघ्रं गृहं प्रति ॥ १३४ ॥ तदा प्रहस्य चोवाच मातरं प्रति पार्वती ॥ प्रतिज्ञां शृणु मे मातस्तपसा परमेण हि ॥ १३५ ॥ अत्रैव तं समानीय वरयामि विचक्षणम् ॥ नाशयामि च रुद्रस्य रुद्रत्वं वरवर्णिनि ॥ १३६ ॥ सुखरूपं परित्यज्य गिरिजा च मनस्विनी ॥ शंभोराराधनं चक्रे परमेण समाधिना ॥ १३७ ॥ जया च विजया चैव माधवी च सुलोचना ॥ सुश्रुता च श्रुता चैव तथैव च शुकी परा ॥ १३८ ॥ प्रम्लोचा सुभगा श्यामा चित्रांगी चारुणी स्वधा ॥ एताश्चान्याश्च बहवः सख्यस्ता गिरिजां प्रति ॥ उपासांचक्रिरे सा च देवगर्भा च भामिनी ॥ १३९ ॥ तपसा परमोग्रेण चरंती चारुहासिनी ॥ मदनो यत्र दग्धश्च रुद्रेण च महात्मना ॥ तत्रैव वेदिं कृत्वा च तस्योपरि सुसंस्थिता ॥ १४० ॥ त्यक्त्वा जलाशनं बाला पर्णादा ह्यभवच्च सा ॥ ततः साऽऽर्द्राणि पर्णानि त्यक्त्वा शुष्काणि चाददे ॥ १४१ ॥ शुष्काणि चैव पर्णानि नाशितानि तया यदा ॥ अपर्णेति च विख्याता बभूव तनुमध्यमा ॥ १४२ ॥ वायुपानरता जाता अंबुपानादनंतरम् ॥ कालक्रमेण महता बभूव गिरिजा सती ॥ एकांगुष्ठेन च तदा दधार च निजं वपुः ॥ १४३ ॥ एवमुग्रेण तपसा शंकराराधनं सती ॥ चकार परया तुष्ट्या शंभोः प्रीत्यर्थमेव च ॥ १४४ ॥ परं भावं समाश्रित्य जगन्मंगलमंगला ॥ तुष्ट्यर्थं च महेशस्य ततापं परमं तपः ॥ १४५ ॥ एवं दिव्यसहस्राणि वर्षाणि च तताप वै ॥ हिमालयस्तदागत्य पार्वतीं कृतनिश्चयाम् ॥ १४६ ॥ सभार्यः स सुतामाप्त उवाच च महासतीम् ॥ मा खिद्यतां महादेवि तपसानेन भामिनि ॥ १४७ ॥ क्व रुद्रो दृश्यते बाले विरक्तो नात्र संशयः ॥ त्वं तन्वी तरुणी बाला तपसा च विमोहिता ॥ १४८ ॥ भविष्यति न संदेहः सत्यं प्रतिवदामि ते ॥ तस्मादुत्तिष्ठ याह्याशु स्वगृहं वरवर्णिनि ॥ १४९ ॥ किं तेन तव रुद्रेण येन दग्धः पुराऽनघे ॥ मदनो निर्विकारित्वात्तं कथं प्रार्थयिष्यसि ॥ १५० ॥ गगनस्थो यथा चंद्रो ग्रहीतुं न हि शक्यते ॥ तथैव दुर्गमः शंभुर्जानीहि त्वं शुचिस्मिते ॥ १५१ ॥ तथैव मेनया चोक्ता तथा सह्याद्रिणा सती ॥ मेरुणा मंदरेणैव मैनाकेन तथैव च ॥ १५२ ॥ एभिरुक्ता तदा तन्वी पार्वती तपसि स्थिता ॥ उवाच प्रहसन्त्येव हिमवंतं शुचिस्मिता ॥१५३॥ पुरा प्रोक्तं त्वया तात अंब किं विस्मृतं त्वया ॥ अधुनैव प्रतिज्ञां च शृणुध्वं मम बांधवाः ॥१५४॥ विरक्तोऽसौ महादेवो मदनो येन वै हतः ॥ तं तोपयामि तपसा शंकरं लोकशंकरम् ॥ १५५ ॥ सर्वे यूयं च गच्छंतु नात्र कार्या विचारणा ॥ दग्धो हि मदनो येन येन दग्धं गिरेर्वनम् ॥ १५६ ॥ तमानयामि चात्रैव तपसा केवलेन हि ॥ तपोबलेन महता सुसेव्यो हि सदाशिवः ॥ ॥ १५७ ॥ तं जानीध्वं महाभागाः सत्यंसत्यं वदाम्यहम् ॥ १५८ ॥ संभाषमाणा जननीं तदानीं हिमालयं चैव तथा च मेनाम् ॥ तथैव मेरुं

मितभाषिणी तदा सा मंदरं पर्वतराजकन्या ॥ जग्मुस्तदा तेन पथा च पर्वता यथागतेनापि विचक्षमाणाः ॥ १५९ ॥ गतेषु तेषु सर्वेषु सखीभिः
परिवारिता ॥ तत्रैव च तपस्तेपे परमार्था सती तदा ॥१६०॥ तपसा तेन महता तप्तमासीच्चराचरम् ॥ तदा सुरासुराः सर्वे ब्रह्माणं शरणं गताः ॥
॥ १६१ ॥ ॥ देवा ऊचुः ॥ ॥ त्वया सृष्टमिदं सर्वं जगदेव चराचरम् ॥ त्रातुमर्हसि देवान्नस्त्वदन्यो नोपपद्यते ॥ १६२ ॥ अस्माकं रक्षणे
शक्त इत्याकर्ण्य वचस्तदा ॥ विमृश्य च तदा ब्रह्मा मनसा परमेण हि ॥ १६३ ॥ गिरिजातपसोद्भूतं दावाग्निं परमं महत् ॥ ज्ञात्वा ब्रह्मा
जगा माशु क्षीराब्धिं परमाद्भुतम् ॥ १६४ ॥ तत्र सुप्तं सुपल्यंके शेषाख्ये चातिशोभने ॥ लक्ष्म्या पादोपयुगलं सेव्यमानं निरंतरम् ॥ १६५ ॥
दूरस्थेनापि तार्क्ष्येण नतकंधरधारिणा ॥ सेव्यमानं श्रिया कांत्या क्षांत्या वृत्त्या दयादिभिः ॥ १६६ ॥ नवशक्तियुतं विष्णुं पार्षदैः
परिवारितम् ॥ कुमुदोथ कुमुद्राक्ष्च सनकश्च सनंदनः ॥ १६७ ॥ सनातनो महाभागः प्रसुप्तो विजयोऽरिजित् ॥ जयंतश्च जयत्सेनो
जयश्चैव महाप्रभः ॥ १६८ ॥ सनत्कुमारः सुतपा नारदश्चैव तुंबुरुः ॥ पांचजन्यो महाशंखो गदा कौमोदकी तथा ॥ १६९ ॥ सुदर्शनं
तथा चापं शार्ङ्गं च परमाद्भुतम् ॥ एतानि वै रूपवंति दृष्टानि परमेष्ठिना ॥ १७० ॥ विष्णोः समीपे परमामनो भृशं समेत्य सर्वे सुरदा
नवास्तदा ॥ विष्णुं चाहुः परमेष्ठिनां पतिं तीरे तदानीमुदधेर्महात्मनः ॥ १७१ ॥ त्राहित्राहि महाविष्णो तप्तान्नः शरणागतान् ॥ तप
सोग्रेण महता पार्वत्याः परमेण हि ॥ शेषासने चोपविष्ट उवाच परमेश्वरः ॥ १७२ ॥ युष्माभिः सहितश्चापि व्रजामि परमेश्वरम् ॥ महादेवं
प्रार्थयामो गिरिजां प्रति वै सुराः ॥ १७३ ॥ पाणिग्रहार्थमधुना देवदेवः पिनाकधृक् ॥ यथा नेष्यति तत्रैव करिष्यामोऽधुना वयम् ॥ १७४ ॥
तस्माद्वयं गमिष्यामो यत्र रुद्रो महाप्रभुः ॥ तपसोग्रेण संयुक्तो ह्यास्ते परममंगलः ॥ १७५ ॥ विष्णोस्तद्वचनं श्रुत्वा ऊचुः सर्वे सुरासुराः॥
न यास्यामो वयं सर्वे विरूपाक्षं महाप्रभम् ॥ १७६ ॥ यदा दग्धः पुरा तेन मदनो दुरतिक्रमः ॥ तथैव धक्ष्यत्यस्माकं नात्र कार्या विचारणा
॥ १७७ ॥ प्रहस्य भगवान्विष्णुरुवाच परमेश्वरः ॥ मा भयं क्रियतां सर्वैः शिवरूपी सदाशिवः ॥ १७८ ॥ स न धक्ष्यति सर्वेषां देवानां भयना
शनः ॥ तस्माद्भवद्भिर्गंतव्यं मया सार्द्धं विचक्षणाः ॥ १७९ ॥ शंभुं पुराणं पुरुषं ह्यधीशं वरेण्यरूपं च परं पराणाम् ॥ तपो जुषाणं परमार्थरूपं
परात्परं तं शरणं व्रजामि ॥ १८० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे पार्वतीतपश्चर्यावर्ण
नंनामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ एवमुक्तास्तदा देवा विष्णुना परमेष्ठिना ॥ जग्मुः सर्वे महेशं च

द्रष्टुकामाः पिनाकिनम् ॥ १ ॥ परे पारे समुद्रस्य परमेण समाधिना ॥ योगपीठे स्थितं शंभुं गणैश्च परिवारितम् ॥ २ ॥ यज्ञोपवीतविधिना उरसा बिभ्रतं वृतम् ॥ वासुकिं सर्पराजं च कंबलाश्वतरौ तथा ॥ ३ ॥ कर्णद्वये धारयंतं तथा कर्कोटकेन हि ॥ पुलहेन च बाहुभ्यां धारयंतं च कंकणे ॥ ४ ॥ सन्नूपुरे शङ्खकपद्मकाभ्यां संधारयंतं च विराजमानम् ॥ कर्पूरगोरं शितिकंठमद्भुतं वृषान्वितं देववरं ददर्शुः ॥ ५ ॥ तदा ब्रह्मा च विष्णुश्च ऋषयो देवदानवाः ॥ तुष्टुवुर्विविधैः सूक्तैर्वेदोपनिषदन्वितैः ॥ ६ ॥ ॥ ब्रह्मोवाच ॥ ॥ नमो रुद्राय देवाय मदनांतकराय च ॥ भर्गाय भूरिभाग्याय त्रिनेत्राय त्रिविष्टपे ॥ ७ ॥ शिपिविष्टाय भीमाय शेषशायिन्नमोनमः ॥ त्र्यंबकाय जगद्धात्रे विश्वरूपाय वै नमः ॥ ८ ॥ त्वं धाता सर्वलोकानां पिता माता त्वमीश्वरः ॥ कृपया परया युक्तः पाह्यस्मांस्त्वं महेश्वर ॥ ९ ॥ इत्थं स्तुवत्सु देवेषु नन्दी प्रोवाच तान्प्रति ॥ किमर्थ मागता यूयं किं वा मनसि वर्तते ॥ ११ ॥ ते प्रोचुर्देवकार्यार्थं विज्ञप्तुं शंभुमागताः ॥ विज्ञप्तो नंदिना तेन शैलादेन महात्मना ॥ ध्यानस्थितो महादेवः सुरकार्यार्थसिद्धये ॥ ११ ॥ ब्रह्मादयः सुरगणाः सुरसिद्धसंघास्त्वां द्रष्टुमेव सुरवर्य विशेषयंति ॥ कार्य्यार्थिनोऽसुरवरैः परिभर्त्स्य माना अभ्यागताः सपदि शत्रुभिरर्दिताश्च ॥ १२ ॥ तस्मात्त्वया हि देवेश त्रातव्याश्चाधुना सुराः ॥ एवं तेन तदा शंभुर्विज्ञप्तो नंदिना द्विजाः ॥ १३ ॥ शनैःशनैरुपरमच्छंभुः परमकोपनः ॥ समाधेः परमात्माऽसावुवाच परमेश्वरः ॥ १४ ॥ ॥ महादेव उवाच ॥ ॥ कस्माद्यूयं महाभागा ह्यागता मत्समीपगाः ॥ ब्रह्मादयो ह्यमी देवा ब्रूत कारणमद्य वै ॥ १५ ॥ तदा ब्रह्मा ह्युवाचेदं सुरकार्यं महत्तरम् ॥ तारकेण कृतं शंभो देवानां परमाद्भुतम् ॥ १६ ॥ कष्टात्कष्टतरं देव तद्विज्ञप्तुमिहागताः ॥ हे शंभो तव पुत्रेण औरसेन हतो भवेत् ॥ तारको देवशत्रुश्च नान्यथा मम भाषितम् ॥ १७ ॥ तस्मात्त्वया गिरिजा देव शंभो गृहीतव्या पाणिना दक्षिणेन ॥ पाणिग्रहेणैव महानुभाव दत्ता गिरीन्द्रेण च तां कुरुष्व ॥ १८ ॥ ब्रह्मणो हि वचः श्रुत्वा प्रहसन्नब्रवीच्छिवः ॥ यदा मया कृता देवी गिरिजा सर्वसुन्दरी ॥ १९ ॥ तदा सर्वे सुरेन्द्राश्च ऋषयो मुनयस्तथा ॥ सकामाश्च भविष्यंति अक्षमाश्च परे पथि ॥ २० ॥ मदनो हि मया दग्धः सर्वेषां कार्यसिद्धये ॥ मया ह्यधि कृता तन्वी गिरिजा च सुमध्यमा ॥ २१ ॥ तदानीमेव भो देवाः पार्वती मदनं च सा ॥ जीवयिष्यति भो ब्रह्मन्नात्र कार्या विचारणा ॥ २२ ॥ एवं विमृश्य भो देवाः कार्या कार्यविचारणा ॥ मदनेनैव दग्धेन सुरकार्यं महत्कृतम् ॥ २३ ॥ यूयं सर्वे च निष्कामा मया नास्त्यत्र संशयः ॥ यथाहं च सुराः सर्वे तथा यूयं प्रयत्नतः ॥ २४ ॥ तपः परमसंयुक्ताः कारयामः सुदुष्करम् ॥ परमानन्दसंयुक्ताः सुखिनः सर्व एव हि ॥ २५ ॥

यूयं समाधिना तेन मदनेन च विस्मृतम् ॥ कामो हि नरकायैव तस्मात्क्रोधोऽभिजायते ॥ २६ ॥ क्रोधाद्भवति संमोहः संमोहाद्भ्रमते मनः ॥ कामक्रोधौ परित्यज्य भवद्भिः सुरसत्तमैः ॥ सर्वैरेव च मंतव्यं मद्वाक्यं नान्यथा क्वचित् ॥ २७ ॥ एवं विश्राव्य भगवान्स हि देवो वृषध्वजः ॥ सुरान्प्रबोधयामास तथा ऋषिगणान्मुनीन् ॥ २८ ॥ तूष्णींभूतोऽभवच्छंभुर्ध्यानमाश्रित्य वै पुनः ॥ आस्ते पुरा यथावच्च गणैश्च परिवारितः ॥ २९ ॥ ध्यानस्थितं च तं दृष्ट्वा नन्दी सर्वान्विसृज्य तान् ॥ सब्रह्मसेन्द्रान्विबुधानुवाच प्रहसन्निव ॥ ३० ॥ यथागतेन मार्गेण गच्छध्वं मा विलंबितम् ॥ तथेति मत्वा ते सर्वे स्वंस्वं स्थानमथाऽव्रजन् ॥ ३१ ॥ गतेषु तेषु सर्वेषु समाधिस्थोऽभवद्भवः ॥ आत्मानमात्मना कृत्वा आत्मन्येव विचिंतयन् ॥ ३२ ॥ परात्परतरं स्वच्छं निर्मलं निरवग्रहम् ॥ निरञ्जनं निराभासं यस्मिन्मुह्यंति सूरयः ॥ ३३ ॥ भानुर्न भात्यग्निरथो शशी वा न ज्योतिरेवं न च मारुतो न हि ॥ यं केवलं वस्तुविचारतोऽपि सूक्ष्मात्परं सूक्ष्मतरात्परं च ॥ ३४ ॥ अनिर्देश्य मचिन्त्यं च निर्विकारं निरामयम् ॥ ज्ञप्तिमात्रस्वरूपं च न्यासिनो यांति तत्र वै ॥ ३५ ॥ शब्दातीतं निर्गुणं निर्विकारं सत्तामात्रं ज्ञान गम्यं त्वगम्यम् ॥ यत्तद्वस्तु सर्वदा कथ्यते वै वेदातीतैश्चागमैर्मन्त्रभूतैः ॥ ३६ ॥ तद्वस्तुभूतो भगवान्स ईश्वरः पिनाकपाणिर्भगवान्वृषध्वजः ॥ येनैव साक्षान्मकरध्वजो हतस्तपो जुषाणः परमेश्वरः सः ॥ ३७ ॥ ॥ लोमश उवाच ॥ ॥ गिरिजा हि तदा देवी तताप परमं तपः ॥ तपसा तेन रुद्रोऽपि उत्तमं भयमागतः ॥ ३८ ॥ विजित्य तपसा देवी पार्वती परमेण हि ॥ शम्भुं सर्वार्थदं स्थाणुं केवलं स्वस्वरूपिणम् ॥ ३९ ॥ यदा जितस्तया देव्या तपसा वृषभध्वजः ॥ समाधेश्चलितो भूत्वा यत्र सा पार्वती स्थिता ॥ ४० ॥ जगाम त्वरितेनैव देवदेवः पिनाकधृक् ॥ तत्रापश्यत्स्थितां देवीं सखीभिः परिवारिताम् ॥ ४१ ॥ वेदिकोपरि विन्यस्तां यथैव शशिनः कलाम् ॥ स देवस्तां निरीक्ष्याथ बटुर्भूत्वाथ तत्क्षणात् ॥ ४२ ॥ ब्रह्मचारिस्वरूपेण महेशो भगवान्भवः ॥ सखीनां मध्यमाश्रित्य ह्युवाच बटुरूपवान् ॥ किमर्थमालिमध्यस्था तन्वी सर्वांगसुन्दरी ॥ ४३ ॥ केयं कस्य कुतो याता किमर्थं तप्यते तपः ॥ सर्वं मे कथ्यतां सख्यो याथातथ्येन संप्रति ॥ ४४ ॥ तदोवाच जया रुद्रं तपसः कारणं परम् ॥ ४५ ॥ हिमाद्रेर्दुहितेयं वै तपसा रुद्रमीश्वरम् ॥ प्राप्तुकामा पतिं त्वत्र सेयमत्रोपविश्य च ॥ ४६ ॥ तपस्तताप सुमहत्सर्वेषां दुरतिक्रमम् ॥ बटो जानीहि मे वाक्यं नान्यथा मम भाषितम् ॥ ४७ ॥ तच्छ्रुत्वा वचनं

१ तत्रः—इति दूरान्वितमप्यर्थसंबन्धाद्बोध्यम् ।

तस्याः प्रहस्येदमुवाच ह ॥ शृण्वतीनां सखीनां वै महेशो बटुरूपवान् ॥ ४८ ॥ मूढेयं पार्वती सख्यो न जानाति हिताहितम् ॥ किमर्थं च तपः कार्यं रुद्रप्राप्त्यर्थमेव च ॥ ४९ ॥ सोऽमंगलः कपाली च श्मशानालय एव च ॥ अशिवः शिवशब्देन भण्यते च वृथाथ वै ॥ ५० ॥ अनया हि वृतो रुद्रो यदा सख्यः समेष्यति ॥ तदेयमशुभा तन्वी भविष्यति न संशयः ॥ ५१ ॥ यो दक्षशापाद्विकृतो यज्ञबाह्योऽभवद्विट् ॥ ये ह्यंगभूताः शर्वस्य सर्पा ह्यासन्महाविषाः ॥ ५२ ॥ शवभस्मान्वितो रुद्रः कृत्तिवासा ह्यमंगलः ॥ पिशाचैः प्रमथैर्भूतैरावृतो हि निरंतरम् ॥ ॥ ५३ ॥ तेन रुद्रेण किं कार्यमनया सुकुमारया ॥ निवार्यतां सखीभिश्च भर्तुकामा पिशाचवत् ॥ ५४ ॥ इंद्रं हित्वा मनोज्ञं च यमं चैव महाप्रभम् ॥ नैर्ऋतं च विशालाक्षं वरुणं च अपां पतिम् ॥ ५५ ॥ कुबेरं पवनं चैव तथैव च विभावसुम् ॥ एवमादीनि वाक्यानि उवाच परमेश्वरः ॥ सखीनां शृण्वतीनां च यत्र सा तपसि स्थिता ॥५६॥ इत्याकर्ण्य वचस्तस्य रुद्रस्य बटुरूपिणः ॥ चुकोप च शिवा साध्वी महेशं बटुरूपिणम् ॥ ५७ ॥ जये त्वं विजये साध्वि प्रम्लोचेऽप्यथ सुन्दरि ॥ सुलोचने महाभागे समीचीनं कृतं हि मे ॥ ५८ ॥ किमेतस्य बटोः कार्यं भवतीनामिहाधुना ॥ बटुस्वरूपमास्थाय आगतो देवनिंदकः ॥ ५९ ॥ अयं विसृज्यतां सख्यः किमनेन प्रयोजनम् ॥ बटुस्वरूपिणं रुद्रं कुपिता सा ततोऽब्रवीत् ॥ ६० ॥ बटो गच्छाशु त्वरितो न स्थेयं च त्वयाऽधुना ॥ किमनेन प्रलापेन तव नास्ति प्रयोजनम् ॥ ६१ ॥ बटुर्निर्भर्त्सितस्तत्र तया चैवं तदा पुनः ॥ प्रहस्यं वै स्थिरो भूत्वा पुनर्वाक्यमथाब्रवीत् ॥ ६२ ॥ शनैःशनैरवितथं विजयां प्रति सत्वरम् ॥ कस्मात्कोपस्तया तन्वि कृतः केनैव हेतुना ॥६३॥ सर्वेषामपि तद्वाच्यं वचनं सूक्तमेव यत् ॥ यथोक्तेन च वाक्येन कस्मात्तन्वी प्रकोपिता ॥ ६४ ॥ यः शंभुरुच्यते लोके भिक्षुको भिक्षुकप्रियः ॥ यदि मे ह्यनृतं प्रोक्तं तदा कोप इहोचितः ॥ ६५॥ इयं तावत्सुरूपा च विरूपोऽसौ सदाशिवः ॥ विशालाक्षी त्वियं बाला विरूपाक्षो भवस्तथा ॥ ६६ ॥ एवंभूतेन रुद्रेण मोहितेयं कथं भवेत् ॥ सभाग्यो हि पतिः स्त्रीणां सदा भाव्यो रतिप्रियः ॥ ६७ ॥ इयं कथं मोहितास्ति निर्गुणेन गुणात्मिका ॥ न श्रुतो न च विज्ञातो न दृष्टः केन वा शिवः ॥ ६८ ॥ सकामानां च भूतानां दुर्लभो हि सदाशिवः ॥ तपसा परमेणैव गर्वितेयं सुमध्यमा ॥ ६९ ॥ निःस्तंभो हि सदा स्थाणुः कथं प्राप्स्यति तं पतिम् ॥ मयोक्तं किं विशालाक्षि कस्मान्मे रुषिताऽधुना ॥ ७० ॥ यावद्रोषो भवेन्नृणां नारीणां च विशेषतः ॥ तेन रोषेण तत्सर्वं भस्मीभूतं भविष्यति ॥ ७१ ॥ सुकृतं चोर्जितं तन्वि सत्यमेवोदितं सति ॥ कामः क्रोधश्च लोभश्च दंभो मात्सर्यमेव च ॥ ७२ ॥ हिंसेर्ष्या च प्रपंचश्च

तेन सर्वं विनश्यति ॥ तस्मात्तपस्विभिर्युक्तं कामक्रोधादिवर्जनम् ॥ ७३ ॥ यदीश्वरो हृदि मध्ये विभाव्यो मनीषिभिः सर्वदा ज्ञप्तिमात्रः ॥ तदा सर्वैर्मुनिवृत्त्या विभाव्यस्तपस्विभिर्नान्यथा चिंतनीयः ॥ ७४ ॥ एतच्छ्रुत्वा वचनं तस्य शंभोस्तदाब्रवीद्विजया तं च सर्वम् ॥ गच्छात्र किंचित्त व नास्ति कार्यं न वक्तव्यं वचनं बालिशान्यत् ॥ ७५ ॥ एवं विवदमानं तं बटुरूपं सदाशिवम् ॥ विसर्जयामास तदा विजया वाक्यकोविदा ॥ ॥ ७६ ॥ तिरोधानं गतः सद्यो महेशो गिरिजां प्रति ॥ अलक्ष्यमाणः सर्वासां सखीनां परमेश्वरः ॥ ७७ ॥ प्रादुर्बभूव सहसा निजरूपधरस्तदा ॥ यदा ध्यानस्थिता देवी निजध्यानपरा सती ॥ ७८ ॥ तदा हृदिस्थो देवेशो बहिर्दृष्टिचरोभवत् ॥ नेत्रे उन्मील्य सा साध्वी गिरिजायतलोचना ॥ अपश्यद्देवदेवेशं सर्वलोकमहेश्वरम् ॥ ७९ ॥ द्विभुजं चैकवक्त्रं च कृत्तिवाससमद्भुतम् ॥ कपर्दं चंद्ररेखांकं निवीतं गजचर्मणा ॥ ८० ॥ कर्णस्थौ हि महानागौ कंबलाश्वतरौ तदा ॥ वासुकिः सर्पराजश्च कृताहारो महाद्युतिः ॥ ८१ ॥ वलयानि महार्हाणि तदा सर्पमयानि च ॥ कृतानि तेन रुद्रेण तथा शोभाकराणि च ॥ ८२ ॥ एवंभूतस्तदा शंभुः पार्वतीं प्रति चाग्रतः ॥ उवाच त्वरया युक्तो वरं वरय भामिनि ॥ ८३ ॥ व्रीडया परया युक्ता साध्वी प्रोवाच शंकरम् ॥ त्वं नाथो मम देवेश त्वया किं विस्मृतं पुरा ॥ ८४ ॥ दक्षयज्ञविनाशं च यदर्थं कृतवान्प्रभो ॥ स त्वं साहं समुत्पन्ना मेनायां कार्यसिद्धये ॥ ८५ ॥ देवानां देवदेवेश तारकस्य वधं प्रति ॥ भवतो हि मया देव भविष्यति कुमारकः ॥ ८६ ॥ तस्मा त्वया हि कर्तव्यं मम वाक्यं महेश्वर ॥ गंतव्यं हिमवत्पार्श्वं नात्र कार्या विचारणा ॥ ८७ ॥ याचस्व मां महादेव ऋषिभिः परिवारितः ॥ करि ष्यति न संदेहस्तव वाक्यं च मे पिता ॥ ८८ ॥ दक्षकन्या पुराहं वै पित्रा दत्ता यदा तव ॥ यथोक्तविधिना तत्र विवाहो न कृतस्त्वया ॥ ॥ ८९ ॥ न ग्रहाः पूजितास्तेन दक्षेण च महात्मना ॥ ग्रहाणां विषयत्वेन सच्छिद्रोऽयं महानभूत् ॥ ९० ॥ तस्माद्यथोक्तविधिना कर्तुमर्हसि सुव्रत ॥ विवाहं स्वं महाभाग देवानां कार्यसिद्धये ॥ ९१ ॥ तदोवाच महाबाहो गिरिजां प्रहसन्निव ॥ स्वभावेनैव तत्सर्वं जंगमाजंगमं महत् ॥ जातं त्वया मोहितं च त्रिगुणैः परिवेष्टितम् ॥ ९२ ॥ अहंकारात्समुत्पन्नं महत्तत्त्वं च पार्वति ॥ महत्तत्त्वात्तमो जातं तमसा वेष्टितं नभः ॥ ९३ ॥ नभसो वायुरुत्पन्नो वायोरग्निरजायत ॥ अग्नेरापः समुत्पन्ना अद्भ्यो जाता मही तदा ॥ ९४ ॥ मह्यादिकानि स्थास्नूनि चराणि च वरानने ॥ दृश्यं यत्सर्वमेवैतन्नश्वरं विद्धि मानिनि ॥ ९५ ॥ एकोऽनेकत्वमापन्नो निर्गुणो हि गुणावृतः ॥ स्वज्योतिर्भाति यो नित्यं परज्योत्स्नान्वितोऽभवत् ॥ स्वतंत्रः परतंत्रश्च त्वया देवि महत्कृतम् ॥ ९६ ॥ मायामयं कृतमिदं च जगत्समग्रं सर्वात्मना अवधृतं परया च बुद्ध्या ॥ सर्वात्मभिः सुकृतिभिः

९

परमार्थभावैः संसक्तिरिंद्रियगणैः परिवेष्टितं च ॥९७॥ के ग्रहाः के उडुगणाः के बाध्यंते त्वया कृताः ॥ विमुक्तं चाधुना देवि शर्वार्थं वरवर्णिनि ॥ ९८ ॥ गुणकार्यप्रसंगेन आवां प्रादुर्भवः कृतः ॥ त्वं हि वै प्रकृतिः सूक्ष्मा रजःसत्त्वतमोमयी ॥ ९९ ॥ व्यापारदक्षा सततमहं चैव सुमध्यमे ॥ हिमालयं न गच्छामि न याचामि कथंचन ॥ १०० ॥ देहीति वचनात्सद्यः पुरुषो याति लाघवम् ॥ इत्थं ज्ञात्वा च भो देवि किमस्माकं वदस्व वै ॥ १०१ ॥ कार्यं त्वदाज्ञया भद्रे तत्सर्वं वक्तुमर्हसि ॥ तेनोक्तात्र तदा साध्वी उवाच कमलेक्षणा ॥ १०२ ॥ त्वमात्मा प्रकृतिश्चाहं नात्र कार्या विचारणा ॥ तथापि शंभो कर्तव्यं मम चोद्वहनं प्रहत ॥ १०३ ॥ देहो ह्यविद्ययाक्षिप्तो विदेहो हि भवान्परः ॥ तथाप्येवं महादेव शरीरावरणं कुरु ॥ १०४ ॥ प्रपंचरचनां शंभो कुरु वाक्यान्मम प्रभो ॥ याचस्व मां महादेव सौभाग्यं चैव देहि मे ॥ १०५ ॥ इत्येवमुक्तः स तया महात्मा महेश्वरो लोकविडंबनाय ॥ तथेति मत्वा प्रहसञ्जगाम स्वमालयं देववरैः सुपूजितः ॥ १०६ ॥ एतस्मिन्नंतरे तत्र हिमवान्गिरिभिः सह ॥ मेनया भार्यया सार्द्धं जगाम त्वरान्वितः ॥ १०७ ॥ पार्वतीदर्शनार्थं च सुतैश्च परिवारितः ॥ तेन दृष्टा महादेवी सखीभिः परिवारिता ॥१०८॥ पार्वत्या च तदा दृष्टो हिमवान्गिरिभिः सह ॥ अभ्युत्थानपरा साध्वी प्रणम्य शिरसा तदा ॥ पितरौ च तदा भ्रातॄन्बंधूंश्चैव च सर्वशः ॥ १०९ ॥ स्वमंकमारोप्य महायशास्तदा सुतां परिष्वज्य च बाष्पपूरितः ॥ उवाच वाक्यं मधुरं हिमालयः किं वै कृतं साध्वि यथा तथेन ॥ ११० ॥ तत्कथ्यतां महाभागे सर्वं शुश्रूषतां हि नः ॥ तच्छ्रुत्वा मधुरं वाक्यमुवाच पितरं प्रति ॥ १११ ॥ तपसा परमेणैव प्रार्थितो मदनांतकः ॥ शांतं च मे महत्कार्यं सर्वेषामपि दुर्लभम् ॥ ११२ ॥ तत्र तुष्टो महादेवो वरणार्थं समागतः ॥ स मयोक्तस्तदा शंभुर्मम पाणिग्रहः कथम् ॥ ११३ ॥ क्रियते च तदा शंभो मम पित्रा विनाधुना ॥ यथागतेन मार्गेण गतोऽसौ त्रिपुरांतकः ॥ ११४ ॥ तस्यास्तद्वचनं श्रुत्वा अवाप परमां मुदम् ॥ बंधुभिः सह धर्मात्मा उवाच स्वसुतां पुनः ॥ ११५ ॥ स्वगृहं चाद्य गच्छामो वयं सर्वे च भूधराः ॥ अनया राधितो देवः पिनाकी वृषभध्वजः ॥ ११६ ॥ इत्यूचुस्ते सुराः सर्वे हिमालयपुरोगमाः ॥ पार्वतीसहिताः सर्वे तुष्टुवुर्वाग्भिरादृताः ॥ ११७ ॥ तां स्तूयमानां च तदा हिमालयो ह्यारोप्य चांसं वरवर्णिनीं च ॥ सर्वेथ शैलाः परिवार्य चोत्सुकाः समानयामासुरथ स्वमालयम् ॥ ११८ ॥ देवदुंदुभयो नेदुः शंखतूर्याण्यनेकशः ॥ वादित्राणि बहून्येव वाद्यमानानि सर्वशः ॥ ११९ ॥ पुष्पवर्षेण महता तेनानीता गृहं प्रति ॥ १२० ॥ सा पूज्यमाना बहुभिस्तदानीं महाविभूत्युल्लसिता तपस्विनी ॥ तथैव देवैः सह चारणैश्च महर्षिभिः सिद्धगणैश्च सर्वशः ॥ १२१ ॥ पूज्यमाना

तदा देवी उवाच कमलासनम् ॥ देवानृषीन्पितॄन्यक्षानन्यान्सर्वान्समागतान् ॥ १२२ ॥ गच्छध्वं सर्व एवैते येन्ये ह्यत्र समागताः ॥ स्वंस्वं स्थानं यथाजोषं सेव्यतां परमेश्वरः ॥१२३॥ एवं तदानीं स्वपितुर्गृहं गता संशोभमाना परमेण वर्चसा ॥ सा पार्वती देववरैः सुपूजिता संचिंतयंती मनसा सदाशिवम् ॥ १२४ ॥ इति श्रीस्कांदे महापुराणे एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे पार्वत्यै शंकरेण स्वरूपदर्शनंनाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ लोमश उवाच ॥ ॥ एतस्मिन्नंतरे तत्र महेशेन प्रणोदिताः ॥ आजग्मुः सहसा सद्य ऋषयोऽपि हिमालयम् ॥ १ ॥ तान्दृष्ट्वा सहसोत्थाय हिमाद्रिः प्रीतमानसः ॥ पूजयामास तान्सर्वानुवाच नतकंधरः ॥ २ ॥ किमर्थमागता यूयं ब्रूतागमनकारणम् ॥ तदोचुः सप्त ऋषयो महेशप्रेरिता वयम् ॥ ३ ॥ समागतास्त्वत्सकाशं कन्यायाश्च विलोकने ॥ तानस्मान्विद्धि भोः शैल स्वां कन्यां दर्शयाशु वै ॥ ४ ॥ तथेत्युक्त्वा ऋषिगणानानीता तत्र पार्वती ॥ स्वोत्संगे परिगृह्याशु गिरीन्द्रः पुत्रवत्सलः ॥ हिमवान्गिरिराजोऽथ उवाच प्रहसन्निव ॥ ५ ॥ इयं सुता मदीया हि वाक्यं शृणुत मे पुनः ॥ तपस्विनां वरिष्ठोऽसौ विरक्तो मदनांतकः ॥ ६ ॥ कथमुद्वहनार्थी च येनानंगः कृतः स्मरः ॥ अत्यासन्ने चातिदूरे आढ्ये धनविवर्जिते ॥ वृत्तिहीने च मूर्खे च कन्यादानं न शस्यते ॥ ७ ॥ मूढाय च विरक्ताय आत्मसंभाविताय च ॥ आतुराय प्रमत्ताय कन्यादानं न कारयेत् ॥८॥ तस्मान्मया विचार्यैव भवद्भिर्ऋषिसत्तमाः ॥ प्रदातव्या महेशाय एतन्मे व्रतमुत्तमम् ॥९॥ तच्छ्रुत्वा गिरिराजस्य वचनं ते महर्षयः ॥ ऐकपद्येन ऊचुस्ते प्रहस्य च हिमालयम् ॥ १० ॥ यया कृतं तपस्तीव्रं यया चाराधितः शिवः ॥ तपसा तेन संतुष्टः प्रसन्नोद्य सदाशिवः ॥ ११ ॥ अस्यास्तस्य च भोः शैल न जानासि च किंचन ॥ महिमानं परं चैव तस्मादेनां प्रयच्छ वै ॥ १२ ॥ शिवाय गिरिजामेनां कुरुष्व वचनं हि नः ॥ तच्छ्रुत्वा वचनं तेषामृषीणां भावितात्मनाम् ॥ १३ ॥ उवाच त्वरया युक्तः पर्वतान्पर्वतेश्वरः ॥ हे मेरो हे निषध किं गन्धमादन मन्दर ॥ मैनाक क्रियतामद्य शंसध्वं च यथातथम् ॥ १४ ॥ मेना तदा उवाचेदं वाक्यं वाक्यविशारदा ॥ अधुना किं विमर्शेन कृतं कार्यं तदैव हि ॥ १५ ॥ उत्पन्नेयं महाभागा देवकार्यार्थमेव च ॥ प्रदातव्या शिवायेति शिवस्यार्थेऽवतारिता ॥ २६ ॥ अनयाराधितो रुद्रो रुद्रेण परिभाविता ॥ इयं सती महाभागा शिवाय प्रतिदीयताम् ॥ १७ ॥ निमित्तमात्रं च कृतं तया वै शिवपूजने ॥ एतच्छ्रुत्वा वचस्तस्या मेनायाः परिभाषितम् ॥ १८ ॥ परितुष्टो हिमाद्रिश्च वाक्यं चेदमुवाच ह ॥ ऋषीन्प्रति निरीक्षंस्तां कन्येयं मम संप्रति ॥ १९ ॥ ततः समानीय

सुलोचनां तां श्यामां नितंबार्पितमेखलां शुभाम् ॥ वैडूर्यमुक्तावलयान्दधानां भास्वत्प्रभां चांद्रमसीं वं रेखाम् ॥ २० ॥ लावण्यामृतवापिकां
सुवदनां गौरीं सुवासां शुभां दृष्ट्वा ते ऋपयोऽपि मोहमगमन्भ्रांतास्तदा संभ्रमात् ॥ नोचुः किंचन वाक्यमेव सुधियो ह्यासन्प्रमत्ता इव स्तब्धाः
कान्तिमतीमतीव रुचिरां त्रैलोक्यनाथप्रियाम् ॥ २१ ॥ एवं तदा ते ऋपयोऽपि मोहिता रूपेण तस्याः किमुताथ देवताः ॥ तथैव सर्वे च
निरीक्ष्य तन्वीं सतीं गिरीन्द्रस्य सुतां शिवप्रियाम् ॥ २२ ॥ ततः पुनश्चैत्य शिवं शिवप्रियाः शशंसुरस्मौ ऋषयस्तदानीम् ॥ २३ ॥ ॥ ऋपय
ऊचुः ॥ ॥ भूपिता हि गिरीन्द्रेण स्वसुता नास्ति संशयः ॥ उद्वोढुं गच्छ देवेश देवैश्च परिवारितः ॥ २४ ॥ गच्छ शीघ्रं महादेव पार्वतीमात्मज
न्मने ॥ तच्छ्रुत्वा वचनं तेषां प्रहस्येदमुवाच ह ॥ २५ ॥ विवाहो हि महाभागा न दृष्टो न श्रुतोऽपि वा ॥ मया पुरा च ऋषयः कथ्यतां च विशे
षतः ॥ २६ ॥ तदोचुर्ऋपयः सर्वे प्रहसंतः सदाशिवम् ॥ विष्णुमाह्वय वै देव ब्रह्माणं च शतक्रतुम् ॥ २७ ॥ तथा ऋषिगणांश्चैव यक्षगन्धर्वपन्न
गान् ॥ सिद्धविद्याधरांश्चैव किंनरांश्चाप्सरोगणान् ॥ २८ ॥ एतांश्चान्यांश्च सुबहूनानयस्वेति सत्वरम् ॥ तदाकर्ण्य ऋषिप्रोक्तं वाक्यं वाक्यवि
शारदः ॥ २९ ॥ उवाच नारदं देवो विष्णुमानय सत्वरम् ॥ ब्रह्माणं च महेन्द्रं च अन्यांश्चैव समानय ॥ ३० ॥ शंभोर्वचनमादाय शिरसा
लोकपावनः ॥ जगाम त्वरितो भूत्वा वैकुण्ठं विष्णुवल्लभः ॥ ३१ ॥ ददर्श देवं परमासने स्थितं श्रिया च देव्या परिसेव्यमानम् ॥ चतुर्भुजं देव
वरं महाप्रभं नीलोत्पलश्यामतनुं वरेण्यम् ॥ ३२ ॥ महार्हरत्नावृतचारुकुण्डलं महाकिरीटोत्तमरत्नभास्वतम् ॥ सुवैजयंत्या वनमालया वृतं स नार
दस्तं भुवनैकसुन्दरम् ॥ ३३ ॥ उवाच नारदोऽभ्येत्य शंभोर्वाक्यमथादरात् ॥ ब्रह्मवीणां वाद्यमानः सर्वज्ञ ऋषिसत्तमः ॥ ३४ ॥ एह्येहि त्वं महा
विष्णो महादेवं त्वरान्वितः ॥ उद्वाहनार्थं शंभोश्च त्वमेकः कार्यसाधकः ॥ ३५ ॥ प्रहस्य भगवान्प्राह नारदं प्रति वै तदा ॥ कथमुद्वहने बुद्धिरु
त्पन्ना तस्य शूलिनः ॥ विज्ञातार्थोऽपि भगवान्नारदं परिपृष्टवान् ॥ ३६ ॥ ॥ नारद उवाच ॥ ॥ तपसा महता रुद्रः पार्वत्या परितोषितः ॥
स्वयमेवागतस्तत्र यत्रास्ते गिरिजा सती ॥ ३७ ॥ दासोऽहमवदच्छंभुः पार्वत्या परितोषितः ॥ पार्वतीं च समभ्यर्थ्य वरयस्व च भामिनि ॥ ३८ ॥
त्वरितेनावदच्छंभुस्त्वामाह्वयति संप्रति ॥ तस्य तद्वचनं श्रुत्वा देवदेवो जनार्दनः ॥ नारदेन समायुक्तः पार्पदैः परिवारितः ॥ ३९ ॥ सुपर्णमारुह्य
तदा महात्मा योगीश्वराणां प्रभुरच्युतो महान् ॥ ययौ तदाऽऽकाशपथा हरिः स्वयं सनारदो देववरैः समेतः ॥ ४० ॥ तं दृष्ट्वा त्वरितं देवो योगिध्ये

१ इवार्थे वशब्दः । २ अस्मैः--ऋपयः--इति पदच्छेदः । ३ तुमभाव आर्षः ।

यांघ्रिपंकजः ॥ अभ्युत्थाय मुदा युक्तः परिष्वज्य च शार्ङ्गिणम् ॥ ४१ ॥ तदा हरिहरौ देवावेकपद्येन तिष्ठतः ॥ ऊचतुः स्म तदान्योन्यं क्षेमं कुशलमेव च ॥ ४२ ॥ ॥ ईश्वर उवाच ॥ ॥ गिरिजातपसा विष्णो जितोऽहं नात्र संशयः ॥ पाणिग्रहार्थमेवाद्य गंतुकामो हिमालयम् ॥ ४३ ॥ यथार्थेन च भो विष्णो कथयामि तवाग्रतः ॥ यदा दक्षेण भो विष्णो प्रदत्ता च पुरा सती ॥४४॥ न च संकल्पविधिना मया पाणिग्रहः कृतः ॥ अधुनैव मया कार्यं कर्मविस्तारणं बहु ॥ ४५ ॥ यत्कार्यं तन्न जानामि सर्वं पाणिग्रहोचितम् ॥ शंभोस्तद्वचनं श्रुत्वा प्रहस्य मधुसूदनः ॥ ४६ ॥ यावद्वक्तुं समारेभे तावद्ब्रह्मा समागतः ॥ इंद्रेण सह सर्वैश्च लोकपालैस्त्वरान्वितः ॥४७॥ तथैव देवासुरयक्षदानवा नागाः पतंगाप्सरसो महर्षयः ॥ समेत्य सर्वे परिवक्तुमीशमूचुस्तदानीं शिरसा प्रणम्य ॥ ४८ ॥ गच्छगच्छ महादेव अस्माभिः सहितः प्रभो ॥ ततो विष्णुरुवाचेदं प्रस्तावसदृशं वचः ॥ ४९ ॥ गृह्योक्तविधिना शंभो कर्म कर्तुमिहार्हसि ॥ ५० ॥ नांदीमुखं मण्डपस्थापनं च तथा चैतत्कुरु धर्मेण युक्तम् ॥ महानदीसंगमं वर्जयित्वा कुर्वंति केचिद्वेदमनीषिणश्च ॥ ५१ ॥ मण्डपस्थापनं चैव क्रियतां ह्यधुना विभो ॥ तथोक्तो विष्णुना शंभुश्चकारात्महिताय वै ॥ ५२ ॥ ब्रह्मादिभिः कृतं तेन सर्वमभ्युदयोचितम् ॥ ग्रहाणां पूजनं चक्रे कश्यपो ब्रह्मणा युतः ॥ ५३ ॥ तथात्रिश्च वशिष्ठश्च गौतमोथ गुरुर्भृगुः ॥ कण्वो बृहस्पतिः शक्तिर्जमदग्निः पराशरः ॥ ५४ ॥ मार्कंडेयः शिलावाकः शून्यपालोऽक्षतश्रमः ॥ अगस्त्यश्च्यवनो गर्गः शिलादोऽथ महामुनिः॥५५॥ एते चान्ये च बहवो ह्यागताः शिवसन्निधौ ॥ ब्रह्मणा नोदितास्तत्र चक्रुस्ते विधिवत्क्रियाम् ॥ ५६ ॥ वेदोक्तविधिना सर्वे वेदवेदांगपारगाः ॥ चक्रू रक्षां महेशस्य कृतकौतुकमंगलाम् ॥ ५७ ॥ ऋग्यजुःसामसहितैः सूक्तैर्नानाविधैस्तथा ॥ मंगलानि च भूरीणि ऋषयस्तत्त्ववेदिनः ॥ ५८ ॥ अभ्यंजनादिकं सर्वं चक्रुस्तस्य परात्मनः ॥ ख्यातः कपर्दस्तस्यैव शिवस्य परमात्मनः ॥ ५९ ॥ अनेकैर्मौक्तिकैर्युक्ता मुण्डमालाऽभवत्तदा ॥ ये सर्पा ह्यंगभूताश्च ते सर्वे तत्क्षणादिव ॥ बभूवुर्मंडनान्येव जातरूपमयानि च ॥ ६० ॥ सर्वभूषणसंपन्नो देवदेवो महेश्वरः ॥ ययौ देवैः परिवृतः शैलराजपुरं प्रति ॥ ६१ ॥ चंडिका वरभगिनी तदा जाता भयावहा ॥ प्रेतासना गता चण्डी सर्पाभरणभूषिता ॥ ॥ ६२ ॥ हैमं कलशमादाय पूर्णं मूर्ध्नां महाप्रभा ॥ परिवारैर्महाचंडी दीप्तास्या ह्युग्रलोचना ॥ ६३ ॥ तत्र भूतान्यनेकानि विरूपाणि सहस्रशः ॥ तैः समेताग्रतश्चंडी जगाम विकृतानना ॥ ६४ ॥ तस्याः सर्वे पृष्ठतश्च गणाः परमदारुणाः ॥ कोट्येकादशसंख्याका रौद्रा रुद्रप्रियाश्च ये ॥ ६५ ॥ तदा डमरुनिर्घोषव्याप्तमासीज्जगत्रयम् ॥ भेरीभांकारशब्देन शंखानां निनदेन च ॥ ६६ ॥ तथा दुंदुभिनिर्घोषैः शब्दः

कोलाहलोऽभवत् ॥ गणानां पृष्ठतो भूत्वा सर्वे देवाः समुत्सुकाः ॥ अन्वयुः सर्वसिद्धाश्च लोकपालैः समन्विताः ॥ ६७ ॥ मध्ये व्रजन्महेंद्रोऽथ ऐरावतमुपास्थितः ॥ शुभ्रेणोच्छ्रियमाणेन छत्रेण परमेण हि ॥ ६८ ॥ चामरैर्वीज्यमानोऽसौ सुरैर्बहुभिरावृतः ॥ तदा तु व्रजमानास्त ऋषयो बहवो ह्यमी ॥ ६९ ॥ भरद्वाजादयो विप्राः शिवस्योद्वहनं प्रति ॥ शाकिन्यो यातुधानाश्च वेताला ब्रह्मराक्षसाः ॥ ७० ॥ भूतप्रेतपिशाचाश्च तथान्ये प्रमथादयः ॥ पृच्छमानास्तदा चंडीं पृष्ठतोऽन्वगमंस्तदा ॥ ७१ ॥ क्व गता साऽधुना चंडी धावमानास्तदा भृशम् ॥ प्राप्ता गता व्रजंतीं तां प्रणिपत्य महाप्रभाम् ॥ ७२ ॥ अथ प्रोचुस्तदा सर्वे चंडीं भैरवसंयुताम् ॥ विनास्माभिः कुतो यासि वद चंडि यथा तथा ॥ ७३ ॥ प्रहस्योवाच सा चंडी भूतानां तत्र शृण्वताम् ॥ शंभोरुद्वहनार्थाय प्रेतारूढा व्रजाम्यहम् ॥ ७४ ॥ हैमं कलशमादाय शिरसा बिभ्रती स्वयम् ॥ करवालीस्वरूपेण चंडी जाता ततः स्वयम् ॥ ७५ ॥ भूतैः परिवृता सर्वैः सर्वेषामग्रतोऽव्रजत् ॥ गणास्तामनुजग्मुस्ते गणानां पृष्ठतः सुराः ॥ ७६ ॥ इंद्रादयो लोकपाला ऋषयस्तेऽग्रपृष्ठतः ॥ ऋषीणां पृष्ठतो भूत्वा पार्षदाश्च महाप्रभाः ॥ ७७ ॥ विष्णोरमितभावज्ञा मुकुंदाच्च मनोरमाः ॥ सर्वे पयोदसंकाशाः स्रग्विणो वनमालिनः ॥ श्रीवत्सांकधराः सर्वे पीतवासोन्विताश्च ते ॥ ७८ ॥ चतुर्भुजाः कुंडलिनः किरीटकटकांगदैः ॥ हारनूपुरसूत्रैश्च कटिसूत्राङ्गुलीयकैः ॥ शोभिताः सर्व एवैते महापुरुषलक्षणाः ॥७९॥ तेषां मध्ये गतो विष्णुः श्रियोपेतः सुरारिहा ॥ ८० ॥ बभौ त्रिलोकीकृतविश्वमंगलो महानुभावैर्हृदि कृत्य धिष्ठितः ॥ शिवेन साकं परमार्थदस्तदा हरिः परात्मा जगदेकबंधुः ॥८१॥ स तार्क्ष्यपुत्रोपरि संस्थितो महाँल्लक्ष्म्या समेतो भुवनैकभर्ता ॥ स चामरैर्वीज्यमानो मुनींद्रैः सर्वैः समेतो हरिरीश्वरो महान् ॥ ८२ ॥ तथा विरिंचिर्निजवाहनस्थो वेदैः समेतः सह षड्भिरंगैः ॥ तथागमैः सेतिहासैः पुराणैः स संवृतो हेमगर्भो बभूव ॥ ८३ ॥ वेधोहरिभ्यां च तदा सुरेंद्रैः समावृतश्चर्षिभिः संपरीतः ॥ वृषारूढो वृषकेतुर्दुरापो योगीश्वरैरपि सर्वैरगम्यः ॥ ८४ ॥ शुद्धस्फटिकसंकाशं वृषभं धर्मवत्सलम् ॥ समेतो मातृभिश्चैव गोभिश्च कृतलक्षणम् ॥ ८५ ॥ एभिस्समेतोऽसुरदानवैः सह ययौ महेशो विबुधैरलंकृतः ॥ हिमालयं गिरिवर्यं तदानीं पाणिग्रहार्थं प्रमदोत्तमायाः ॥ ८६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे श्रीशिवस्य विवाहवर्णनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ लोमश उवाच ॥ ॥ तथैव सर्वं परया मुदान्वितश्चक्रे गिरींद्रः स्वसुतार्थमेव ॥ गर्गं पुरस्कृत्य महानुभावो मंगल्यभूमिं परया विभूत्या ॥ १ ॥ आहूय विश्वकर्माणं कारया

१ निजधारणस्थः—इ० पा० ।

च सुविस्तीर्णं वेदिकाभिर्मनोरमम् ॥ २ ॥ अयुतेनैव विस्तारं योजनानां द्विजोत्तमाः ॥ मंडपं च गुणोपेतं ॥ ३ ॥ स्थावरं जंगमं चैव सदृशं च मनोहरम् ॥ जंगमं च जितं तत्र स्थावरेण तथैव च ॥ ४ ॥ जंगमेन च ॥ पयसा च जिता तत्र स्थलभूमिरभूत्तदा ॥ ५ ॥ जलं किं नु स्थलं तत्र न विदुस्तत्त्वतो जनाः ॥ क्वचित्सिंहाः क्वचिद्धंसाः सारसाश्च महाप्रभाः ॥ ६ ॥ क्वचिच्छिखंडिनस्तत्र कृत्रिमाः सुमनोहराः ॥ तथा नागाः कृत्रिमाश्च हयाश्चैव तथा मृगाः ॥ ७ ॥ के सत्याः के असत्याश्च संस्कृता विश्वकर्मणा ॥ तथैव चैवं विधिना द्वारपा अद्भुताः कृताः ॥ ८ ॥ पुंसो धनूंषि चोत्कृष्य स्थावरा जंगमोपमाः ॥ तथाश्वाः सादिभिश्चैव गजाश्च गजसादिभिः ॥ ९ ॥ चामरैर्वीज्यमानाश्च केचित्पुष्पांकुरान्विताः ॥ केचिच्च पुरुषास्तत्र विरेजुः स्रग्विणस्तथा ॥ ॥ १० ॥ कृत्रिमाश्च तथा बह्वयः पताकाः कल्पितास्तथा ॥ द्वारि स्थिता महालक्ष्मीः क्षीरोदधिसमुद्भवा ॥ ११ ॥ गजाः स्वलंकृता ह्यासन्कृत्रिमा ह्यकृतोपमाः ॥ तथाश्वाः सादिभिश्चैव गजाश्च गजसादिभिः ॥ १२ ॥ रथा रथियुता ह्यासन्कृत्रिमा ह्यकृतोपमाः ॥ सर्वेषां मोहनार्थाय तथा च संसदः कृताः ॥ १३ ॥ महाद्वारि स्थितो नंदी कृतस्तेन हि मंडपे ॥ शुद्धस्फटिकसंकाशो यथा नंदी तथैव सः ॥ १४ ॥ तस्योपरि महद्दिव्यं पुष्पकं रत्नभूषितम् ॥ राजितं पल्लवच्छत्रैश्चामरैश्च सुशोभितम् ॥ १५ ॥ वामपार्श्वे गजौ द्वौ च शुद्धकाश्मीरसन्निभौ ॥ चतुर्दंतौ षष्टिवर्षौ महात्मानौ महाप्रभौ ॥ १६ ॥ तथैव दक्षिणे पार्श्वे द्वावश्वौ दंशितौ कृतौ ॥ रत्नालंकारसंयुक्ताँल्लोकपालांस्तथैव च ॥ १७ ॥ षोडश प्रकृतीस्तेन याथातथ्येन धीमता ॥ सर्वे देवा यथार्थेन कृता वै विश्वकर्मणा ॥ १८ ॥ तथैव ऋषयः सर्वे भृग्वाद्याश्च तपोधनाः ॥ विश्वे च पार्षदैः साकमिंद्रो हि परमार्थतः ॥ १९ ॥ कृताः सर्वे महात्मानो याथातथ्येन धीमता ॥ एवंभूतः कृतस्तेन मंडपो दिव्यरूपवान् ॥ २० ॥ अनेकाश्चर्यसंभूतो दिव्यो दिव्यविमोहनः ॥ एतस्मिन्नंतरे तत्र आगतो नारदोग्रतः ॥ २१ ॥ ब्रह्मणा नोदितस्तत्र हिमालयगृहं प्रति ॥ नारदोथ ददर्शाग्रे आत्मानं विनयान्वितम् ॥ २२ ॥ भ्रांतो हि नारदस्तेन कृत्रिमेण महायशाः ॥ अवलोकपरस्तत्र चरितं विश्वकर्मणः ॥ ॥ २३ ॥ प्रविष्टो मंडपं तस्य हिमाद्रे रत्नचित्रितम् ॥ सुवर्णकलशैर्जुष्टं रंभाद्यैरुपशोभितम् ॥ २४ ॥ सहस्रस्तम्भसंयुक्तं ततोऽद्रिः स्वगणैर्वृतः ॥ तमृषिं पूजयामास किं कार्यमिति पृष्टवान् ॥ २५ ॥ ॥ नारद उवाच ॥ ॥ आगतास्ते महात्मानो देवा इन्द्रपुरो

गमाः ॥ तथा महर्षयः सर्वे गणैश्च परिवारिताः ॥ महादेवो वृषारूढो ह्यागतोद्वहनं प्रति ॥ २६ ॥ ततस्तद्वचनं श्रुत्वा हिमवान्गि
रिसत्तमः ॥ उवाच नारदं वाक्यं प्रशस्तमधुरं महत् ॥ २७ ॥ पूजयित्वा यथान्यायं गच्छ त्वं शंकरं प्रति ॥ २८ ॥ ततस्तद्वचनं श्रुत्वा
मुनिर्हिमवतो गिरेः ॥ तथैव मत्वा वचनं शैलराजानमब्रवीत् ॥ मैनाकेन च सह्येन मेरुणा गिरिणा सह ॥ २९ ॥ एभिः समेतो ह्यधुना
महामते यतस्व शीघ्रं शिवमत्र चानय ॥ देवैः समेतं च महर्षिवर्यैः सुरासुरैरर्चितपादपंकजम् ॥ ३० ॥ तथेति मत्वा स जगाम तूर्णं सहै
व तैः पर्वतराजभिश्च ॥ त्वरागतश्चैकपदेन शंभुं प्राप्नोदृषीणां प्रवरो महात्मा ॥ ३१ ॥ तावद्दृष्टो महादेवो देवैश्च परिवारितः ॥ तदा ब्रह्मा च
विष्णुश्च रुद्रश्चैव सुरैः सह ॥ ३२ ॥ पप्रच्छुर्नारदं सर्वे येऽन्ये रुद्रचरा भृशम् ॥ कथ्यतां पृच्छमानानामस्माकं कथ्यते न हि ॥ ३३ ॥ एकैकस्या
त्मजाः स्वाः स्वाः सह्यमैनाकमेरवः ॥ कन्यां दास्यंति वा शंभोः किं त्विदानीं प्रवर्तते ॥ ३४ ॥ ततोऽवोचन्महातेजा नारदश्चर्षिसत्तमः ॥
ब्रह्माणं पुरतः कृत्वा विष्णुं प्रति स[illegible]कम् ॥ ३५ ॥ एकांतमाश्रित्य तदा सुरेन्द्रं स नारदो वाक्यमिदं बभाषे ॥ त्वष्ट्रा कृतं वै भवनं महत्तरं येनैव
सर्वे च विमोहिता वयम् ॥ ३६ ॥ पुरा कृतं तस्य महात्मनस्त्वया किं विस्मृतं तत्सकलं शचीपते ॥ तस्मादसौ त्वां विजिगीषुकामो गृहे वसंस्तस्य
गिरेर्महात्मनः ॥ ३७ ॥ अहो विमोहितस्तेन प्रतिरूपेण भास्वता ॥ तथा विष्णुः कृतस्तेन शंखचक्रगदादिभृत् ॥ ३८ ॥ ब्रह्मा चैव तथाभूतस्तं
चैव कृतवानसौ ॥ ३९ ॥ मायामयो वृषभस्तेन वेषात्कृतो हि नागोऽश्वतरस्तथैव ॥ तथा चान्यान्यप्यनेनामरेन्द्र सर्वाण्येवोल्लिखितान्यत्र विद्धि
॥ ४० ॥ तच्छ्रुत्वा वचनं तस्य देवेंद्रो वाक्यमब्रवीत् ॥ ४१ ॥ विष्णुं प्रति तदा शीघ्रं दृष्ट्वा यामि वसात्र भोः ॥ पुत्रशोकेन तत्रोऽसौ व्याजेनान्येन
वाऽकरोत् ॥ ४२ ॥ तस्य तद्वचनं श्रुत्वा देवदेवो जनार्दनः ॥ उवाच प्रहसन्वाक्यं शक्रमात्तभयं तदा ॥ ४३ ॥ निवातकवचैः पूर्वं मोहितोऽसि शची
पते ॥ विद्याऽमृता तत्र मया समानीतोपसत्तये ॥ ४४ ॥ महाविद्याबलेनैव प्रविश्य मण्डपेऽधुना ॥ पर्वतो हिमवानेष तथान्ये पर्वतोत्तमाः ॥ ४५ ॥
विपक्षा हि कृताः सर्वे मम वाक्याच्च वासव ॥ हेतुं स्मृत्वाथ वै त्वष्टा मायया ह्यकरोदिदम् ॥ ४६ ॥ जयमिच्छंति वै मूढा न च भेतव्यमण्वपि ॥
॥ ४७ ॥ एवं विवदमानांस्तान्देवाञ्छक्रपुरोगमान् ॥ सांत्वयामास वै विष्णुर्नारदं ते ततोऽब्रुवन् ॥ ४८ ॥ ददाति वा न ददाति कन्यां गिरीन्द्रः
स्वां वै कथ्यतां शीघ्रमेव ॥ किं तेन दृष्टं किं कृतं चाद्य शंस तत्सर्वं भो नारद ते नमोऽस्तु ॥४९॥ तच्छ्रुत्वा प्रहसञ्छंभुरुवाच वचनं तदा ॥ कन्यां

१ आगतः—उद्वहनं प्रति—इति पदच्छेदः । विसर्गलोपसन्धी आर्षौ । २ असौ—विश्वकर्मा ।

दास्यति चेन्मह्यं पर्वतो हि हिमालयः ॥ मायया मम किं कार्यं वद विष्णो यथातथम् ॥ ५० ॥ केनाप्युपायेन फलं हि साध्यमित्युच्यते पंडितै र्न्यायविद्भिः ॥ तस्मात्सर्वैर्गम्यतां शीघ्रमेव कार्यार्थिभिश्चेन्द्रपुरोगमैश्च ॥५१॥ तदा शिवोऽपि विश्वात्मा पंचबाणेन मोहितः ॥ महाभूतेन भूतेशस्त्व न्येषां चैव का कथा ॥ ५२ ॥ एवं च विद्यमानेऽसौ शंभुः परमशोभनः ॥ कृतो ह्यनंगेन वशे यथान्यः प्राकृतो जनः ॥५३॥ मदनो हि बली लोके येन सर्वमिदं जगत् ॥ जितमस्ति निजप्रौढ्या सदेवर्षिसमन्वितम् ॥ ५४ ॥ सर्वेषामेव भूतानां देवानां च विशेषतः ॥ राजा ह्यनंगो बलवान्यस्य चाज्ञा बलीयसी ॥ ५५ ॥ पार्वतीस्त्रीस्वरूपेण अजेयो भुवनत्रये ॥ तां दृष्ट्वा हि स्त्रियं सर्वे ऋषयोऽपि विचक्षणाः ॥ ५६ ॥ देवा मनुष्या गन्धर्वाः पिशाचोरगराक्षसाः ॥ आज्ञानुल्लंघिनः सर्वे मदनस्य महात्मनः ॥ ५७ ॥ तपोबलेन महता तथा दानबलेन च ॥ वेत्तुं न शक्यो मदनो विन येन विना द्विजाः ॥ ५८ ॥ तस्मादनंगस्य महान्क्रोधो हि बलवत्तरः ॥ ईश्वरं मदनेनैवं मोहितं वीक्ष्य माधवः ॥५९॥ उवाच वाक्यं वाक्यज्ञो मा चिंतां कुरु वै प्रभो ॥ यदुक्तं नारदेनैव मंडपं प्रति सर्वशः ॥ ६० ॥ त्वष्ट्रा कृतं विचित्रं च तत्सर्वं मदनात्प्रभोः ॥ तदानीं शंकरो वाक्यमुवाच मधुसूदनम् ॥ ६१ ॥ अविद्यया वृतं तेन कृतं त्वष्ट्रा हि मण्डपम् ॥ किं तु वक्ष्यामहे विष्णो मण्डपः केवलेन हि ॥ ६२ ॥ विवाहो हि महाभाग अविद्यामूल एव च ॥ तस्मात्सर्वे वयं याम उद्वाहार्थं च संप्रति ॥ ६३ ॥ नारदं च पुरस्कृत्य सर्वे देवाः सवासवाः ॥ हिमाद्रिसहिता जग्मुर्म न्दिरं परमाद्भुतम् ॥ अनेकाश्चर्यसंयुक्तं विचित्रं विश्वकर्मणा ॥ ६४ ॥ कृतं च तेनाद्य पवित्रमुत्तमं तं यज्ञवाटं बहुभिः पुरस्कृतम् ॥ विचित्रचित्रं मनसो हरं च तं यज्ञवाटं स चकार बुद्धिमान् ॥ ६५॥ प्रवेक्ष्यमाणास्ते सर्वे सुरेन्द्रा ऋषिभिः सह ॥ दृष्टा हिमाद्रिणा तत्र अभ्युत्थानगतोऽभवत् ॥ ॥ ६६ ॥ तथैव तेषां च मनोहराणि हर्म्याणि तेन प्रतिकल्पितानि ॥ गन्धर्वयक्षाः प्रमथाश्च सिद्धा देवाश्च नागाप्सरसां गणाश्च ॥ वसंति यत्रैव सुखेन तेभ्यः स तत्रतत्रोपवनं चकार ॥६७॥ तेषामर्थे महार्हाणि धाराजिरगृहाणि च ॥ अत्यद्भुतानि शोभंते कृतान्येव महात्मना ॥ ६८ ॥ निवा सार्थे कल्पितानि सावकाशानि तत्र वै ॥ देवानां चैव सर्वेषामृषीणां भावितात्मनाम् ॥ ६९ ॥ एवं विस्तारयामास विश्वकर्मा बहून्यपि ॥ मन्दि राणि यथायोग्यं यत्र तत्रैव तिष्ठताम् ॥ ७० ॥ भैरवाः क्षेत्रपालाश्च येऽन्ये च क्षेत्रवासिनः ॥ श्मशानवासिनश्चान्ये येऽन्ये न्यग्रोधवासिनः ॥ ॥ ७१ ॥ अश्वत्थसेविनश्चान्ये खेचराश्च तथा परे ॥ येये यत्रोपविष्टाश्च तत्रतत्रैव तेन वै ॥ ७२ ॥ कृतानि च मनोज्ञानि भवनानि महांति वै ॥ तेषामेवानुकूलानि भूतानां विश्वकर्मणा ॥ ७३ ॥ तत्रैव ते सर्वगणैः समेता निवासितास्तेन हिमाद्रिणा स्वयम् ॥ सेंद्राः सुरा यक्षपिशाचर

क्षसां गन्धर्वविद्याप्सरसां समूहाः ॥ ७४ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे पार्वतीपरिणयने हिमाद्रिणा देवानां निवासस्थानकरणवर्णनंनाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ तत्रोपविविशुः सर्वे सत्कृताश्च हिमाद्रिणा ॥ ते देवाः सपरीवाराः सहर्षाश्च सवाहनाः ॥ १ ॥ तत्रैव च महामात्रं निर्मितं विश्वकर्मणा ॥ दीप्त्या परमया युक्तं निवासार्थं स्वयम्भुवः ॥ २ ॥ तथैव विष्णोस्त्वपरं भवनं स्वयमेव हि ॥ भास्वरं सुविचित्रं च कृतं त्वष्ट्रा मनोरमम् ॥ वण्डीगृहं मनोज्ञं च तथैव कृतवान्स्वयम् ॥ ३ ॥ तथैव श्वेतं परमं मनोज्ञं महाप्रभं देववरैः सुपूजितम् ॥ कैलासलक्ष्मीप्रभया महत्या सुशोभितं तद्भवनं चकार ॥ ४ ॥ तत्रैव शंभुः परया विभूत्या स स्थापितस्तेन हिमाद्रिणा वै ॥ ५ ॥ एतस्मिन्नंतरे मेना समायाता सखीगणैः ॥ नीराजनार्थं शंभुं च ऋषिभिः परिवारिता ॥ ६ ॥ तदा वादित्रनिर्घोषैर्नादितं भुवनत्रयम् ॥ नीराजनं कृतं तस्य मेनया च तपस्विनः ॥ ७ ॥ अवलोक्य परा साध्वी मेनाऽजानाद्धरं तदा ॥ गिरिजोक्तमनुस्मृत्य मेना विस्मयमागता ॥ ८ ॥ यद्वै पुरोक्तं च तया पार्वत्या मम सन्निधौ ॥ ततोऽधिकं प्रपश्यामि सौंदर्यं परमेष्ठिनः ॥ महेशस्य मया दृष्टमनिर्वाच्यं च संप्रति ॥ ९ ॥ एवं विस्मयमापन्ना विप्रपत्नीभिरावृता ॥ अहतांबरयुग्मेन शोभिता वरवर्णिनी ॥ १० ॥ कंचुकी परमा दिव्या नानारत्नैश्च शोभिता ॥ अंगीकृता तदा देव्या रराज परया श्रिया ॥ ११ ॥ बिभ्रती च तदा हारं दिव्यरत्नविभूषितम् ॥ वलयानि महार्हाणि शुद्धचामीकराणि च ॥ १२ ॥ तत्रोपविष्टा सुभगा ध्यायंती परमेश्वरम् ॥ सखीभिः सेव्यमाना सा विप्रपत्नीभिरेव च ॥ १३ ॥ एतस्मिन्नंतरे तत्र गर्गो वाक्यमभाषत ॥ पाणिग्रहार्थं शंभुं च आनयध्वं स्वमंदिरम् ॥ त्वरितेनैव वेलायामस्यामेव विचक्षणाः ॥ १४ ॥ तच्छ्रुत्वा वचनं तस्य गर्गस्य च महात्मनः ॥ अभ्युत्थानपराः सर्वे पर्वताः सकलत्रकाः ॥ १५ ॥ महाविभूत्या संयुक्ताः सर्वे मंगलपाणयः ॥ सालंकृतास्तदा तेषां पत्न्योलंकारमंडिताः ॥१६॥ उपायनान्यनेकानि जगृहुः स्निग्धलोचनाः ॥ तदा वादित्रघोषेण ब्रह्मघोषेण भूयसा ॥ १७ ॥ आजग्मुः सकलत्रास्ते यत्र देवो महेश्वरः ॥ प्रमथैरावृतस्तत्र चंड्या चैवाभिसेवितः ॥ १८ ॥ तथा महर्षिभिस्तत्र तथा देवगणैः सह ॥ एभिः परिवृतः श्रीमाञ्छंकरो लोकशंकरः ॥ १९ ॥ श्रुत्वा वादित्रनिर्घोषं सर्वे शंकरसेवकाः ॥ उत्थिता ऐकपद्येन देवैर्ऋषिभिरा

---

१ वण्डीगृहम्–बहुनिवासनिवासिनां जनानामेकत्र संमेलनार्थं यत्सभाप्रायं गृहं "बैठक" इत्याख्यं तत्–'वण्डीगृहम्' इत्यर्थः । अत एव दाक्षिणात्येषु "पिम्पळवण्डी" "वेलवण्डी" इत्यादिनामानः केचन ग्रामाः प्रसिद्धाः सन्ति–इति समवधेयं सुधीभिः ।

वृताः ॥२०॥ तथोद्यतो योगिनीचक्रयुक्तो गणो गणानां पतिरेकवर्चसाम् ॥ शिवं पुरस्कृत्य तदानुभावास्तथैव सर्वे गणनायकाश्च ॥२१॥ तद्योगिनी चक्रमतिप्रचंडं टंकारभेरीरवनिस्वनेन ॥ चंडीं पुरस्कृत्य भयानकां तदा महाविभूत्या समलंकृतां तदा ॥ २२ ॥ कंठे कर्कोटकं नागं हारभूतं चकार सा ॥ पदकं वृश्चिकानां च दंदशूकांश्च बिभ्रती ॥ २३ ॥ कर्णावतंसान्सा दध्रे पाणिपादमयांस्तथा ॥ रणे हतानां वीराणां शिरांस्युरसि चापरान् ॥ २४ ॥ द्वीपिचर्मपरीधाना योगिनीचक्रसंयुता ॥ क्षेत्रपालावृता तद्वद्भैरवैः परिवारिता ॥ २५ ॥ तथा प्रेतैश्च भूतैश्च कपटैः परिवारिता॥ वीरभद्रादयश्चैव गणाः परमदारुणाः ॥ ये दक्षयज्ञनाशार्थे शिवेनाज्ञापितास्तदा ॥ २६ ॥ तथा काली भैरवी च माया चैव भयावहा ॥ त्रिपुरा च जया चैव तथा क्षेमकरी शुभा ॥२७॥ अन्याश्चैव तथा सर्वाः पुरस्कृत्य सदाशिवम् ॥ गंतुकामाश्चोग्रतरा भूतैः प्रेतैः समावृताः ॥ २८ ॥ एताः सर्वा विलोक्याथ शिवभक्तो जनार्दनः ॥ महर्षींश्च पुरस्कृत्य ह्यमरांश्च तथैव च ॥ अनसूयां पुरस्कृत्य तथैव च ह्यरुंधतीम् ॥२९॥ ॥ विष्णुरुवाच ॥ ॥ चण्डीं कुरु समीपस्थां लोकपालनतां प्रभो ॥ ३० ॥ तदुक्तं विष्णुना वाक्यं निशम्य जगदीश्वरः ॥ उवाच प्रहसन्नेव चंडीं प्रति सदाशिवः ॥ ३१ ॥ अत्रैव स्थीयतां चंडि यावदुद्वहनं भवेत् ॥ मम भावान्विजानासि कार्याकार्ये सुशोभने ॥३२॥ एवमाकर्ण्य वचनं शंभोरमिततेजसः ॥ उवाच कुपिता चंडी विष्णुमुद्दिश्य सादरम् ॥ ३३ ॥ तथान्ये प्रमथाः सर्वे विष्णुमूचुः प्रकोपिताः ॥ यत्रयत्र शिवो भाति तत्रतत्र वयं प्रभो ॥ ३४ ॥ त्वया निवारिताः कस्माद्वयमाभ्युदये परे ॥ तेषां तद्वचनं श्रुत्वा केशवो वाक्यमब्रवीत् ॥ ३५ ॥ चण्डीमुद्दिश्य प्रमथानन्यांश्चैव तथाविधान् ॥ यूयं चैव मया प्रोक्ता मा कोपं कर्त्तुमर्हथ ॥३६॥ एवमुक्तास्तदा तेन चंडीमुख्या गणास्तदा ॥ एकांतमाश्रिताः सर्वे विष्णुवाक्याज्ज्वलद्धृदः ॥३७॥ तावत्सर्वे समायाताः पर्वतेंद्रस्य मंत्रिणः ॥ सकलत्राः संभ्रमेण महेशं प्रति सत्वरम् ॥ ३८ ॥ पंचवाद्यप्रघोषेण ब्रह्मघोषेण भूयसा ॥ योषिद्भिः संवृतास्तत्र गीतशब्देन भूयसा ॥ ३९ ॥ एवं प्राप्ता यत्र शंभुः सकलैः परिवारितः ॥ आगत्य कलशैः साकं स्नापितो हि सदाशिवः ॥ स्त्रीभिर्मंगलगीतेन सर्वाभरणभूषितः ॥४०॥ ऋषयो देवगंधर्वास्तथान्ये पर्वतोत्तमाः ॥ शंभ्वग्रगास्तदा जग्मुः स्त्रियश्चैव सुपूजिताः ॥ बभौ छत्रेण महता ध्रियमाणेन मूर्द्धनि ॥ ४१ ॥ चामरैर्वीज्यमानोऽसौ मुकुटेन विराजितः ॥ ब्रह्मा विष्णुस्तथा चंद्रो लोकपालास्तथैव च ॥ ४२ ॥ अग्रगा ह्यपि शोभंतः श्रिया परमया युताः ॥ तथा शंखाश्च भेर्यश्च पटहानकगोमुखाः ॥ ४३ ॥ तथैव गायकाः सर्वे जग्मुः परममंगलम् ॥ पुनःपुनरवाद्यंत वादित्राणि महोत्सवे ॥ ४४ ॥ अरुंधती महाभागा अनसूया तथैव च ॥ सावित्री च तथा लक्ष्मीर्मातृभिः परिवारिताः ॥ ४५ ॥ एभिः समेतो जगदेकबंधुर्बभौ तदानीं परमेण वर्चसा ॥

सनंदमर्यानिलवायुना वृतः सलोकपालप्रवरैर्महर्षिभिः ॥ ४६ ॥ स वीज्यमानः पवनेन साक्षाच्छत्रं च तस्मै शशिना ह्यधिष्ठितम् ॥ सूर्यः पुरस्ताद्भवत्प्रकाशकः श्रियान्वितो विष्णुरभूच्च सन्निधौ ॥४७॥ पुष्पैर्ववर्षुर्ह्यवकीर्यमाणा देवास्तदानीं मुनिभिः समेताः ॥ ययौ गृहं कांचनकुट्टिमं महन्महाविभूत्यापरिशोभितं तदा ॥ विवेश शंभुः परया सपर्यया संपूज्यमानो नरदेवदानवैः ॥४८॥ एवं समागतः शंभुः प्रविष्टो यज्ञमण्डपम् ॥ संस्तूयमानो विबुधैः स्तुतिभिः परमेश्वरः ॥ ४९ ॥ गजादुत्तारयामास महेशं पर्वतोत्तमः ॥ उपविश्य ततः पीठे कृत्वा नीराजनं महत् ॥५०॥ मेनया सखिभिः साकं तथैव च पुरोधसा ॥ मधुपर्कादिकं सर्वं यत्कृतं चैव तत्र वै ॥ ५१ ॥ ब्रह्मणा नोदितः सद्यः पुरोधाः कृतवान्प्रभुः ॥ मंगलं शुभकल्याणं प्रस्तावसदृशं बहु ॥ ५२ ॥ अंतर्वेद्यां संप्रवेश्य यत्र सा पार्वती स्थिता ॥ वेदिकोपरि तन्वंगी सर्वाभरणभूषिता ॥ ५३ ॥ तत्रानीतो हरः साक्षाद्विष्णुना ब्रह्मणा सह ॥ लग्नं निरीक्षमाणास्ते वाचस्पतिपुरोगमाः ॥ ५४ ॥ गर्गो मुनिश्चोपविष्टस्तत्रैव घटिकालये ॥ यावत्पूर्णा घटी जाता तावत्प्रणवशापणम् ॥ ५५ ॥ ॐपुण्येति प्रणिगदन्गर्गो वध्वंजलिं दधे ॥ पार्वत्यक्षतपूर्णं च शिवोपरि ववर्ष वै ॥ ५६ ॥ तया संपूजितो रुद्रो दध्यक्षतकुशादिभिः ॥ मुदा परमया युक्ता पार्वती रुचिरानना ॥ ५७ ॥ विलोकयंती शंभुं तं यदर्थे परमं तपः ॥ कृतं पुरा महादेव्या परेषां परमं महत् ॥ ५८ ॥ तपसा तेन संप्राप्तो जगज्जीवनजीवनः ॥ नारदेन ततः प्रोक्तो महादेवो वृषध्वजः ॥ ५९ ॥ तथा गंगादिभिश्चान्यैर्मुनिभिः सनकादिभिः ॥ प्रतिपूजां कुरु क्षिप्रं पार्वत्याश्च त्रिलोचन ॥ तदा शिवेन सा तन्वी पूजिताध्यक्षतादिभिः ॥ ६० ॥ एवं परस्परं तौ च पार्वतीपरमेश्वरौ ॥ अर्च्यमानौ तदानीं च शुशुभाते जगन्मयौ ॥ ६१ ॥ त्रैलोक्यलक्ष्म्या संवीतौ निरीक्षंतौ परस्परम् ॥ तदा नीराजितौ लक्ष्म्या सावित्र्या च विशेषतः ॥ अरुंधत्या तदा तौ च दंपती परमेश्वरौ ॥ ६२ ॥ अनसूया तथा शंभुं पार्वतीं च यशस्विनीम् ॥ दृष्ट्वा नीराजयामास प्रीत्युत्कलितलोचना ॥ ६३ ॥ तथैव सर्वा द्विजयोषितश्च नीराजयामासुरहो पुनःपुनः ॥ सतीं च शंभुं च विलोकयंत्यस्तथैव सर्वा मुदिता हसंत्यः ॥ ६४ ॥ ॥ लोमश उवाच ॥ ॥ एतस्मिन्नंतरे तत्र गर्गाचार्यप्रणोदितः ॥ हिमवान्मेनया सार्द्धं कन्यां दातुं प्रचक्रमे ॥ ६५ ॥ हैमं कलशमादाय मेना चार्द्धांगमाश्रिता ॥ हिमाद्रेश्च महाभागा सर्वाभरणभूषिता ॥ ६६ ॥ तदा हिमाद्रिणा प्रोक्तो विश्वनाथो वरप्रदः ॥ ब्रह्मणा सह संगत्य विष्णुना च तथैव च ॥ ६७ ॥ सार्द्धं पुरोधसा चैव गर्गेण सुमहात्मना ॥ कन्यादानं करोम्यद्य देवदेवस्य शूलिनः ॥ ६८ ॥ प्रयोगो भण्यतां ब्रह्मन्नस्मिन्समय आगते ॥ तथेति मत्वा ते सर्वे कालज्ञा द्विजसत्तमाः ॥ ६९ ॥ कथ्यतां तात गोत्रं स्वं कुलं चैव विशेषतः ॥ कथयस्व महाभाग इत्याकर्ण्य

वचस्तथा ॥ सुमुखो विमुखः सद्यो ह्यशोच्यः शोच्यतां गतः ॥ ७० ॥ एवंविधः सुरवरैर्ऋषिभिस्तदानीं गंधर्वयक्षमुनिसिद्धगणैस्तथैव ॥ दृष्टो निरुत्तरमुखो भगवान्महेशो हास्यं चकार सुभृशं त्वथ नारदश्च ॥ ७१ ॥ वीणां प्रकटयामास ब्रह्मपुत्रोऽथ नारदः ॥ तदानीं वारितो धीमान्वीणां मा वादय प्रभो ॥ ७२ ॥ इत्युक्तः पर्वतेनैव नारदो वाक्यमब्रवीत् ॥ त्वया पृष्टो भवः साक्षात्स्वगोत्रकथनं प्रति ॥ ७३ ॥ अस्य गोत्रं कुलं चैव नाद एव परं गिरे ॥ नादे प्रतिष्ठितः शंभुर्नादो ह्यस्मिन्प्रतिष्ठितः ॥ ७४ ॥ तस्मान्नादमयः शंभुर्नादाच्च प्रतिलभ्यते ॥ तस्माद्वीणा मया चाद्य वादिता हि परंतप ॥ ७५ ॥ अस्य गोत्रं कुलं नाम न जानंति हि पर्वत ॥ ब्रह्मादयो हि विबुधा अन्येषां चैव का कथा ॥ ७६ ॥ त्वं हि मूढत्वमापन्नो न जानासि हि किंचन ॥ वाच्यावाच्यं महेशस्य विषया हि बहिर्मुखाः ॥ ७७ ॥ येये आगमिकाश्चाद्रे नष्टास्ते नात्र संशयः ॥ अरूपोयं विरूपाक्षो ह्यकुलीनोऽयमुच्यते ॥ ७८ ॥ अगोत्रोऽयं गिरिश्रेष्ठ जामाता ते न संशयः ॥ न कर्त्तव्यो विमर्शोऽत्र भवता विबुधेन हि ॥ ७९ ॥ न जानंति हरं सर्वे किं बहूक्त्या मम प्रभो ॥ यस्याज्ञानान्महाभाग मोहिता ऋषयो ह्यमी ॥ ८० ॥ ब्रह्मापि तं न जानाति मस्तकं परमेष्ठिनः ॥ विष्णुर्गतो हि पातालं न दृष्टो हि तथैव च ॥ ८१ ॥ तेन लिंगेन महता ह्यगाधेन जगत्रयम् ॥ व्याप्तमस्तीति तद्विद्धि किमनेन प्रयोजनम् ॥ ८२ ॥ अनयाराधितं नूनं तव पुत्र्या हिमालय ॥ तत्त्वतो हि न जानासि कथं चैव महागिरे ॥ ८३ ॥ आभ्यामुत्पाद्यते विश्वमाभ्यां चैव प्रतिष्ठितम् ॥ एतच्छ्रुत्वा वचस्तस्य नारदस्य महात्मनः ॥ ८४ ॥ हिमाद्रिप्रमुखाः सर्वे तथा चेंद्रपुरोगमाः ॥ साधुसाध्विति ते सर्वे ऊचुर्विस्मितमानसाः ॥८५॥ ईश्वरस्य तु गांभीर्यं ज्ञात्वा सर्वे विचक्षणाः ॥ विस्मयेन समाश्लिष्टा ऊचुः सर्वे परस्परम् ॥ ८६ ॥ ॥ ऋषय ऊचुः ॥ ॥ यस्याज्ञया जगदिदं च विशालमेव जातं परात्परमिदं निजबोधरूपम् ॥ सर्वं स्वतंत्रपरमेश्वरभावगम्यं सोऽसौ त्रिलोकनिजरूपयुतो महात्मा ॥ ८७ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवपार्वतीविवाहवर्णनंनाम पंचविंशोऽध्यायः ॥ २५ ॥ छ ॥

॥ लोमश उवाच ॥ ॥ अथ ते पर्वतश्रेष्ठा मेर्वाद्या जातसंभ्रमाः ॥ ऊचुस्ते चैकपद्येन हिमवंतं महागिरिम् ॥ १ ॥ ॥ पर्वता ऊचुः ॥ ॥ कन्यादानं क्रियतां चाद्य शैल श्रीमाञ्छम्भुर्भाग्यतस्तेऽद्य लब्धः ॥ हृन्मध्ये वै नात्र कार्यो विमर्शस्तस्मादेषा दीयतामीश्वराय ॥ २ ॥ तच्छ्रुत्वा वचनं तेषां सुहृदां वै हिमालयः ॥ सम्यक्संकल्पमकरोद्ब्रह्मणा नोदितस्तदा ॥ इमां कन्यां तुभ्यमहं ददामि परमेश्वर ॥ ३ ॥ भार्यार्थं प्रतिगृह्णीष्व मंत्रेणानेन दत्तवान् ॥ ॥ अस्मै रुद्राय महते देवदेवाय शंभवे ॥ कन्या दत्ता महेशाय गिरींद्रेण महात्मना ॥ ४ ॥ वेद्यां च बहिरानीतौ दंपती

कमलेक्षणौ ॥ उपवेशितौ वहिर्वेद्यां पार्वतीपरमेश्वरौ ॥ ५ ॥ आचार्येणाथ तत्रैव कश्यपेन महात्मना ॥ आह्वानं हवनार्थाय कृतमग्नेस्तदा द्विजाः ॥ ॥ ६ ॥ ब्रह्मा ब्रह्मासनगतो बभूव शिवसन्निधौ ॥ प्रवर्तमाने हवन ऋषयश्च विचक्षणाः ॥ ७ ॥ ऊचुः परस्परं तत्र नानादर्शनवेदिनः ॥ वेदवादरताः केचिदवदन्संमतेन वै ॥ ८ ॥ एवमेव न चाप्येवमेवमेव न चान्यथा ॥ कार्यमेव न वा कार्यं कार्याकार्यं तथा परे ॥ ९ ॥ इत्येवं ब्रुवतां शब्दः श्रूयते शिवसन्निधौ ॥ स्वकीयं मतमास्थाय ह्यब्रुवंस्ते परस्परम् ॥ तत्त्वज्ञानविहीनास्ते केवलं वेदबुद्धयः ॥ १० ॥ तेषां तद्व चनं श्रुत्वा परस्परजयैषिणाम् ॥ प्रहस्य नारदो वाक्यमुवाच शिवसन्निधौ ॥ ११ ॥ यूयं सर्वे वादिनश्च वेदवादरतास्तथा ॥ मौनमास्थाय भो विप्रा हृदि कृत्य सदाशिवम् ॥ १२ ॥ आत्मानं परमात्मानं पराणां परमं च तत् ॥ येनेदं कारितं विश्वं यतः सर्वं प्रवर्त्तते ॥ यस्मिन्निलीयते विश्वं तस्मै सर्वात्मने नमः ॥ १३ ॥ सोऽयमास्तेऽधुना गेहे पर्वतेंद्रस्य भो द्विजाः ॥ मुखादस्यैव संजाताः सर्वे यूयं विचक्षणाः ॥ १४ ॥ एवमुक्ता स्तदा तेन नारदेन द्विजोत्तमाः ॥ उपदेशकरैर्वाक्यैर्बोधितास्ते द्विजोत्तमाः ॥ १५ ॥ वर्त्तमाने च यज्ञे च ब्रह्मा लोकपितामहः ॥ ददर्श चरणौ देव्या नखेंदुं च मनोहरम् ॥ १६ ॥ दर्शनात्स्खलितः सद्यो बभूवांबुजसंभवः ॥ मदनेन समाविष्टो वीर्यं च प्राच्यवद्भुवि ॥ १७ ॥ रेतसा क्षरमा णेन लज्जितोऽभूत्पितामहः ॥ चरणाभ्यां ममर्दाथ महद्रोप्यं दुरत्ययम् ॥ १८ ॥ बहवश्चर्षयो जाता वालखिल्याः सहस्रशः ॥ उपतस्थुस्तदा सर्वे तातताततेति चाब्रुवन् ॥१९॥ नारदेन तदोक्तास्ते वालखिल्याः प्रकोपिना ॥ गच्छंतु बटवो यूयं पर्वतं गंधमादनम् ॥ २० ॥ न स्थातव्यं भवद्भिश्च भवतां न प्रयोजनम् ॥ इत्येवमुक्तास्ते सर्वे वालखिल्याश्च पर्वतम् ॥ नारदेन समादिष्टा ययुः सर्वे त्वरान्विताः ॥ २१ ॥ नारदेन ततो ब्रह्माऽऽ श्वासितो वचनैः शुभैः ॥ तावच्च हवनं पूर्णं जातं तस्य महात्मनः ॥ २२ ॥ महेशस्य तथा विप्राः शांतिपाठपरा बभुः ॥ ब्रह्मघोषेण महता व्याप्त मासीद्दिगंतरम् ॥२३॥ ततो नीराजितो देवो देवपत्नीभिरुत्तमः ॥ तथैव ऋषिपत्नीभिरर्चितः पूजितस्तथा ॥ २४ ॥ तथा गिरीन्द्रस्य मनोरमाः शुभा नीराजयामासुरथैव योषितः ॥ गीतैः सुगीतज्ञविशारदाश्च तथैव चान्ये स्तुतिभिर्महर्षयः ॥ २५ ॥ रत्नानि च महार्हाणि ददौ तेभ्यो महा मनाः ॥ हिमालयो महाशैलः संहृष्टः परितोषयन् ॥ २६ ॥ बभौ तदानीं सुरसिद्धसंघैर्वेद्यां स्थितोऽसौ सकलत्रको विभुः ॥ सर्वैरुपेतो निजपार्षदै गणैः प्रहृष्टचेता जगदेकसुन्दरः ॥ २७ ॥ एतस्मिन्नंतरे तत्र ब्रह्मविष्णुपुरोगमाः ॥ ऋषिगंधर्वयक्षाश्च येन्ये तत्र समागताः ॥ २८ ॥ सर्वान्सम भ्यर्च्य तदा महात्मा महान्गिरीशः परमेण वर्चसा ॥ सद्रत्नवस्त्राभरणानि सम्यग्ददौ च ताम्बूलसुगन्धवार्यपि ॥ २९ ॥ तदा शिवं पुरस्कृत्याभ्यव

जहुः सुरेश्वराः ॥ तथा सर्वे मिलित्वा तु ऐकपद्येन मोदिताः ॥ ३० ॥ पंक्तीभूताश्च बुभुजुर्लिंगिना शृंगिणा सह ॥ केचिद्गणाः पृथग्भूता नानाहास्यरसैर्विभुम् ॥ ३१ ॥ अतोषयन्नारदाद्या अनेकालीकसंयुताः ॥ तथा चण्डीगणाः सर्वे बभुजुः कृतभाजनाः ॥३२॥ वैतालाः क्षेत्रपालाश्च बुभुजुः कृतभाजनाः ॥ शाकिनी डाकिनी चैव यक्षिण्यो मातृकादयः ॥ ३३ ॥ योगिन्योऽथ चतुःषष्टिर्योगिनो हि तथा परे ॥ दश कोट्यो गणानां च कोट्येका च महात्मनाम् ॥ ३४ ॥ एवं तु ऋषयः सर्वे तथान्ये विबुधादयः ॥ योगिनो हि मया चान्ये कथिताः पूर्वमेव हि ॥ ३५ ॥ योगिन्यश्चैव कथितास्तासां भक्ष्यं वदामि वः ॥ खङ्गानां[1] केचिदानीय क्रव्यं पवित्रमेव च ॥ ३६ ॥ भुंजंति चास्थिसंयुक्तं तथांत्राणि बुभुक्षिताः ॥ आनीय केचिच्छीर्षाणि महिषाणां गुरूणि च ॥३७॥ तथा केचिन्नृत्यमानास्तदानीं रोरूय्यमाणाः प्रमथाश्चैव चान्ये॥ केचित्तूष्णीमास्थिता रुद्ररूपाः परे चान्याँल्लोकमानास्तथैव ॥ ३८ ॥ योगिनीचक्रमध्यस्थो भैरवो हि ननर्त च॥ तथान्ये भूतवेताला मामेत्येवं प्रलापिनः ॥३९॥ एवं तेषामुद्धवं[2] हि निरीक्ष्य मधुसूदनः ॥ उवाच प्रहसन्वाक्यं शंकरं लोकशंकरम् ॥४०॥ एतान्गणान्वारय भो अत्र मत्तांश्च संप्रति ॥ अस्मिन्काले च यत्कार्यं सर्वैस्तत्कार्यमेव च ॥ ४१ ॥ पांडित्येन महादेव तस्मादेतान्निवारय ॥ तच्छ्रुत्वा भगवान्रुद्रो वीरभद्रमुवाच ह ॥ ४२ ॥ ॥ रुद्र उवाच ॥ ॥ वारयस्व प्रमत्तांश्च क्षीबांश्चैव विशेषतः ॥ तेनोक्तो वीरभद्रश्च शंभुना परमेष्ठिना ॥ ४३ ॥ आज्ञापिताः प्रमत्ताश्च वीरभद्रेण धीमता ॥ प्रमथा वारितास्तेन तूष्णीमाश्रित्य ते स्थिताः ॥ ४४ ॥ निश्चला योगिनीमध्ये भूतप्रमथगुह्यकाः ॥ शाकिन्यो यातुधानाश्च कूष्मांडाः कोपिकर्पटाः ॥ ४५ ॥ तथान्ये भूतवेतालाः क्षेत्रपालाश्च भैरवाः ॥ सर्वे शांताः प्रमत्ताश्च बभूवुः प्रमथादयः ॥ ४६ ॥ एवं विस्तारसंयुक्तं कृतमुद्वहनं तदा ॥ हिमाद्रिणा परं विप्राः[3] सुमंगल्यं सुशोभनम् ॥ ४७ ॥ चत्वारो दिवसा जाताः परिपूर्णेन चेतसा ॥ हिमाद्रिणा कृता पूजा देवदेवस्य शूलिनः ॥ ४८ ॥ वस्त्रालंकाराभरणै रत्नैरुच्चावचैस्ततः ॥ पूजयित्वा महादेवं विष्णोर्वचनपरोऽभवत् ॥ ४९ ॥ लक्ष्मीसमेतं विष्णुं च वस्त्रालंकरणैः शुभैः ॥ पूजयामास हिमवांस्तथा ब्रह्माणमेव च ॥ ५० ॥ इंद्रं पुरोधसा सार्द्धमिंद्राण्या सहितं विभुम् ॥ तथैव लोकपालांश्च पूजयित्वा पृथक्पृथक् ॥ ५१ ॥ तथैव पूजिता चंडी भूतप्रमथगुह्यकैः ॥ वस्त्रालंकरणैश्चैव रत्नैर्नानाविधैरपि ॥ ये चान्य आगतास्तत्र ते च सर्वे प्रपूजिताः ॥ ५२ ॥

---

१ खङ्गानाम्--'गेण्डा' इत्याख्यानामारण्यकमहाशूरपशुविशेषाणाम्--इत्यर्थः । २ उद्धवम्--उत्सवम्--इत्यर्थः । ३ संबोधनमिदं शौनकादीनाम् ।

एवं तदानीं प्रतिपूजिताश्च देवाश्च सर्वे ऋषयश्च यक्षाः ॥ गंधर्वविद्याधरसिद्धचारणास्तथैव मर्त्याप्सरसां गणाश्च ॥ ५२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवपार्वतीविवाहमंगलोत्सववर्णनं नाम षड्विंशोऽध्यायः ॥ २६ ॥ छ ॥ ॥

॥ लोमश उवाच ॥ ॥ तथैव विष्णुना सर्वे पर्वताश्च प्रपूजिताः ॥ सह्याचलश्च विंध्यश्च मैनाको गंधमादनः ॥ १ ॥ माल्यवान्मलयश्चैव महेंद्रो मंदरस्तथा ॥ मेरुश्चैव प्रयत्नेन पूजितो विष्णुना तदा ॥ २ ॥ श्वेतः कृतः श्वेतगिरिर्नीलाद्रिश्च तथैव च ॥ उदयाद्रिश्च शृंगश्च अस्ताचलवरो महान् ॥ ३ ॥ मानसाद्रिस्तथा शैलः कैलासः पर्वतोत्तमः ॥ लोकालोकस्तथा शैलः पूजितः परमेष्ठिना ॥ ४ ॥ एवं ते पर्वतश्रेष्ठाः पूजिताः सर्व एव हि ॥ तथान्ये पूजितास्तेन सर्वे पर्वतवासिनः ॥ ५ ॥ विष्णुना ब्रह्मणा सार्द्धं कृतं सर्वं यथोचितम् ॥ अन्येहनि च संप्राप्ते वरयात्रा[1] कृता तथा ॥ ६ ॥ हिमाद्रिणा बंधुभिश्च पर्वतं गंधमादनम् ॥ ययुः सर्वे सुरगणा गणाश्च बहवस्तथा ॥ ७ ॥ प्रमथाश्च तथा सर्वे तथा चंडीगणाः परे ॥ ये चान्ये बहवस्तत्र समायाता हिमालयम् ॥८॥ शिवस्योद्वहनं विप्राः शिवेन परिभाविताः[2] ॥ परं हर्षं समापन्ना दृष्ट्वा तौ दंपती तदा ॥९॥ पार्वतीसहितः शंभुः शंभुना सह पार्वती ॥ पुष्पगन्धौ यथा स्यातां वागर्थाविव तत्त्वतः ॥१०॥ तथा प्रकृतिपुंसौ च ऐकपद्येन नान्यथा ॥ दंपती तौ गजारूढौ शुशुभाते महाप्रभौ ॥११॥ विमानस्थस्तदा ब्रह्मा विष्णुश्च गरुडोपरि ॥ ऐरावतगतश्चेंद्रः कुबेरः पुष्पकोपरि ॥१२॥ पाशी च मकरारूढो यमो महिषमेव च ॥ प्रेतारूढो नैर्ऋतः स्यादग्निर्बस्तगतो महान् ॥ १३ ॥ मृगारूढोऽथ पवन ईशो वृषभमेव च ॥ इत्येवं लोकपालाश्च सग्रहाः परमेष्ठिनः ॥ १४ ॥ स्वैः स्वैर्बलैः परिक्रांतास्तथान्ये प्रमथादयः ॥ हिमाद्रिश्च महाशैल ऋषभो गंधमादनः ॥ १५ ॥ सह्याचलो नीलगिरिर्मंदरो मलयाचलः ॥ कैलासो हि महातेजा मैनाकश्च महाप्रभः ॥ १६ ॥ एते चान्ये च गिरयः श्रीमंतो हि महाप्रभाः ॥सकलत्राश्च ते सर्वे ससुताश्च मनोरमाः ॥ १७ ॥ बलिनो रूपिणः सर्वे मेर्वाद्यास्तत्र पर्वताः ॥ वरयात्राप्रसंगेन शिवार्चनपराभवन्[3] ॥ १८ ॥ नंदिना ह्युपविष्टास्ते मेर्वाद्यास्तत्र पर्वताः ॥ वरयात्रा कृता तेन यथोक्ता च हिमाद्रिणा ॥ सर्वैस्तैर्बंधुभिः सार्द्धं पुनरागमनं कृतम् ॥ १९ ॥ स्वकालयस्थो हिमवान्स रेजे हि महायशाः ॥ शिवसंपर्कजेनैव महसा परमेण च ॥ विख्यातो हि महाशैलस्त्रिषु लोकेषु विश्रुतः ॥ २० ॥ कन्यादानेन महता तुष्टो यस्य च शंकरः ॥ ते धन्यास्ते महात्मानः कृतकृत्यास्तथैव च ॥ २१ ॥ द्व्यक्षरं नाम येषां च जिह्वाग्रे संस्थितं सदा ॥ शिवेति द्व्यक्षरं नाम यैर्हृदीरितमद्य वै ॥ ते

१ वरयात्रा—'वरघोडा' इति प्रसिद्धा । २ परिभाविताः—संमानिताः—इत्यर्थः । ३ शिवार्चनपराः—अभवन्—इति पदच्छेदः । सन्धिरार्षः ।

वै मनुष्यरूपेण रुद्रा एव न संशयः ॥ २२ ॥ किंचिद्दानेन संतुष्टः पत्रेणापि तथैव च ॥ तोयेनापि हि संतुष्टो महादेवो निरन्तरम् ॥ २३ ॥ पत्रेण पुष्पेण तथा जलेन प्रीतो भवत्येष सदाशिवो हि ॥ तस्माच्च सर्वैःप्रतिपूजनीयः शिवो महाभाग्यकरो नृणामिह॥२४॥ एको महाञ्ज्योतिरजः परेशः परापराणां परमो महात्मा ॥ निरंतरो निर्विकारो निरीशो निराबाधो निर्विकल्पो निरीहः ॥ २५ ॥ निरंजनो नित्यरूपो निरोधो नित्यानन्दो नित्यमुक्तः सदैव ॥ एवंभूतो देवदेवोऽर्चितश्च तैर्देवाद्यैर्विश्ववेद्यो भवश्च ॥ स्तुतो ध्यातः पूजितश्चिंतितश्च सर्वज्ञोऽसौ सर्वदा सर्वदश्च ॥ २६ ॥ यथा वरिष्ठो हिमवान्प्रसिद्धः सर्वैर्गुणैः सर्वगुणो महात्मा ॥ विश्वेशवंद्यो हि तदा हिमालयो जातो गिरीणां प्रवरस्तदानीम् ॥ २७ ॥ मेनया सह धर्मात्मा यथास्थानगतस्ततः ॥ सर्वान्विसर्जयामास पर्वतान्पर्वतेश्वरः ॥ २८ ॥ गतेषु तेषु हिमवान्पुत्रैः पौत्रैः प्रपौत्रकैः ॥ राजा गिरीणां प्रवरो महादेवप्रसादतः ॥ २९ ॥ अथो गिरिजया सार्द्धं महेशो गन्धमादने ॥ एकांते च मतिं चक्रे रमणार्थं स्वरूपवान् ॥ ३० ॥ सुरतेनैव महता तपसा हि समागमे ॥ द्वयोः सुरतमारब्धं तद्द्वयोश्च तदाऽभवत् ॥ ३१ ॥ अनिष्टं महदाश्चर्यं प्रलयोपममेव च ॥ तस्मिन्महारते प्राप्ते नाविंदंत सुखं परम् ॥ ॥ ३२ ॥ सर्वे ब्रह्मादयो देवाः कार्याकार्यव्यवस्थितौ ॥ रेतसा च जगत्सर्वं नष्टं स्थावरजंगमम् ॥ ३३ ॥ सस्मार चाग्निं ब्रह्मा च विष्णुश्चाध्यात्मदायकः ॥ मनसा संस्मृतः सद्यो जगामाग्निस्त्वरान्वितः ॥ ३४ ॥ ताभ्यां संप्रेषितोऽपश्यद्रुचिरं शिवमंदिरम् ॥ द्वारि स्थितं नंदिनं च ददर्शाग्रे महाप्रभम् ॥ ३५ ॥ अग्निर्ह्रस्वस्तदा भूत्वा काश्मीरसदृशच्छविः ॥ प्रविष्टोंतःपुरं शंभोर्नानाश्चर्यसमन्वितम् ॥ ३६ ॥ अनेकरत्नसंवीतं प्रासादैश्च स्वलंकृतम् ॥ तदंगणमनुप्राप्य उपविश्याह हव्यवाट् ॥ ३७ ॥ पाणिपात्रस्य मे ह्यम्ब भिक्षां देह्यवरोधतः ॥ तच्छ्रुत्वा वचनं तस्य पाणिपात्रस्य बालिका ॥ ३८ ॥ यावद्दातुं च सारेभे भिक्षां तस्मै ततः स्वयम् ॥ उत्थाय सुरतात्तस्माच्छिवो हि कुपितो भृशम् ॥ ३९ ॥ रुद्रस्त्रिशूलमुद्यम्य भैरवो ह्यऽभवत्तदा ॥ निवारितो गिरिजया वधात्तस्माच्छिवः स्वयम् ॥ भिक्षां तस्मै ददौ वाचा अग्नये जातवेदसे ॥ ४० ॥ पाणौ भिक्षां गृहीत्वाथ प्रत्यक्षं तेन चाग्निना॥भिक्षिता कुपिता तं वै शशाप गिरिजा ततः॥४१॥रे भिक्षो भविता शापात्सर्वभक्षो ममाशु वै॥अनेन रेतसा सद्यः पीडां प्राप्स्यसि सर्वतः॥४२॥इत्युक्तो भक्षयित्वाग्नी रेत ईशस्य हव्यवाट् ॥ यत्र देवाः स्थिताः सर्वे ब्रह्माद्याश्चैव सर्वशः॥४३॥ आगत्याकथयत्सर्वं तद्रेतोभक्षणादिकम् ॥ सर्वे सगर्भा ह्यभवन्निन्द्राद्या देवतागणाः ॥ ४४॥ अग्नेर्यथा हविश्चैव सर्वेषामुपतिष्ठति ॥ अग्नेर्मुखोद्भवेनैव रेतसा ते सुरेश्वराः॥ ४५॥ सगर्भा ह्यभवन्सर्वे चिंतया च प्रपीडिताः ॥ विष्णुं शरणमाजग्मुर्देवदेवेश्वरं प्रभुम् ॥४६॥ ॥ देवा ऊचुः ॥ ॥ त्वं त्राता सर्वदेवानां लोकानां प्रभुरेव च॥

तस्माद्रक्षा विधातव्या शरणागतवत्सल ॥४७॥ वयं सर्वे मर्तुकामा रेतसानेन पीडिताः ॥ असुरेभ्यः परित्रस्ता वयं सर्वे दिवौकसः ॥ ४८ ॥ शरणं शंकरं याताः परित्रातुं कृतोद्वहाः ॥ यदा पुत्रो हि रुद्रस्य भविष्यति तदा वयम् ॥ सुखिनः स्याम सर्वे वै निर्भयाश्च त्रिविष्टपे ॥ ४९ ॥ एवं विष्टभ्यमानानां सर्वेषां भयमागतम् ॥ अनेन रेतसा विष्णो जीवितुं शक्यते कथम् ॥ ५० ॥ त्रिवर्गो हि यथा पुंसां कृतो हि सुपरिष्कृतः ॥ विपरीतो भवत्येव विना देवेन नान्यथा ॥ ५१ ॥ तस्मात्तद्वै बलं मत्वा सर्वेषामपि देहिनाम् ॥ कार्याकार्यव्यवस्थायां सर्वे मन्यामहे वयम् ॥ ५२ ॥ तथा निशम्य देवानां परेशः परिदेवनम् ॥ उवाच प्रहसन्वाक्यं देवानां देवतारिहा ॥ ५३ ॥ स्तूयतां वै महादेवो महेशः कार्यगौरवात् ॥ ५४ ॥ तथेति गत्वा ते सर्वे देवा विष्णुपुरोगमाः ॥ तथा ब्रह्मादयः सर्वे ईडिरे ऋषयो हरम् ॥ ५५ ॥ ॐनमो भर्गाय देवाय नीलकंठाय मीढुषे ॥ त्रिनेत्राय त्रिवेदाय लोकत्रितयधारिणे ॥ ५६ ॥ त्रिस्वराय त्रिमात्राय त्रिवेदाय त्रिमूर्त्तये ॥ त्रिवर्गाय त्रिधामाय त्रिपदाय त्रिशूलिने ॥ ५७ ॥ त्राहित्राहि महादेव रेतसो जगतः पते ॥ ५८ ॥ ब्रह्मणा तु स्तुतो यावत्तावद्देवो वृषध्वजः ॥ प्रादुर्बभूव तत्रैव सुराणां कार्यसिद्धये ॥ ५९ ॥ दृष्टस्तदानीं जगदेकबंधुर्महात्मभिर्देववरैः सुपूजितः ॥ संस्तूयमानो विविधैर्वचोभिः प्रत्यग्ररूपैः श्रुतिसंमतैश्च ॥ ६० ॥ स्तुवतां चैव देवानामुवाच परमेश्वरः ॥ त्रासं कुर्वंतु मा सर्वे रेतसानेन पीडिताः ॥ ६१ ॥ वमनं वै भवद्भिश्च कार्यमद्यैव भोःसुराः ॥ तथेति मत्वा ते सर्वे इंद्राद्या देवतागणाः ॥ वेमुः सर्वे तदा विप्रास्तद्रेतः शंकरस्य च ॥६२॥ एकपद्येन तद्रेतो महापर्वतसन्निभम् ॥ तप्तचामीकरप्रख्यं बभूव परमाद्भुतम् ॥ ६३ ॥ सर्वे च सुखिनो जाता इंद्राद्या देवतागणाः ॥ विना ह्यग्निं च ते सर्वे परितुष्टास्तदाऽभवन् ॥ ६४ ॥ तेनाग्निनापि चोक्तस्तु शंकरो लोकशंकरः ॥ किं मयाद्य महादेव कर्तव्यं देवतावर ॥ ६५ ॥ तद्ब्रूहि मे प्रभोऽद्य त्वं येनाहं सर्वदा सुखी ॥ भविष्यामि च येनाहं देवानां हव्यवाहकः ॥ ६६ ॥ तदोवाच शिवः साक्षाद्देवानामिह शृण्वताम् ॥ रेतो विसृज्यतां योनौ तदाग्निः प्रहसन्निव ॥ ६७ ॥ उवाच शंकरं देवं भवत्तेजो दुरासदम् ॥ इदमुल्बणवत्तेजो धार्यते प्राकृतैः कथम् ॥ ६८ ॥ ततः प्रोवाच भगवानग्निं प्रति महेश्वरः ॥ मासिमासि प्रतप्तानां देहे तेजो विसृज्यताम् ॥ ६९ ॥ तथेति मत्वा वचनं महाप्रभः स जातवेदाः परमेण वर्चसा ॥ समुज्ज्वलंस्तत्र महाप्रभावो ब्राह्मे मुहूर्त्ते हि सचोपविष्टः ॥ ७० ॥ तदा प्रातः समुत्थाय प्रातः स्नानपराः स्त्रियः ॥ ययुः सदा ऋषीणां च सत्यस्ता जातवेदसम् ॥ ७१ ॥ दृष्ट्वा प्रज्वलितं तत्र सर्वास्ताः शीतकर्षिताः ॥ तन्मुकामास्तदा सर्व्वा ह्यरुंधत्या निवारिताः ॥ ७२ ॥ तया निवारिताश्चापि तास्तेपुः कृत्तिकाः स्वयम् ॥ यावत्तेपुश्च ताः सर्व्वा रेतसः परमाणवः ॥ विविशू रोमकूपेषु तासां तत्रैव

१ उल्बणवत्--जाज्वल्यमानं विपमिव--इत्यर्थः ।

सत्वरम् ॥ ७३ ॥ नीरेतोग्निस्तदा जातो विश्रांतः स्वयमेव हि ॥ ७४ ॥ ततस्ता ऋषिभार्या हि ययुः स्वभवनं प्रति ॥ ऋषिभिस्तु तदा शप्ताः कृत्तिकाः खेचरांभवन् ॥ ७५ ॥ तदानीमेव ताः सर्वा व्यभिचारेण दुःखिताः ॥ तत्ससर्जुस्तदा रेतः पृष्ठे हिमवतो गिरेः ॥ ७६ ॥ ऐकपद्येन तद्रेतस्तप्तचामीकरप्रभम् ॥गंगायां च तदा क्षिप्रं कीचकैः परिवेष्टितम् ॥ ७७ ॥ षण्मुखं बालकं ज्ञात्वा सर्वे देवा मुदान्विताः ॥ गर्गेणोक्तास्तदंते वै सुखेन ह्रियतामिति ॥ ७८ ॥ शंभोः पुत्रः प्रसादेन सर्वो भवति शाश्वतः ॥ गंगायाः पुलिने जातः कार्त्तिकेयो महाबलः ॥ ॥ ७९ ॥ उपविष्टोथ गांगेयो ह्यहोरात्रोषितस्तदा ॥ शाखो विशाखोऽतिबलः षण्मुखोऽसौ महाबलः ॥ ८० ॥ जातो यदाथ गंगायां षण्मुखः शंकरात्मजः ॥ तदानीमेव गिरिजा संजाता प्रस्नुतस्तनी ॥ ८१ ॥ शिवं निरीक्ष्य सा प्राह हे शंभो प्रस्नवो महान् ॥ संजातो मे महादेव किमर्थस्तन्निरीक्ष्यताम् ॥ सर्वज्ञोऽपि महादेवो ह्यब्रवीत्तामथाज्ञवत् ॥ ८२ ॥ नारदस्तत्र चागत्य प्रोक्तवाञ्जन्म तस्य तत् ॥ शिवाय च शिवायै च पुत्रो जातो हि सुंदरः ॥ ८३ ॥ तदाकर्ण्य वचो विप्रा हर्षनिर्भरमानसाः ॥ बभूवुः प्रमथाः सर्वे गंधर्वा गीततत्पराः ॥ ८४ ॥ अनेकाभिः पताकाभिश्चैलपल्लवतोरणैः ॥ तथा विमानैर्बहुभिर्बभौ प्रज्वलितो महान् ॥ पर्वतः पुत्रजननाच्छंकरस्य महात्मनः ॥ ८५ ॥ तदा सर्वे सुरगणा ऋषयः सिद्धचारणाः ॥ रक्षोगंधर्वयक्षाश्च अप्सरोगणसेविताः ॥ ८६ ॥ ऐकपद्येन ते सर्वे सहिताः शंकरेण तु ॥ द्रष्टुं गांगेयमधिकं जग्मुः पुलिनसंस्थितम् ॥ ८७ ॥ ततो वृषभमारुह्य ययौ गिरिजया सह ॥ अन्यैः समेतो भगवान्सुरैरिंद्रादिभिस्तथा ॥ ८८ ॥ तदा शंखाश्च भेर्यश्च नेदुस्तूर्याण्यनेकशः ॥ ८९ ॥ तदानीमेव सर्वेशं वीरभद्रादयो गणाः ॥ अन्वयुः केलिसंरब्धा नानावादित्रवादकाः ॥ वादयन्तश्च वाद्यानि ततानि विततानि च ॥ ९० ॥ केचिन्नृत्यपरास्तत्र गायकाश्च तथा परे ॥स्तावकाः स्तूयमानाश्च चक्रुस्ते गुणकीर्तनम् ॥ ९१ ॥ एवंविधास्ते सुरसिद्धयक्षा गंधर्वविद्याधरपन्नगा ह्यमी ॥ शिवेन सार्द्धं परिहृष्टचित्ता द्रष्टुं ययुस्तं वरदं च शांकरिम् ॥ ९२ ॥ यावत्समीक्षयामासुर्गांगेयं शंकरोपमम् ॥ ददृशुस्ते महत्तेजो व्याप्तमासीज्जगत्रयम् ॥ ९३ ॥ तत्तेजसावृतं बालं तप्तचामीकरप्रभम् ॥ सुमुखं सुश्रिया युक्तं सुनसं सुस्मितेक्षणम् ॥ ९४ ॥ चारुप्रसन्नवदनं तथा सर्वांगसुंदरम् ॥ तं दृष्ट्वा महदाश्चर्यं गांगेयं प्रथितात्मकम् ॥ ९५ ॥ ववंदिरे तदा बालं कुमारं सूर्यवर्चसम् ॥ प्रमथाश्च गणाः सर्वे वीरभद्रादयस्तथा ॥ ९६ ॥ परिवार्योपतस्थुस्ते वामदक्षिणभागतः ॥ तथा ब्रह्मा च विष्णुश्च इंद्रश्चापि सुरैर्वृतः ॥ ९७ ॥ ऋषयो यक्षगंधर्वाः परिवार्य

१ खेचराः--अभवन्--इति पदच्छेदः । सन्धिस्त्वार्षः ।

कुमारकम् ॥ दंडवत्पतिता भूमौ केचिच्च नतकंधराः ॥ ९८ ॥ प्रणेमुः शिरसा चान्ये मत्वा स्वामिनमव्ययम् ॥ अवाद्यंत विचित्राणि वादित्राणि महोत्सवे ॥ एवमभ्युदये तस्मिन्नृपयः शांतिमापठन् ॥ ९९ ॥ एतस्मिन्नंतरे यातः शंकरो गिरिजापतिः ॥ अवतीर्य वृपाच्छीघ्रं पार्वत्या सह सुव्रताः ॥ १०० ॥ पुत्रं निरैक्षत तदा जगदेकबंधुः प्रीत्या युतः परमया सह वै भवान्या ॥ स्नेहान्वितो भुजगभोगयुतो हि साक्षात्सर्वेश्वरः परिवृतः प्रमथैः प्रहृष्टः ॥ १०१ ॥ उपगुह्य गुहं तत्र पार्वती जातसंभ्रमा ॥ प्रस्नुतं पाययामास स्तनं स्नेहपरिप्लुता ॥ १०२ ॥ तदा नीराजितो देवैः सकलैर्मुदान्वितैः ॥ जयशब्देन महता व्याप्तमासीन्नभस्तलम् ॥ १०३ ॥ ऋपयो ब्रह्मघोपेण गीतेनैव च गायकाः ॥ वाद्यैश्च वादकाश्चैव उपतस्थुः कुमारकम् ॥ १०४ ॥ स्वमंकमारोप्य तदा गिरीशः कुमारकं तं प्रभया महाप्रभम् ॥ बभौ भवानीपतिरेव साक्षाच्छ्रिया युतः पुत्रवतां वरिष्ठः ॥ १०५ ॥ दंपती तौ तदा तत्र ऐकपद्येन नंदतुः ॥ अभिपिच्यमान ऋपिभिरावृतः सुरसत्तमैः ॥ १०६ ॥ कुमारः क्रीडयामास उत्संगे शंकरस्य च ॥ कंठे स्थितं वासुकिं च पाणिभ्यां समपीडयत् ॥ १०७ ॥ मुखं प्रपीडयित्वाऽसौ पाणीनगणयत्तदा ॥ एकं त्रीणि दशाष्टौ च विपरीतक्रमेण च ॥ १०८ ॥ प्रहस्य भगवाञ्छंभुरुवाच गिरिजां तदा ॥ १०९ ॥ मंदस्मितेन च तदा भगवान्महेशः प्राप्तो मुदं च परमां गिरिजासमेतः ॥ प्रेम्णा सगद्गदगिरा जगदेकबंधुर्नोवाच किंचन तदा भुवनैकभर्ता ॥ ११० ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे कार्त्तिकेयस्वामिकुमारोत्पत्तिवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥

॥ ॥ लोमश उवाच ॥ ॥ कुमारं स्वांकमारोप्य उवाच जगदीश्वरः ॥ देवान्प्रति तदा रुद्रः सेंद्रान्भर्गः प्रतापवान् ॥ १ ॥ किं कार्यं कथ्यतां देवाः कुमारेणाधुना मम ॥ तदोचुः सहिताः सर्वे देवं पशुपतिं प्रति ॥ २ ॥ तारकाद्भयमुत्पन्नं सर्वेपां जगतां विभो ॥ त्राता त्वं जगतां स्वामी तस्मात्त्राणं विधीयताम् ॥ ३ ॥ कुमारेण हतोऽद्यैव तारको भविता प्रभो ॥ तस्मादद्यैव यास्यामस्तारकं हंतुमुद्यताः ॥ ४ ॥ तथेति मत्वा सहसा निर्जग्मुस्ते तदा सुराः ॥ कार्त्तिकेयं पुरस्कृत्य शंकरात्मजमेव हि ॥ ५ ॥ सर्वे मिलित्वा सहसा ब्रह्मविष्णुपुरोगमाः ॥ देवानामुद्यमं श्रुत्वा तारकोऽपि महाबलः ॥ ६ ॥ सैन्येन महता चैव ययौ योद्धुं सुरान्प्रति ॥ देवैर्दृष्टं समायातं तारकस्य महद्बलम् ॥ ७ ॥ तदा नभोगता वाणी ह्युवाच परिसांत्व्य तान् ॥ शांकरिं च पुरस्कृत्य सर्वे यूयं प्रतिष्ठिताः ॥ ८ ॥ दैत्यान्विजित्य संग्रामे जयिनो हि भविष्यथ ॥ ९ ॥ वाचं तु खेचरीं श्रुत्वा देवाः सर्वे समुत्सुकाः ॥ कुमारं च पुरस्कृत्य सर्वे ते गतसाध्वसाः ॥ १० ॥ युद्धकामाः सुरा यावत्तावत्सर्वे समा

गताः ॥ वरणार्थं कुमारस्य सुता मृत्योर्दुरत्यया ॥ ११ ॥ ब्रह्मणा नोदिता पूर्वं तपः परममाश्रिता ॥ तपसा तेन महता कुमारं प्रति वै तदा ॥ आगता दुहिता मृत्योः सेना नामैकसुंदरी ॥ १२ ॥ तां दृष्ट्वा तेऽब्रुवन्सर्वे देवं पशुपतिं प्रति ॥ एनं कुमारमुद्दिश्य आगता ह्यतिसुंदरी ॥ १३ ॥ ब्रह्मणो वचनाच्चैव कुमारेण तदा वृता ॥ अथ सेनापतिर्जातः कुमारः शांकरिस्तदा ॥ १४ ॥ तदा शंखाश्च भेर्यश्च पटहानकगोमुखाः ॥ तथा दुंदुभयो नेदुर्मृदंगाश्च महास्वनाः ॥ १५ ॥ तेन नादेन महता पूरितं च नभस्तलम् ॥ तदा गौरी च गंगा च कृत्तिका मातरस्तथा ॥ परस्परमथोचुस्ताः सुतो मम ममेति च ॥ १६ ॥ एवं विवादमापन्नाः सर्वास्ता मातृकादयः ॥ निवारिता नारदेन मौढ्यं मा कुरुतेति च ॥ १७ ॥ पार्वत्यां शंकराज्जातो देवकार्यार्थसिद्धये ॥ तूष्णींभूतास्तदा सर्वाः कृत्तिका मातृभिः सह ॥ १८ ॥ गुहेनोक्तास्तदा सर्वा ऋषिपत्न्यश्च कृत्तिकाः ॥ नक्षत्राणि समाश्रित्य भवद्भिः स्थीयतां चिरम् ॥ १९ ॥ तथा मातृगणस्तेन स्वामिना स्थापितो दिवि ॥ मृत्योः कन्यां च संगृह्य कार्त्तिकेयस्त्वरान्वितः ॥ २० ॥ इंद्रं प्रोवाच भगवान्कुमारः शंकरात्मजः ॥ दिवं याहि सुरैः सार्द्धं राज्यं कुरु निरन्तरम् ॥ २१ ॥ इंद्रेणोक्तः कुमारो हि तारकेण प्रपीडिताः ॥ स्वर्गाद्विद्राविताः सर्वे वयं याता दिशो दश ॥ २२ ॥ किं पृच्छसि महाभाग अस्मान्पदपरिच्युतान् ॥ एवमुक्तस्तदा तेन वज्रिणा शंकरात्मजः ॥ प्रहस्येंद्रं प्रति तदा मा भैषीत्यभयं ददौ ॥ २३ ॥ यावत्कथयतस्तस्य शांकरेश्च महात्मनः ॥ कैलासं तु गते रुद्रे पार्वत्या प्रमथैः सह ॥ २४ ॥ आजगाम महादैत्यो दैत्यसेनाभिरावृतः ॥ रणदुंदुभयो नेदुस्तथा प्रलयभीषणाः ॥ २५ ॥ रणकर्कशतूर्याणि डिंडिमान्यद्भुतानि च ॥ गोमुखाः खरशृंगाणि काहलान्येव भूरिशः ॥ २६ ॥ वाद्यभेदा अवाद्यंत तस्मिन्दैत्यसमागमे ॥ गर्जमानास्तदा वीरास्तारकेण सहैव तु ॥ ॥ २७ ॥ उवाच नारदो वाक्यं तारकं देवकण्टकम् ॥ २८ ॥ ॥ नारद उवाच ॥ ॥ पुरा देवैः कृतो यत्नो वधार्थं नात्र संशयः ॥ तवैव चासुरश्रेष्ठ मयोक्तं नान्यथा भवेत् ॥ २९ ॥ कुमारोऽयं च शर्वस्य तवार्थं चोपपादितः ॥ एवं ज्ञात्वा महाबाहो कुरु यत्नं समाहितः ॥ ३० ॥ नारदोक्तं निशम्याथ तारकः प्रहसन्निव ॥ उवाच वाक्यं मेधावी गच्छ त्वं च पुरंदरम् ॥ ३१ ॥ मम वाक्यं महर्षे त्वं वद शीघ्रं यथातथम् ॥ कुमारं च पुरस्कृत्य मया योद्धुं त्वमिच्छसि ॥ ३२ ॥ मूढभावं समाश्रित्य कर्तुमिच्छसि नान्यथा ॥ मनुष्यमेकमाश्रित्य मुचुकुन्दाख्यमेव च ॥ ॥ ३३ ॥ तत्प्रभावेऽमरावत्यां स्थितोऽसि त्वं न चान्यथा ॥ कौमारं बलमाश्रित्य तिष्ठसे त्वं ममाग्रतः ॥ ३४ ॥ त्वां हनिष्याम्यहं मन्द लोकपालैः सहैव हि ॥ एवं कथय देवेन्द्रं देवर्षे नान्यथा वद ॥ ३५ ॥ तथेति मत्वा भगवान्स नारदो ययौ सुराञ्छक्रपुरोगमांश्च ॥ आचष्ट

सर्वं ह्यसुरेन्द्रभाषितं सहोपहासं मतिमांस्तथैव ॥३६॥ ॥ नारद उवाच ॥ ॥ भवद्भिः श्रूयतां देवा वचनं मम नान्यथा ॥ तारकेण यदुक्तं च सानुगे नावधार्यताम् ॥३७॥ ॥ तारक उवाच ॥ ॥ त्वां हनिष्यामि रे मूढ नान्यथा मम भाषितम् ॥ ३८ ॥ मुचुकुन्दं समासाद्य लोकपालैश्च पूजितः ॥ न त्वया भीरुणा योत्स्ये देवो भूत्वा नराश्रितः ॥ ३९ ॥ तस्य वाक्यं निशम्योचुः सर्वे देवाः सवासवाः ॥ कुमारं च पुरस्कृत्य नारदं चर्षिसत्तमम् ॥ ४० ॥ जानासि त्वं हि देवर्षे कुमारस्य बलाबलम् ॥ अज्ञो भूत्वा कथं वाक्यमुक्तं तस्य ममाग्रतः ॥ ४१ ॥ प्रहस्य नारदो वाक्यमुवाच तस्य सन्निधौ ॥ अहमप्युपहासं च वाक्यं तारकमुक्तवान् ॥ ४२ ॥ जानीध्वममराः सर्वे कुमारं जयिनं सुराः ॥ भविष्यत्यत्र मे वाक्यं नात्र कार्या विचारणा ॥ ४३ ॥ नारदस्य वचः श्रुत्वा सर्वे देवा मुदान्विताः ॥ ऐकपद्येन चोत्तस्थुर्योद्धुकामाश्च तारकम् ॥ ४४ ॥ कुमारं गजमारोप्य देवेन्द्रो ह्यग्रगोऽभवत् ॥ सुरसैन्येन महता लोकपालैः समावृतः ॥ ४५ ॥ तदा दुन्दुभयो नेदुर्भेरीतूर्याण्यनेकशः ॥ वीणावेणुमृदंगानि तथा गन्धर्वनिस्वनाः ॥ ४६ ॥ गजं दत्त्वा महेंद्राय कुमारो यानमारुहत् ॥ अनेकरत्नसंवीतं नानाश्चर्यसमन्वितम् ॥ विचित्रचित्रं सुमहत्तथाश्चर्यसमन्वितम् ॥ ॥ ४७ ॥ विमानमारुह्य तदा महायशाः स शांकरिः सर्वगणैरुपेतः ॥ श्रिया समेतः परया बभौ महान्स वीज्यमानश्चमरैर्महाप्रभैः ॥ ४८ ॥ प्राचेतसं छत्रं[1] महामणिप्रभं रत्नैरुपेतं बहुभिर्विराजितम् ॥ धृतं तदा तेन कुमारमूर्द्धनि चन्द्रेण चान्द्रैः किरणैः सुशोभितम् ॥ ४९ ॥ संमीलितास्तदा सर्वे देवा इन्द्रपुरोगमाः ॥ बलैः स्वैः स्वैः परिक्रांता योद्धुकामा महाबलाः ॥ ५० ॥ यमोऽपि स्वगणैः सार्द्धं मरुद्भिश्च सदागतिः ॥ पाथोभिर्वरुणस्तत्र कुबेरो गुह्यकैः सह ॥ ईशोऽपि प्रमथैः सार्द्धं नैर्ऋतो व्याधिभिः सह ॥ ५१ ॥ एवं तेऽष्टौ लोकपा योद्धुकामाः सर्वे मिलित्वा तारकं हंतुमेव ॥ पुरस्कृत्वा शांकरिं विश्ववंद्यं सेनापतिं चात्मविदां वरिष्ठम् ॥ ५२ ॥ एवं ते योद्धुकामा हि अवतेरुश्च भूतलम् ॥ अंतर्वेद्यां स्थिताः सर्वे गंगायमुनमध्यगाः ॥ ५३ ॥ पातालाच्च समायातास्तारकस्योपजीविनः ॥ चेरुरंगबलोपेता हन्तुकामाः सुरान्रणे ॥ ५४ ॥ तारको हि समायातो विमानेन विराजितः ॥ छत्रेण च महातेजा ध्रियमाणेन मूर्द्धनि ॥ ५५ ॥ चामरैर्वीज्यमानो हि शुशुभे दैत्यराट् स्वयम् ॥ ५६ ॥ एवं देवाश्च दैत्याश्च अंतर्वेद्यां स्थितास्तदा ॥ सैन्येन महता तत्र व्यूहान्कृत्वा पृथक्पृथक् ॥ ५७ ॥ गजान्कृत्वा ह्येकतश्च हयांश्च विविधांस्तथा ॥ स्यंदनानि विचित्राणि नानारत्नयुतानि च ॥५८॥ पदाता बहवस्तत्र शक्तिशूलपरश्वधैः ॥ खड्गतोमरनाराचैः पाशमुद्गरशोभिताः ॥५९॥ ते सेने सुरदैत्यानां शुशुभाते पर

१ छत्र--छत्रम्--विभक्तेः 'सुपां सुलुक्' इत्यनेनार्षत्वाल्लुक् । २ यादोभिः--इ० पा० ।

स्परम् ॥ हंतुकामास्तदा ते वै स्तूयमानाश्च बन्धुभिः ॥६०॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे देवैः सह तारकासुरस्य संग्रामे देवदैत्यसेनासंनाहवर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ उभे सेने तदा तेषां सुराणां चामरद्विषाम् ॥ अनेकाश्चर्यसंवीते चतुरंगबलान्विते ॥ विरेजतुस्तदान्योऽन्यं गर्जंतो वांबुदागमे ॥१॥ एतस्मिन्नन्तरे तत्र वल्गमानाः परस्परम् ॥ देवासुरास्तदा सर्वे युयुधुश्च महाबलाः ॥ २ ॥ युद्धं सुतुमुलं ह्यासीद्देवदैत्यसमाकुलम् ॥ रुण्डमुण्डांकितं सर्वं क्षणेन समपद्यत ॥३॥ भूमौ निपतितास्तत्र शतशोऽथ सहस्रशः ॥ केषांचिद्बाहवश्छिन्नाः खड्गपातैः सुदारुणैः ॥ ४ ॥ मुचुकुंदो हि बलवांस्त्रैलोक्येऽमितविक्रमः ॥५॥ तारको हि तदा तेन मुचुकुंदेन धीमता ॥ खड्गेन चाहतस्तत्र सर्वप्राणेन वक्षसि ॥ प्रसह्य तत्प्रहारं च प्रहसन्वाक्यमब्रवीत् ॥ ६ ॥ किं रे मूढ त्वया चाद्य कृत मस्ति बलादिदम् ॥ न त्वया योद्धुमिच्छामि मानुषेणैव लज्जया ॥ ७ ॥ तारकस्य वचः श्रुत्वा मुचुकुंदोऽभ्यभाषत ॥ मया हतोऽसि दैत्येंद्र नान्यो भवितुमर्हसि ॥ ८ ॥ दृष्ट्वा मे खड्गसंपातं न त्वं तिष्ठसि चाग्रतः ॥ त्वां हन्मि पश्य मे शौर्यं दैत्यराज स्थिरो भव ॥ ९ ॥ एवमुक्त्वा तदा वीरो मुचुकुंदो महाबलः ॥ यावज्जघान खड्गेन तावच्छक्त्या समाहतः ॥ मांधातुस्तनयस्तत्र पपात रणमंडले ॥ १० ॥ पतितस्तत्क्षणादेव चोत्थितः परवीरहा ॥ ११ ॥ स सज्जमानोतिमहाबलो वै हंतुं तदा दैत्यपतिं च तारकम् ॥ ब्रह्मास्त्रमुद्यम्य धनुर्गृहीत्वा मांधातृपुत्रो भुवनैकजेता ॥ १२ ॥ स तारकं योद्धुकामस्तरस्वी रुषान्वितोत्फुल्लविलोचनो महान् ॥ स नारदो ब्रह्मसुतो बभाषे तदा नृवीरं मुचुकुंदमेवम् ॥ १३ ॥ न तारको हन्यते मानुषेण तस्मादेतन्मा विमोचीर्महास्त्रम् ॥ १४ ॥ निशम्य वचनं तस्य देवर्षेर्नारदस्य च ॥ मुचुकुंद उवाचेदं भविता कोऽस्य मारकः ॥ १५ ॥ तदोवाच महातेजा नारदो दिव्यदर्शनः ॥ एनं हंता कुमारश्च कुमारोऽयं शिवात्मजः ॥१६॥ तस्माद्भवद्भिः स्थातव्यमेकपद्येन युध्यताम् ॥ तिष्ठ त्वं चायतो भूत्वा मुचुकुंद महामते ॥ १७ ॥ निशम्य वाक्यं च मनोहरं शुभं ह्युदीरितं तेन महाप्रभेण ॥ सर्वे सुराः शांतिपरा बभूवुस्तेनैव साकं नृवरेण यत्नात् ॥ १८ ॥ ततो दुंदुभयो नेदुः शंखाश्च कृतनिश्चयाः ॥ ताडिता विविधैर्वाद्यैः सुरासुरसमन्वितैः ॥ १९ ॥ जगर्जुरसुरास्तत्र देवान्प्रति कृतो द्यमाः ॥ शिवकोपोद्भवो वीरो वीरभद्रो रुषान्वितः ॥२०॥ गणैर्बहुभिरासाद्य तारकं च महाबलम् ॥ मुचुकुंदं पृष्ठतः कृत्वा तथैव च सुरानपि ॥२१॥ तदा ते प्रमथाः सर्वे पुरस्कृत्य कुमारकम् ॥ युयुधुः संयुगे तत्र वीरभद्रादयो गणाः ॥ २२ ॥ त्रिशूलैर्ऋष्टिभिः पाशैः खड्गैः परशुपट्टिशैः ॥ निजघ्नुः

१ इवार्थे–'व' शब्दः । २ अक्षराधिक्यमर्थानुरोधेन न दोपायार्षत्वाच ।

समरेऽन्योन्यं सुरासुरविमर्दने ॥ २३ ॥ तारको वीरभद्रेण त्रिशूलेन हतो भृशम् ॥ पपात सहसा तत्र क्षणं मूर्छापरिप्लुतः ॥ २४ ॥ उत्थाय च मुहूर्त्ताच्च तारको दैत्यपुंगवः ॥ लब्धसंज्ञो बलाविष्टो वीरभद्रं जघान च ॥ २५ ॥ स शक्तिं च महातेजा वीरभद्रो हि तारकम् ॥ त्रिशूलेन च घोरेण शिवस्यानुचरो वली ॥ २६ ॥ एवं संयुध्यमानौ तौ जघ्नतुश्चेतरेतरम् ॥ द्वंद्वयुद्धं सुतुमुलं तयोर्जातं महात्मनोः ॥ २७ ॥ सुरास्तत्रैव समरे प्रेक्षका ह्यभवंस्तदा ॥ तयोर्भेरीमृदंगाश्च पटहानकगोमुखाः ॥ २८ ॥ तथा डमरुनादेन व्याप्तमासीज्जगत्त्रयम् ॥ तेन घोषेण महता युध्यमानौ महा वलौ ॥ २९ ॥ शुशुभातेऽतिसंरब्धौ प्रहारैर्जर्जरीकृतौ ॥ अन्योन्यमभिसंरब्धौ तौ बुधांगारकाविव ॥ ३० ॥ नारदेन तदा ख्यातो वीरभद्रस्य तद्वधः ॥ न रोचते च तद्वाक्यं वीरभद्रस्य वै तदा ॥ ३१ ॥ नारदेन यदुक्तं हि तारकस्य वधं प्रति ॥ यथा रुद्रस्तथा सोऽपि वीरभद्रो महाबलः ॥ ॥ ३२ ॥ एवं प्रयुध्यमानौ तौ जघ्नतुश्चेतरेतरम् ॥ अन्योन्यं स्पर्द्धमानौ तौ गर्जंतौ सिंहयोरिव ॥ ३३ ॥ एवं तदा तौ भुवि युध्यमानौ महात्मना ज्ञानवतां वरेण ॥ स वीरभद्रो हि तदा निवारितो वाक्यैरनेकैरथ नारदेन ॥३४॥ तथा निशम्य तद्वाक्यं नारदस्य मुखोद्गतम् ॥ वीरभद्रो रुषाविष्टो नारदं प्रत्युवाच ह ॥३५॥ तारकं च वधिष्यामि पश्य मेऽद्य पराक्रमम् ॥ आनयंति च ये वीराः स्वामिनं रणसंसदि ॥ ते पापिनो ह्यधर्मिष्ठा विमृशंति रणं गताः ॥३६॥ भीरवस्ते तु विज्ञेया न वाच्यास्ते कदाचन ॥ त्वं न जानासि देवर्षे योधानां च प्रतिक्रियाम् ॥३७॥ मृत्युं च पृष्ठतः कृत्वा रणभूमौ गतव्यथाः ॥ शस्त्राशस्त्रैर्भिन्नगात्राः प्रशस्ता नात्र संशयः ॥३८॥ इत्युक्त्वा चावदद्देवान्वीरभद्रो महाबलः ॥ शृण्वंतु मम वाक्यानि देवा इन्द्रपुरोगमाः॥ ॥३९॥ अतारकां महीं चाद्य करिष्ये नात्र संशयः ॥४०॥ अथ त्रिशूलमादाय तारकेण युयोध सः ॥ वृषारूढैरनेकैश्च त्रिशूलवरधारिभिः ॥४१॥ कपर्दिनो वृषांकाश्च गणास्तेतिप्रहारिणः ॥ वीरभद्रं पुरस्कृत्य वीरभद्रपराक्रमाः ॥ ४२ ॥ त्रिशूलधारिणः सर्वे सर्वे सर्पांगभूषणाः ॥ सचंद्रशेखराः सर्वे जटाजूटविभूषिताः ॥ ४३ ॥ नीलकण्ठा दशभुजाः पञ्चवक्त्रास्त्रिलोचनाः ॥ छत्रचामरसंवीताः सर्वे तेऽत्युग्रबाहवः ॥ ४४ ॥ वीरभद्रं पुरस्कृत्य सर्वे हरपराक्रमाः ॥ युयुधुस्ते तदा दैत्यास्तारकासुरजीविनः ॥ ४५ ॥ पुनःपुनस्तैश्च तदा बभूवुर्गणैर्जितास्ते ह्यसुराः पराङ्मुखाः ॥ बभूव तेषां च तदातिसंगरो महाभयो दैत्यवरैस्तदानीम् ॥ ४६ ॥ अमृष्यमाणाः परमास्त्रकोविदैस्ततो गणास्ते जयिनो बभूवुः ॥ गणैर्जितास्ते ह्यसुराः पराभवं तं तारकं ते व्यथिताः शशंसुः ॥ ४७ ॥ विनाम्य चापं हि तथा च तारकः स योद्धुकामः प्रविवेश सेनाम् ॥ यथा झषो वै प्रविवेश सागरं तथा ह्यसौ दैत्यवरो महात्मा ॥ ४८ ॥ गणैः समेतो युयुधे तदानीं स वीरभद्रो हि महाबलश्च ॥ सर्वान्सुरांश्चेंद्रमुखान्महाबलस्तथा गणान्यक्षपिशाचगुह्य

कान् ॥ स दैत्यवर्योऽतिरुषं प्रविष्टः संमर्दयामास महाबलो हि ॥ ४९ ॥ ततः समभवद्युद्धं देवदानवसंकुलम् ॥ देवदानवयक्षाणां सन्निपातकरं महत् ॥ ५० ॥ तथा वृषा गर्जमाना अश्वाञ्जघ्नुश्च सादिभिः ॥ रथिभिश्च रथाञ्जघ्नुः कुंजरान्सादिभिः सह ॥ ५१ ॥ वृषारूढैः सरथैस्ते च सर्वे निष्पाटिता ह्यसुराः पोथिताश्च ॥ ५२ ॥ क्षयं प्रणीता बहवस्तदानीं पेतुः पृथिव्यां निहताश्च केचित् ॥ केचित्प्रविष्टा हि रसातलं च पलायमाना बहवस्तथैव ॥ ५३ ॥ केचिच्च शरणं प्राप्ता रुद्रानुचरकिंकरान् ॥ एवं नष्टं तदा सैन्यं विलोक्यासुरपालकः ॥ तारको हि रुषाविष्टो हंतुं देवगणान्ययौ ॥ ॥ ५४ ॥ भुजानामयुतं कृत्वा दैत्यराजो हि तारकः ॥ आरुह्य सिंहं सहसा घातयामास तान्रणे ॥५५॥ दंशितेन च सिंहेन वृषाः केचिद्विदारिताः ॥ तथैव तारकेणैव घातिता बहवो गणाः ॥ ५६ ॥ एवं कृतं तदा तेन तारकेण महात्मना ॥ सर्वेषामेव देवानामशक्यस्तारको महान् ॥ ५७ ॥ जातस्तदा महाबाहुस्त्रैलोक्यक्षयकारकः ॥ तारकस्यानुगा दैत्या अजेया बलवत्तराः ॥ ५८ ॥ महारूढा दंशिताश्च करालास्ते प्रहारिणः ॥ तै राहता गणाः सर्वे सिंहैश्च वृषभा हताः ॥ ५९ ॥ एवं निहन्यमाना वै गणास्ते रणमण्डले ॥ प्रहस्य विष्णुः प्रोवाच कुमारं शिववल्लभम् ॥ ६० ॥ ॥ ॥ विष्णुरुवाच ॥ ॥ नान्यो हंतास्य पापस्य त्वद्विना कृत्तिकासुत ॥ तस्मात्त्वया हि कर्त्तव्यं वचनं च महाभुज ॥ ६१ ॥ तारकस्य वधार्थाय उत्पन्नोऽसि शिवात्मज ॥ तस्मात्त्वयैव कर्त्तव्यं निधनं तारकस्य च ॥ ६२ ॥ तच्छ्रुत्वा भगवान्क्रुद्धः पार्वतीनन्दनो महान् ॥ उवाच प्रहसन्वाक्यं विष्णुं प्रति यथोचितम् ॥ ६३ ॥ मया निरीक्ष्यते सम्यक्चित्रयुद्धं महात्मनाम् ॥ अनभिज्ञोऽस्म्यहं विष्णो कार्याकार्यविचारणे ॥ ६४ ॥ केऽस्मदीयाः परे चैव न जानामि कथंचन ॥ किमर्थं युध्यमाना वै परस्परवधे स्थिताः ॥ ६५ ॥ कुमारस्य वचः श्रुत्वा नारदो वाक्यमब्रवीत् ॥ ६६ ॥ ॥ नारद उवाच ॥ ॥ कुमारोऽसि महाबाहो शंकरस्यांशसंभवः ॥ त्वं त्राता जगतां स्वामी देवानां च परा गतिः ॥ ६७ ॥ तारकेण पुरा वीर तपस्तप्तं सुदारुणम् ॥ येनैव विजिता देवा येन स्वर्गस्तथा जितः ॥ ६८ ॥ तपसा तेन चोग्रेण अजेयत्वमवाप्तवान् ॥ अनेनापि जितश्चेंद्रो लोकपालास्तथैव च ॥ ६९ ॥ त्रैलोक्यं च जितं सर्वं ह्यनेनैव दुरात्मना ॥ तस्मात्त्वया निहंतव्यस्तारकः पापपूरुषः ॥ ७० ॥ सर्वेषां शं विधातव्यं त्वया नाथेन चाद्य वै ॥ नारदस्य वचः श्रुत्वा कुमारः प्रहसन्महान् ॥ विमानादवतीर्याथ पदातिः परमोऽभवत् ॥ ७१ ॥ पद्भ्यां तदासौ परिधावमानः शिवात्मजोयं च कुमाररूपी ॥ करे समादाय महाप्रभावां शक्तिं महोल्कामिव दीप्तियुक्ताम् ॥ ७२ ॥ दृष्ट्वा तमायांतमतीव चंडमव्यक्तरूपं बलिनां वरिष्ठम् ॥ दैत्यो बभाषे सुरसत्तमानामसौ कुमारो द्विषतां

११

निहंता ॥ ७३ ॥ अनेन सार्द्धं ह्यहमेव वीरो योत्स्यामि सर्वानहमेव वीरान् ॥ गणांश्च सर्वानपि घातयामि महेश्वरांल्लोकपालांश्च सद्यः ॥ ॥ ७४ ॥ इत्येवमुक्त्वा सततं महाबलः कुमारमुद्दिश्य ययौ च योद्धुम् ॥ जग्राह शक्तिं परमाद्भुतां च स तारको वाक्यमिदं बभाषे ॥ ७५ ॥ ॥ ॥ तारक उवाच ॥ ॥ कुमारो मेग्रतश्चाद्य भवद्भिश्च कथं कृतः ॥ यूयं गतत्रपा देवा येषां राजा पुरंदरः ॥ ७६ ॥ पुरा येन कृतं कर्म विदितं सर्वमेव तत् ॥ प्रसुप्ताश्चादिता गर्भे जठरस्था निपातिताः ॥ ७७ ॥ कश्यपस्यात्मजेनैव बहुरूपो हतोऽसुरः ॥ नमुचिश्च हतो वीरो वृत्रश्चैव तथा हतः ॥ ७८ ॥ कुमारं हंतुकामोसौ देवेंद्रो बलघातकः ॥ कुमारोऽयं मया देवा घातितोद्य न संशयः ॥ ७९ ॥ पुरा हतास्त्वया विप्रा दक्षयज्ञे ह्यनेकशः ॥ तत्कर्मणः फलं चाद्य वीरभद्र महामते ॥ दर्शयिष्यामि ते वीर रणे रणविशारद ॥ ८० ॥ इत्येवमुक्त्वा स तदा महात्मा दैत्याधिपो वीरवरः स एकः ॥ जग्राह शक्तिं परमाद्भुतां च स तारको युद्धविदां वरिष्ठः ॥८१॥ इति परमरुपाभिभूतो दितितनयः परीवृतोऽसुरेंद्रैः ॥ युधि मतिमकरोत्तदा निहंतुं समरविजयी स तारको बलीयान् ॥ ८२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे सुरतारकासुरसंग्रामवर्णनंनामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ वल्गमानं तमायांतं तारकासुरमोजसा ॥ आजघान च वज्रेण इंद्रो मतिमतां वरः ॥ १ ॥ तेन वज्रप्रहारेण तारको विह्वलीकृतः ॥ पतितोऽपि समुत्थाय शक्त्या तं प्राहरद्विपम् ॥ २ ॥ पुरंदरं गजस्थं हि अपातयत भूतले ॥ हाहाकारो महानासीत्पतिते च पुरंदरे ॥ ३ ॥ तारकेणापि तत्रैव यत्कृतं तच्छृणु प्रभो ॥ पतितं च पदाक्रम्य हस्ताद्वज्रं प्रगृह्य च ॥ ४ ॥ हतं देवेंद्रमालोक्य तारको रिपुसूदनः ॥ वज्रघातेन महताऽताडयत्तु पुरंदरम् ॥ ५ ॥ त्रिशूलमुद्यम्य महाबलस्तदा स वीरभद्रो रुषितः पुरंदरम् ॥ संरक्षमाणो हि जघान तारकं शूलेन दैत्यं च महाप्रभेण ॥ ६ ॥ शूलप्रहाराभिहतो निपपात महीतले ॥ पतितोऽपि महातेजास्तारकः पुनरुत्थितः ॥ ७ ॥ जघान परया शक्त्या वीरभद्रं तदोरसि ॥ वीरभद्रोपि पतितः शक्तिघातेन तस्य वै ॥ ८ ॥ सगणाश्चैव देवाश्च गंधर्वोरगराक्षसाः ॥ हाहाकारेण महता चुक्रुशुश्च पुनःपुनः ॥ ९ ॥ तदोत्थितः सहसा महाबलः स वीरभद्रो द्विषतां निहंता ॥ त्रिशूलमुद्यम्य तडित्प्रकाशं जाज्वल्यमानं प्रभया निरंतरम् ॥ स्वरोचिषा भासितदिग्वितानं सूर्यदुबिंबाग्न्युडुमण्डलाभम् ॥ १० ॥ त्रिशूलेन तदा यावद्धंतुकामो महाबलः ॥ निवारितः कुमारेण मावधीस्त्वं महामते ॥११॥ जगर्ज च महातेजाः कार्त्तिकेयो महाबलः ॥१२॥ तदा जयेत्यभिहितो भूतैराकाशसंस्थितैः ॥ शक्त्या परमया वीरस्तारकं हंतुमुद्यतः ॥ १३ ॥ तारकस्य कुमारस्य संग्रामस्तत्र दुःसहः ॥ जातस्ततो महाघोरः सर्वभूतभयं

करः ॥ १४ ॥ शक्तिहस्तौ च तौ वीरौ युयुधाते परस्परम् ॥ शक्तिभ्यां भिन्नहस्तौ तौ महासाहससंयुतौ ॥१५॥ परस्परं वंचयंतौ सिंहाविव महाबलौ ॥ वैतालिकीं समाश्रित्य तथा वै खेचरीं गतिम् ॥ १६ ॥ पार्वतं मतमाश्रित्य शक्त्या शक्तिं निजघ्नतुः ॥ एभिर्मतैर्महावीरौ चक्रतुर्युद्धमुत्तमम् ॥ १७ ॥ अन्योन्यसाधकौ भूत्वा महाबलपराक्रमौ ॥ जघ्नतुः शक्तिधाराभी रणे रणविशारदौ ॥ १८ ॥ मूर्ध्नि कण्ठे तथा बाह्वोर्जान्वोश्चैव कटीतटे ॥ वक्षस्युरसि पृष्ठे च चिच्छिदतुः परस्परम् ॥ १९ ॥ तदा तौ युध्यमानौ च हन्तुकामौ महाबलौ ॥ प्रेक्षका ह्यभवन्सर्वे देवगन्धर्वगुह्यकाः ॥ २० ॥ ऊचुः परस्परं सर्वे कोऽस्मिन्युद्धे विजेष्यते ॥ तदा नभोगता वाणी उवाच परिसांत्व्य वै ॥ २१ ॥ तारकं हि सुराश्चाद्य कुमारोऽयं हनिष्यति ॥ मा शोच्यतां सुराः सर्वैः सुखेन स्थीयतां दिवि ॥ २२ ॥ श्रुत्वा तदा तां गगने समीरितां तदैव वाचं प्रमथैः परीतः ॥ कुमारकस्तं प्रति हंतुकामो दैत्याधिपं तारकमुग्ररूपम् ॥ २३ ॥ शक्त्या तया महाबाहुराजघान स्तनांतरे ॥ तारकं ह्यसुरश्रेष्ठं कुमारो बलवत्तरः ॥ २४ ॥ तं प्रहारमनादृत्य तारको दैत्यपुंगवः ॥ कुमारं चाऽपि संक्रुद्धः स्वशक्त्या चाजघान वै ॥ २५ ॥ तेन शक्तिप्रहारेण शांकरिर्मूर्च्छितोऽभवत् ॥ मुहूर्तांच्चेतनां प्राप्तः स्तूयमानो महर्षिभिः ॥ २६ ॥ यथा सिंहो मदोन्मत्तो हंतुकामस्तथैव च ॥ कुमारस्तारकं दैत्यमाजघान प्रतापवान् ॥ २७ ॥ एवं परस्परेणैव कुमारश्चैव तारकः ॥ युयुधातेऽतिसंरब्धौ शक्तियुद्धपरायणौ ॥ २८ ॥ अभ्यासपरमावास्तामन्योन्यविजिगीषया ॥ तथा तौ युध्यमानौ च चित्ररूपौ तपस्विनौ ॥ २९ ॥ धाराभिश्च अणीभिश्च सुप्रयुक्तौ च जघ्नतुः ॥ अवलोकपराः सर्वे देवगन्धर्वकिन्नराः ॥ ३० ॥ विस्मयं परमं प्राप्ता नोचुः किंचन तस्य वै ॥ न ववौ च तदा वायुर्निष्प्रभोऽभूद्दिवाकरः ॥ ३१ ॥ हिमालयोऽथ मेरुश्च श्वेतकूटश्च दर्दुरः ॥ मलयोऽथ महाशैलो मैनाको विंध्यपर्वतः ॥ ३२ ॥ लोकालोकौ महाशैलौ मानसोत्तरपर्वतः ॥ कैलासो मन्दरो माल्यो गन्धमादन एव च ॥ ३३ ॥ उदयाद्रिर्महेंद्रश्च तथैवास्तगिरिर्महान् ॥ ३४ ॥ एते चान्ये च बहवः पर्वताश्च महाप्रभाः ॥ स्नेहार्दितास्तदाजग्मुः कुमारं च परीप्सवः ॥ ३५ ॥ ततः स दृष्ट्वा तान्सर्वान्भयभीतांश्च शांकरिः ॥ पर्वतान्गिरिजापुत्रो बभाषे प्रतिबोधयन् ॥ ३६ ॥ ॥ कुमार उवाच ॥ ॥ मा खिद्यत महाभागा मा चिंता क्रियतां नगाः ॥ घातयाम्यद्य पापिष्ठं सर्वेषामिह पश्यताम् ॥ ३७ ॥ एवं समाश्वास्य तदा मनस्वी तान्पर्वतान्देवगणैः समेतान् ॥ प्रणम्य शंभुं मनसा हरिप्रियः स्वां मातरं चैव नतः कुमारः ॥ ३८ ॥ कार्त्तिकेयस्ततः शक्त्या निचकर्त रिपोः शिरः ॥ तच्छिरो निपपातोर्व्यां तारकस्य च तत्क्षणात् ॥ एवं स जयमापेदे कार्त्तिकेयो महाप्रभुः ॥ ३९ ॥ ददृशुस्तं सुरगणा ऋषयो गुह्यकाः खगाः ॥ किंनराश्चारणाः सर्पास्तथा चैवाप्सरो

गणाः ॥ ४० ॥ हर्षेण महताविष्टास्तुष्टुवुस्तं कुमारकम् ॥ विद्याधर्यश्च ननृतुर्गायकाश्च जगुस्तदा ॥ ४१ ॥ एवं विजयमापन्नं दृष्ट्वा सर्वे मुदा युताः ॥ ततो हर्षात्समागम्य स्वांकमारोप्य चात्मजम् ॥ ४२ ॥ परिष्वज्य तु गाढेन गिरिजापि तुतोष वै ॥ स्वोत्संगे च समारोप्य कुमारं सूर्यवर्चसम् ॥ ॥ ४३ ॥ लालयामास तन्वंगी पार्वती रुचिरेक्षणा ॥ ऋषिभिः सत्कृतः शंभुः पार्वत्या सहितस्तदा ॥ ४४ ॥ आर्यासनगता साध्वी शुशुभे मितभाषिणी ॥ संस्तूयमाना मुनिभिः सिद्धचारणपन्नगैः ॥ ४५ ॥ नीराजिता तदा देवैः पार्वती शंभुना सह ॥ कुमारेण सहै वाथ शोभमाना तदा सती ॥ ४६ ॥ हिमालयस्तदागत्य पुत्रैश्च परिवारितः ॥ मेर्वाद्यैः पर्वतैश्चैव स्तूयमानः परोऽभवत् ॥ ४७ ॥ तदा देव गणाः सर्वं इन्द्राद्या ऋषिभिः सह ॥ पुष्पवर्षेण महता ववर्षुरमितद्युतिम् ॥ कुमारमग्रतः कृत्वा नीराजनपरा बभुः ॥ ४८ ॥ गीतवादित्रघो षेण ब्रह्मघोषेण भूयसा ॥ संस्तूयमानो विविधैः सूक्तैर्वेदविदां वरैः ॥ ४९ ॥ कुमारविजयंनाम चरित्रं परमाद्भुतम् ॥ सर्वपापहरं दिव्यं सर्वकामप्रदं नृणाम् ॥ ५० ॥ ये कीर्त्तयंति शुचयोऽमितभाग्ययुक्ताश्चानंत्यरूपमजरामरमादधानाः ॥ कौमारविक्रममहात्म्यमुदारमेतदा नंददायकमनोर्थकरं नृणां हि ॥ ५१ ॥ यः पठेच्छृणुयाद्वापि कुमारस्य महात्मनः ॥ चरितं तारकाख्यं च सर्वपापैः समुच्यते ॥ ५२ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे तारकासुरवधपूर्वकं स्वामिकार्त्तिकेयविजयोत्सववर्णनं नाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥ शौनक उवाच ॥ ॥ हत्वा तं तारकं संख्ये कुमारेण महात्मना ॥ किं कृतं सुमहद्भिश्र तत्सर्वं वक्तुमर्हसि ॥ १ ॥ कुमारो ह्यपरः शंभुर्येन सर्वमिदं ततम् ॥ तपसा तोषितः शंभुर्ददाति परमं पदम् ॥ २ ॥ कुमारो दर्शनात्सद्यः सफलो हि नृणां सदा ॥ ये पापिनो ह्यधर्म्मिष्ठाः श्वपचा अपि लोमश ॥ दर्शनाद्धूतपापास्ते भवंत्येव न संशयः ॥ ३ ॥ शौनकस्य वचः श्रुत्वा उवाच चरितं तदा ॥ व्यास शिष्यो महाप्राज्ञः कुमारस्य महात्मनः ॥ ४ ॥ ॥ लोमश उवाच ॥ ॥ हत्वा तं तारकं संख्ये देवानामजयं ततः ॥ अवध्यं च द्विजश्रेष्ठाः कुमारो जयमाप्तवान् ॥५॥ महिमा हि कुमारस्य सर्वशास्त्रेषु कथ्यते ॥ वेदैश्च स्वागमैश्चापि पुराणैश्च तथैव च ॥ ६ ॥ तथोपनिषदैश्चैव मीमांसाद्वि तयेन तु ॥ एवंभूतः कुमारोयमशक्यो वर्णितुं द्विजाः ॥ ७ ॥ यो हि दर्शनमात्रेण पुनाति सकलं जगत् ॥ ज्ञातारं भुवनस्यास्य निशम्य पितृराट् स्वयम् ॥ ८ ॥ ब्रह्माणं च पुरस्कृत्य विष्णुं चैव सवासवम् ॥ स ययौ त्वरितेनैव शंकरं लोकशंकरम् ॥ तुष्टाव प्रयतो भूत्वा दक्षिणाशापतिः स्वयम् ॥ ९ ॥ नमो भर्गाय देवाय देवानां पतये नमः ॥ मृत्युंजयाय रुद्राय ईशानाय कपर्दिने ॥ १० ॥ नीलकंठाय शर्वाय व्योमावयव

रूपिणे ॥ कालाय कालनाथाय कालरूपाय वै नमः ॥ ११ ॥ यमेन स्तूयमानो हि उवाच प्रभुरीश्वरः ॥ किमर्थमागतोऽसि त्वं तत्सर्वं कथय स्व नः ॥ १२ ॥ ॥ यम उवाच ॥ ॥ श्रूयतां देवदेवेश वाक्यं वाक्यविशारद ॥ तपसा परमेणैव तुष्टिं प्राप्तोसि शंकर ॥ १३ ॥ कर्मणा परमेणैव ब्रह्मा लोकपितामहः ॥तुष्टिमेति न संदेहो वराणां हि सदा प्रभुः ॥ १४ ॥ तथा विष्णुर्हि भगवान्वेदवेद्यः सनातनः ॥ यज्ञैरनेकैः संतुष्ट उपवासव्रतैस्तथा ॥ १५ ॥ ददाति केवलं भावं येन कैवल्यमाप्नुयुः ॥ नराः सर्वे मम मतं नान्यथा हि वचो मम ॥ १६ ॥ ददाति तुष्टो वै भोगं तथा स्वर्गादिसंपदः ॥ सूर्यो नमस्ययाऽऽरोग्यं ददातीह न चान्यथा ॥ १७ ॥ गणेशो हि महादेव अर्घ्यपाद्यादिचंदनैः ॥ मंत्रावृत्त्या तथा शंभो निर्विघ्नं च करिष्यति ॥ १८ ॥ तथान्ये लोकपाः सर्वे यथाशक्त्या फलप्रदाः ॥ यज्ञाध्ययनदानाद्यैः परितुष्टाश्च शंकर ॥ १९ ॥ महदाश्चर्यं संभूतं सर्वेषां प्राणिनामिह ॥ कृतं च तव पुत्रेण स्वर्गद्वारमपावृतम् ॥ २० ॥ दर्शनाच्च कुमारस्य सर्वे स्वर्गौकसो नराः ॥ पापिनोऽपि महादेव जाता नास्त्यत्र संशयः ॥ २१ ॥ मया किं क्रियतां देव कार्याकार्यव्यवस्थितौ ॥ ये सत्यशीलाः शांताश्च वदान्या निरवग्रहाः ॥ २२ ॥ जितेंद्रिया अलुब्धाश्च कामरागविवर्जिताः ॥ याज्ञिका धर्मनिष्ठाश्च वेदवेदांगपारगाः ॥ २३ ॥ यां गतिं यांति वै शंभो सर्वे सुकृतिनोपि हि ॥ तां गतिं दर्शनात्सर्वे श्वपचा अधमा अपि ॥ २४ ॥ कुमारस्य च देवेश महदाश्चर्यकर्मणः ॥ कार्त्तिक्यां कृत्तिकायोगसहितायां शिवस्य च ॥ २५ ॥ शिवस्य तनयं दृष्ट्वा ते यांति स्वकुलैः सह ॥ कोटिभिर्बहुभिश्चैव मत्स्थानं परिमुच्य वै ॥ २६ ॥ कुमारदर्शनात्सर्वे श्वपचा अपि यांति वै ॥ सद्गतिं त्वरितेनैव किं क्रियेत मयाधुना ॥ २७ ॥ यमस्य वचनं श्रुत्वा शंकरो वाक्यमब्रवीत् ॥ २८ ॥ ॥ शंकर उवाच ॥ ॥ येषां त्वंतगतं पापं जनानां पुण्यकर्मणाम् ॥ विशुद्धभावो भो धर्म्म तेषां मनसि वर्त्तते ॥ २९ ॥ सत्तीर्थगमनायैव दर्शनार्थं सतामिह ॥ वांछा च महती तेषां जायते पूर्वकारिता ॥ ३० ॥ बहूनां जन्मनामंते मयि भावोऽनुवर्त्तते ॥ प्राणिनां सर्वभावेन जन्माभ्यासेन भो यम ॥ ३१ ॥ तस्मात्सुकृतिनः सर्वे येषां भावोऽनुवर्त्तते ॥ जन्मजन्मानुवृत्तानां विस्मयं नैव कारयेत् ॥ ३२ ॥ स्त्रीबालशूद्राः श्वपचाधमाश्च प्राग्जन्मसंस्कारवशाद्धि धर्म्म ॥ योनिं गताः पापिषु वर्त्तमानास्तथापि शुद्धा मनुजा भवंति ॥ ३३ ॥ तथा सितेन मनसा च भवंति सर्वे सर्वेषु चैव विषयेषु भवंति तज्ज्ञाः ॥ दैवेन पूर्वचरितेन भवंति सर्वे सुराश्चेंद्रादयो लोकपालाः प्राक्तनेन ॥ ३४ ॥ जाता ह्यमी भूतगणाश्च सर्वे ह्यमी ऋषयो ह्यमी देवताश्च ॥ ३५ ॥ विस्मयो नैव कर्त्तव्यस्त्वया वापि कुमारके ॥ कुमारदर्शने चैव धर्मराज निबोध मे ॥ ३६ ॥

वचनं कर्मसंयुक्तं सर्वेषां फलदायकम् ॥ सर्वतीर्थानि यज्ञाश्च दानानि विविधानि च ॥ कार्याणि मनःशुद्ध्यर्थं नात्र कार्या विचारणा ॥ ३७ ॥ मनसा भावितो ह्यात्मा आत्मनात्मानमेव च ॥ आत्मा अहं च सर्वेषां प्राणिनां हि व्यवस्थितः ॥ ३८ ॥ अहं सदा भावयुक्त आत्मसंस्थो निरंतरः ॥ जंगमाजंगमानां च सत्यं प्रति वदामि ते ॥ ३९ ॥ द्वंद्वातीतो निर्विकल्पो हि साक्षात्स्वस्थो नित्यो नित्ययुक्तो निरीहः ॥ कूटस्थो वै कल्पभेदप्रवादैर्बहिष्कृतो बोधबोध्यो ह्यनन्तः ॥ ४० ॥ विस्मृत्य चैनं स्वात्मानं केवलं बोधलक्षणम् ॥ संसारिणो हि दृश्यंते समस्ता जीवराशयः ॥ ४१ ॥ अहं ब्रह्मा च विष्णुश्च त्रयोऽमी गुणकारिणः ॥ सृष्टिपालनसंहारकारका नान्यथा भवेत् ॥ ४२ ॥ अहंकारवृतेनैव कर्मणा कारिता वयम् ॥ यूयं च सर्वे विबुधा मनुष्याश्च खगादयः ॥ ४३ ॥ पश्वादयः पृथग्भूतास्तथान्ये बहवो ह्यमी ॥ पृथक्पृथक्समीचीना गुणवंतश्च संसृतौ ॥ ४४ ॥ पतिता मृगतृष्णायां मायया च वशीकृताः ॥ वयं सर्वे च विबुधाः प्राज्ञाः पंडितमानिनः ॥ ४५ ॥ परस्परं दूषयंतो मिथ्यावादरताः खलाः ॥ ४६ ॥ त्रैगुणा भवसंपन्ना अतत्त्वज्ञाश्च रागिणः ॥ कामक्रोधभयद्वेषमदमात्सर्यसंयुताः ॥ ४७ ॥ परस्परं दूषयंतो ह्यतत्त्वज्ञा बहिर्मुखाः ॥ तस्मादेवं विदित्वाथ असत्यं गुणभेदतः ॥ ४८ ॥ गुणातीते च वस्त्वर्थे परमार्थैकदर्शनम् ॥ ४९ ॥ यस्मिन्भेदो ह्यभेदं च यस्मिन्रागो विरागताम् ॥ क्रोधो ह्यक्रोधतां याति तद्धाम परमं शृणु ॥ ५० ॥ न तद्भासयते शब्दः कृतकत्वाद्यथा घटः ॥ शब्दो हि जायते धर्म्मः प्रवृत्तिपरमो यतः ॥ ५१ ॥ प्रवृत्तिश्च निवृत्तिश्च तथा द्वंद्वानि सर्वशः ॥ विलयं यांति यत्रैव तत्स्थानं शाश्वतं मतम् ॥ ५२ ॥ निरंतरं निर्गुणं ज्ञप्तिमात्रं निरंजनं निर्विकारं निरीहम् ॥ सत्तामात्रं ज्ञानगम्यं स्वसिद्धं स्वयंप्रभं सुप्रभं बोधगम्यम् ॥ ५३ ॥ एतज्ज्ञानं ज्ञानविदो वदंति सर्वात्मभावेन निरीक्षयंति ॥ सर्वातीतं ज्ञानगम्यं विदित्वा येन स्वस्थाः समबुद्ध्या चरंति ॥ ५४ ॥ अतीत्य संसारमनादिमूलं मायामयं मायया दुर्विचार्यम् ॥ मायां त्यक्त्वा निर्ममा वीतरागा गच्छंति ते प्रेतराणिनिर्विकल्पम् ॥ ५५ ॥ संसृतिः कल्पनामूलं कल्पना ह्यमृतोपमा ॥ यैः कल्पना परित्यक्ता ते यांति परमां गतिम् ॥ ५६ ॥ शुक्त्यां रजतबुद्धिश्च रज्जुबुद्धिर्यथोरणे ॥ मरीचौ जलबुद्धिश्च मिथ्या मिथ्यैव नान्यथा ॥ ५७ ॥ सिद्धिः स्वच्छंदवर्त्तित्वं पारतंत्र्यं हि वै मृषा ॥ बद्धो हि परतंत्राख्यो मुक्तः स्वातंत्र्यभावनः ॥ ५८ ॥ एको ह्यात्मा विदित्वाथ निर्ममो निरवग्रहः ॥ कुतस्तेषां बंधनं च यथा खे पुष्पमेव च ॥ ५९ ॥ शशविषाणमेवैतज्ज्ञानं संसार एव च ॥ किं कार्यं बहुनोक्तेन वचसा निष्फलेन हि ॥ ६० ॥ ममतां च निराकृत्य प्राप्तकामाः परं पदम् ॥ ज्ञानिनस्ते हि विद्वांसो वीतरागा जितेंद्रियाः ॥ ६१ ॥ यैस्त्यक्तो ममताभावो लोभकोपौ निराकृतौ ॥ ते यांति परमं

स्थानं कामक्रोधविवर्जिताः ॥ ६२ ॥ यावत्कामश्च लोभश्च रागद्वेषौ व्यवस्थितौ ॥ नाप्नुवंति च तां सिद्धिं शब्दमात्रैकबोधकाः ॥ ६३ ॥ ॥ यम उवाच ॥ ॥ शब्दाच्छब्दः प्रवर्त्तेत निःशब्दं ज्ञानमेव च ॥ अनित्यत्वं हि शब्दस्य कथं प्रोक्तं त्वया प्रभो ॥ ६४ ॥ अक्षरं ब्रह्म परमं शब्दो वै ह्यक्षरात्मकः ॥ तस्माच्छब्दस्त्वया प्रोक्तो निरीक्षक इति श्रुतम् ॥ ६५ ॥ प्रतिपाद्यं हि यत्किंचिच्छब्देनैव विना कथम् ॥ तत्सर्वं कथ्यतां शंभो कार्याकार्यव्यवस्थितौ ॥ ६६ ॥ ॥ शंकर उवाच ॥ ॥ शृणुष्वावहितो भूत्वा परमार्थयुतं वचः ॥ यस्य श्रवणमात्रेण ज्ञातव्यं नावशिष्यते ॥ ६७ ॥ ज्ञानप्रवादिनः सर्वे ऋषयो वीतकल्मषाः ॥ ज्ञानाभ्यासेन वर्त्तंते ज्ञानं ज्ञानविदो विदुः ॥ ६८ ॥ ज्ञानं ज्ञेयं ज्ञानगम्यं ज्ञात्वा च परिगीयते ॥ कथं केन च ज्ञातव्यं किं तद्वक्तुं विवक्षितम् ॥ ६९ ॥ एतत्सर्वं समासेन कथयामि निबोध मे ॥ एको ह्यनेकधा चैव दृश्यते भेदभावनः ॥ ७० ॥ यथा भ्रमरिकादृष्ट्या भ्रम्यते च मही यम ॥ तथात्मा भेदबुद्ध्या च प्रतिभाति ह्यनेकधा ॥ ७१ ॥ तस्माद्विमृश्य तेनैव ज्ञातव्यः श्रवणेन च ॥ मंतव्यः सुप्रयोगेण मननेन विशेषतः ॥ ७२ ॥ निर्द्धार्य चात्मनात्मानं सुखं बंधात्प्रमुच्यते ॥ मायाजालमिदं सर्वं जगदेतच्चराचरम् ॥ ७३ ॥ मायामयोऽयं संसारो ममतालक्षणो महान् ॥ ममतां च बहिः कृत्वा सुखं बंधात्प्रमुच्यते ॥ ७४ ॥ कोऽहं कस्त्वं कुतश्चान्ये महामायावलंबिनः ॥ अजागलस्तनस्येव प्रपंचोऽयं निरर्थकः ॥ ७५ ॥ निष्फलोऽयं निराभासो निःसारो धूमडंबरः ॥ तस्मात्सर्वप्रयत्नेन आत्मानं स्मर वै यम ॥ ७६ ॥ ॥ लोमश उवाच ॥ ॥ एवं प्रचोदितस्तेन शंभुना प्रेतराट्स्वयम् ॥ बुद्धो भूत्वा यमः साक्षादात्मभूतोऽभवत्तदा ॥ ७७ ॥ कर्म्मणां हि च सर्वेषां शास्ता कर्मानुसारतः ॥ बभूव डंबरो नृणां भूतानां च समाहितः ॥ ७८ ॥ ॥ ऋषय ऊचुः ॥ ॥ हत्वा तु तारकं युद्धे कुमारेण महात्मना ॥ अत ऊर्ध्वं कथ्यतां भोः किं कृतं महदद्भुतम् ॥ ७९ ॥ ॥ सूत उवाच ॥ ॥ हते तु तारके दैत्ये हिमवत्प्रमुखाद्रयः ॥ कार्त्तिकेयं समागत्य गीर्भी रम्याभिरैडयन् ॥ ८० ॥ ॥ गिरय ऊचुः ॥ ॥ नमः कल्याणरूपाय नमस्ते विश्वमंगल ॥ विश्वबंधो नमस्तेऽस्तु नमस्ते विश्वभावन ॥ ८१ ॥ वरिष्ठाः श्वपचा येन कृता वै दर्शनात्त्वया ॥ त्वां नमामो जगद्बंधुं त्वां वयं शरणागताः ॥ ८२ ॥ नमस्ते पार्वतीपुत्र शंकरात्मज ते नमः ॥ नमस्ते कृत्तिकासूनो अग्निभूत नमोस्तु ते ॥ ८३ ॥ नमोस्तु ते देववरैः सुपूज्य नमोऽस्तु ते ज्ञानविदां वरिष्ठ ॥ नमोऽस्तु ते देववर प्रसीद शरण्य सर्वार्तिविनाशदक्ष ॥८४॥ एवं स्तुतो गिरिभिः कार्त्तिकेयो ह्युमासुतः ॥ तान्गिरीन्सुप्रसन्नात्मा वरं दातुं समुत्सुकः ॥ ८५ ॥ ॥ कार्त्तिकेय उवाच ॥ ॥ भोभो गिरिवरा यूयं शृणुध्वं मद्वचोऽधुना ॥ कर्मिभिर्ज्ञानिभिश्चैव सेव्यमाना भविष्यथ ॥ ८६ ॥ भवत्स्वेव

द्विः वर्तंते दृषदो यत्नसेविताः ॥ पुनंतु विश्वं वचनान्मम ता नात्र संशयः ॥ ८७ ॥ पर्वतीयानि तीर्थानि भविष्यंति न चान्यथा ॥ शिवालयानि दिव्यानि दिव्यान्यायतनानि च ॥ ८८ ॥ अयनानि विचित्राणि शोभनानि महांति च ॥ भविष्यंति न संदेहः पर्वता वचनान्मम ॥८९॥ योऽयं मातामहो मेऽद्य हिमवान्पर्वतोत्तमः ॥ तपस्विनां महाभागः फलदो हि भविष्यति ॥ ९० ॥ मेरुश्च गिरिराजोऽयमाश्रयो हि भविष्यति ॥ लोकालोको गिरिवर उदयाद्रिर्महायशः ॥ ९१ ॥ लिंगरूपो हि भगवान्भविष्यति न चान्यथा ॥ श्रीशैलो हि महेंद्रश्च तथा सह्याचलो गिरिः ॥ ९२ ॥ माल्यवान्मलयो विन्ध्यस्तथासौ गंधमादनः ॥ श्वेतकूटस्त्रिकूटो हि तथा दर्दुरपर्वतः ॥ ९३ ॥ एते चान्ये च बहवः पर्वता लिंगरूपिणः ॥ मम वाक्याद्भविष्यंति पापक्षयकरा इमी ॥ ९४ ॥ एवं वरं ददौ तेभ्यः पर्वतेभ्यश्च शांकरिः ॥ ततो नंदी ह्युवाचाथ सर्वागमपुरस्कृतम् ॥ ९५ ॥ ॥ नंद्युवाच ॥ ॥ त्वया कृता हि गिरयो लिंगरूपिण एव ते ॥ शिवालयाः कथं नाथ पूज्याः स्युः सर्वदैवतैः ॥ ९६ ॥ ॥ कुमार उवाच ॥ ॥ लिंगं शिवालयं ज्ञेयं देवदेवस्य शूलिनः ॥ सर्वैर्नृभिर्दैवतैश्च ब्रह्मादिभिरतंद्रितैः ॥ ९७ ॥ नीलं मुक्ता प्रवालं च वैडूर्यं चंद्रमेव च ॥ गोमेदं पद्मरागं च मारतं कांचनं तथा ॥ ९८ ॥ राजतं ताम्रमारं च तथा नागमयं परम् ॥ रत्नधातुमयान्येव लिंगानि कथितानि ते ॥ ९९ ॥ पवित्राण्येव पूज्यानि सर्वकामप्रदानि च ॥ एतेषामपि सर्वेषां काश्मीरं हि विशिष्यते ॥ १०० ॥ ऐहिकामुष्मिकं सर्वं पूजाकर्तुः प्रयच्छति ॥ १०१ ॥ ॥ नंद्युवाच ॥ ॥ लिंगानामपि पूज्यं स्याद्बाणलिंगं त्वया कथम् ॥ कथितं चोत्तमत्वेन तत्सर्वं वद सुव्रत ॥ १०२ ॥ ॥ कुमार उवाच ॥ रेवायां तोयमध्ये च दृश्यंते दृषदो हि याः ॥ शिवप्रसादात्तास्तु स्युर्लिंगरूपा न चान्यथा ॥ १०३ ॥ श्लक्ष्णमूलाश्च कर्तव्याः पिंडिकोपरि संस्थिताः ॥ पूजनीयाः प्रयत्नेन शिवदीक्षायुतेन हि ॥ १०४ ॥ पिंडीयुक्तं च शास्त्रेण विधिना च यजेच्छिवम् ॥ वरदो हि जगन्नाथः पूजकस्य न चान्यथा ॥ १०५ ॥ पंचाक्षरी यस्य मुखे स्थिता सदा चेतोनिवृत्तिः शिवचिंतने च ॥ भूतेषु साम्यं परिवादमूकता पंढत्वमेवं परयोपितासु ॥ १०६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे कार्त्तिकेयप्रोक्तशिवलिंगमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ लोमश उवाच ॥ ॥ एवं ते शिवधर्माश्च कथितास्तेन वै द्विजाः ॥ सविशेषाः पाशुपताः प्रसादाच्चैव विस्तरात् ॥ १ ॥ अनेकागमसंवीता यथातत्त्वमुदाहृताः ॥ कापालिकानां भेदाश्च प्रोक्ता व्याससमासतः ॥ २ ॥

१ वचनम्—इति शेषः । २ अत्र—'तस्य'—इत्यध्याहृत्य 'पूजकस्य' इति पूर्वोक्तश्लोकस्थेन संबन्ध्य—तस्य पूजकस्य जगन्नाथो वरदो भवेत्—इति समुदितवाक्यार्थो बोद्धव्यः ।

धर्मा नानाविधाः प्रोक्ता नंदिनं प्रति वै तदा ॥ ३ ॥ ॥ ऋषय ऊचुः ॥ ॥ श्रुतं कुमारचरितमविशेषं सुमंगलम् ॥ अस्माभिश्च महाभाग किंचित्पृच्छामहे वयम् ॥ ४ ॥ श्वेतस्य राजसिंहस्य चरितं परमाद्भुतम् ॥ येन संतोषितो रुद्रः शिवो भक्त्याऽप्रमेयया ॥ ५ ॥ ते भक्तास्ते महात्मानो ज्ञानिनस्ते च कर्मिणः ॥ येऽर्चयंति महाशंभुं देवं भक्त्या समावृताः ॥ ६ ॥ तस्मात्पृच्छामहे सर्वे चरितं शंकरस्य च ॥ व्यासप्रसादात्सर्वं यज्जानासि त्वं न चापरः ॥७॥ निशम्य वचनं तेषां मुनीनां लोमशोऽब्रवीत् ॥ ८॥ ॥ लोमश उवाच ॥ ॥ आकर्ण्यतां महाभागाश्चरितं परमाद्भुतम् ॥ तस्य राज्ञो हि भजतो राजभोगांश्च सर्वशः ॥ मतिर्द्धर्मे समुत्पन्ना श्वेतस्य च महात्मनः ॥ ९ ॥ पृथिवीं पालयामास प्रजा धर्मेण पालयन् ॥ ब्रह्मण्यः सत्यवाक्छूरः शिवभक्तो निरंतरम् ॥ १० ॥ राज्यं शशासाथ स शक्तितो नृपो भक्त्या तदा चैव समर्चयत्सदा ॥ शंभुं परेशं परमं परात्परं शांतं पुराणं परमात्मरूपम् ॥ ११ ॥ आयुस्तस्य परिक्षीणमर्चतः परमेश्वरम् ॥ अथैतच्च महाभाग चरितं श्रूयतां मम ॥ १२ ॥ वाणी शिवकथायुक्ता परमाश्चर्यसंयुता ॥ न वाऽऽधयो हि तस्यैव व्याधयो हि महीपतेः ॥ १३ ॥ तस्य राज्ञो न बाधंते तथा चोपद्रवास्त्वमी ॥ निरीतिको जनो ह्यासीन्निरुपद्रव एव च ॥ १४ ॥ अकृष्टपच्यौषधयस्तस्य राज्ञोऽभवन्भुवि ॥ तपस्विनो ब्राह्मणाश्च वर्णाश्रमयुता जनाः ॥ ॥ १५ ॥ न पुत्रमरणे दुःखं नापमानं न मारकाः ॥ न दारिद्र्यं च ते सर्वे प्राप्नुवन्ति कदाचन ॥ १६ ॥ एवं बहुतरः कालस्तस्य राज्ञो महात्मनः ॥ गतो हि सफलो विप्राः शिवपूजारतस्य वै ॥ १७ ॥ एकदा पूजमानं तं शंकरं परमार्थदम् ॥ यमो हि प्रेषयामास यमदूतान्नृपं प्रति ॥ १८ ॥ वचनाच्चित्रगुप्तस्य श्वेत आनीयतामिति ॥ तथेति मत्वा ते दूता आगताः शिवमंदिरम् ॥ १९ ॥ राजानं नेतुकामास्ते पाशहस्ता महाभयाः ॥ यावत्समागता याम्या राजानं ददृशुस्त्वरात् ॥ २० ॥ न चक्रिरे तदा दूता आज्ञां धर्मस्य चैव हि ॥ ज्ञात्वा सर्वं यमश्चैव आगतः स्वयमेव हि ॥ २१ ॥ उद्धृत्य दंडं सहसा नेतुकामस्तदा नृपम् ॥ ददर्श च महाबाहुः शिवध्यानपरायणम् ॥ २२ ॥ शिवभक्तियुतं शांतं केवलं ज्ञानसंयुतम् ॥ यमोऽपि दृष्ट्वा राजानं परं क्षोभमुपागमत् ॥ २३ ॥ चित्रस्थो ह्यभवत्सद्यः प्रेतराजोऽतिविह्वलः ॥ कालरूपश्च यो नित्यं प्रजानां क्षयकारकः ॥ २४ ॥ आगतस्तत्क्षणादेव नृपं प्रति रुषान्वितः ॥ खड्गेन सितधारेण चर्मणा परमेण हि ॥ २५ ॥ तावत्तं ददृशे सोऽपि स्थितं द्वारि भयावृतम् ॥ उवाच कालो हि तदा यमं वैवस्वतं प्रति ॥ २६ ॥ कस्मात्त्वया धर्मराज नो नीतोऽयं नृपो महान् ॥ यम दूतसहायश्च भीतवत्प्रतिभासि मे ॥ २७ ॥ कालात्ययो न कर्त्तव्यो वचनान्मम सुव्रत ॥ कालेनोक्तस्तदा धर्म उवाच प्रस्तुतं वचः ॥ २८ ॥ तवाज्ञां च कारि

प्यामि नात्र कार्या विचारणा ॥ असौ दुरत्ययोऽस्माकं शिवभक्तो निरंतरम् ॥ २९ ॥ चित्रस्था इव तिष्ठाम भयाद्देवस्य शूलिनः ॥ यमस्य वचनं श्रुत्वा कालः क्रोधसमन्वितः ॥ राजानं हंतुमारेभे त्वरितः खड्गमाददे ॥ ३० ॥ त्रिगुणाद्यार्कसंकाशं प्रविवेश शिवालयम् ॥ यावत्कोपेन महता तावद्दृष्टः पिनाकिना ॥ स्वभक्तं हंतुकामोसौ श्वेतराजानमुत्तमम् ॥ ३१ ॥ ध्यानस्थितं चात्मनि तं विशुद्धज्ञानप्रदीपेन विशुद्धचित्तम् ॥ आत्मानमात्मातमतया निरंतरं स्वयंप्रकाशं परमं पुरस्तात् ॥ ३२ ॥ एवंविधं तं प्रसमीक्ष्य कालं संचिंत्यमानं मनसाऽचलेन ॥ शैवं पदं यत्परमार्थरूपं कैवल्यसायुज्यकरं स्वरूपतः ॥ ३३ ॥ सदाशिवेन दृष्टोऽसौ कालः कालांतकेन च ॥ उच्छृंखलः खलो दर्पाद्विशमानो निजांतिके ॥ ३४ ॥ नंदिकेश्वरमध्यस्थो यावद्दृष्टो निजांतिके ॥ शिवेन जगदीशेन भक्तवत्सलबंधुना ॥ ३५ ॥ निरीक्षितस्तृतीयेन चक्षुषा परमेष्ठिना ॥ स्वभक्तं रक्षमाणेन भस्मसादभवत्क्षणात् ॥ ३६ ॥ ददाह तं कालमनेकवर्णं व्यात्ताननं भीमबहूग्ररूपम् ॥ ज्वालावलीभिः परिदह्यमानमतिप्रचंडं भुवनैकभक्षणम् ॥ ३७ ॥ ददर्शिरे देवगणाः समेताः सयक्षगंधर्वपिशाचगुह्यकाः ॥ सिद्धाप्सरःसर्वखगाश्च पन्नगाः पतत्रिणो लोकपालास्तथैव ॥ ३८ ॥ ज्वालामालावृतं कालमीश्वरस्याग्रतः स्थितम् ॥ लब्धसंज्ञस्तदा राजा कालं स्वं हंतुमागतम् ॥ ३९ ॥ पुनः पुनर्ददर्शाथ दह्यमानं कृशानुना ॥ प्रार्थयामास स व्यग्रो रुद्रं कालाग्निसन्निभम् ॥ ४० ॥ ॥ राजोवाच ॥ ॥ नमो रुद्राय शांताय स्वज्योत्स्नायात्मवेधसे ॥ निरंतराय सूक्ष्माय ज्योतिषां पतये नमः ॥ ४१ ॥ त्राता त्वं हि जगन्नाथ पिता माता सुहृत्सखा ॥ त्वमेव बंधुः स्वजनो लोकानां प्रभुरीश्वरः ॥ ४२ ॥ किं कृतं हि त्वया शंभो कोऽसौ दग्धो ममाग्रतः ॥ न जानामि च किं जातं कृतं केन महत्तरम् ॥ ४३ ॥ एवं प्रार्थयतस्तस्य श्रुत्वा च परिदेवनम् ॥ उवाच शंकरो वाक्यं बोधयन्निव तं नृपम् ॥ ४४ ॥ ॥ रुद्र उवाच ॥ ॥ मया दग्धो ह्ययं कालस्तवार्थे च तवाग्रतः ॥ दह्यमानो हि दृष्टस्ते ज्वालामालाकुलो महान् ॥ ४५ ॥ एवमुक्तस्तदा तेन शंभुना राजसत्तमः ॥ उवाच प्रश्रितो भूत्वा वचनं शिवमग्रतः ॥ ४६ ॥ किमनेन कृतं शंभो अकृत्यं वद तत्त्वतः ॥ य इमां प्रापितोऽवस्थां प्राणात्ययकरीं भव ॥ ४७ ॥ एवं विज्ञापितस्तेन ह्युवाच परमेश्वरः ॥ भक्षकोऽयं महाराज सर्वेषां प्राणिनामिह ॥ ४८ ॥ भक्षणार्थं तव विभो सोऽयं क्रूरोऽधुनाऽऽगतः ॥ ममांतिकं महाराज तस्माद्दग्धो मया विभो ॥ ४९ ॥ बहूनां क्षेममन्विच्छंस्तवार्थेऽन्हं विशेषतः ॥ ५० ॥ ये पापिनो ह्यधर्मिष्ठा लोकसंहारकारकाः ॥ पाषंडवादसंयुक्ता वध्यास्ते मम चैव हि ॥ वाक्यं निशम्य रुद्रस्य श्वेतो वचनमब्रवीत् ॥ ५१ ॥ कालेनैव हि लोकोऽयं पुण्यमाचरते सदा ॥ धर्मनिष्ठाश्च केचित्तु भक्त्या

परमया युताः ॥ ५२ ॥ उपासनारताः केचिज्ज्ञानिनो हि तथा परे ॥ केचिदध्यात्मसंयुक्ताश्चान्ये मुक्ताश्च केचन ॥ ५३ ॥ कालो हि हर्ता च चराचराणां तथा ह्यसौ पालकोऽप्यद्वितीयः ॥ स स्रष्टा वै प्राणिनां प्राणभूतस्तस्मादेनं जीवयस्वाशु भूयः ॥ ५४ ॥ यदि सृष्टिपरोऽसि त्वं कालं जीवय सत्वरम् ॥ यदि संहारभूतोऽसि सर्वेषां प्राणिनामिह ॥ ५५ ॥ तर्ह्येवं कुरु शंभो त्वं कालस्य च महात्मनः ॥ विना कालेन यत्किंचिद्भविष्यति न शंकर ॥ ५६ ॥ इति विज्ञापितस्तेन राज्ञा शंभुः प्रतापिना ॥ चकार वचनं तस्य भक्तस्य च चिकीर्षितम् ॥ ५७ ॥ शंभुः प्रहस्याथ तदा महेशः संजीवयामास पिनाकपाणिः ॥ चकार रूपं च यथा पुरासीदालिंगितोसौ यमदूतमध्ये ॥ ५८ ॥ उपस्थितोऽसौ त्वथ लज्जमानस्तुष्टाव देवं वृषभध्वजं तम् ॥ नत्वा पुरःस्थाग्निमयं हि कालः सविस्मयो वाक्यमिदं बभाषे ॥ ५९ ॥ ॥ काल उवाच ॥ ॥ कालांतक त्रिपुरेश त्रिपुरांतकर प्रभो ॥ मदनो हि त्वया देव कृतोऽनंगो जगत्पते ॥ ६० ॥ दक्षयज्ञविनाशश्च कृतो हि परमाद्भुतः ॥ कालकूटं दुःप्रसहं सर्वेषां क्षयकृन्महत् ॥ ६१ ॥ ग्रसितं तत्त्वया शंभो अन्येषामपि दुर्द्धरम् ॥ लिंगरूपेण महता व्याप्तमासीज्जगत्रयम् ॥ ६२ ॥ लयनाल्लिंगमित्युक्तं सर्वैरपि सुरासुरैः ॥ यस्यांतं न विदुर्देवा ब्रह्मविष्णुपुरोगमाः ॥ ६३ ॥ लिंगस्य देवदेवस्य महिमानं परस्य च ॥ नमस्ते परमेशाय नमस्ते विश्वमंगल ॥ नमस्ते शितिकण्ठाय नमस्तस्मै कपर्दिने ॥ ६४ ॥ नमोनमः कारणकारणाय ते नमोनमो मंगलमंगलात्मने ॥ ज्ञानात्मने ज्ञानविदां मनीषिणां त्वमादिदेवोऽसि पुमान्पुराणः ॥ ६५ ॥ त्वमेव सर्वं जगदेकबंधो वेदांतवेद्योऽसि महानुभावः ॥ महानुभावैः परिकीर्त्तनीयस्त्वमेव विश्वेश्वर विश्वमान्यः ॥ ६६ ॥ त्वं पासि लुंपसि जगत्रितयं महेश स्रष्टासि भूतपतिरेव न कश्चिदन्यः ॥ ६७ ॥ इति स्तुतस्तदा तेन कालेन जगदीश्वरः ॥ उवाच कालो राजानं श्वेतं संबोधयन्निव ॥ ६८ ॥ ॥ काल उवाच ॥ ॥ मनुष्यलोके सकले नान्यस्त्वत्तो हि विद्यते ॥ येन त्वया जितो देवो ह्यजेयो भुवनत्रये ॥ ६९ ॥ मया हतमिदं विश्वं जगदेतच्चराचरम् ॥ जेताहं सर्वदेवानां सर्वेषां दुरतिक्रमः ॥ ७० ॥ स हि ते चानुगो जातो महाराज प्रयच्छ मे ॥ अभयं देवदेवाच्च शूलिनः परमेष्ठिनः ॥ ७१ ॥ एवमुक्तस्तदा तेन श्वेतः कालेन चैव हि ॥ उवाच प्रहसन्वाचा मेघनादगभीरया ॥ ७२ ॥ ॥ राजोवाच ॥ ॥ शिवस्य परमं रूपं त्वमेको नास्ति संशयः ॥ कालस्त्वमसि भूतानां स्थितिसंहाररूपवान् ॥ ७३ ॥ तस्मात्पूज्यतमोऽसि त्वं सर्वेषां च नियामकः ॥ त्वद्भयात्कृतिनः सर्वे शरणं परमेश्वरम् ॥ व्रजंति विविधैर्भावैरात्मलक्षणतत्पराः ॥ ७४ ॥ ॥ सूत उवाच ॥ ॥ ॥ तेनैवं रक्षितः कालो राज्ञा परमधर्मिणा ॥ शिवप्रसादमात्रेण लब्धसंज्ञो बभूव ह ॥ ७५ ॥ तदा यमेन स्तवितो मृत्युना यमदूतकैः ॥

शिवं प्रणम्य संस्तुत्य श्वेतं राजानमेव च ॥ ययौ स्वमालयं विप्रा मेने स्वं जनितं पुनः ॥ ७६ ॥ मायया सह पत्न्या च शिवस्य चरितं महत् ॥ अनुसंस्मृत्य संस्मृत्य विस्मयं परमं ययौ ॥ ७७ ॥ कथयामास सर्वेषां दूतानां स्वयमेव हि ॥ आकर्ण्यतां मम वचो हे दूतास्त्वरितेन हि ॥ ७८ ॥ कर्त्तव्यं च प्रयत्नेन नान्यथा मम भाषितम् ॥ ७९ ॥ ॥ काल उवाच ॥ ॥ ये त्रिपुण्ड्रं धारयंति तथा ये वै जटाधराः ॥ ये रुद्राक्षधराश्चैव तथा ये शिवनामिनः ॥ ८० ॥ उपजीवनहेतोश्च भिया ये ह्यपि मानवाः ॥ पापिनोऽपि दुराचाराः शिववेषधरा ह्यमी ॥ ८१ ॥ नानेतव्या भवद्भिश्च मम लोकं कदाचन ॥ वर्ज्यास्ते हि प्रयत्नेन पापिनोऽपि सदैव हि ॥ ॥ ८२ ॥ अन्येषां का कथा दूता येऽर्चयंति सदाशिवम् ॥ भक्त्या परमया शंभुं रुद्रास्ते नात्र संशयः ॥ ८३ ॥ रुद्राक्षमेकं शिरसा बिभर्ति यस्तथा त्रिपुंड्रं च ललाटमध्यके॥ पंचाक्षरीं ये प्रजपंति साधवः पूज्या भवद्भिश्च न चान्यथा क्वचित् ॥ ८४ ॥ यस्मिन्राष्ट्रेऽथ वा देशे ग्रामे चापि विचक्षणः ॥ शिवभक्तो न दृश्येत स्मशानात्तु विशिष्यते ॥ तद्राष्ट्रं देशमित्याहुः सत्यं प्रतिवदामि वः ॥ ८५ ॥ यस्मिन्न संति नित्यं हि शिवभक्तिसमन्विताः ॥ तद्ग्रामस्था जनाः सर्वे शासनीया न संशयः ॥ ८६ ॥ एवमाज्ञापयामास यमोऽपि निजकिंकरान् ॥ तथेति मत्वा ते सर्वे तूष्णीमासन्सुविस्मिताः ॥ ८७ ॥ एवंविधोऽयं भुवनैकभर्ता सदाशिवो लोकगुरुः स एकः ॥ दाता प्रहर्ता निजभावयुक्तः सनातनोऽयं जगदेकबंधुः ॥८८॥ दग्ध्वा कालं महादेवो निर्भयं च ददौ विभुः ॥ श्वेतस्य राजराजस्य महीपालवरस्य च ॥ ८९ ॥ तदा निर्भयमापन्नः श्वेतराजो महामनाः ॥ भक्त्या च परया मुक्तो बभूव कृतनिश्चयः ॥ ९० ॥ तदा देवैः पूज्यमान ऋषिभिः पन्नगैस्तथा ॥ श्वेतो राजन्यवर्योऽसौ शिवसायुज्यमाप्तवान् ॥ ९१ ॥ एवं भक्तिपराणां च महेशे च जगद्गुरौ ॥ सिद्धिः करतले तेषां सत्यं प्रतिवदामि वः ॥ ९२ ॥ श्वपचोऽपि वरिष्ठः स्यात्प्रसादाच्छंकरस्य च ॥ तस्मात्सर्वप्रयत्नेन पूजनीयो हि शंकरः ॥ ९३ ॥ बहूनां जन्मनामंते शिवभक्तिः प्रजायते ॥ ९४ ॥ ज्ञानिनां कृतबुद्धीनां जन्मजन्मनि शंकरः ॥ किं मया बहुनोक्तेन पूजनीयः सदाशिवः ॥ ९५ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ किरातेन कृतं यच्च व्रतं च परमाद्भुतम् ॥ येनैव तारितं विश्वं जगदेतच्चराचरम् ॥ ९६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे श्वेतराजचरिते शिवभक्तिप्रभावेण कालदहनवृत्तान्तवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ ऋषय ऊचुः ॥ ॥ किन्नामा च किरातोऽभूत्किं तेन व्रतमाहितम् ॥ तत्त्वं कथय विप्रेंद्र परं कौतूहलं हि नः ॥ १ ॥ तत्सर्वं श्रोतुमिच्छामो याथातथ्येन कथ्यताम् ॥ न ह्यन्यो

विद्यते लोके त्वद्विना वदतां वरः ॥ तस्मात्कथय भो विप्र सर्वं शुश्रूषतां हि नः ॥ २ ॥ एवमुक्तस्तदा तेन शौनकेन महात्मना ॥ कथयामास तत्सर्वं पुष्कसेन कृतं च यत् ॥ ३ ॥ ॥ लोमश उवाच ॥ ॥ आसीत्पुरा महारौद्रश्चंडोनाम दुरात्मवान् ॥ क्रूरसंगो निष्कृतिको भूतानां भयवाहकः ॥ ४ ॥ जालेन मत्स्यान्दुष्टात्मा घातयत्यनिशं खलु ॥ भल्लैर्मृगाञ्छापदांश्च कृष्णसारांश्च शल्लकान् ॥ ५ ॥ खड्गांश्चैव च दुष्टात्मा दृष्ट्वा कांश्चिच्च पापवान् ॥ पक्षिणोऽघातयत्क्रुद्धो ब्राह्मणांश्च विशेषतः ॥ ६ ॥ लुब्धको हि महापापो दुष्टो दुष्टजनप्रियः ॥ भार्या तथाविधा तस्य पुष्कसस्य महाभया ॥७॥ एवं विहरतस्तस्य बहुकालोत्यवर्तत ॥ गते बहुतिथे काले पापौघनिरतस्य च ॥८॥ निषंगे जलमादाय क्षुत्पिपासार्दितो भृशम् ॥ एकदा निशि पापीयाञ्छ्रीवृक्षोपरि संस्थितः ॥ कोलं हंतुं धनुष्पाणिर्जाग्रच्चानिमिषेण हि ॥९॥ माघमासेऽसितायां वै चतुर्दश्यामथाग्रतः ॥ मृगमार्गविलोकार्थी बिल्वपत्राण्यपातयत्॥१०॥श्रीवृक्षपर्णानि बहूनि तत्र स च्छेदयामास रुषान्वितोपि ॥श्रीवृक्षमूले परिवर्तमानो लिंगं च तस्योपरि दुष्टभावः ॥ ११ ॥ ववर्ष गंडूषजलं दुरात्मा यदृच्छया तानि शिवे पतंति ॥ श्रीवृक्षपर्णानि च दैवयोगाज्जातं च सर्वं शिवपूजनं तत् ॥ १२ ॥ गंडूषवारिणा तेन स्नपनं च कृतं महत् ॥ बिल्वपत्रैरसंख्यातैरर्चनं च महत्कृतम् ॥ १३ ॥ अज्ञानेनापि भो विप्राः पुष्कसेन दुरात्मना ॥ माघ मासेऽसिते पक्षे चतुर्दश्यां विधूदये ॥ १४ ॥ पुष्कसोऽथ दुराचारो वृक्षादवततार सः ॥ आगत्य जलसंकाशं मत्स्यान्हंतुं प्रचक्रमे ॥ १५ ॥ लुब्ध कस्यापि भार्याभून्नाम्ना चैव घनोदरी ॥ दुष्टा सा पापनिरता परद्रव्यापहारिणी ॥ १६ ॥ गृहान्निर्गत्य सायाह्ने पुरद्वारबहिः स्थिता ॥ वनमार्गं प्रप श्यंती पत्युरागमनेच्छया ॥ १७ ॥ चिराद्भर्तरि नायाते चिन्तयामास लुब्धकी ॥ अद्य सायाह्नवेलायामागताः सर्वलुब्धकाः ॥ १८ ॥ तमःस्तोमेन संछन्नाश्चतस्रो विदिशो दिशः ॥ रात्रौ यामद्वयं यातं किं मतंगः समागतः ॥ १९ ॥ किं वा केसरलोभेन सिंहेनैव विदारितः ॥ किं भुजंगफणार त्नहारी सर्पविषार्दितः ॥ २० ॥ किं वा वराहदंष्ट्राग्रघातैः पंचत्वमागतः ॥ मधुलोभेन वृक्षाग्रात्स वै प्रपतितो भुवि ॥ २१ ॥ क्वान्वेषयामि पृच्छामि क्व गच्छामि च कं प्रति ॥ एवं विलप्य बहुधा निवृत्ता स्वं गृहं प्रति ॥ २२ ॥ नैवान्नं नो जलं किंचिन्न भुक्तं तद्दिने तया ॥ चिंतयंती पतिं चापि लुब्धकी त्वनयन्निशाम् ॥ २३ ॥ अथ प्रभाते विमले पुष्कसी वनमाययौ ॥ अशनार्थं च तस्यान्नमादाय त्वारिता सती ॥ २४ ॥ भ्रममाणा वने तस्मिन्ददर्श महतीं नदीम् ॥ तस्यास्तीरे समासीनं स्वपतिं प्रेक्ष्य हर्षिता ॥ २५ ॥ तदन्नं कूलतः स्थाप्य नदीं तर्तुं प्रचक्रमे ॥ निरीक्ष्य चाथ मत्स्यान्स जालप्रोतान्समानयत् ॥ २६ ॥ तावत्तयोक्तश्चण्डोऽसावेहि शीघ्रं च भक्षय ॥ अन्नं त्वदर्थमानीतमुपोष्य दिवसं मया ॥ २७ ॥

कृतं किमद्य रे मंद गतेऽहनि च किं कृतम् ॥ नाऽशितं च त्वया मूढ लंघितेनाद्य पापिना ॥ २८ ॥ नद्यां स्नातौ तथा तौ च दम्पती च शुचि व्रतौ ॥ यावद्गतश्च भोक्तुं स तावच्छ्वा स्वयमागतः ॥ २९ ॥ तेन सर्वं भक्षितं च तदन्नं स्वयमेव हि ॥ चंडी प्रकुपिता चैव श्वानं हंतुमुप स्थिता ॥ ३० ॥ आवयोर्भक्षितं चान्नमनेनैव च पापिना ॥ किं च भक्षयसे मूढ भविताद्य बुभुक्षितः ॥ ३१ ॥ एवं तयोक्तश्चण्डोऽसौ बभाषे तां शिवप्रियः ॥ यच्छुना भक्षितं चान्नं तेनाहं परितोषितः ॥ ३२ ॥ किमनेन शरीरेण नश्वरेण गतायुषा ॥ शरीरं दुर्लभं लोके पूज्यते क्षणभंगुरम् ॥ ३३ ॥ ये पुष्णंति निजं देहं सर्वभावेन चाहताः ॥ मूढास्ते पापिनो ज्ञेया लोकद्वयबहिष्कृताः ॥ ३४ ॥ तस्मान्मानं परि त्यज्य क्रोधं च दुरवग्रहम् ॥ स्वस्था भव विमर्शेन तत्त्वबुद्ध्या स्थिरा भव ॥ ३५ ॥ बोधिता तेन चंडी सा पुष्कसेन तदा भृशम् ॥ जागरादि च संप्राप्तः पुष्कसोऽपि चतुर्दशीम् ॥ ३६ ॥ शिवरात्रिप्रसंगाच्च जायते यद्व्ययसंशयम् ॥ तज्ज्ञानं परमं प्राप्तः शिवरात्रिप्रसंगतः ॥ ३७ ॥ यामद्वयं च संजातममावास्यां तु तत्र वै ॥ आगताश्च गणास्तत्र बहवः शिवनोदिताः ॥ ३८ ॥ विमानानि बहून्यत्र आगतानि तदंतिकम् ॥ दृष्टानि तेन तान्येव विमानानि गणास्तथा ॥ ३९ ॥ उवाच परया भक्त्या पुष्कसोऽपि च तान्प्रति ॥ कस्मात्समागता यूयं सर्वे रुद्राक्षधारिणः ॥ ४० ॥ विमानस्थाश्च केचिच्च वृषारूढाश्च केचन ॥ सर्वे स्फटिकसंकाशाः सर्वे चंद्रार्द्धशेखराः ॥ ४१ ॥ कपर्दिनश्चर्मपरीतवाससो भुजंगभोगैः कृत हारभूषणाः ॥ श्रियान्विता रुद्रसमानवीर्या यथातथं भो वदतात्मनोचितम् ॥ ४२ ॥ पुष्कसेन तदा पृष्टा ऊचुः सर्वे च पार्षदाः ॥ रुद्रस्य देवदे वस्य संनम्राः कमलेक्षणाः ॥ ४३ ॥ ॥ गणा ऊचुः ॥ ॥ प्रेषिताः स्मो वयं चंड शिवेन परमेष्ठिना ॥ आगच्छ त्वरितो भूत्वा सस्त्रीको यां नमारुह ॥ ४४ ॥ लिंगार्चनं कृतं यच्च त्वया रात्रौ शिवस्य च ॥ तेन कर्मविपाकेन प्राप्तोऽसि शिवसन्निधिम् ॥ ४५ ॥ तथोक्तो वीरभद्रेण उवाच प्रहसन्निव ॥ पुष्कसोऽपि स्वया बुद्ध्या प्रस्तावसदृशं वचः ॥ ४६ ॥ ॥ पुष्कस उवाच ॥ ॥ किं मया कृतमद्यैव पापिना हिंसकेन च ॥ मृगयारसिकेनैव पुष्कसेन दुरात्मना ॥ ४७ ॥ पापाचारो ह्यहं नित्यं कथं स्वर्गं व्रजाम्यहम् ॥ कथं लिंगार्चनमिदं कृतमस्ति तदुच्यताम् ॥ ४८ ॥ परं कौतुकमापन्नः पृच्छामि त्वां यथातथम् ॥ कथयस्व महाभाग सर्वं चैव यथाविधि ॥ ४९ ॥ इत्येवं पृच्छतस्तस्य पुष्कसस्य यथाविधि ॥ कथयामास तत्सर्वं शिवधर्मं मुदान्वितः ॥ ५० ॥ ॥ वीरभद्र उवाच ॥ ॥ देवदेवो महादेवो देवानां पतिरीश्वरः ॥ परितुष्टोऽद्य हे चंड स महेश उमापतिः ॥ ५१ ॥ प्रासंगिकतया माघे कृतं लिंगार्चनं त्वया ॥ शिवतुष्टिकरं चाद्य पूतोऽसि त्वं न संशयः ॥ शिवरात्र्यां प्रसंगेन कृतमर्चन

मेव च ॥ ५२ ॥ कोलं निरीक्षमाणेन बिल्वपत्राणि चैव हि ॥ च्छेदितानि त्वया चंड पतितानि तदैव हि ॥ लिंगस्य मस्तके तानि तेन त्वं सुकृती प्रभो ॥ ५३ ॥ ततश्च जागरो जातो महान्वृक्षोपरि ध्रुवम् ॥ तेनैव जागरेणैव तुतोष जगदीश्वरः ॥ ५४ ॥ छलेनैव महाभाग कोलसंदर्शनेन हि ॥ शिवरात्रिदिने चात्र स्वप्रस्ते न च योषितः ॥ ५५ ॥ तेनोपवासेन च जागरेण तुष्टो ह्यसौ देववरो महात्मा ॥ तव प्रसादाय महानुभावो ददाति सर्वान्वरदो महांश्च ॥ ५६ ॥ एवमुक्तस्तदा तेन वीरभद्रेण धीमता ॥ पुष्कसोऽपि विमानाग्र्यमारुरोह च पश्यताम् ॥ ५७ ॥ गणानां देवतानां च सर्वेषां प्राणिनामपि ॥ तदा दुंदुभयो नेदुर्भेर्यस्तूर्याण्यनेकशः ॥ ५८ ॥ वीणावेणुमृदंगानि तस्य चाग्रे गतानि च ॥ जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ५९ ॥ विद्याधरगणाः सर्वे तुष्टुवुः सिद्धचारणाः ॥ चामरैर्वीज्यमानो हि च्छत्रैश्च विविधैरपि ॥ महोत्सवेन महता आनीतो गंधमादनम् ॥ ६० ॥ शिवसान्निध्यमगमच्चंडोसौ तेन कर्मणा ॥ शिवरात्र्युपवासेन परं स्थानं समागमत् ॥ ६१ ॥ पुष्कसोऽपि तथा प्राप्तः प्रसंगेन सदाशिवम् ॥ किं पुनः श्रद्धया युक्ताः शिवाय परमात्मने ॥ ६२ ॥ पुष्पादिकं फलं गंधं तांबूलं भक्ष्यमृद्धिमत् ॥ ये प्रयच्छंति लोकेऽस्मिन्रुद्रास्ते नात्र संशयः ॥६३॥ चंडेन वै पुष्कसेन सफलं तस्य चाभवत् ॥ प्रसंगेनापि तेनैव कृतं तच्चाल्पबुद्धिना ॥ ६४ ॥ ॥ ऋषय ऊचुः ॥ ॥ किं फलं तस्य चोद्देशः केन चैव पुरा कृतम् ॥ कस्माद्व्रतमिदं जातं कृतं केन पुरा विभो ॥ ६५ ॥ ॥ लोमश उवाच ॥ ॥ यदा सृष्टं जगत्सर्वं ब्रह्मणा परमेष्ठिना ॥ कालचक्रं तदा जातं पुरा राशिसमन्वितम् ॥ ६६ ॥ द्वादश राशयस्तत्र नक्षत्राणि तथैव च ॥ सप्तविंशतिसंख्यानि मुख्यानि कार्यसिद्धये ॥ ६७ ॥ एभिः सर्वं प्रचंडं च राशिभिरुडुभिस्तथा ॥ कालचक्रान्वितः कालः क्रीडयन्सृजते जगत् ॥ ६८ ॥ आब्रह्मस्तंबपर्यंतं सृजत्यवति हंति च ॥ निबद्धमस्ति तेनैव कालेनैकेन भो द्विजाः ॥ ६९ ॥ कालो हि बलवाँल्लोके एक एव न चापरः ॥ तस्मात्कालात्मकं सर्वमिदं नास्त्यत्र संशयः ॥७०॥ आदौ कालः कालनाच्च लोकनायकनायकः ॥ ततो लोका हि संजाताः सृष्टिश्च तदनंतरम् ॥ ७१ ॥ सृष्टेर्लवो हि संजातो लवाच्च क्षणमेव च ॥ क्षणाच्च निमिषं जातं प्राणिनां हि निरंतरम् ॥ ७२ ॥ निमिषाणां च षष्ट्या वै पल इत्यभिधीयते ॥ पंचदश्या अहोरात्रैः पक्ष इत्यभिधीयते ॥७३॥ पक्षाभ्यां मास एव स्यान्मासा द्वादश वत्सरः ॥ तं कालं ज्ञातुकामेन कार्यं ज्ञानं विचक्षणैः ॥ ७४ ॥ प्रतिपद्दिनमारभ्य पौर्णमास्यंतमेव च ॥ पक्षः पूर्णो हि यस्माच्च पूर्णिमेत्यभिधीयते ॥ ७५ ॥ पूर्णचंद्रमसी या तु सा पूर्णा देवताप्रिया ॥ नष्टस्तु चंद्रो यस्यां वा अमा सा

१ कोलसंदर्शनेन—कोलः कदाऽऽगमिष्यतीति कालप्रतीक्षणेन—इत्यर्थः । कालसंदर्शनेन इ० च पा० । २ महान्—उत्सवान्—सर्वान्—उत्सवान्—इत्यर्थः । ३ वै—अमा—इति पदच्छेदः ।

कथिता बुधैः ॥ ७६ ॥ अग्निष्वात्तादिपितॄणां प्रियातीव बभूव ह ॥ त्रिंशद्दिनानि ह्येतानि पुण्यकालयुतानि च ॥ तेषां मध्ये विशेषो यस्तं शृणुध्वं द्विजोत्तमाः ॥ ७७ ॥ योगानां वा व्यतीपात ऋक्षाणां श्रवणस्तथा ॥ अमावास्या तिथीनां च पूर्णिमा वै तथैव च ॥ ७८ ॥ संक्रांतयस्तथा ज्ञेयाः पवित्रा दानकर्मणि ॥ तथाष्टमी प्रिया शंभोर्गणेशस्य चतुर्थिका ॥ ७९ ॥ पञ्चमी नागराजस्य कुमारस्य च षष्ठिका ॥ भानोश्च सप्तमी ज्ञेया नवमी चण्डिकाप्रिया ॥ ८० ॥ ब्रह्मणो दशमी ज्ञेया रुद्रस्यैकादशी तथा ॥ विष्णुप्रिया द्वादशी च अंतकस्य त्रयोदशी ॥ ८१ ॥ चतुर्दशी तथा शंभोः प्रिया नास्त्यत्र संशयः ॥ निशीथसंयुता या तु कृष्णपक्षे चतुर्दशी ॥ उपोष्या सा तिथिः श्रेष्ठा शिवसायुज्यकारिणी ॥ ८२ ॥ शिवरात्रितिथिः ख्याता सर्वपापप्रणाशिनी ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ ८३ ॥ ब्राह्मणी विधवा काचित्पुरा ह्यासीच्च चंचला ॥ श्वपचाभिरता सा च कामुकी कामहेतुतः ॥ ८४ ॥ तस्यां तस्य सुतो जातः श्वपचस्य दुरात्मनः ॥ दुःसहो दुष्टनामात्मा सर्वधर्मबहिष्कृतः ॥ ॥ ८५ ॥ महापापप्रयोगाच्च पापमारभते सदा ॥ कितवश्च सुरापायी स्तेयी च गुरुतल्पगः ॥ ८६ ॥ मृगयुश्च दुरात्मासौ कर्मचण्डाल एव सः ॥ अधर्मिष्ठो ह्यसद्वृत्तः कदाचिच्च शिवालयम् ॥ शिवरात्र्यां च संप्राप्तो ह्युषितः शिवसन्निधौ ॥ ८७ ॥ श्रवणं शैवशास्त्रस्य यदृच्छाजातमंतिके ॥ शिवस्य लिंगरूपस्य स्वयंभुवो यदा तदा ॥ ८८ ॥ स एकत्रोषितो दुष्टः शिवरात्र्यां तु जागरात् ॥ तेन कर्मविपाकेन पुण्यां योनिमवाप्तवान् ॥ ॥ ८९ ॥ भुक्त्वा पुण्यतमाँल्लोकानुषित्वा शाश्वतीः समाः ॥ चित्रांगदस्य पुत्रोऽभूद्भूपालेश्वरलक्षणः ॥ ९० ॥ नाम्ना विचित्रवीर्योऽसौ सुभगः सुंदरीप्रियः ॥ राज्यं महत्तरं प्राप्य निःस्तंभो हि महानभूत् ॥ ९१ ॥ शिवे भक्तिं प्रकुर्वाणः शिवकर्मपरोऽभवत् ॥ शैवशास्त्रं पुरस्कृत्य शिवपूजनतत्परः ॥ रात्रौ जागरणं यत्नात्करोति शिवसन्निधौ ॥ ९२ ॥ शिवस्य गाथा गायंस्तु आनंदाश्रुकणान्मुहुः ॥ प्रमुंचंश्चैव नेत्राभ्यां रोमांचपुलकावृतः ॥ ९३ ॥ आयुष्यं च गतं तस्य शिवध्यानपरस्य च ॥ शिवो हि सुलभो लोके पशूनां ज्ञानिनामपि ॥ ९४ ॥ संसेवितुं सुखप्राप्त्यै ह्येक एव सदाशिवः ॥ शिवरात्र्युपवासेन प्राप्तो ज्ञानमनुत्तमम् ॥ ९५ ॥ ज्ञानात्सर्वमनुप्राप्तं भूतसाम्यं निरंतरम् ॥ सर्वभूतात्मकं ज्ञात्वा केवलं च सदा शिवम् ॥ विना शिवेन यत्किंचिन्नास्ति[1] वस्त्वत्र न क्वचित् ॥ ९६ ॥ एवं पूर्णं निष्प्रपंचं ज्ञानं प्राप्नोति दुर्लभम् ॥ प्राप्तज्ञानस्तदा राजा जातो हि शिववल्लभः ॥ ९७ ॥ मुक्तिं सायुज्यतां प्राप्तः शिवरात्रेरुपोषणात् ॥ तेन लब्धं शिवाज्जन्म पुरा यत्कथितं मया ॥ ९८ ॥ दाक्षायणीवियो

१ अत्र नास्ति—च परं क्वचिदन्यत्रापि नास्तीत्यर्थः ।

गाच्च जटाजूटेन विस्तरात् ॥ य उत्पन्नो मस्तकाच्च शिवस्य परमात्मनः ॥ वीरभद्रेति विख्यातो दक्षयज्ञविनाशनः ॥ ९९ ॥ शिवरात्रिव्रतेनैव तारिता बहवः पुरा ॥ प्राप्ताः सिद्धिं पुरा विप्रा भरताद्याश्च देहिनः ॥ १०० ॥ मांधाता धुन्धुमारिश्च हरिश्चन्द्रादयो नृपाः ॥ प्राप्ताः सिद्धिमनेनैव व्रतेन परमेण हि ॥ १०१ ॥ ततो गिरीशो गिरिजासमेतः क्रीडान्वितोऽसौ गिरिराजमस्तके ॥ द्यूतं तथैवाक्षयुतं परेशो युक्तो भवान्या स भृशं चकार ॥ १०२ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवरात्रिव्रतमाहात्म्यवर्णनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ राज्यं चकार कैलासे देवदेवो जगत्पतिः ॥ गणैः समेतो बहुभिर्वीरभद्रान्वितो महान् ॥ १ ॥ ऋषिभिः सहितो रुद्रो देवैरिन्द्रादिभिः सह ॥ ब्रह्मा यस्य स्तुतिपरो विष्णुः प्रेष्यवदास्थितः ॥ २ ॥ इंद्रो देवगणैः सार्द्धं सेवाधर्मपरोऽभवत् ॥ यस्य च्छत्रधरश्चंद्रो वायुश्चामरधृक्तथा ॥ ३ ॥ सूपान्नकर्ता सततं जातवेदा निरन्तरम् ॥ गंधर्वा गायका यस्य स्तावकाश्च पिनाकिनः ॥ ४ ॥ विद्याधराश्च बहवस्तथा चाप्सरसां गणाः ॥ ननृतुश्चाग्रगा यस्य सोऽसौ कैलासपर्वते ॥ ५ ॥ पुत्रैर्गणेशस्कंदाद्यैस्तथा गिरिजया सह ॥ राज्यं प्रतापिभिश्चक्रेऽशंकश्चंक्रमणेन च ॥६॥ येनांधको महादैत्यः स देवानामरिर्महान् ॥ दुष्टो विद्धस्त्रिशूलेन गगने स्थापितश्चिरम् ॥ ७ ॥ हत्वा गजासुरं येन उत्कृत्य चर्म वै कृतम् ॥ चिरं प्रावरणं दिव्यं तथा त्रिपुरदीपनम् ॥ विष्णुना पाल्यभूतेन[1] रेजे सर्वांगसुन्दरः ॥ ८ ॥ तं द्रष्टुकामो भगवान्नारदो दिव्यदर्शनः ॥ ययौ च पर्वतश्रेष्ठं कैलासं चन्द्रपांडुरम् ॥ ९ ॥ सुधया परया चापि सेवितं परमाद्भुतम् ॥ कर्पूरगौरं च तदा दृष्ट्वा तं सुमहाबलम् ॥ नारदो विस्मयाविष्टः प्रविष्टो गन्धमादनम् ॥ १० ॥ अनेकाश्चर्यसंयुक्तं तपनैश्च सुशोभितम् ॥ गायद्विद्याधरीभिश्च पूरितं च महाप्रभम् ॥ ११ ॥ कल्पद्रुमाश्च बहवो लताभिः परिवेष्टिताः ॥ घनच्छायासु तास्वेव विशिष्टाः कामधेनवः ॥ १२ ॥ पारिजातवनामोदलंपटा बहवोऽलयः ॥ कलहंसाश्च बहवः क्रीडमानाः सरस्सु च ॥ १३ ॥ शिखंडिनो महच्चक्रुस्तत्र केकारवं मुदा ॥ पंचमालापिनः सर्वे विहंगाः संमदान्विताः ॥ १४ ॥ करिणः करिणीभिश्च मोदमानाः सुवर्चसः ॥ सिंहास्तथा गर्जमानाः शार्दूलैः सह संगताः ॥ १५ ॥ वृषभा नंदिमुख्याश्च रेभमाना निरन्तरम् ॥ देवद्रुमाश्च बहवस्तथा चंदनवाटिकाः ॥ १६ ॥ नागपुंनागबकुलाश्चंपका नागकेसराः ॥ तथा च वनजंब्वश्च तथा कनककेतकाः ॥ १७ ॥

१ पाल्यभूतेनपाल्यानि भूतानि येन सः—पाल्यभूतः तेन—सकलभूतपालकेन—इत्यर्थः ।

कह्लाराः करवीराश्च कुमुदानि ह्यनेकशः ॥ मंदाराश्च बदर्यश्च क्रमुकाः पाटलास्तथा ॥ १८ ॥ तथान्ये बहवो वृक्षाः शम्भोस्तोपकरा ह्यमी ॥ ऐकपद्येन दृष्टास्ते नानाद्रुमलतान्विताः ॥ आरामा बहवस्तत्र द्विगुणाश्च बभूविरे ॥ १९ ॥ गगनान्निस्सृतः सद्यो गंगौघः पर माद्भुतः ॥ पतितो मस्तके तस्य पर्वतस्य सुशोभिते ॥ २० ॥ कूपो हि पयसां ये न पवित्रं वर्तते जगत् ॥ सोपि द्विधा तदा दृष्टो नारदेन महा त्मना ॥ २१ ॥ सर्वं तदा द्विधाभूतं दृष्टं तेन महात्मना ॥ नारदेन तदा विप्राः परमेण निरीक्षितः ॥ २२ ॥ एवं विलोकमानोऽसौ नारदो भगवानृषिः ॥ त्वरितेन तथा यातः शिवालोकनतत्परः ॥ २३ ॥ यावद्द्वारि स्थितोपश्यन्महदाश्चर्यमेव च ॥ द्वारपालौ तदा दृष्टौ कृतकौ विश्व कर्मणा ॥ २४ ॥ नारदो मोहितो ह्यासीत्पप्रच्छ च स तौ तदा ॥ अहं प्रवेष्टुमिच्छामि शिवदर्शनलालसः ॥ २५ ॥ तस्मादनुज्ञा दातव्या दर्श नार्थं शिवस्य च ॥ अशृण्वन्तौ तदा दृष्ट्वा नारदो विस्मितोऽभवत् ॥ २६ ॥ ज्ञानदृष्ट्या विलोक्याथ तूष्णींभूतोऽभवत्तदा ॥ कृत्रिमौ हि च तौ ज्ञात्वा प्रविष्टो हि महामनाः ॥ २७ ॥ तथान्ये तत्सरूपाश्च दृष्टास्तेन महात्मना ॥ ऋषिः प्रणमितस्तैश्च नारदो भगवान्मुदा ॥ २८ ॥ एवमादी न्यनेकानि आश्चर्याणि ददर्श सः ॥ ददर्शाथ च सुव्यक्तं त्र्यंबकं गिरिजान्वितम् ॥ २९ ॥ अर्धासनगता साध्वी शंकरस्य महात्मनः ॥ तनया गिरिराजस्य यया व्याप्तं जगत्त्रयम् ॥ ३० ॥ गौरी सितेक्षणा बाला तन्वंगी चारुलोचना ॥ यया रूपी कृतः शम्भुरुपादेयः कृतो महान् ॥३१॥ निर्विकारो विकारैश्च बहुभिर्विकलीकृतः ॥ अर्द्धांगलग्ना सा देवी दृष्टा तेन शिवस्य च ॥ ३२ ॥ नारदेन तथा शंभुर्दृष्टस्त्रिभुवनेश्वरः ॥ शुद्धचामी करप्रख्यः सेव्यमानः सुरासुरैः ॥ ३३ ॥ शंखेन भोगिवर्येण सेवितं चांघ्रिपंकजम् ॥ धृतराष्ट्रेण च तथा तक्षकेण विशेषतः ॥ तथा पद्मेन महता शेषेणापि विशेषतः ॥ ३४ ॥ अन्यैश्च नागवर्यैश्च सेवितो हि निरंतरम् ॥ वासुकिः कंठलग्नो हि हारभूतो महाप्रभः ॥ ३५ ॥ कंबलाश्वतरौ नित्यं कर्णभूषणभूषितौ ॥ जटामूलगताश्चान्ये महाफणिवरा ह्यमी ॥ ३६ ॥ अनेकजातिसंवीता नानावर्णाश्च पन्निनः ॥ तक्षकः कुलिकः शंखो धृतराष्ट्रो महाप्रभः ॥ ३७ ॥ पद्मो दंभः सुदंभश्च करालो भीषणस्तथा ॥ एते चान्ये च बहवो नागाश्चाशीविषा ह्यमी ॥ ३८ ॥ अंगभूता हरस्या सन्पूज्यस्यास्य जगत्त्रये ॥ फणैकया शोभमानाः केचिद्धि पन्नगोत्तमाः ॥ ३९ ॥ फणानां द्वितयं केषां त्रितयं च महाप्रभम् ॥ चतुष्कं पंचकं

१ केषाम्—केषांचित्—इत्यर्थः । इदं 'केषाम्' इति पदं 'तथा शङ्खमितानि च' इत्येतत्पर्यन्तं यथायोगमनुषञ्जनीयम् । अत्र—केषांचिन्नागानां फणानां द्वितयं त्रितयमित्येवं यथाकथंचित्संख्यासङ्गतिरवगन्तव्या नात्र व्याकर णानुसारिदृश्यते—आर्षप्रयोगा अवगन्तव्याः ।

षट्कं सप्तकं चाष्टकं तथा ॥ ४० ॥ नवकं दशकं चैव तथैकादशकं त्वथ ॥ द्वादशकं चाष्टादशकमेकोनविंशकं तथा ॥ ४१ ॥ चत्वारिंशत्फणाः केऽपि पंचाशत्कं च षष्टिकम् ॥ सप्ततिश्चाप्यशीतिश्च नवतिश्च तथैव च ॥ ४२ ॥ तथा शतसहस्राणि ह्ययुतप्रयुतानि च ॥ अर्बुदानि च रत्नानि तथा शङ्खमितानि च ॥ ४३ ॥ अनंताश्च फणा येषां ते सर्पाः शिवभूषणाः ॥ दृष्टास्तदानीं ते सर्वे नारदेन महात्मना ॥ ४४ ॥ विद्यावंतोऽपि ते सर्वे भोगिनोऽपि सुशोभिताः ॥ हारभूषणभूतास्ते मणिमंतोऽमितप्रभाः ॥ ४५ ॥ अर्द्धचंद्रांकितो यस्य कपर्दस्त्वतिसुंदरः ॥ चक्षुषा च तृतीयेन भालस्थेन विराजितः ॥ ४६ ॥ पंचवक्त्रो महादेवो बाहुभिर्दशभिर्वृतः ॥ तथा मरकतश्यामकंधरोऽतीवसुंदरम् ॥ ४७ ॥ उरो यस्य विशालं च तथोरुजघनं परम् ॥ चरणद्वयं च रुद्रस्य शोभितं परमं महत् ॥ ४८ ॥ तद्दृष्टं चरणारविंदमतुलं तेजोमयं सुंदरं संध्यारागसुमंगलं च परमं तापापनुत्तिकरम् ॥ तेजोराशिकरं परात्परमिदं लावण्यलीलास्पदं सर्वेषां सुखवृद्धिकारणपरं शंभोः पदं पावनम् ॥ ४९ ॥ तथैव दृष्ट्वा परमं पराणां परा सती रूपवती च सुंदरी ॥ सौभाग्यलावण्यमहाविभूत्या विराजमाना ह्यतिसुंदरी शुभा ॥ ५० ॥ दृष्ट्वा तौ दंपती शुद्धौ राजमानौ जगत्त्रये ॥ अभिन्नौ भेदमापन्नौ निर्गुणौ गुणिनौ च तौ ॥ ५१ ॥ साकारौ च निराकारौ निरातंकौ सुखप्रदौ ॥ ववंदे च मुदा तौ स नारदो भगवत्प्रियः ॥ उत्थायोत्थाय च तदा तुष्टाव जगदीश्वरौ ॥ ५२ ॥ ॥ नारद उवाच ॥ ॥ नतोस्म्यहं देववरौ युवाभ्यां परात्पराभ्यां कलया तथापि ॥ दृष्टौ मया दंपती राजमानौ यौ बीजभूतौ सचराचरस्य ॥ ५३ ॥ पितरौ सर्वलोकस्य ज्ञातौ चाद्यैव तत्त्वतः ॥ मया नास्त्यत्र संदेहो भवतोः कृपया तथा ॥ ५४ ॥ एवं स्तुतौ तदा तेन नारदेन महात्मना ॥ तुतोष भगवाञ्छंभुः पार्वत्या सहितस्तदा ॥ ५५ ॥ ॥ महादेव उवाच ॥ ॥ सुखेन स्थीयते ब्रह्मन्किं कार्यं करवाणि ते ॥ तच्छ्रुत्वा वचनं शंभोर्नारदो वाक्यमब्रवीत् ॥ ५६ ॥ दर्शनं जातमद्यैव तेन तुष्टोऽस्म्यहं विभो ॥ दर्शना त्सर्वमेवाद्य शंभो मम न संशयः ॥ ५७ ॥ क्रीडनार्थमिहायातः कैलासं पर्वतोत्तमम् ॥ हृदिस्थो हि सदा नृणामास्थितो भगवन्प्रभो ॥ ५८ ॥ तथापि दर्शनं भाव्यं सततं प्राणिनामिह ॥ ५९ ॥ ॥ गिरिजोवाच ॥ ॥ का क्रीडा हि त्वया भाव्या वद शीघ्रं ममाग्रतः ॥ तस्यास्तद्वचनं श्रुत्वा उवाच प्रहसन्निव ॥ ६० ॥ द्यूतक्रीडा महादेवि दृश्यते विविधात्र च ॥ भवेद्वाभ्यां च द्यूते हि रमणाच्च महत्सुखम् ॥ ६१ ॥ इत्येवमुक्त्वो परतं सती भृशमुवाच वाक्यं कुपिता ऋषिं प्रति ॥ कथं विजानासि परं प्रसिद्धं द्यूतं च दुष्टोदरकं मनस्विनाम् ॥ ६२ ॥ त्वं ब्रह्मपुत्रोऽसि मुनिर्मनीषिणां शास्ता हि वाक्यं विविधैः प्रसिद्धैः ॥ चरिष्यमाणो भुवनत्रये सदा न हि त्वदन्यो ह्यपरो मनस्वी ॥ ६३ ॥ एवमुक्तस्तदा देव्या

नारदो देवदर्शनः ॥ उवाच वाक्यं प्रहसन्गिरिजां शिवसन्निधौ ॥ ६४ ॥ ॥ नारद उवाच ॥ ॥ द्यूतं न जानामि न चाश्रयामि ह्यहं तपस्वी शिवकिंकरश्च ॥ कथं च मां पृच्छसि राजकन्यके योगीश्वराणां परमं पवित्रे ॥ ६५ ॥ निशम्य वाक्यं गिरिजा सती तदा ह्युवाच वाक्यं च विहस्य तं प्रति ॥ जानासि सर्वं च बटोऽद्य पश्य मे द्यूतं महेशेन करोमि तेऽग्रतः ॥ ६६ ॥ इत्येवमुक्त्वा गिरिराजकन्यका जग्राह चाक्षान्भुवनैकसुंदरी ॥ क्रीडां चकाराथ महर्षिसाक्ष्यके तत्रास्थिता सा हि भवेन संयुता ॥ ६७ ॥ तौ दंपती क्रीडया सज्जमानौ दृष्टौ तदा ऋषिणा नारदेन ॥ सविस्मयोत्फुल्लमना मनस्वी विलोकमानोऽतितरां तुतोष ॥ ६८ ॥ सखीजनेन संवीता तदा द्यूतपरा सती ॥ शिवेन सह संगत्य च्छलाद्द्यूतमकारयत् ॥ ॥ ६९ ॥ स पणं च तदा चक्रे छलेन महता वृतः ॥ जिता भवानी च तदा शिवेन प्रहसन्निव ॥ ७० ॥ नारदोऽस्याः शिवेनाथ उपहासकरोऽभवत् ॥ निशम्य हारितं द्यूतमुपहासं निशम्य च ॥ ७१ ॥ नारदस्य दुरुक्तैश्च कुपिता पार्वती भृशम् ॥ उवाच त्वरिता चैव दत्त्वा चैवार्द्धचंद्रकम् ॥ ७२ ॥ तथा शिरोमणी चैव तरले च मनोहरे ॥ मुखं सुशोभनं चैव तथा कुपितसुंदरम् ॥ दृष्टं हरेण च पुनः पुनर्द्यूतमकारयत् ॥ ७३ ॥ तथा गिरिजया प्रोक्तः शंकरो लोकशंकरः ॥ हारितं च मया दत्तः पण एव च नान्यथा ॥ ७४ ॥ क्रियते च त्वया शंभो कः पणो हि तदुच्यताम् ॥ ततः प्रहस्य चोवाच पार्वतीं च त्रिलोचनः ॥ ७५ ॥ मया पणोऽयं क्रियते भवानि त्वदर्थमेतच्च विभूषणं महत् ॥ सा चंद्रलेखा हि महान्हि हारस्तथैव कर्णोत्पलभूषणद्वयम् ॥ ७६ ॥ इदमेव त्वया तन्वि मां जित्वा गृह्यतां सुखम् ॥ ततः प्रवर्तितं द्यूतं शंकरेण सहैव च ॥ ७७ ॥ एवं विक्रीडमानौ तावक्षविद्याविशारदौ ॥ तदा जितो भवान्याथ शंकरो बहुभूषणः ॥ ७८ ॥ प्रहस्य गौरी प्रोवाच शंकरं त्वतिसुंदरी ॥ हारितं च पणं देहि मम चाद्यैव शंकर ॥ ७९ ॥ तदा महेशः प्रहसन्सत्यं वाक्यमुवाच ह ॥ न जितोऽहं त्वया तन्वि तत्त्वतो हि विमृश्यताम् ॥ ८० ॥ अजेयोऽहं प्राणिनां सर्वथैव तस्मान्न वाच्यं तु वचो हि साध्वि ॥ द्यूतं कुरुष्वाद्य यथेष्टमेव जेष्यामि चाहं च पुनः प्रपश्य ॥ ८१ ॥ तदाम्बिकाह स्वपतिं महेशं मया जितोऽस्यद्य न विस्मयोऽत्र ॥ एवमुक्त्वा तदा शंभुं करे गृह्य वरानना ॥ जितोऽसि त्वं न संदेहस्त्वं न जानासि शंकर ॥ ८२ ॥ एवं प्रहस्य रुचिरं गिरिजा तु शंभुं सा प्रेक्ष्य नर्मवचसा स तयाभिभूतः ॥ देहीति मे सकलमंगलमंगलेश यद्धारितं स्मरारिपो वचसानुमोदितम् ॥ ८३ ॥ ॥ ॥ शिव उवाच ॥ ॥ अजेयोऽहं विशालाक्षि तव नास्त्यत्र संशयः ॥ अहंकारेण यत्प्रोक्तं तत्त्वतस्तद्विमृश्यताम् ॥ ८४ ॥ तस्य तद्वचनं श्रुत्वा प्रोवाच च विहस्य सा ॥ अजेयो हि महादेवः सर्वेषामपि वै प्रभो ॥ ८५ ॥ मयैकया जितोऽसि त्वं द्यूतेन विमलेन हि ॥ न जानासि च

किंचिच्च कार्याकार्यं विवक्षितम् ॥ ८६ ॥ एवं विवदमानौ तौ दंपती परमेश्वरौ ॥ नारदः प्रहसन्वाक्यमुवाच ऋषिसत्तमः ॥ ८७ ॥ ॥ नारद उवाच ॥ ॥ आकर्णयाऽऽकर्णविशालनेत्रे वाक्यं तदेकं जगदेकमंगलम् ॥ असौ महाभाग्यवतां वरेण्यस्त्वया जितः किं च मृषा ब्रवीषि ॥ ८८ ॥ अजितो हि महादेवो देवानां परमो गुरुः ॥ अरूपोऽयं सुरूपोयं रूपातीतोऽयमुच्यते ॥ ८९ ॥ एक एव परं ज्योतिस्तेषामपि च यन्महः ॥ त्रैलोक्यनाथो विश्वात्मा शंकरो लोकशंकरः ॥ ९० ॥ कथं त्वया जितो देवि ह्यजेयो भुवनत्रये ॥ शिवमेनं न जानासि स्त्रीभावाच्च वरानने ॥ ॥ ९१ ॥ नारदेनैवमुक्ता सा कुपिता पार्वती भृशम् ॥ बभाषे मत्सरग्रस्ता साक्षेपं वचनं सती ॥ ९२ ॥ ॥ पार्वत्युवाच ॥ ॥ चापल्याच्च न वक्तव्यं ब्रह्मपुत्र नमोस्तु ते ॥ तव भीतास्मि भद्रं ते देवर्षे मौनमावह ॥ ९३ ॥ कथं शिवो हि देवर्ष उक्तोऽतो हि त्वया बहु ॥ मत्प्रसादाच्छिवो जात ईश्वरो यो हि पठ्यते ॥ ९४ ॥ मया लब्धप्रतिष्ठोऽयं जातो नास्त्यत्र संशयः ॥ ९५ ॥ एवं बहुविधं श्रुत्वा नारदो मौनमाश्रयत् ॥ उपस्थितं च तद्दृष्ट्वा भृंगी वाक्यमथाब्रवीत् ॥ ९६ ॥ ॥ भृंग्युवाच ॥ ॥ त्वया बहु न वक्तव्यं पुनरेव च भामिनि ॥ अजेयो निर्विकारो हि स्वामी मम सुमध्यमे ॥ ९७ ॥ स्त्रीभावयुक्तासि वरानने त्वं देवं न जानासि परं पराणाम् ॥ कामं पुरस्कृत्य पुरा भवानि समागतास्येव महेशमुग्रम् ॥ ९८ ॥ यथा कृतं तेन पिनाकिना पुरा एतत्स्मृतं किं सुभगे वदस्व नः ॥ कृतो ह्यनंगो हि तदा ह्यनेन दग्धं वनं तस्य गिरेः पितुस्ते ॥ ९९ ॥ पश्चात्त्वयाराधित एव एष शिवः पराणां परमः परात्मा ॥ १०० ॥ भृंगिणेत्येवमुक्ता सा ह्युवाच कुपिता भृशम् ॥ शृण्वतो हि महेशस्य वाक्यं रुष्टा च भृंगिणम् ॥ ॥ १०१ ॥ ॥ पार्वत्युवाच ॥ ॥ हे भृंगिन्पक्षपातित्वाद्यदुक्तं वचनं मम ॥ शिवप्रियोऽसि रे मन्द भेदबुद्धिरतो ह्यसि ॥ १०२ ॥ अहं शिवात्मिका मूढ शिवो नित्यं मयि स्थितः ॥ कथं शिवाभ्यां भिन्नत्वं त्वयोक्तं वाग्बलेन हि ॥ १०३ ॥ श्रुतं च वाक्यं शुभदं पार्वत्या भृंगिणा तदा ॥ उवाच पार्वतीं भृंगी रुषितः शिवसन्निधौ ॥ १०४ ॥ पितुर्यज्ञे च दक्षस्य शिवनिंदा त्वया श्रुता ॥ अप्रियश्रवणात्सद्यस्त्वया त्यक्तं कलेवरम् ॥ १०५ ॥ तत्क्षणादेव तन्वंगि ह्यधुना किं कृतं त्वया ॥ संभ्रमात्किं न जानासि शिवनिंदकमेव च ॥ १०६ ॥ कथं वा पर्वतश्रेष्ठाज्जातासि वरवर्णिनि ॥ कथं वा तपसोग्रेण संतप्तासि सुमध्यमे ॥ १०७ ॥ सप्रेमा च शिवे भक्तिस्तव नास्तीह सांप्रतम् ॥ शिवप्रियासि तन्वंगि तस्मादेवं ब्रवीमि ते ॥ १०८ ॥ शिवात्परतरं नान्यत्त्रिषु लोकेषु विद्यते ॥ शिवे भक्तिस्त्वया कार्या सप्रेमा वरवर्णिनि ॥ १०९ ॥ भक्तासि त्वं महादेवि महाभाग्यवतां वरे ॥ संसेव्यतां प्रयत्नेन तपसोपार्जितस्त्वया ॥ ११० ॥ शिवो वरेण्यः सर्वेशो नान्यथा कर्तुमर्हसि ॥ भृंगिणो वचनं श्रुत्वा गिरिजा तमुवाच

ह ॥ १११ ॥ ॥ गिरिजोवाच ॥ ॥ रे भृंगिन्मौनमालंब्य स्थिरो भवाथ वा व्रज ॥ वाच्यावाच्यं न जानासि किं ब्रवीपि पिशाचवत् ॥११२॥
तपसा केन चानीतः कया चापि शिवो ह्ययम् ॥ काहं कोऽसौ त्वया ज्ञातो भेदबुद्ध्या ब्रवीपि मे ॥ ११३ ॥ कोऽसि त्वं केन युक्तोऽसि कस्माच्च
बहु भापसे ॥ शापं तव प्रदास्यामि शिवः किं कुरुतेऽधुना ॥ ११४ ॥ भृंगिणोक्ता तिरस्कृत्य तदा शापं ददौ सती ॥ निर्मांसो भव रे मन्द रे
भृंगिञ्छंकरप्रिय ॥ ११५ ॥ एवमुक्त्वा तदा देवी पार्वती शंकरप्रिया ॥ अथ कोपेन संयुक्ता पार्वती शंकरं तदा ॥ ११६ ॥ करे गृह्य च तन्वंगी
भुजंगं वासुकिं तथा ॥ उदतारयत्कंठात्सा तथान्यानि बहूनि च ॥ ११७ ॥ शंभोर्जग्राह कुपिता भूपणानि त्वरान्विता ॥ हृता चंद्रकला तस्य
गजाजिनमनुत्तमम् ॥ ११८ ॥ कंबलाश्वतरौ नागौ महेशकृतभूपणौ ॥ हृतौ तया महादेव्या छलोक्त्या च प्रहस्य वै ॥ ११९ ॥ कौपीनाच्छा
दनं तस्य च्छलोक्त्या च प्रहस्य वै ॥ तदा गणाश्च सख्यश्च त्रपया पीडिता भवन् ॥ १२० ॥ पराङ्मुखाश्च संजाता भृङ्गी चैव महातपाः ॥
तथा चण्डो हि मुण्डश्च महालोमा महोदरः ॥ १२१ ॥ एते चान्ये च बहवो गणास्ते दुःखिनोऽभवन् ॥ तांश्च दृष्ट्वा तथाभूतान्महेशो लज्जितोऽ
भवत् ॥ १२२ ॥ उवाच वाक्यं रुपितः पार्वतीं प्रति शंकरः ॥ १२३ ॥ ॥ रुद्र उवाच ॥ ॥ उपहासं प्रकुर्वंति सर्वे हि ऋपयो भृशम् ॥
तथा ब्रह्मा च विष्णुश्च तथा चेन्द्रादयो ह्यमी ॥ १२४ ॥ उपहासपराः सर्वे किं त्वयाद्य कृतं शुभे ॥ कुले जातासि तन्वंगि
कथमेवं करिष्यसि ॥ १२५ ॥ त्वया जितो ह्यहं सुभ्रु यदि जानासि तत्त्वतः ॥ तह्येवं कुरु मे देहि कौपीनाच्छादनं परम् ॥ देहि कौपी
नमात्रं मे नान्यथा कर्तुमर्हसि ॥ १२६ ॥ एवमुक्ता सती तेन शंभुना योगिना तदा ॥ प्रहस्य वाक्यं प्रोवाच पार्वती रुचिरानना ॥ १२७ ॥ किं
कौपीनेन ते कार्यं मुनिना भावितात्मना ॥ दिगम्बरेणैव तदा कृतं दारुवनं तथा ॥ १२८ ॥ भिक्षाटनमिषेणैव ऋपिपत्न्यो विमोहिताः ॥ गच्छ
तस्ते तदा शंभो पूजनं तैर्महत्कृतम् ॥ १२९ ॥ कौपीनं पतितं तत्र मुनिभिर्नान्यथोदितम् ॥ तस्मात्त्वया प्रहातव्यं द्यूते हारितमेव तत् ॥
॥ १३० ॥ तच्छ्रुत्वा कुपितो रुद्रः पार्वतीं परमेश्वरः ॥ निरीक्षमाणोऽतिरुपा तृतीयेनैव चक्षुपा ॥ १३१ ॥ कुपितं शंकरं दृष्ट्वा सर्वे देवगणास्तदा ॥
भयेन महताविष्टास्तथा गणकुमारकाः ॥ १३२ ॥ ऊचुः सर्वे शनैस्तत्र शंकितेन परस्परम् ॥ अद्यायं कुपितो रुद्रो गिरिजां प्रति संप्रति ॥१३३॥
यथा हि मदनो दग्धस्तथेयं नान्यथा वचः ॥ एवं मीमांसमानास्ते गणा देवर्पयस्तदा ॥ १३४ ॥ विलोकितास्तया देव्या सर्वे सौभाग्यमुद्रया ॥
उवाच प्रहसन्नेव सती सत्पुरुपं तदा ॥ १३५ ॥ किमालोकपरो भूत्वा चक्षुपा परमेण हि ॥ नाहं कालो न कामोऽहं नाहं दक्षस्य वै मखः ॥१३६॥

: १ भवन्–अभवन्–अडभाव आर्पः ।

त्रिपुरो नैव वै शंभो नांधको वृषभध्वज ॥ वीक्षितेनैव किं तेन तव चाद्य भविष्यति ॥ वृथैव त्वं विरूपाक्षो जातोऽसि मम चाग्रतः ॥ १३७ ॥ एवमादीन्यनेकानि ह्युवाच परमेश्वरी ॥ निशम्य देवो वाक्यानि गमनाय मनो दधे ॥ १३८ ॥ वनमेव वरं चाद्य विजनं परमार्थतः ॥ एकाकी यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥ १३९ ॥ स सुखी परमार्थज्ञः स विद्वान्स च पंडितः ॥ येन मुक्तौ कामरागौ स मुक्तः स सुखी भवेत् ॥ ॥ १४० ॥ एवं विमृश्य च तदा गिरिजां विहाय श्रीशंकरः परमकारुणिकस्तदानीम् ॥ यातः प्रियाविरहितो वनमद्भुतं च सिद्धाटवीं परमहंसयुतां तथैव ॥ १४१ ॥ निर्गतं शंकरं दृष्ट्वा सर्वे कैलासवासिनः ॥ निर्ययुश्च गणाः सर्वे वीरभद्रादयोऽनु तम् ॥ १४२ ॥ छत्रं भृंगी समादाय जगाम तस्य पृष्ठतः ॥ चामरे वीज्यमाने च गंगायमुनसन्निभे ॥ १४३ ॥ ताभ्यां युक्तस्तदा नंदी पृष्ठतोऽन्वगमत्सुधीः ॥ वृषभो ह्यग्रतो भूत्वा पुष्पकेण विराजितः ॥ १४४ ॥ शोभमानो महादेव एभिः सर्वैः सुशोभनैः ॥ अंतःपुरगता देवी पार्वती सा हि दुर्मनाः ॥ १४५ ॥ सखीभिर्बहुभिस्तत्र तथान्याभिः सुसंवृता ॥ गिरिजा चिंतयामास मनसा परमेश्वरम् ॥ १४६ ॥ ततो दूरं गतः शंभुर्विसृज्य च गणांस्तदा ॥ गणेशं च कुमारं च वीर भद्रं तथाऽपरान् ॥ १४७ ॥ भृंगिणं नंदिनं चंडं सोमनंदिनमेव च ॥ एतानन्यांश्च सर्वांश्च कैलासपुरवासिनः ॥ १४८ ॥ विसृज्य च महादेव एक एव महातपाः ॥ गतो दूरं वनस्यांते तथा सिद्धवटं शिवः ॥ १४९ ॥ काश्मीररत्नोपलसिद्धरत्नवैदूर्यचित्रं सुधया परिष्कृतम् ॥ दिव्यासनं तस्य च कल्पितं भुवा तत्रास्थितो योगपतिर्महेशः ॥ १५० ॥ पद्मासने चोपविष्टो महेशो योगवित्तमः ॥ केवलं चात्मनात्मानं दध्यौ मीलितलोचनः ॥ ॥ १५१ ॥ शुशुभे स महादेवः समाधौ चंद्रशेखरः ॥ योगपट्टः कृतस्तेन शेषस्य च महात्मनः ॥ वासुकिः सर्पराजश्च कटिबद्धः कृतो महान् ॥ ॥ १५२ ॥ आत्मानमात्मातमतया च संस्तुतो वेदांतवेद्यो न हि विश्वचेष्टितः ॥ एको ह्यनेको हि दुरंतपारस्तथा ह्यतर्क्यो निजबोधरूपः ॥ स्थित स्तदानीं परमं पराणां निरीक्षमाणो भुवनैकभर्ता ॥ १५३ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखंडे शिवशास्त्रे शिवपार्वतीद्यूतप्रसंगेन पार्वतीहारितसर्वस्वस्य शिवस्य कैलासं विहाय तपोवनगमनवर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ छ ॥ ॥ लोमश उवाच ॥ ॥ वनं गते महादेवे गिरिजा विरहातुरा ॥ सुखं न लेभे तन्वंगी हर्म्येष्वायतनेषु वा ॥ १ ॥ चिंतयंती शिवं तन्वी सर्वभावेन शोभना ॥ चिंतमानां शिवां ज्ञात्वा ह्युवाच विजया सखी ॥ २ ॥ ॥ विजयोवाच ॥ ॥ तपसा महता चैव शिवं प्राप्तासि शोभने ॥ मृषा द्यूतं कृतं तेन शंकरेण तपस्विना ॥ ३ ॥ द्यूते हि बहवो दोषा न श्रुताः किं त्वयाऽनघे ॥ क्षमा

पय शिवं तन्वि त्वरेणेव विचक्षणे ॥ ४ ॥ अस्माभिः सहिता देवि गच्छगच्छ वरानने ॥ ५ ॥ यावच्छंभुर्दूरतो नाभिगच्छेत्ताव
द्गत्वा शंकरं क्षामयस्व ॥ नो चेत्तन्वि क्षामयेथाः शिवं त्वं दुःखं पश्चात्ते भविष्यत्यवश्यम् ॥ ६ ॥ निशम्य वाक्यं विजयाप्रयुक्तं प्रह
स्यमाना समधीरचेताः ॥ उवाच वाक्यं विजयां सखीं च आश्चर्यभूतं परमार्थयुक्तम् ॥ ७ ॥ मया जितोऽसौ निरपत्रपश्च पुरा
वृतो वै परया विभूत्या ॥ किंचिच्च कृत्यं मम नास्ति सद्यो मया विनासौ च विरूप आस्थितः ॥ ८ ॥ रूपीकृतो मया देवो महेशो
नान्यथा वद ॥ मया तेन वियोगश्च संयोगो नैव जायते ॥ ९ ॥ साकारो हि निराकारो महेशो हि मया कृतः ॥ १० ॥ कृतं मया
विश्वमिदं समग्रं चराचरं देववरैः समेतम् ॥ क्रीडार्थमस्योद्भववृत्तिहेतुभिश्चिक्रीडितं मे विजये प्रपश्य ॥ ११ ॥ एवमुक्त्वा तदा देवी गिरिजा
सर्वमंगला ॥ शबरीरूपमास्थाय गंतुकामा महेश्वरम् ॥ १२ ॥ श्यामा तन्वी शिखरदशना बिंबबिंबाधरोष्ठी सुश्रीवाढ्या कुचभरनता वर्द्धित
स्निग्धकेशी ॥ मध्ये क्षामा पृथुकटितटा हेमरंभोरुगौरी पच्छीयुक्ता वरवलयिनी बर्हिबर्हावतंसा ॥ १३ ॥ पाणौ मृणालसदृशं दधती च चापं
पृष्ठे लसत्कृतककेतकिबाणकोशम् ॥ सा तं निरीशमलोकयति स्म तत्र संसेविता सुवदना बहुभिः सखीभिः ॥ १४ ॥ भृंगीनादेन महता नादयंती
जगत्त्रयम् ॥ गिरिजा मन्मथं सद्यो जीवयंती पुनःपुनः ॥ १५ ॥ सकामना राजहंसा बभूवुस्तत्क्षणादपि ॥ द्विरेफा बर्हिणश्चैव सर्वे ते हृच्छयान्वि
ताः ॥ १६ ॥ एकाकी संस्थितो यत्र समाधिस्थो महेश्वरः ॥ दृष्टस्ततस्तया देव्या भृंगीनादेन मोहितः ॥ १७ ॥ प्रबुद्धो हि महादेवो निरीक्ष्य
शबरीं तदा ॥ समाधेरुत्थितः सद्यो महेशो मदनान्वितः ॥ १८ ॥ यावत्करे गृह्यमाणो गिरिजां स समीपगः ॥ तावत्तस्य पुरः सद्यस्तिरोधानं
गता सती ॥ १९ ॥ तद्दृष्ट्वा तत्क्षणादेव देवो भ्रांतिविनाशनः ॥ भ्रममाणस्तदा शंभुर्नापश्यदसितेक्षणाम् ॥ २० ॥ विरहेण समायुक्तो हृच्छ
येन समन्वितः ॥ मदनारिस्तदा शंभुर्ज्ञानरूपो निरंतरम् ॥ २१ ॥ निर्मोहो मोहमापन्नो ददर्श गिरिजां पुनः ॥ उवाच वाक्यं शबरीं प्रस्ताव
सदृशं महत् ॥ २२ ॥ ॥ शिव उवाच ॥ ॥ वाक्यं मे शृणु तन्वंगि श्रुत्वा तत्कर्तुमर्हसि ॥ कासि कस्यासि तन्वंगि किमर्थमटनं वने ॥
तत्कथ्यतां महाभागे याथातथ्यं सुमध्यमे ॥ २३ ॥ ॥ शिवोवाच ॥ ॥ पतिमन्वेषयिष्यामि सर्वज्ञं सकलार्थदम् ॥ स्वतंत्रं निर्विकारं च
जगतामीश्वरं वरम् ॥ २४ ॥ इत्युक्तः प्रत्युवाचेदं गिरिजां वृषभध्वजः ॥ अहं तवोचितो भद्रे पतिर्नान्यो हि भामिनि ॥ २५ ॥ विमृश्यतां

वरारोहे तत्त्वतो हि वरानने ॥ वचो निशम्य रुद्रस्य स्मितपूर्वमभाषत ॥ २६ ॥ मयार्थितो महाभाग पतिस्त्वं नान्यथा वद[1] ॥ किं तु वक्ष्यामि भद्रं ते निर्गुणोऽसि परंतपः ॥ २७ ॥ यया पुरा वृतोऽसि त्वं तपसा च परेण हि ॥ परित्यक्ता त्वयारण्ये क्षणमात्रेण भामिनी ॥ २८ ॥ दुराराध्योऽसि सततं सर्वेषां प्राणिनामपि ॥ तस्मान्न वाच्यं हि पुनर्यदुक्तं ते ममाग्रतः ॥ २९ ॥ शबर्या वचनं श्रुत्वा प्रत्युवाच वृषध्वजः ॥ मैवं वद विशालाक्षि न त्यक्ता सा तपस्विनी ॥ यदि त्यक्ता मया तन्वि किं वक्तुमिह पार्यते ॥ ३० ॥ एवं ज्ञात्वा विशालाक्षि कृपणं कृपणप्रियम् ॥ तस्मात्त्वया हि कर्तव्यं वचनं मे सुमध्यमे ॥ ३१ ॥ एवमभ्यर्थिता तेन बहुधा शूलपाणिना ॥ प्रहस्य गिरिजा प्राह उपहासपरं वचः ॥ ३२ ॥ तपोधनोऽसि योगीश विरक्तोऽसि निरंजनः ॥ आत्मारामो हि निर्द्वंद्वो मदनो येन घातितः ॥ ३३ ॥ स त्वं साक्षाद्विरूपाक्षो मया दृष्टोसि चाद्य वै ॥ अशक्यो हि मया प्राप्तुं सर्वेषां दुरतिक्रमः ॥ तस्मात्त्वया न वक्तव्यं यदुक्तं च पुरा मम ॥ ३४ ॥ तस्यास्तद्वचनं श्रुत्वा प्रोवाच मदनांतकः ॥ मम भार्या भव त्वं हि नान्यथा कर्तुमर्हसि ॥ ३५ ॥ इत्युक्त्वा तां करेऽगृह्णाच्छबरीं मदनातुरः ॥ उवाच तं स्मयंती सा मुंचमुंचेति सादरम् ॥ ३६ ॥ नोचितं भगवन्कर्तुं तापसेन बलादिदम् ॥ याचयस्व पितुर्मे त्वं नान्यथाभिभविष्यसि ॥ ३७ ॥ ॥ महादेव उवाच ॥ ॥ ॥ पितरं कथयाशु त्वं स्थितः कुत्र शुभानने ॥ द्रक्ष्यामि तं विशालाक्षि प्रणिपातपुरःसरम् ॥ ३८ ॥ एतदुक्तं तदा तेन निशम्यासितनेत्रया ॥ आनीतो हि तया तन्व्या पितरं वृषभध्वजः ॥ ३९ ॥ स्थितं कैलासशिखरे हिमवंतं नगोत्तमम् ॥ अहिभिर्बहुभिश्चैव संवृतं च महाप्रभम् ॥ ४० ॥ द्वारि स्थितं तया देव्या दर्शितं शंकरस्य च ॥ असौ मम पिता देव याचस्व विगतत्रपः ॥ ददाति मां न संदेहस्तपस्विन्मा विलंबितम् ॥ ४१ ॥ तथेति मत्वा सहसा प्रणम्य हिमालयं वाक्यमिदं बभाषे ॥ प्रयच्छ तां चाद्य गिरीशवर्य ह्यार्ताय कन्यां सुभगां महामते ॥ ४२ ॥ कृपणं वाक्यमाकर्ण्य समुत्थाय हिमालयः ॥ महेशं च समादाय ह्युवाच गिरिराट् स्वयम् ॥ ४३ ॥ किं जल्पसि हि भो देव तवायुक्तं च सांप्रतम् ॥ त्वं दाता त्रिषु लोकेषु त्वं स्वामी जगतां विभो ॥ ४४ ॥ त्वया ततमिदं विश्वं जगदेतच्चराचरम् ॥ एवं स्तुतिपरोऽभूच्च हिमालयगिरिर्महान् ॥ आगतो नारदस्तत्र ऋषिभिः परिवारितः ॥ ४५ ॥ उवाच प्रहसन्वाक्यं शूलपाणे नमः प्रभो ॥ हे शंभो शृणु मे वाक्यं तत्त्वसारमयं परम् ॥ ४६ ॥

१ हे महाभाग त्वं मयार्थितः पतिः न—असि—त्वम् अन्यथा—यथेच्छम्—इति शेषः । वद ब्रूहि—अहं तु त्वां मद्योग्यं पतिं न जानामि—इति परिहासोक्तौ गूढाभिप्रायः । वस्तुतस्तु हे महाभाग मयार्थितः पतिस्त्वं—त्वमेवासि—अन्यथा न वद—मा ब्रूहि—इति—शब्दयोजना वोद्धव्या ।

योषिद्भिः संगतिः पुंसां विडंबायोपकल्पते ॥ त्वं स्वामी जगतां नाथः पराणां परमः परः ॥ विमृश्य सर्वं देवेश यथावद्वक्तुमर्हसि ॥ ४७ ॥ एवं प्रबोधितस्तेन नारदेन महात्मना ॥ प्रबोधमगमच्छंभुर्जहास परमेश्वरः ॥ ४८ ॥ ॥ शिव उवाच ॥ ॥ सत्यमुक्तं त्वया चात्र नान्यथा नारद क्वचित् ॥ योषित्संगतिमात्रेण नृणां पतनमेव च ॥ ४९ ॥ भविष्यति न संदेहो नान्यथा वचनं तव ॥ अनया मोहितोऽद्याहमानीतो गंधमादनम् ॥ ५० ॥ पिशाचवत्कृतमिदं चरितं परमाद्भुतम् ॥ ५१ ॥ तस्मान्न तिष्ठामि गिरेः समीपे व्रजामि चाद्यैव वनांतरं पुनः ॥ इत्येवमुक्त्वा स जगाम मार्गं दुरत्ययं योगिनामप्यगम्यम् ॥ ५२ ॥ निरालंबं स विज्ञाय नारदो वाक्यमब्रवीत् ॥ गिरिजां च गिरींद्रं च पार्षदान्प्रति सत्वरम् ॥ ॥ ५३ ॥ वंदनीयश्च स्तुत्यश्च क्षाम्यतां परमार्थतः ॥ महेशोऽयं जगन्नाथस्त्रिपुरारिर्महायशाः ॥ ५४ ॥ एतच्छ्रुत्वा तु वचनं नारदस्य मुखोद्गतम् ॥ गिरिजां पुरतः कृत्वा गिरयो हि महाप्रभाः ॥ ५५ ॥ दण्डवत्पतिताः सर्वे शंकरं लोकशंकरम् ॥ तुष्टुवुः प्रणताः सर्वे प्रमथा गुह्यकादयः ॥ ५६ ॥ स्तूयमानो हि भगवानागतो गंधमादनम् ॥ अंगिरसा हि सर्वेशो ह्यभिषिक्तो महात्मभिः ॥ ५७ ॥ तदा दुन्दुभयो नेदुर्वादित्राणि बहूनि च ॥ इन्द्रादयः सुराः सर्वे पुष्पवर्षं ववर्षिरे ॥ ५८ ॥ ब्रह्मादिभिः सुरगणैर्बहुभिः परीतो योगीश्वरो गिरिजया सह विश्ववंद्यः ॥ अभ्यर्थितः परममंगलमंगलैश्च दिव्यासनोपरि रराज महाविभूत्या ॥ ५९ ॥ एवंविधान्यनेकानि चरितानि महात्मनः ॥ महेशस्य च भो विप्राः पापहारीणि शृण्वताम् ॥ ६० ॥ यानियानीह रुद्रस्य चरितानि महांत्यपि ॥ श्रुतानि परमाण्येव भूयः किं कथयामि वः ॥ ६१ ॥ ॥ ऋषय ऊचुः ॥ ॥ एवमुक्तं त्वया सूत चरितं शंकरस्य च ॥ अनेन चरितेनैव संतृप्ताः स्मो न संशयः ॥ ६२ ॥ ॥ सूत उवाच ॥ ॥ व्यासप्रसादाच्छ्रुतमस्ति सर्वं मया ततं शंकररूपमद्भुतम् ॥ सुविस्तृतं चाद्भुतवेदगर्भं ज्ञानात्मकं परमं चेदमुक्तम् ॥ ६३ ॥ श्रद्धया परयोपेताः श्रावयंति शिवप्रियम् ॥ शृण्वंति चैव ये भक्त्या शंभोर्माहात्म्यमद्भुतम् ॥ शिवशास्त्रमिदं प्रीत्या ते यांति परमां गतिम् ॥ ६४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे केदारखण्डे शिवशास्त्रे पार्वत्या शबरीरूपेण शिवस्य गन्धमादनपर्वतं प्रत्यानयनपूर्वकं बृहस्पतिकृताशिवराज्याभिषेकवर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ छ ॥ ॥ इति श्रीस्कान्दमहापुराणे प्रथमे माहेश्वरखण्डे प्रथमः केदारखण्डः समाप्तः ॥ १ ॥

---

॥ ❀ ॥ इति केदारखण्डः समाप्तः ॥ ❀ ॥

इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना
स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्रणालये मुद्रितम्।
संवत् १९६६, शके १८ ३१.

॥ इति श्रीस्कांदे महापुराणे प्रथमे माहेश्वरखण्डे केदारखण्डः समाप्तः ॥ (१) ॥

॥ अथ श्रीस्कांदे महापुराणे प्रथमे माहेश्वरखण्डे कौमारिकाखण्डः प्रारभ्यते ॥ (२)

श्रीगणेशाय नमः ॥ ॐ नमो बृहस्पतये ॥ नमतस्मै ब्रह्मणे ॥ विष्णवे नमः ॥ श्रीमुनय ऊचुः ॥ दक्षिणार्णवतीरेषु यानि तीर्थानि पंच च ॥ तानि ब्रूहि विशालाक्ष वर्णयंत्यति तानि च ॥ १ ॥ सर्वतीर्थफलं येषु नारदाद्या वदंति च ॥ तेषां चारितमाहात्म्यं श्रोतुमिच्छामहे वयम् ॥ २ ॥ ॥ ॥ उग्रश्रवा उवाच ॥ ॥ शृणुध्वमत्यद्भुतपुण्यसत्कथं कुमारनाथस्य महाप्रभावम् ॥ द्वैपायनो यन्मम चाह पूर्वं हर्षाम्बुरोमोद्गमचर्चितांगः ॥ ॥ ३ ॥ कुमारगीता गाथात्र श्रूयतां मुनिसत्तमाः ॥ या सर्वदेवैर्मुनिभिः पितृभिश्च प्रपूजिता ॥ ४ ॥ मध्वाचारस्तंभतीर्थं यो निषेवेत मानवः ॥ नियतं तस्य वासः स्याद्ब्रह्मलोके यथा मम ॥ ५ ॥ ब्रह्मलोकाद्विष्णुलोकस्तस्मादपि शिवस्य च ॥ पुत्रप्रियत्वात्तस्यापि गुहलोको महत्तमः ॥ ॥ ६ ॥ अत्राश्चर्यकथा या च फाल्गुनस्य पुरेरिता ॥ नारदेन मुनिश्रेष्ठास्तां वो वक्ष्यामि विस्तरात् ॥ ७ ॥ पुरा निमित्ते कस्मिंश्चित्किरीटी मणिकूटतः ॥ समुद्रे दक्षिणेऽभ्यागात्स्नातुं तीर्थानि पंच च ॥ ८ ॥ वर्जयंति सदा यानि भयात्तीर्थानि तापसाः ॥ कुमारेशस्य पूर्वं च तीर्थमस्ति मुनेः प्रियम् ॥ ९ ॥ स्तंभेशस्य द्वितीयं च सौभद्रस्य मुनेः प्रियम् ॥ बर्करेश्वरमन्यच्च पौलोमीप्रियमुत्तमम् ॥ १० ॥ चतुर्थं च महाकालं करंधमनृपप्रियम् ॥ भरद्वाजस्य तीर्थं च सिद्धेशाख्यं हि पंचमम् ॥ ११ ॥ एतानि पंच तीर्थानि ददर्श कुरुपुंगवः ॥ तपस्विभिर्वर्जितानि महापुण्यानि तानि च ॥ १२ ॥ दृष्ट्वा पार्श्वे नारदीयानपृच्छत महामुनीन् ॥ तीर्थानीमानि रम्याणि प्रभावाद्भुतवंति च ॥ १३ ॥ किमर्थं ब्रूत वर्ज्यंते सदैव ब्रह्मवादिभिः ॥ ॥ तापसा ऊचुः ॥ ॥ ग्राहाः पंच वसंत्येषु हरंति च तपोधनान् ॥ १४ ॥ अत एतानि वर्ज्यंते तीर्थानि कुरुनंदन ॥ इति श्रुत्वा महाबाहुर्गमनाय मनो दधे ॥ १५ ॥ ततस्तं तापसाः प्रोचुर्गंतुं नार्हसि फाल्गुन ॥ बहवो भक्षिता ग्राहै राजानो मुनयस्तथा ॥ १६ ॥ तत्त्वं द्वादश वर्षाणि तीर्थानामर्बुदेष्वपि ॥ स्नातः किमेतैस्तीर्थैस्ते मा पतंगव्रतो भव ॥ १७ ॥ ॥ अर्जुन उवाच ॥ ॥ यदुक्तं करुणासारैः सारं किं तदिहोच्यताम् ॥ धर्मार्थी मनुजो यश्च न स वार्यो महात्मभिः ॥ १८ ॥ धर्मकामं हि मनुजं यो वारयति मंदधीः ॥ तदाश्रितस्य जंगतो निःश्वासैर्भस्मसाद्भवेत् ॥ १९ ॥ यज्जीवितं चाचिरांशुसमानक्षणभंगुरम् ॥ तच्चेद्धर्मकृते याति यातु दोषोऽस्ति को ननु ॥ २० ॥ जीवितं च धनं दाराः पुत्राः क्षेत्रगृहाणि च ॥ यान्ति येषां धर्मकृते त एव भुवि मानवाः ॥ २१ ॥ ॥ तापसा ऊचुः ॥ ॥ एवं ते ब्रुवतः पार्थ दीर्घमायुः प्रवर्धताम् ॥

१ दक्षिणार्णवतीरे तु—इति पाठान्तरम् । २ कुमारनाथगीतात्र—इ० पा० । ३ साध्वांवारस्तम्भतीर्थम्—इ० पा० । ४ मम—इ० पा० । ५ मुनिश्रेष्ठ तात वक्ष्याम—इ० पा० । ६ मणिपूरतः—इ० पा० । ७ धर्मेरेभरम्—इ० पा० । ८ यानि पुण्यानि तानि च—इ० पा० । ९ वत्सकामं च—इ० पा० । १० जगतः—जंगमस्य—देहस्य—इत्यर्थः ।

सदा धर्मे रतिर्भूयाद्याहि स्वं कुरु वांछितम् ॥ २२ ॥ एवमुक्तः प्रणम्यैतानाशीर्भिरभिसंस्तुतः ॥ जगाम तानि तीर्थानि द्रष्टुं भरतसत्तमः ॥ ॥ २३ ॥ ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ॥ विगाह्य तरसा वीरः स्नानं चक्रे परंतपः ॥ २४ ॥ अथ तं पुरुषव्याघ्रमंतर्जलचरो महान् ॥ निजग्राह जले ग्राहः कुंतीपुत्रं धनंजयम् ॥ २५ ॥ तमादायैव कौंतेयो विस्फुरंतं जलेचरम् ॥ उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः ॥ २६ ॥ उद्धृतश्चैव तु ग्राहः सोऽर्जुनेन यशस्विना ॥ बभूव नारी कल्याणी सर्वाभरणभूषिता ॥ २७ ॥ दीप्यमानशिखा विप्रा दिव्यरूपा मनोरमा ॥ तदद्भुतं महद्दृष्ट्वा कुंतीपुत्रो धनंजयः ॥ २८ ॥ तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ॥ का वै त्वमसि कल्याणि कुतो वा जलचारिणी ॥ २९ ॥ किमर्थं च महत्पापमिदं कृतवती ह्यसि ॥ ॥ नार्युवाच ॥ ॥ अप्सरा ह्यस्मि कौंतेय देवारण्यनिवासिनी ॥ ३० ॥ इष्टा धनपतेर्नित्यं वर्चानाम महाबल ॥ मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ॥ ३१ ॥ ताभिः सार्धं प्रयातास्मि देवराजनिवेशनात् ॥ ततः पश्यामहे सर्वा ब्राह्मणं चानिकेतनम् ॥ ३२ ॥ रूपवंतमधीयानमेकमेकांतचारिणम् ॥ तस्य वै तपसा वीर तद्वनं तेजसावृतम् ॥ ३३ ॥ आदित्य इव तं देशं कृत्स्नमेवान्वभासयत् ॥ तस्य दृष्ट्वा तपस्तादृग्रूपं चाद्भुतदर्शनम् ॥ ३४ ॥ अवतीर्णास्मि तं देशं तपोविघ्नचिकीर्षया ॥ अहं च सौरभेयी च सामेयी बुद्बुदा लता ॥ ३५ ॥ यौगपद्येन तं विप्रमभ्यगच्छाम भारत ॥ गायंत्यो ललमानाश्च लोभयंत्यश्च तं द्विजम् ॥ ३६ ॥ स च नास्मासु कृतवान्मनो वीरः कथंचन ॥ नाकंपत महातेजाः स्थितस्तपसि निर्मले ॥ ३७ ॥ सोऽशपत्कुपितोऽस्मासु ब्राह्मणः क्षत्रियर्षभ ॥ ग्राहभूता जले यूयं भविष्यथ शतं समाः ॥ ३८ ॥ ततो वयं प्रव्यथिताः सर्वा भरतसत्तम ॥ आयाताः शरणं विप्रं तपोधनमकल्मषम् ॥ ३९ ॥ रूपेण वयसा चैव कंदर्पेण च दर्पिताः ॥ अयुक्तं कृतवत्यः स्म क्षंतुमर्हसि नो द्विज ॥ ४० ॥ एष एव वधोऽस्माकं स पर्याप्तस्तपोधन ॥ यद्वयं शंसितात्मानं प्रलोब्धुं त्वामुपागताः ॥ ४१ ॥ अवध्याश्च स्त्रियः सृष्टा मन्यंते धर्मचिंतकाः ॥ तस्माद्धर्मेण धर्मज्ञ एष वादो मनीषिणाम् ॥ ४२ ॥ शरणं च प्रपन्नानां शिष्टाः कुर्वंति पालनम् ॥ शरण्यं त्वां प्रपन्नाः स्मस्तस्मात्त्वं क्षंतुमर्हसि ॥ ४३ ॥ एवमुक्तस्तु धर्मात्मा ब्राह्मणः शुभकर्मकृत् ॥ प्रसादं कृतवाञ्छूर रविसोमसमप्रभः ॥४४॥ ॥ब्राह्मण उवाच ॥ ॥ भवतीनां चरित्रेण परिमुह्यामि चेतसि ॥ अहो धार्ष्ट्यमहो मोहो यत्पापाय प्रवर्तनम् ॥ ४५ ॥ मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः ॥ आहारोऽपि न रोचेत किमुताकार्यकारिता ॥४६॥ आहो मानुष्यकं जन्म सर्वजन्मसु दुर्लभम् ॥ तृणवत्क्रियते

१ तथा सौभद्रमासाद्य--इ०पा० । २ परमप्रीतामिदम्--इ० पा० । ३ योगपद्येन--इ०पा० । ४ धैर्यम्--इ०पा० ।

कैश्चिद्योपिन्मूढैर्दुराधर्षैः ॥ ४७ ॥ तान्वयं समपृच्छामो जनिर्वः किंनिमित्ततः ॥ को वा लाभो विचार्यैतन्मनसा सह प्रोच्यताम् ॥४८॥ न चैताः परिनिन्दामो जनिर्याभ्यः प्रवर्तते ॥ केवलं तान्विनिंदामो ये च तासु निरर्गलाः ॥४९॥ यतः पद्मभुवा सृष्टं मिथुनं विश्ववृद्धये ॥ तत्तथा परिपाल्यं वै नात्र दोषोऽस्ति कश्चन ॥ ५० ॥ या बांधवैः प्रदत्ता स्याद्वह्निद्विजसमागमे ॥ गार्हस्थ्यपालनं धन्यं तया साकं हि सर्वदम् ॥ ५१ ॥ यथाप्रकृति पुंयोगो यत्नेनापि परस्परम् ॥ साध्यमानो गुणाय स्यादगुणायाप्यसाधितः ॥ ५२ ॥ एवं यत्नात्साध्यमानं स्वकं गार्हस्थ्यमुत्तमम् ॥ गुणाय महते भूयादगुणायाप्यसाधितम् ॥ ५३ ॥ पुरे पंचमुखे द्वाःस्थ एकादशभटैर्युतः ॥ साकं नार्या बह्वपत्यः स कथं स्यादचेतनः ॥ ५४ ॥ यश्च स्त्रिया समायोगः पंचयज्ञादिकर्मभिः ॥ विश्वोपकृतये सृष्टा मूढैर्हा साध्यतेऽन्यथा ॥ ५५ ॥ अहो शृणुध्वं नो चेद्वः शुश्रूषा जायते शुभा ॥ तथापि बाहुमुद्धृत्य रोरूयामः शृणोति कः ॥ ५६ ॥ षड्धातुसारं तद्वीर्यं समानं परिहाय च ॥ विनिक्षेपे कुयोनौ तु तस्येदं प्रोक्तवान्यमः ॥ ५७ ॥ प्रथमं चौषधीद्रोग्धा आत्मद्रोग्धा ततः पुनः ॥ पितृद्रोग्धा विश्वद्रोग्धा यात्यंधं शाश्वतीः समाः ॥ ५८ ॥ मनुष्यं पितरो देवा मुनयो मानवा स्तथा ॥ भूतानि चोपजीवंति तदर्थं नियतो भवेत् ॥ ५९ ॥ वचसा मनसा चैव जिह्वया करश्रोत्रकैः ॥ दांतमाहुर्हि सत्तीर्थं काकतीर्थमतः परम् ॥ ॥ ६० ॥ काकप्राये नरे यस्मिन्रमंते तामसा जनाः ॥ हंसोऽयमिति देवानां कोऽर्थस्तेन विचिंत्यताम् ॥६१॥ एवंविधं हि विश्वस्य निर्माणं स्मरतो हृदि ॥ अपि कृते त्रिलोक्याश्च कथं पापे रमेन्मनः ॥ ६२ ॥ तदिदं चान्यमर्त्यानां शास्त्रदृष्टमहो स्त्रियः ॥ यमलोके मया दृष्टं मुह्ये प्रत्यक्षतः कथम् ॥ ६३ ॥ भवतीषु च कः कोपो ये यदर्थे हि निर्मिताः ॥ ते तमर्थं प्रकुर्वंति सत्यमस्तुंभमेव च ॥ ६४ ॥ शतं सहस्रं विश्वं च सर्वमक्षय वाचकम् ॥ परिमाणं शतं त्वेव नैतदक्षय्यवाचकम् ॥ ६५ ॥ यदा च वो ग्राहभूता गृह्णतीः पुरुषाञ्जले ॥ उत्कर्षति जलात्कश्चित्स्थले पुरुषसत्तमः ॥ ६६ ॥ तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ ॥ अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ कल्याणस्य सुपृक्तस्य शुद्धिस्तद्वद्वरा हि वः ॥ ॥ ६७ ॥ ॥ नार्युवाच ॥ ॥ ततोभिवाद्य तं विप्रं कृत्वा चैव प्रदक्षिणम् ॥ ६८ ॥ अचिंतयामापसृत्य तस्माद्देशात्सुदुःखिताः ॥ क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ॥ ६९ ॥ समागच्छेम यो नः स्वं रूपमापादयेत्पुनः ॥ ता वयं चिंतयित्वेह मुहूर्तादिव भारत ॥ ७० ॥ दृष्टवत्यो महाभागं देवर्पिमथ नारदम् ॥ सर्वा हृष्टाः स्म तं दृष्ट्वा देवर्पिममितद्युतिम् ॥ ७१ ॥ अभिवाद्य च तं पार्थ स्थिताः स्मो व्यथिता

१ निरर्थतः—इ० पा० । २ शास्त्रदृष्टं च भोः स्त्रियः—इ० पा० । ३ अस्तुभन्—असत्यमित्यर्थः ।

ननाः ॥ स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तम् ॥ ७२ ॥ श्रुत्वा तच्च यथातत्त्वमिदं वचनमब्रवीत् ॥ दक्षिणे सागरेऽनूपे पंच तीर्थानि संति वै ॥ ७३ ॥ पुण्यानि रमणीयानि तानि गच्छत मा चिरम् ॥ तत्रस्थाः पुरुषव्याघ्रः पांडवो वो धनंजयः ॥ ७४ ॥ मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥ तस्य सर्वा वयं वीर श्रुत्वा वाक्यमिहागताः ॥ ७५ ॥ त्वमिदं सत्यवचनं कर्तुमर्हसि पांडव ॥ त्वद्विधानां हि साधूनां जन्म दीनोपकारकम् ॥ ७६ ॥ श्रुत्वेति वचनं तस्याः सस्नौ तीर्थेष्वनुक्रमात् ॥ ग्राहभूताश्चोज्जहार यथापूर्वाः स पांडवः ॥ ७७ ॥ ततः प्रणम्य ता वीरं प्रोच्यमाना जयाशिषः ॥ गंतुं कृताभिलाषाश्च प्राह पार्थो धनंजयः ॥ ७८ ॥ एष मे हृदि संदेहः सुदृढः परिवर्तते ॥ कस्माद्वो नारदमुनिरनुजज्ञे प्रवासितुम् ॥ ७९ ॥ सर्वः कोऽप्यतिहीनोऽपि स्वपूज्यस्यार्थसाधकः ॥ स्वपूज्यतीर्थेष्वावासं प्रोक्तवान्नारदः कथम् ॥ ८० ॥ तथैव नवदुर्गासु सतीष्वतिबलासु च ॥ सिद्धेशे सिद्धगणपे चापि वोऽत्र स्थितिः कथम् ॥ ८१ ॥ एकैक एषां शक्तो हि अपि देवान्निवारितुम् ॥ तीर्थसंरोधकारिण्यः सर्वा नावारयत्कथम् ॥ ८२ ॥ इति चिंतयते मह्यं भृशं दोलायते मनः ॥ महन्मे कौतुकं जातं सत्यं वा वक्तुमर्हथ ॥ ८३ ॥ ॥ ॥ अप्सरस ऊचुः ॥ ॥ योग्यं पृच्छसि कौन्तेय पुनः पश्योत्तरां दिशम् ॥ ८४ ॥ एष स्वविप्रैरभिसंवृतोऽर्च्यो मुनिः समायाति तथेति नारदः ॥ सर्वं हि पृष्टं तव वै स वक्ता प्रोच्यैवमाकाशतलं गतास्ताः ॥ ८५ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वर खण्डे कौमारिकाखंडे पार्थेन पञ्चाप्सरःसमुद्धरणंनाम प्रथमोऽध्यायः ॥ १ ॥छ॥ ॥ सूत उवाच ॥ ॥ ततो द्विजैः परिवृतं नारदं देवपूजितम् ॥ अभिगम्योपजग्राह सर्वानथ स पाण्डवः ॥ १ ॥ ततस्तं नारदः प्राह जयारातिधनंजय ॥ धर्मे भवंति ते बुद्धिर्देवेषु ब्राह्मणेषु च ॥ २ ॥ कच्चिदेतां महायात्रां वीर द्वादशवार्षिकीम् ॥ आचरन्खिद्यसे नैवमथ वा कुप्यसे न च ॥३॥ मुनीनामपि चेतांसि तीर्थयात्रासु पांडव ॥ खिद्यंति परिकुप्यंति श्रेयसां विघ्नमूलतः ॥ ४ ॥ कच्चिन्नैतेन दोषेण समाश्लिष्टोऽसि पांडव ॥ अत्र चांगिरसा गीतां गाथामेतां हि शुश्रुम ॥ ५ ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ निर्विकाराः क्रियाः सर्वाः स तीर्थफलमश्नुते ॥ ६ ॥ तदिदं हृदि धार्यं ते किं वा त्वं तात मन्यसे ॥ भ्राता युधिष्ठिरो यस्य सखा यस्य स केशवः ॥ ७ ॥ पुनरेतत्समुचितं यद्विप्रैः शिक्षणं नृणाम् ॥ वयं हि धर्मगुरवः स्थापितास्तेन विष्णुना ॥ ८ ॥ विष्णुना चात्र शृणुमो गीतां गाथां द्विजान्प्रति ॥ ९ ॥ यस्यामलामृतयशःश्रवणावगाहः सद्यः पुनाति जगदा श्वपचाद्विकुंठः ॥ सोहं भवद्भिरुपलब्ध

१ श्रुत्वा तद्यत्तथा तत्त्वम्—इ० पा० । २ संकल्पः—इ० पा० । ३ यथापूर्वं स पाण्डवः—इ०' सर्वा नार्यः पृथक्पृथक्—इ० च पा० । ४ भवतु—इ० पा० । ५ सक्षणम्—इ० पा० ।

सुतीर्थकीर्तिश्छिद्यां स्वबाहुमपि यः प्रतिकूलवर्ती ॥ १० ॥ प्रियं च पार्थ ते ब्रूमो येषां कुशलकामुकः ॥ सर्वे कुशलिनस्ते च यादवाः पांडवास्तथा ॥ ११ ॥ अधुना भीमसेनेन कुरूणामुपतापकः ॥ शासनाद्धृतराष्ट्रस्य वीरवर्मा नृपो हतः ॥ १२ ॥ स हि राज्ञामजेयोऽभूद्यथापूर्वं बलिर्बली ॥ कंटकं कंटकेनेव धृतराष्ट्रो जिगाय तम् ॥ १३ ॥ इत्यादिनारदप्रोक्तां वाचमाकर्ण्य फाल्गुनः ॥ अतीव मुदितः प्राह तेषामकुशलं कुतः ॥ १४ ॥ ये ब्राह्मणमते नित्यं ये च ब्राह्मणपूजकाः ॥ अहं च शक्त्या नियतस्तीर्थानि विचरन्ननु ॥ १५ ॥ आगतस्तीर्थमेतद्धि प्रमोदोऽतीव मे हृदि ॥ तीर्थानां दर्शनं धन्यमवगाहस्ततोऽधिकः ॥ १६ ॥ माहात्म्यश्रवणं तस्माद्दोर्वोपि मुनिरब्रवीत् ॥ तदहं श्रोतुमिच्छामि तीर्थस्यास्य गुणान्मुने ॥ १७ ॥ एतेनैव श्राव्यमेतद्यत्त्वयांगीकृतं मुने ॥ त्वं हि त्रिलोकीं विचरन्वेत्सि सर्वां हि सारताम् ॥ १८ ॥ तदेतत्सर्वतीर्थेभ्योऽधिकं मन्ये त्वदाहृतम् ॥ १९ ॥ ॥ नारद उवाच ॥ ॥ उचितं तव पार्थैतद्यत्पृच्छसि गुणिन्गुणान् ॥ गुणिनामेव युज्यन्ते श्रोतुं धर्मोद्भवा गुणाः ॥ साधूनां धर्मश्रवणैः कीर्तनैर्याति चान्वहम् ॥ २० ॥ पापानामसदालापैरायुर्याति यथान्वहम् ॥ तदहं कीर्तयिष्यामि तीर्थस्यास्य गुणान्बहून् ॥ २१ ॥ यथा श्रुत्वा विजानासि युक्तमंगीकृतं मया ॥ पुराहं विचरन्पार्थ त्रिलोकीं कपिलानुगः ॥ २२ ॥ गतवान्ब्रह्मणो लोकं तत्रापश्यं पितामहम् ॥ स हि राजर्षिदेवर्षिमूर्तामूर्तैः सुसंवृतः ॥ २३ ॥ विभाति विमलो ब्रह्मा नक्षत्रैरुडुराडिव ॥ तमहं प्रणिपत्याथ चक्षुषा कृतस्वागतः ॥ २४ ॥ उपविष्टः प्रमुदितः कपिलेन सहैव च ॥ एतस्मिन्नंतरे तत्र वार्तिकाः समुपागताः ॥ २५ ॥ प्रहीयंते हि ते नित्यं जगद्द्रष्टुं हि ब्रह्मणा ॥ कृतप्रणामानथ तान्समासीनान्पितामहः ॥ २६ ॥ चक्षुषामृतकल्पेन प्लावयन्निव चाब्रवीत् ॥ कुत्र कुत्र विचीर्णं वो दृष्टं श्रुतमथापि वा ॥ २७ ॥ किंचिदेवाद्भुतं ब्रूत श्रवणाद्येन पुण्यता ॥ एवमुक्ते भगवता तेषां यः प्रवरो मतः ॥ २८ ॥ सुश्रवानाम ब्रह्माणं प्रणिपत्येदमूचिवान् ॥ प्रभोरग्रे च विज्ञप्तिर्यथा दीपो रवेस्तथा ॥ २९ ॥ तथापि खलु वाच्यं मे परार्थं प्रेरितेन ते ॥ मुनिः कात्यायनोनाम श्रुत्वा धर्मान्पुनर्बहून् ॥ ३० ॥ सारजिज्ञासया तस्थावेकांगुष्ठः शतं समाः ॥ ततः प्रोवाच तं दिव्या वाणी कात्यायन शृणु ॥ ३१ ॥ पुण्ये सरस्वतीतीरे पृच्छ सारस्वतं मुनिम् ॥ स ते सारं धर्मसाध्यं धर्मज्ञोऽभिवंदिष्यति ॥ ३२ ॥ इति श्रुत्वा मुनिवरो मुनिश्रेष्ठमुपेत्य तम् ॥ प्रणम्य शिरसा भूमौ पप्रच्छेदं हृदि स्थितम् ॥ ३३ ॥ सत्यं केचित्प्रशंसंति तपः शौचं तथा परे ॥ सांख्यं केचित्प्रशंसंति योगमन्ये प्रचक्षते ॥ ३४ ॥ क्षमां केचित्प्रशंसंति तथैव भृशमार्जवम् ॥ केचिन्मौनं प्रशंसंति केचि

१ किं तु कुशलमेव स्यात् । ततः—इ० पा० । २ देवोपि मुनिरब्रवीत्—इ० पा० । ३ ह्लादयन्निव—इ० पा० । ४ इदमुक्ते—इ० पा० । ५ चेदमवाच्यं मे—इ० पा० । ६ ऽपि वदिष्यति—इ० पा० ।

दाहुः परं श्रुतम् ॥ ३५ ॥ सम्यग्ज्ञानं प्रशंसंति केचिद्वैराग्यमुत्तमम् ॥ अग्निष्टोमादिकर्माणि तथा केचित्परं विदुः ॥ ३६ ॥ आत्मज्ञानं परं केचित्समलोष्टाश्मकांचनम्[1] ॥ इत्थं व्यवस्थिते लोके कृत्याकृत्यविधौ जनाः ॥ ३७ ॥ व्यामोहमेव गच्छंतिं किं श्रेय इति वादिनः ॥ यदेतेषु परं कृत्यमनुष्ठेयं[2] महात्मभिः ॥ ३८ ॥ वक्तुमर्हसि धर्मज्ञ मम सर्वार्थसाधकम् ॥ ३९ ॥ ॥ सारस्वत उवाच ॥ ॥ यन्मां सरस्वती प्राह सारं वक्ष्यामि तच्छृणु ॥ छायाकारं जगत्सर्वमुत्पत्तिक्षयधर्मि[3] च ॥ वारांगनानेत्रभंगस्वद्भंगुरमेव तत् ॥ ४० ॥ धनायुर्यौवनं भोगाञ्जलचंद्रवदस्थिरान् ॥ बुद्ध्या सम्यक्परामृश्य स्थाणुदानं समाश्रयेत् ॥ ४१ ॥ दानवान्पुरुषः पापं नालं कर्तुमिति श्रुतिः ॥ स्थाणुभक्तो जन्ममृत्यू नाप्नोतीति श्रुतिस्तथा ॥ ४२ ॥ सावर्णिना च गाथे द्वे कीर्तिते शृणु ये पुरा ॥ वृषो हि भगवान्धर्मो वृषभो यस्य वाहनम् ॥ ४३ ॥ पूज्यते स महादेवः स[4] धर्मः पर उच्यते ॥ दुःखावर्ते तमोघोरे[5] धर्माधर्मजले तथा ॥ ४४ ॥ क्रोधपंके मदग्राहे[6] लोभबुद्बुदसंकटे ॥ मानगंभीरपाताले सत्त्वयानविभूषिते[7] ॥ ४५ ॥ मज्जंतं तारयत्येको हरः संसारसागरात् ॥ दानं वृत्तं व्रतं वाचः[8] कीर्तिधर्मौ तथायुषः[9] ॥ ४६ ॥ परोपकरणं कायादसारात्सारमुद्धरेत् ॥ धर्मे रागः श्रुतौ चिंता दाने व्यसनमुत्तमम् ॥ ४७ ॥ इंद्रियार्थेषु वैराग्यं संप्राप्तं जन्मनः फलम् ॥ देशेऽस्मिन्भारते जन्म प्राप्य मानुष्यमध्रुवम् ॥ ४८ ॥ न कुर्यादात्मनः श्रेयस्तेनात्मा वंचितश्चिरम् ॥ देवासुराणां सर्वेषां मानुष्यमतिदुर्लभम् ॥ ४९ ॥ तत्संप्राप्य तथा कुर्यान्न गच्छेन्नरकं यथा ॥ सर्वस्य मूलं मानुष्यं तथा सर्वार्थसाधकम् ॥ ५० ॥ यदि लाभे न यतस्ते मूलं रक्ष प्रयत्नतः ॥ महता पुण्यमूल्येन[10] क्रीयते कायनौस्त्वया ॥ ५१ ॥ गंतुं दुःखोदधेः पारं तर यावन्न भिद्यते ॥ अविकारिशरीरत्वं दुष्प्राप्यं प्राप्य वै ततः ॥ ५२ ॥ नापक्रामति संसारादात्महा स नराधमः ॥ तपस्तप्यन्ति यतयो जुह्वते चात्र यज्विनः ॥ दानानि चात्र दीयंते परलोकार्थमादरात् ॥ ५३ ॥ ॥ कात्यायन उवाच ॥ ॥ दानस्य तपसो वापि भगवन्किं च दुष्करम् ॥ किं वा महत्फलं प्रेत्य सारस्वत ब्रवीहि तत् ॥ ५४ ॥ ॥ सारस्वत उवाच ॥ ॥ न दानाद्दुष्करतरं पृथिव्यामस्ति किंचन ॥ मुने प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम्[11] ॥ ५५ ॥ परित्यज्य प्रियान्प्राणान्धनार्थे हि महाभयम् ॥ प्रविशंति

१ समलोष्टाश्मकांचनाः—इ० पा० । अत्र च—समलोष्टाश्मकांचनमिति ह्यात्मज्ञानस्य विशेषणं बोध्यम् । आत्मवस्तुनः सर्वस्वरूपत्वेन निर्विशेषत्वात्—लोष्टाश्मकांचनानां परमार्थतश्चिदेकरूपत्वादात्मज्ञाने लोष्टाश्मकांचनानां चिदविशेषेण समत्वात्—समानि लोष्टाश्मकांचनानि यस्मिन्नेतादृशमात्मज्ञानं केचित्प्रशंसंतीत्यर्थः । २ अनुश्रेयम्—इ० पा० । ३ उत्पन्नक्षयकर्मि च—इ० पा० । ४ सर्वधर्मः स उच्यते—इ० पा० । ५ तमोद्वारे—इ० पा० । ६ गदग्राहे—इ० पा० । ७ सत्त्वपानविभूषिते—इ० पा० । ८ सुमंगलानि सत्यप्रियाणि या वदेयुरेतादृशीर्वाचः इत्यर्थः । ९ आयुषः—आयुर्वर्धकानौषधाद्युपचारान्योगादिविहितायुर्वर्धकोपायांश्च इत्यर्थः । १० महता पुण्यपण्येन क्रीतेयं कायनौस्त्वया—इत्यन्यत्र पा० । ११ लोकलक्षितम्—इ० पा० ।

महालोभात्समुद्रमटवीं गिरिम् ॥ ५६ ॥ सेवामन्ये प्रपद्यंते श्ववृत्तिरिति या स्मृता ॥ हिंसाप्रायां बहुक्लेशां कृषिं चैव तथा परे ॥ ५७ ॥ तस्य दुःखार्जितस्येह प्राणेभ्योपि गरीयसः ॥ आयासशतलब्धस्य परित्यागः सुदुष्करः ॥ ५८ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम् ॥ अन्ये मृतस्य क्रीडंति दारैरपि धनैरपि ॥ ५९ ॥ अहन्यहनि याचंतमहं मन्ये गुरुं यथा ॥ मार्जनं दर्पणस्येव यः करोति दिनेदिने ॥ ६० ॥ दीयमानं हि नापैति भूय एवाभिवर्धते ॥ कूप उत्सिच्यमानो हि भवेच्छुद्धो बहूदकः ॥ ६१ ॥ एकजन्मसुखस्यार्थे सहस्राणि विलापयेत् ॥ प्राज्ञो जन्मसहस्रेषु संचिनोत्येकजन्मनि ॥ ६२ ॥ मूर्खो हि न ददात्यर्थानिह दारिद्र्यशंकया ॥ प्राज्ञस्तु विसृजत्यर्थानमुत्र तस्य शंकया ॥ ६३ ॥ किं धनेन करिष्यंति देहिनो भंगुराश्रयाः ॥ यदर्थं धनमिच्छंति तच्छरीरमशाश्वतम् ॥ ६४ ॥ अक्षरद्वयमभ्यस्तं नास्तिनास्तीति यत्पुरा ॥ तदिदं देहिदेहीति विपरीतमुपस्थितम् ॥ ६५ ॥ बोधयंति च यावंतो देहीति कृपणं जनाः ॥ अवस्थेयमदानस्य मा भूदेवं भवानपि ॥ ६६ ॥ दातुरेवोपकाराय वदत्यर्थीति देहि मे ॥ यस्माद्दाता प्रयात्यूर्ध्वमधस्तिष्ठेत्प्रतिग्रही ॥ ६७ ॥ दरिद्रा व्याधिता मूर्खाः परप्रेष्यकराः सदा ॥ अदत्तदानाज्जायंते दुःखस्यैव हि भाजनाः ॥ ६८ ॥ धनवंतमदातारं दरिद्रं वाऽतपस्विनम् ॥ उभावंभसि मोक्तव्यौ कंठे बद्ध्वा महाशिलाम् ॥ ६९ ॥ शतेषु जायते शूरः सहस्रेषु च पंडितः ॥ वक्ता शतसहस्रेषु दाता जायेत वा न वा ॥ ७० ॥ गोभिर्विप्रैश्च वेदैश्च सतीभिः सत्यवादिभिः ॥ अलुब्धैर्दानशीलैश्च सप्तभिर्धार्यते मही ॥ ७१ ॥ शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ॥ ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ ७२ ॥ प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ॥ ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥ ७३ ॥ निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम् ॥ ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वीं सपत्तनाम् ॥ ७४ ॥ अवर्षति च पर्जन्ये सर्वभूतनिवासकृत् ॥ वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥ ७५ ॥ ब्रह्मदत्तश्च पांचाल्यो राजा बुद्धिमतां वरः ॥ निधिं शंखं द्विजाग्र्येभ्यो दत्त्वा स्वर्गमवाप्तवान् ॥ ७६ ॥ सहस्रजिच्च राजर्षिः प्राणानिष्टान्महायशाः ॥ ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ ७७ ॥ एते चान्ये च बहवः स्थाणोर्दानेन भक्तितः ॥ रुद्रलोकं गता नित्यं शान्तात्मानो जिते

१ दक्षिणस्येव–इ० पा० । २ उलंघ्यमानोऽपि–इ० पा० । ३ जन्मसहस्राणि–इत्यर्थः । ३ जन्मसहस्रेषु–इति मूलस्थपाठे जन्मसहस्रेषु प्राप्तव्यं सुखरूपं फलं प्राज्ञो दानप्रभावादेकस्मिन्नेव जन्मनि संचिनोति–इत्यर्थः । ४ प्राज्ञस्तु–इह चेद्दानं न दत्तं स्यात्तर्हि जन्मान्तरेऽदत्तदोषेण दारिद्र्यमायास्यतीति शङ्कयाऽर्थान् धनानि विसृजति ददातीत्यर्थः । ५ इति–इ० पा० । ६ गले–इ० पा० । ७ भवति–इ० पा० । ८ ब्राह्मण्यर्थम्–इ० पा० । ९ दीर्णाः–इ० पा० ।

न्द्रियाः ॥ ७८ ॥ एषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ॥ इति संचिंत्य सारार्थी स्थाणुदानपरो भव ॥ ७९ ॥ सोऽपि मोहं परित्यज्य तथा कात्यायनोऽभवत् ॥ ८० ॥ ॥ नारद उवाच ॥ ॥ एवं सुश्रवसा प्रोक्तां कथामाकर्ण्य पद्मभूः ॥ हर्षाश्रुसंयुतोऽतीव प्रशशंस मुहुर्मुहुः ॥ ८१ ॥ साधु ते व्याहृतं वत्स एवमेतन्न चान्यथा ॥ सत्यं सारस्वतः प्राह सत्या चैवं तथा श्रुतिः ॥ ८२ ॥ दानं यज्ञानां वरूथं दक्षिणा लोके दातारँसर्वभूतान्युपजीवंति दानेनारातीरँपानुदंत दानेन द्विषंतो मित्रा भवंति दाने सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदंतीति ॥ ८३ ॥ संसारसागरे घोरे धर्माधर्मोर्मिसंकुले ॥ दानं तत्र निषेवेत तच्च नौरिव निर्मितम् ॥ ८४ ॥ इति संचिंत्य च मया पुष्करे स्थापिता द्विजाः ॥ गङ्गायमुनयोर्मध्ये मध्यदेशे द्विजाः कृते ॥ ८५ ॥ स्थापिताः श्रीहरिभ्यां तु श्रीगौर्या वेदवित्तमाः ॥ रुद्रेण नागराश्चैव पार्वत्या शक्तिपूर्भवाः ॥ ८६ ॥ श्रीमाले च तथा लक्ष्म्या ह्येवमादिसुरोत्तमैः ॥ नानाग्रहाराः संदत्ता लोकोद्धरणकांक्षया ॥ ८७ ॥ न हि दानफले कांक्षा काचिन्नोऽस्ति सुरोत्तमाः ॥ साधुसंरक्षणार्थं हि दानं नः परिकीर्तितम् ॥८८॥ ब्राह्मणाश्च कृतस्थाना नानाधर्मोपदेशनैः ॥ समुद्धरंति वर्णास्त्रींस्ततः पूज्यतमा द्विजाः ॥ ८९ ॥ दानं चतुर्विधं दानमुत्सर्गः कल्पितं तथा ॥ संश्रुतं चेति विविधं तत्क्रमात्परिकीर्तितम् ॥ ९० ॥ वापीकूपतडागानां वृक्षविद्यासुरौकसाम् ॥ मठ प्रपागृहक्षेत्रदानमुत्सर्ग इत्यसौ ॥ ९१ ॥ उपजीवन्निमान्यश्च पुण्यं कोऽपि चरेन्नरः ॥ षष्ठमंशं स लभते यावद्यो विसृजेद्द्विजः ॥ ९२ ॥ तदेषा मेव सर्वेषां विप्रसंस्थापनं परम् ॥ देवसंस्थापनं चैव धर्मस्तन्मूल एव यत् ॥ ९३ ॥ देवतायतनं यावद्यावच्च ब्राह्मणगृहम् ॥ तावद्दातुः पूर्वजानां पुण्यांशश्चोपतिष्ठति ॥ ९४ ॥ एतत्स्वल्पं हि वाणिज्यं पुनर्बहुफलप्रदम् ॥ जीर्णोद्धारे च द्विगुणमेतदेव प्रकीर्तितम् ॥ ९५ ॥ तस्मादिदं त्वहमपि ब्रवीमि सुरसत्तमाः ॥ नास्ति दानसमं किंचित्सत्यं सारस्वतो जगौ ॥ ९६ ॥ ॥ नारद उवाच ॥ ॥ इति सारस्वतप्रोक्तां तथा पद्मभुवेरिताम् ॥ साधुसाध्वित्यमोदंत सुराश्चाहं सुविस्मिताः ॥ ९७ ॥ ततः सभाविसर्गांते सुरम्ये मेरुमूर्धनि ॥ उपविश्य शिलापृष्ठे अहमेतदचिंतयम् ॥ ९८ ॥ सत्यमाह विरंचिस्तु स किमर्थं तु जीवति ॥ येनैकमपि तद्वृत्तं नैव येन कृतार्थता ॥ ९९ ॥ तदहं दानपुण्यं हि करिष्यामि कथं स्फुटम् ॥ कौपीनदण्डात्मधनो धनं स्वल्पं हि नास्ति मे ॥ १०० ॥ अनर्हते यद्ददाति न ददाति तथार्हते ॥ अर्हानर्हपरिज्ञानाद्दानधर्मो हि दुष्करः ॥१०१॥ देशे

१ प्राह चेदं तथा श्रुतिः—इ० पा० । २ निर्मलम्—इ० पा० । ३ मनसा—इ० पा० । ४ "नानाग्रहारा"—इत्ययं श्लोकः—"साधुसंशिक्षणार्थं हि"—इत्यस्मादर्धादग्रे—द्वयोः पुस्तकयोर्मध्ये दृश्यते—अत्रैतास्मिञ्श्लोके सत्यप्यर्थसांगत्याद त्रैवायं श्लोकः पुस्तकांतरे दृष्टोऽतोऽत्रैव स्थापितः । ५ आर्षत्वाल्लघुत्वेऽपि न दोष इत्यवधेयं शुद्धपाठात् । ६ यद्वृत्तम्—इ०, यद्दतम्—इ० च पा० ।

काले च पात्रे च शुद्धेन मनसा तथा ॥ न्यायार्जितं च यो दद्याद्यौवने स तदश्नुते ॥१०२॥ तमोवृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च ॥ भुंक्ते दानफलं तद्धि गर्भस्थो नात्र संशयः ॥ ३ ॥ बालत्वेऽपि च सोऽश्नाति यद्दत्तं दम्भकारणात ॥ दत्तमन्यायतो वित्तं तथा वै चार्थकारणम् ॥ ४ ॥ वृद्धत्वे हि समश्नाति नरो वै नात्र संशयः ॥ तस्माद्देशे च काले च सुपात्रे विधिना नरः ॥ शुभार्जितं प्रयुञ्जीत श्रद्धया शाठ्यवर्जितः ॥ ५ ॥ तदेतन्निर्धनत्वाच्च कथं नाम भविष्यति ॥ सत्यमाहुः पुरा वाक्यं पुराणमुनयोऽमलाः ॥ ६ ॥ नाधनस्यास्त्ययं लोको न परश्च कथंचन ॥ अभिशस्तं प्रपश्यंति दरिद्रं पार्श्वतः स्थितम् ॥ ७ ॥ दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥ पतितः शोच्यते सर्वैर्निर्धनश्चापि शोच्यते ॥ ८ ॥ यः कृशाश्वः कृशधनः कृशभृत्यः कृशातिथिः ॥ स वै प्रोक्तः कृशोनाम न शरीरकृशः कृशः ॥ ९ ॥ अर्थवान्दुष्कुलीनोऽपि लोके पूज्यतमो नरः ॥ शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥११०॥ ज्ञानवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः ॥ ते सर्वे धनवृद्धस्य द्वारि तिष्ठन्ति किंकराः ॥११॥ यद्यप्ययं त्रिभुवने अर्थोऽस्माकं पराग्रहि ॥ तथाप्यन्यप्रार्थितो हि तस्यैव फलदो भवेत् ॥१२॥ अथवैतत्पुरा सर्वं चिंतयिष्यामि सुस्फुटम् ॥ विलोकयामि पूर्वं तु किंचिद्योग्यं हि स्थानकम् ॥ १३ ॥ सं चिंतयित्वेति बहुप्रकारं देशांश्च ग्रामान्नगराणि चाश्रमान् ॥ बहूनहं पर्यटन्नाप्तवान्हि स्थानं हितं स्थापये यत्र विप्रान् ॥ ११४ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे नारदार्जुनसंवादे दानप्रशंसावर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥ ॥ छ ॥ ॥ सूत उवाच ॥ ॥ एवं स्थानानि पुण्यानि यानियानीह वै भुवि ॥ निरीक्षंस्तत्र तत्राहं नारदो वीरसत्तम ॥१॥ विचरन्मेदिनीं सर्वां प्राप्तोऽहमाश्रमं भृगोः ॥ यत्र रेवानदी पुण्या सप्तकल्पस्मरा वरा ॥२॥ महापुण्या पवित्रा च सर्वतीर्थमयी शुभा ॥ पुनाति कीर्तनेनैव दर्शनेन विशेषतः ॥ ३ ॥ तत्रावगाहनात्पार्थ मुच्यते जंतुरंहसा ॥ यथा सा पिङ्गला नाडी देहमध्ये व्यवस्थिता ॥ ४ ॥ इयं ब्रह्मांडपिण्डस्य स्थाने तस्मिन्प्रकीर्तिता ॥ तत्रास्ते शुक्लतीर्थाख्यं रेवायां पापनाशनम् ॥ ५ ॥ यत्र वै स्नानमात्रेण ब्रह्महत्या प्रणश्यति ॥ तस्यापि सन्निधौ पार्थ रेवाया उत्तरे तटे ॥ ६ ॥ नानावृक्षसमाकीर्णं लतागुल्मोपशोभितम् ॥ नानापुष्पफलो

१ कार्यकारणात्—इ० पा० । २ श्रद्धयाशाविवर्जितः—इ० पाठे—फलाकांक्षाविवर्जितः—इत्यर्थो वोध्यः । 'अफलाकांक्षिभिः कर्म यत्तत्सात्त्विकमुच्यते' इति भगवता निष्कामकर्मणः प्राशस्त्यमभिहितम् । ३ पुराणे मुनयः—इ० पा० । ४ निन्दितमित्यर्थः । ५ अथ चैतत्—इ० पा० । ६ सः अहम्—इति सम्बन्धः । ७ न आप्नुयामि—इ० पाठे नाप्नोमि—इत्यर्थः । आप्नुयामीति त्वार्षः प्रयोगः । ८ सप्तकल्पस्मरा—सप्तकल्पपर्यंतं स्मरः स्मरणं फलप्रदं यस्याः सा—इत्यर्थो वोध्यः । यस्या एकवारं स्मरणे कृते सति सप्तकल्पपर्यन्तमुत्तमसौख्यादिफलप्राप्तिर्भवतीति भावः । ९ प्रकीर्त्यते—इ० पा० ।

पेतं कदलीखंडमंडितम् ॥ ७ ॥ अनेकश्वापदाकीर्णं विहगैरनुनादितम् ॥ सुगंधपुष्पशोभाढ्यं मयूररवनादितम् ॥ ८ ॥ भ्रमरैः सर्वमुत्सृज्य निलीनं रावसंयुतम् ॥ यथा संसारमुत्सृज्य भक्तेन हरपादयोः ॥ ९ ॥ कोकिला मधुरैः स्वानैर्नादयंति तथा मुनीन् ॥ यथा कथामृताख्यानैर्ब्राह्मणा भवभीरुकान् ॥ १० ॥ यत्र वृक्षा ह्लादयंतिं फलैः पुष्पैश्च पत्रकैः ॥ छायाभिरपि काष्ठैश्च लोकानिव हरव्रताः ॥ ११ ॥ पुत्रपुत्रेति वाशंते यत्र पुत्रप्रियाः खगाः ॥ यथा शिवप्रियाः शैवा नित्यं शिवशिवेति च ॥ १२ ॥ एवंविधं मुनेस्तस्य भृगोराश्रममंडलम् ॥ विप्रैस्त्रैविद्यसंयुक्तैः सर्वतः समलंकृतम् ॥१३॥ ऋग्यजुःसामनिर्घोषैरापूरितदिगन्तरम् ॥ रुद्रभक्तेन धीरेण यथैव भुवनत्रयम् ॥ १४ ॥ तत्राहं पार्थ संप्राप्तो यत्रास्ते मुनिसत्तमः ॥ भृगुः परमधर्मात्मा तपसा द्योतितप्रभः ॥१५॥ आगच्छंतं तु मां दृष्ट्वा दीनं च मुदितं तथा ॥ अभ्युत्थानं कृतं सर्वैर्विप्रैर्भृगुपुरोगमैः ॥ १६ ॥ कृत्वा सुस्वागतं दत्त्वा अर्घाद्यं भृगुणा सह ॥ आसनेषूपविष्टास्ते मुनींद्रा ग्राहिता मया ॥ १७ ॥ विश्रांतं तु ततो ज्ञात्वा भृगुर्मामप्युवाच ह ॥ क गंतव्यं मुनिश्रेष्ठ कस्मादिह समागतः ॥ १८ ॥ आगमनकारणं सर्वं समाचक्ष्व परिस्फुटम् ॥ ततस्तं चिंतयाविष्टो भृगुं पार्थाहमब्रुवम् ॥ १९ ॥ श्रूयतामभिधास्यामि यदर्थमहमागतः ॥ मया पर्यटिता सर्वा ससमुद्रांता च मेदिनी ॥ २० ॥ द्विजानां भूमिदानार्थं मार्गमाणः पदेपदे ॥ निर्दोषां च पवित्रां च तीर्थेष्वपि समन्विताम् ॥ २१ ॥ रम्यां मनोरमां भूमिं न पश्यामि कथंचन ॥ ॥ भृगुरुवाच ॥ ॥ विप्राणां स्थापनार्थाय मयापि भ्रमता पुरा ॥ २२ ॥ पृथ्वी सागरपर्यंता दृष्टा सर्वा तदानघ ॥ महीनाम नदी पुण्या सर्वतीर्थमयी शुभा ॥ २३ ॥ दिव्या मनोरमा सौम्या महापापप्रणाशिनी ॥ नदीरूपेण तत्रैव पृथ्वी सा नात्र संशयः ॥ २४ ॥ पृथिव्यां यानि तीर्थानि दृष्टादृष्टानि नारद ॥ तानि सर्वाणि तत्रैव निवसंति महीजले ॥ २५ ॥ सा समुद्रेण संप्राप्ता पुण्यतोया महानदी ॥ संजातस्तत्र देवर्षे महीसागरसंगमः ॥ २६ ॥ स्तंभाख्यं तत्र तीर्थं तु त्रिषु लोकेषु विश्रुतम् ॥ तत्र ये मनुजाः स्नानं प्रकुर्वंति विपश्चितः ॥ २७ ॥ सर्वपापविनिर्मुक्ता नोपसर्पंति वै यमम् ॥ तत्राद्भुतं हि दृष्टं मे पुरा स्नातुं गतेन वै ॥ २८ ॥ तदहं कीर्तयिष्यामि मुने शृणु महाद्भुतम् ॥ यावत्स्नातुं व्रजाम्यस्मिन्महीसागरसंगमे ॥ २९ ॥ तीरे स्थितं प्रपश्यामि मुनींद्रं पावकोपमम् ॥ प्रांशुं वृद्धं चास्थिशेषं तपोलक्ष्म्या विभूषितम् ॥ ३० ॥ भुजावूर्ध्वौ ततः कृत्वा प्ररुदंतं मुहुर्मुहुः ॥

१ मयूररवमोदितम्--इ० पा० । २ वीर--इ० पा० । ३ ग्राहिताः--आसनोपवेशनार्थं प्रार्थिताः--इत्यर्थः । ४ वसन्ति च--इ०पा० । ५ विरूपितम्--इ०पा० ।

तं तथा दुःखितं दृष्ट्वा दुःखितोऽहमथाभवम् ॥ २१ ॥ सतां लक्षणमेतद्धि यद्दृष्ट्वा दुःखितं जनम् ॥ शतसंख्यं तस्य भवेत्तथाहं विललाप ह ॥ २२ ॥ अहिंसा सत्यमस्तेयं मानुष्ये सति दुर्लभम् ॥ ततस्तमुपसंगम्य पर्यपृच्छमहं तदा ॥ २३ ॥ किमर्थं रोदिषि मुने शोके किं कारणं तव ॥ सुगुह्यमपि चेद्ब्रूहि जिज्ञासा महती हि मे ॥ २४ ॥ मुनिस्ततो मामवदद्भृगो निर्भाग्यवानहम् ॥ तेन रोदिमि मा पृच्छ दुर्भाग्यं चालपेद्धि कः ॥ २५ ॥ तमहं विस्मयाविष्टः पुनरेवेदमब्रुवम् ॥ दुर्लभं भारते जन्म तत्रापि च मनुष्यता ॥ २६ ॥ मनुष्यत्वे ब्राह्मणत्वं मुनित्वं तत्र दुर्लभम् ॥ तत्रापि च तपःसिद्धिः प्राप्यैतत्पंचकं परम् ॥ २७ ॥ किमर्थं रोदिषि मुने विस्मयोऽत्र महान्मम ॥ एवं संपृच्छते मह्यमेतस्मिन्नेव चांतरे ॥२८॥ सुभद्रोनाम नाम्ना च मुनिस्तत्राभ्युपाययौ ॥ स हि मेरुं परित्यज्य ज्ञात्वा तीर्थस्य सारताम् ॥२९॥ कृताश्रमः पूजयति सदा स्तंभेश्वरं मुनिः ॥ सोऽप्येवं मामिवापृच्छन्मुनिं रोदनकारणम् ॥ ४० ॥ अथाहाचम्य स मुनिः श्रूयतां कारणं मुनी ॥ अहं हि देवशर्माख्यो मुनिः संयतवाङ्मनाः ॥ ४१ ॥ निवसामि कृतस्थानो गंगासागरसंगमे ॥ तत्र दर्शे तर्पयामि सदैव च पितॄनहम् ॥ ४२ ॥ श्राद्धांते ते च प्रत्यक्षा ह्याशिषो मे वदंति च ॥ ततः कदाचित्पितरः प्रहृष्टा मामथाब्रुवन् ॥ ४३ ॥ वयं सदात्र चायामो देवशर्मंस्तवांतिके ॥ स्थानेऽस्माकं कदाचित्त्वं न चायासि कुतः सुत ॥ ४४ ॥ स्थानं दिदृक्षुस्तच्चाहं न शक्तोऽस्मि निवेदितुम् ॥ ततः परममित्युक्त्वा गतवान्पितृभिः सह ॥ ४५ ॥ पितॄणां मंदिरं पुण्यं भौमलोकसमाश्रितम् ॥ तत्रतत्र स्थितश्चाहं तेजोमण्डलदुर्दृशान् ॥ ४६ ॥ दृष्ट्वाग्रतः पूजयाढ्यानपृच्छं स्वान्पितॄनिति ॥ के ह्यमी समुपायांति भृशं तृप्ता भृशार्चिताः ॥ भृशं प्रमुदिता नैव तथा यूयं यथा ह्यमी ॥ ४७ ॥ ॥ पितर ऊचुः ॥ ॥ भद्रं ते पितरः पुण्याः सुभद्रस्य महामुनेः ॥ तर्पितास्तेन मुनिना महीसागरसंगमे ॥ ४८ ॥ सर्वतीर्थमयी यत्र निलीना ह्युदधौ मही ॥ तत्र दर्शे तर्पयति सुभद्रस्तानमून्सुत ॥ ४९ ॥ इत्याकर्ण्य वचस्तेषां लज्जितोऽहं भृशं तदा ॥ विस्मितश्च प्रणम्यैतान्पितॄन्स्वं स्थानमागतः ॥ ५० ॥ यथा तथा चिंतितं च तत्र यास्याम्यहं स्फुटम् ॥ पुण्यो यत्रापि विख्यातो महीसागरसंगमः ॥ ५१ ॥ कृताश्रमश्च तत्रैव तर्पयिष्ये निजान्पितॄन् ॥ दर्शेदर्शे यथा चासौ स्तुत्यनामा सुभद्रकः ॥ ५२ ॥ किं तेन ननु जातेन कुलांगारेण पापिना ॥ यस्मिञ्जीवत्यपि निजाः पितरोऽन्यस्पृहाकराः ॥ ५३ ॥ इति संचिंत्य मुदितो रुचिं भार्यामथाब्रुवम् ॥ रुचे त्वया समायुक्तो महीसा

१ शतसंख्यं जायते तस्य तथाघकलितावहम्--ड०, तथाघकलिलापहम्-- ड० च पा० । २ तथा--ड० पा० । ३ संबोधनद्विवचनमिदम्--हे मुनी--हे भृगुसुभद्रौ--इत्यर्थः । ४ भौमलोकपरामाश्रितम्--ड० पा० । ५ कृतावसथ--ड० पा० । ६ सत्यनामा--ड० पा० ।

गरसंगमम् ॥ ५४ ॥ गत्वा स्थास्यामि तत्रैव शीघ्रं त्वं सम्मुखीभव ॥ पतिव्रतासि शुद्धासि कुलीनासि यशस्विनि ॥ तस्मादेतन्मम शुभे कर्तुमर्हसि चिंतितम् ॥ ५५ ॥ ॥ रुचिरुवाच ॥ ॥ हता तस्य जनिर्नाभूत्कथं पाप दुरात्मना ॥ ५६ ॥ श्मशानस्तंभ येनाहं दत्ता तुभ्यं कृतं त्वया ॥ इह कंदफलाहारैर्यत्किं तेन न[1] पूर्यते ॥ ५७ ॥ नेतुमिच्छसि मां तत्र यत्र क्षारोदकं सदा ॥ त्वमेव तत्र संयाहि नंदंतु तव पूर्वजाः ॥ ५८ ॥ गच्छ वा तिष्ठ वा वृद्ध वस वा कांकवच्चिरम् ॥ तथा ब्रुवन्त्यां तस्यां तु कर्णावस्मि पिधाय च ॥ ५९ ॥ विपुलं शिष्यमादिश्य गृह एकोऽत्र आगतः ॥ सोऽहं स्नात्वात्र संतर्प्य पितॄञ्छ्रद्धापरायणः ॥ ६० ॥ चिंतां सुविपुलां प्राप्तो नरके दुष्कृती यथा ॥ यदि तिष्ठामि चात्रैव अर्धदेहधरो ह्यहम् ॥ ६१ ॥ नरो हि गृहिणीहीनो अर्धदेह इति स्मृतः ॥ यथात्मना विना देहे कार्यं किंचिन्न सिध्यति ॥ ६२ ॥ एवं गृहिण्या हीनो हि न स कर्मसु शस्यते ॥ यो नरः स्त्रीषु देहेषु अनुरक्तस्त्वसौ पशुः ॥६३॥ अनयोर्हि फलं ग्राह्यं सारता नात्र काचन ॥ अर्धदेही च मनुजस्त्वसंस्पृश्यः सतां मतः ॥ ६४ ॥ औत्तानपादिरस्पृश्य उत्तमो हि सुरैः कृतः ॥ अथ चेत्तत्र संयामि न महीसागरस्ततः ॥६५॥ यामि वा तत्कथं पादौ चलतो मे कथं चन ॥ एतस्मिन्मे मनो विद्धं खिद्यतेऽज्ञानसंकटे ॥६६॥ अतोऽहमातिमुह्यामि भृशं शोचामि रोदिमि ॥ इति श्रुत्वा वचस्तस्य भृशं रोमांचपूरितम् ॥ ॥६७॥ साधुसाध्वित्यथोवाच तं सुभद्रोऽप्यहं तथा ॥ दण्डवच्च प्रणमितो महीसागरसङ्गमम् ॥६८॥ चिन्तयावश्च मनसि प्रतीकारं मुनेरुभौ ॥ यो हि मानुष्यमासाद्य जलबुद्बुदभंगुरम् ॥६९॥ परार्थाय भवत्येष पुरुषोऽन्ये पुरीषकाः ॥ ततः संचिंत्य प्राहेदं सुभद्रो मुनिसत्तमम् ॥७०॥ मा मुने परिखिद्यस्व देवशर्मन्स्थिरो भव ॥ अहं ते नाशयिष्यामि शोकं सूर्यस्तमो यथा ॥ ७१ ॥ गमिष्याम्याश्रमं त्वं च नात्रापि परिहास्यते ॥ शृणु तत्कारणं तुभ्यं तर्पयिष्ये पितॄनहम् ॥ ७२ ॥ ॥ देवशर्मोवाच ॥ ॥ एवं ते वदमानस्य आयुरस्तु शतं समाः ॥ यदशक्यं महत्कर्म कर्तुमिच्छसि मत्कृते ॥ ॥ ७३ ॥ हर्षस्थाने विषादश्च पुनर्मां बाधते शृणु ॥ अपि वाक्यं शुभं सन्तो न गृह्णन्ति मुधा मुने ॥ ७४ ॥ कथमेतन्महत्कर्म कारयामि मुधा वद ॥ पुनः किंचित्प्रवक्ष्यामि यथा मे निष्कृतिर्भवेत् ॥७५॥ शापितोऽसि मया प्राणैर्यथा वच्मि तथा कुरु ॥ अहं सदा करिष्यामि दर्शे चोद्दिश्य ते पितॄन् ॥ ७६ ॥ श्राद्धं गंगार्णवे चात्र मत्पितॄणां त्वमाचर ॥ अहं चैवापि तपसः संचितस्यापि जन्मना ॥ चतुर्भागं प्रदास्यामि एवमेवैतदा

१ बकवत्--इ०पा० । २ असन्धिरार्पः । ३ तिष्ठन्- इ०पा० । ४ अर्धदेहस्तथा ह्यहम्--इ०पा० ।

चर ॥ ७७ ॥ ॥ सुभद्र उवाच ॥ ॥ यद्येवं तव संतोषस्त्वेवमस्तु मुनीश्वर ॥ साधूनां च यथा हर्षस्तथा कार्यं विजानता ॥ ७८ ॥ ॥ भृगुरुवाच ॥ ॥ देवशर्मा ततो हृष्टो दत्त्वा पुण्यं त्रिवाचिकम्[1] ॥ चतुर्थांशं ययौ धाम स्वं सुभद्रोऽपि[2] च स्थितः[3] ॥ ७९ ॥ एवंविधो नारदासौ महीसागरसंगमः ॥ यमनुस्मरतो मह्यं रोमांचोऽद्यापि वर्तते ॥ ८० ॥ ॥ नारद उवाच ॥ ॥ इति श्रुत्वा फाल्गुनाहं हर्षगद्गदया गिरा ॥ मृतोमृत इवावोचं साधुसाध्विति तं भृगुम् ॥ ८१ ॥ यूयं वयं गमिष्यामो महीतीरं सुशोभनम् ॥ आवामीक्षावहे सर्वं स्थानकं तदनुत्तमम् ॥ ८२ ॥ मम चैवं वचः श्रुत्वा भृगुः सह मयययौ ॥ समस्तं तु महापुण्यं महीकूलं निरीक्षितम् ॥ ८३ ॥ तद्दृष्ट्वा चातिहृष्टोहमासं रोमांचकंचुकः ॥ अब्रवं मुनिशार्दूलं हर्षगद्गदया गिरा ॥ ८४ ॥ त्वत्प्रसादात्करिष्यामि भृगो स्थानमनुत्तमम् ॥ स्वस्थानं गम्यतां ब्रह्मन्नतः कृत्यं विचिंतये ॥ ८५ ॥ एवं भृगुं चास्मि विसर्जयित्वा कल्लोलकोलाहलकौतुकीतटे ॥ अथोपविश्येदमचिंतयं तदा किं कृत्यमात्मानमिवैकयोगी[4] ॥ ८६ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे नारदार्जुनसंवादे महीसागरसंगमतीर्थमाहात्म्ये तृतीयोऽध्यायः ॥ ३ ॥ छ ॥

॥ ॥ नारद उवाच ॥ ॥ ततस्त्वहं चिंतयामि कथं स्थानमिदं भवेत् ॥ ममायत्तं यतो राज्ञां भूमिरेषा सदा वशे ॥ १ ॥ यत्त्वहं धर्मवर्माणं गत्वा याचे ह मेदिनीम् ॥ अर्पयत्येव स च मे याचितो न पुनः परः ॥ २ ॥ तथा हि मुनिभिः प्रोक्तं द्रव्यं त्रिविधम्[5]उत्तमम्[6] ॥ शुक्लं मध्यं च शबलमधमं कृष्णमुच्यते ॥ ३ ॥ श्रुतेः संपादनाच्छिष्यात्प्राप्तं शुक्लं च कन्यया[7] ॥ तथा कुसीदवाणिज्यकृषियाचितमेव च ॥ ४ ॥ शबलं प्रोच्यते सद्भिर्द्यूतचौर्येण साहसैः ॥ व्याजेनोपार्जितं[8] यच्च तत्कृष्णं समुदाहृतम् ॥ ५ ॥ शुक्लवित्तेन यो धर्मं प्रकुर्याच्छ्रद्धयान्वितः ॥ तीर्थं पात्रं समासाद्य देवत्वे तत्समश्नुते ॥ ६ ॥ राजसेन च भावेन वित्तेन शबलेन च ॥ प्रदद्याद्दानमर्थिभ्यो मानुष्यत्वे तदश्नुते ॥ ७ ॥ तमोवृतस्तु यो दद्यात्कृष्णवित्तेन मानवः ॥ तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥ ८ ॥ तत्तु याचितद्रव्यं मे राजसं हि स्फुटं भवेत् ॥ अथ ब्राह्मणभावेन नृपं याचे प्रतिग्रहम् ॥ ९ ॥ तदप्यहो चातिकष्टं हेतुना तेन मे मतम् ॥ अयं प्रतिग्रहो घोरो मध्वास्वादो विषोपमः ॥ १० ॥ प्रतिग्रहेण संयुक्तं

१ हि—इ० पा० । २ त्रिवारकम्—इ० पा० । ३ व्यवस्थितः—इ० पा० । ४ यथैकयोगी स्वरूपं चिन्तयति तथाहं किं कृत्यमित्याचिंतयमिति योजना । ५ विविधम्—इ० पा० । ६ उत्तममित्यस्य शुक्लमित्यनेनाग्रिमेणान्वयः । ७ श्रुतेः संपादनाद्वेदस्याध्यापनेन शिष्यद्वारा प्राप्तं यद्द्रव्यं तच्छुक्लमित्याचक्षते । कन्यया प्राप्तं तथा कुसीदवाणिज्यकृषितः प्राप्तं तथा च याचितप्राप्तं च यद्द्रव्यं तच्छबलमित्युत्तरेण सम्बन्धो बोध्यः । कचित्पुस्तके 'शुल्कं च कन्यया' इति पाठो दृश्यते । परं तस्य 'कन्यया' इति पदसाहचर्येण रूढरीत्या 'शुल्कम्' इति पाठेन भवितव्यमिति नातिप्रबुद्धलेखकप्रमादकृतमेव विलेखनमिति भाति । प्रसंगतश्चात्र 'शुक्लम्' इत्येतदन्तस्यैवैकस्य शुक्लविभागस्य वक्तव्यत्वेन समौचित्यात् 'श्रुतेः सम्पादनाच्छिष्यात्प्राप्तं शुक्लम्' इत्येतस्यैवैकवाक्यत्वमुचितमिति सुधीभिरवधेयम् । ८ अच्छेणोपार्जितम्—इ०, अज्ञेनोपार्जितम्—इ० च पा० ।

ह्यमीवमाविशेद्विजम् ॥ तस्मादहं निवृत्तश्च पापादस्मात्प्रतिग्रहात् ॥ ११ ॥ ततः केनाप्युपायेन द्वयोरन्यतरेण तु ॥ स्वायत्तं स्थानकं कुर्म एतत्सञ्चिंतये मुहुः ॥ १२ ॥ यथा कुभार्यः पुरुषश्चिन्तांतं न प्रपद्यते ॥ तथैव विमृशंश्चाहं चिंतांतं न लभाम्यणु ॥ १३ ॥ एतस्मिन्नन्तरे पार्थ स्नातुं तत्र समागताः ॥ बहवो मुनयः पुण्ये महीसागरसंगमे ॥ १४ ॥ अहं तानब्रवं सर्वान्कुतो यूयं समागताः ॥ ते मामूचुः प्रणम्याथ सौराष्ट्रविषये मुने ॥ १५ ॥ धर्मवर्मेति नृपतिर्योऽस्य देशस्य भूपतिः ॥ स तु दानस्य तत्त्वार्थी तेपे वर्षगणान्बहून् ॥ १६ ॥ ततस्तं प्राह खे वाणी श्लोकमेकं नृप शृणु ॥ द्विहेतु षडधिष्ठानं षडंगं च द्विपाकयुक् ॥ १७ ॥ चतुःप्रकारं त्रिविधं त्रिनाशं दानमुच्यते ॥ इत्येकं श्लोकमाभाष्य खे वाणी विरराम ह ॥ १८ ॥ श्लोकस्यार्थं नावभाषे पृच्छमानापि नारद ॥ ततो राजा धर्मवर्मा पटहेनान्वबोधयत् ॥ १९ ॥ यस्तु श्लोकस्य चैवास्य लब्धस्य तपसा मया ॥ करोति सम्यग्व्याख्यानं तस्य चैतद्ददाम्यहम् ॥ २० ॥ गवां च सप्त नियुतं सुवर्णं तावदेव तु ॥ सप्तग्रामान्प्रयच्छामि श्लोकव्याख्यां करोति यः ॥ २१ ॥ पटहेनेति नृपतेः श्रुत्वा राज्ञो वचो महत् ॥ आजग्मुर्बहुदेशीया ब्राह्मणाः कोटिशो मुने ॥ २२ ॥ पुनर्दुर्बोधविन्यासः श्लोकस्तैर्विप्रपुंगवैः ॥ आख्यातुं शक्यते नैव गुडो मूकैर्यथा मुने ॥ २३ ॥ वयं च तत्र याताः स्मो धनलोभेन नारद ॥ दुर्बोधत्वान्नमस्कृत्य श्लोकं चात्र समागताः ॥ २४ ॥ दुर्व्याख्येयस्त्वयं श्लोको धनं लभ्यं न चैव नः ॥ तीर्थयात्रां कथं यामीत्येवाचिंत्यात्र चागताः ॥ २५ ॥ एवं फाल्गुन तेषां तु वचः श्रुत्वा महात्मनाम् ॥ अतीव संप्रहृष्टोऽहं तान्विसृज्येत्यचिंतयम् ॥ २६ ॥ अहो प्राप्त उपायो मे स्थानप्राप्तौ न संशयः ॥ श्लोकं व्याख्याय नृपतेर्लप्स्ये स्थानं धनं तथा ॥ २७ ॥ विद्यामूल्येन नैवं च याचितः स्यात्प्रतिग्रहः ॥ सत्यमाह पुराणर्षिर्वासुदेवो जगद्गुरुः ॥२८॥ धर्मस्य यस्य श्रद्धा स्यान्न च सा नैवं पूर्यते॥पापस्य यस्य श्रद्धास्यान्न च सापि न पूर्यते॥२९॥एवं विचिंत्य विद्वांसः प्रकुर्वंति यथारुचि ॥ सत्यमेतद्विभोर्वाक्यं दुर्लभोऽपि यथा हि मे॥३०॥ मनोरथोऽयं सफलः संभूतोंकुरितः स्फुटम् ॥ एनं च दुर्विदं श्लोकमहं जानामि सुस्फुटम् ॥३१॥ अमूर्तैः पितृभिः पूर्वमेष ख्यातो हि मे पुरा ॥ एवं हर्षान्वितः पार्थ संचिंत्याऽहं ततो मुहुः॥३२॥

१ अमीवं पापमित्यर्थः । अपायमिति पाठान्तरम् । तत्र नाशमित्यर्थः । २ अनुदात्तेत्त्वलक्षणात्मनेपदस्य चक्षिङो ङित्करणज्ञापकेनानित्यत्वात्परस्मैपदम्, आर्षं वा । ३ द्विहेतुः--इ० पा० । ४ खेचरी--इ० पा० । ५ वै--इ० पा० । ६ दुर्बोधविज्ञानः--इ० पा० । ७ द्विजपुंगवैः--इ० पा० । ७ गूढः--इ० पा० । परमत्र गुडो मूकैरित्येव पाठः साधुः । ८ यामि--इति प्रत्येकवित्रक्षयैकवचनम् । ९ तेन इ० पा० । १० प्रकुर्वन्तु--इ० पा० । ११ सस्फुटम्--इ० पा० ।

प्रणम्यं तीर्थं चलितो महीसागरसंगमम् ॥ वृद्धब्राह्मणरूपेण ततोहं यातवान्नृपम् ॥ ३३ ॥ इदं भणितवानस्मि श्लोकव्याख्यां नृप शृणु ॥ यत्ते
पटहविख्यातं दानं च प्रगुणीकुरु ॥ ३४ ॥ एवमुक्ते नृपः प्राह प्रोचुरेवं हि कोटिशः ॥ द्विजोत्तमाः पुनर्नास्यं प्रोक्तुमर्थो हि शक्यते ॥ ३५ ॥ के
द्विहेतू षडाख्यातान्यधिष्ठानानि कानि च ॥ कानि चैव षडंगानि कौ द्वौ पाकौ तथा स्मृतौ ॥३६॥ के च प्रकाराश्चत्वारः किंस्वित्तत्त्रिविधं द्विज ॥
त्रयो नाशाश्च के प्रोक्ता दानस्यैतत्स्फुटं वद ॥ ३७ ॥ स्फुटान्प्रश्नानिमान्सप्त यदि वक्ष्यसि ब्राह्मण ॥ ततो गवां सप्तनियुतं सुवर्णं तावदेव तु ॥
॥३८॥ सप्त ग्रामांश्च दास्यामि नो चेद्यास्यसि स्वं गृहम् ॥ इत्युक्तवचनं पार्थ सौराष्ट्रस्वामिनं नृपम् ॥ ३९ ॥ धर्मवर्माणमस्त्वेवं प्रावोचमवधारय ॥
श्लोकव्याख्यां स्फुटां वक्ष्ये दानहेतू च तौ शृणु ॥ ४० ॥ अल्पत्वं वा बहुत्वं वा दानस्याभ्युदयावहम् ॥ श्रद्धा शक्तिश्च दानानां वृद्धयक्षयकरे
हि ते ॥ ४१ ॥ तत्र श्रद्धाविषये श्लोका भवन्ति ॥ कायक्लेशैश्च बहुभिर्न चैवार्थस्य राशिभिः ॥४२॥ धर्मः संप्राप्यते सूक्ष्मः श्रद्धा धर्मोऽद्भुतं तपः ॥
श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत् ॥४३॥ सर्वस्वं जीवितं चापि दद्यादश्रद्धया यदि ॥ नाप्नुयात्स फलं किंचिच्छ्रद्दधानस्ततो भवेत् ॥ ४४ ॥
श्रद्धया साध्यते धर्मो महद्भिर्नार्थराशिभिः ॥ अकिंचना हि मुनयः श्रद्धावंतो दिवं गताः ॥ ४५ ॥ त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ ४६ ॥ यजंते सात्त्विका देवान्यक्षरक्षांसि राजसाः ॥ प्रेतान्भूतपिशाचांश्च यजंते तामसा जनाः ॥
॥ ४७ ॥ तस्माच्छ्रद्धावता पात्रे दत्तं न्यायार्जितं हि यत् ॥ तेनैव भगवान्रुद्रः स्वल्पकेनापि तुष्यति ॥ ४८ ॥ शक्तिविषये च श्लोका भवंति ॥
कुटुंबभुक्तवसनाद्देयं यदतिरिच्यते ॥ मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥ ४९ ॥ शक्ते परजने दाता स्वजने दुःखजीविनि ॥ मध्वापा
नविषादः स धर्माणां प्रतिरूपकः ॥ ५० ॥ भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदेहिकम् ॥ तद्भवत्यसुखोदर्कं जीवतोऽस्य मृतस्य च ॥ ५१ ॥ सामा
न्यं याचितं न्यासमाधिर्दाराश्च दर्शनम् ॥ अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥ ५२ ॥ आपत्स्वपि न देयानि नववस्तूनि पंडितैः ॥
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥ ५३ ॥ इति ते गदितौ राजन्द्वौ हेतू श्रूयतामतः ॥ अधिष्ठानानि वक्ष्यामि षडेव शृणु तान्यपि ॥५४॥
धर्ममर्थं च कामं च व्रीडाहर्षभयानि च ॥ अधिष्ठानानि दानानां षडेतानि प्रचक्षते ॥ ५५ ॥ पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् ॥ केवलं

१ प्रणम्यातीव तीर्थं च--पु० पा० । २ नाम--पु० पा० । ३ द्वौ--पु० पा० । ४ गाल्त्वं वा--पु०, गात्यत्वं वा--पु० पा० । ५ स्वर्गस्य मोक्षस्य--पु० च पा० । ६ मुनिः--पु०, मुने--पु० च पा० ।
७ च--पु० पा० ।

धर्मबुद्धया यद्धर्मदानं तदुच्यते ॥ ५६ ॥ धनिनं धनलोभेन लोभयित्वार्थमाहरेत् ॥ तदर्थदानमित्याहुः कामदानमतः शृणु ॥ ५७ ॥ प्रयोजनमपेक्ष्यैव प्रसंगाद्यत्प्रदीयते ॥ अनर्हेषु सरागेण कामदानं तदुच्यते ॥ ५८ ॥ संसदि व्रीडयाऽऽश्रुत्य अर्थिभ्यः प्रददाति च ॥ प्रतिदीयते च यद्दानं व्रीडादानमिति श्रुतम् ॥ ५९ ॥ दृष्ट्वा प्रियाणि श्रुत्वा वा हर्षवद्यत्प्रदीयते ॥ हर्षदानमिति प्रोक्तं दानं तद्धर्मचिंतकैः ॥ ६० ॥ आक्रोशानर्थहिंसानां प्रतीकाराय यद्भवेत् ॥ दीयतेऽनुपकर्तृभ्यो भयदानं तदुच्यते ॥ ६१ ॥ प्रोक्तानि षडधिष्ठानान्यंगान्यपि च षट्च्छृणु ॥ दाता प्रतिग्रहीता च शुद्धिर्देयं च धर्मयुक् ॥ ६२ ॥ देशकालौ च दानानामंगान्येतानि षड्विदुः ॥ अपरोगी च धर्मात्मा दित्सुरव्यसनः शुचिः ॥ ६३ ॥ अनिंद्याजीवकर्मा च षड्भिर्दाता प्रशस्यते ॥ अनृजुश्चाश्रद्दधानोऽशांतात्मा धृष्टभीरुकः ॥ ६४ ॥ असत्यसंधो निद्रालुर्दातायं तामसोऽधमः ॥ त्रिशुक्लः कृशवृत्तिश्च घृणालुः सकलेंद्रियः ॥ ६५ ॥ विमुक्तो योनिदोषेभ्यो ब्राह्मणः पात्रमुच्यते ॥ सौमुख्यादभिसंप्रीतिरर्थिनां दर्शने सदा ॥ सत्कृतिश्चानसूया च तदा शुद्धिरिति स्मृता ॥ ६६ ॥ अपराबाधमक्लेशं स्वयत्नेनार्जितं धनम् ॥ स्वल्पं वा विपुलं वापि देयमित्यभिधीयते ॥ ६७ ॥ तेनापि किल धर्मेण उद्दिश्य किल किंचन ॥ देयं तद्धर्मयुगिति शून्ये शून्यं फलं मतम् ॥ ६८ ॥ न्यायेन दुर्लभं द्रव्यं देशे कालेपि वा पुनः ॥ दानार्हौ देशकालौ तौ स्यातां श्रेष्ठौ न चान्यथा ॥ ६९ ॥ षडंगानीति चोक्तानि द्वौ च पाकावतः शृणु ॥ द्वौ पाकौ दानजौ प्राहुः परत्राथ त्विहोच्यते ॥ ७० ॥ सद्भ्यो यद्दीयते किंचित्तत्परत्रोपतिष्ठति ॥ असत्सु दीयते किंचित्तदानमिह भुज्यते ॥ ७१ ॥ द्वौ पाकाविति निर्दिष्टौ प्रकारांश्चतुरः शृणु ॥ ध्रुवमाहुस्त्रिकं काम्यं नैमित्तिकमिति क्रमात् ॥ ७२ ॥ वैदिको दानमार्गोऽयं चतुर्धा वर्ण्यते द्विजैः ॥ प्रपारामतडागादिसर्वकामफलं ध्रुवम् ॥ ७३ ॥ तदाहुस्त्रिकमित्याहुर्दीयते यद्दिनेदिने ॥ अपत्यविजयैश्वर्यस्त्रीबालार्थं प्रदीयते ॥ ॥ ७४ ॥ इच्छासंस्थं च यद्दानं काम्यमित्यभिधीयते ॥ कालापेक्षं क्रियापेक्षं गुणापेक्षमिति स्मृतौ ॥ ७५ ॥ त्रिधा नैमित्तिकं प्रोक्तं सदा होमविवर्जितम् ॥ इति प्रोक्ताः प्रकारास्ते त्रैविध्यमभिधीयते ॥ ७६ ॥ अष्टोत्तमानि चत्वारि मध्यमानि विधानतः ॥ कानीयसानि शेषाणि त्रिविधत्वमिदं विदुः ॥७७॥ गृहप्रासादविद्याभूगोकूपप्राणहाटकम् ॥ एतान्युत्तमदानानि उत्तमद्रव्यदानतः ॥ ७८ ॥ अन्नारामं च वासांसि हयप्र

१ अर्थेऽर्थिभ्यः प्रयाति च प्रदीयते च यद्दानम्–इ० पा० । २ अनिन्द्या जीवकर्मा च–आजीवः आजीविका कर्म व्यवसायः अनिन्द्ये आजीव–कर्मणीउपजीविकाव्यवसायौ यस्य सः–अनिन्द्याजीवकर्मा अगर्हितोपजीविकाव्यवसाय इत्यर्थः । ३ दृढभीरुकः–इ० पा० । ४ क्रीडालुः–इ० पा० । ५ अपराबाधम्–न विद्यन्ते परस्य बाधा यस्मिंस्तदपराबाधम् । परबाधाविवर्जितमित्यर्थः । ६ स्वसत्सु–इ० पा० । ७ आह्नत्रिकामिति दानस्य संज्ञा । ८ प्राणदानं च रुग्णस्यौषधेन निरामयीकरणम् मरणोन्मुखस्य अन्नादिना रक्षणम् अग्निजलाद्युपसृष्टस्य परित्राणं चेत्येवमाद्यनेकसंकटग्रस्तस्य व्याघ्रादिभयहेतुभ्यो रक्षणं प्राणदानमित्युच्यते ।

भृतिवादनम् ॥ दानानि मध्यमानीति मध्यमद्रव्यदानतः ॥ ७९ ॥ उपानच्छत्रपात्रादिदधिमध्वासनानि च ॥ ८० ॥ दीपकाष्ठोपलादीनि चरमं बहुवार्षिकम् ॥ इति कानीयसान्याहुर्दाननाशत्रयं शृणु ॥८१॥ यद्दत्त्वा तप्यते पश्चादासुरं तद्वृथा मतम् ॥ अश्रद्धया यद्ददाति राक्षसं स्याद्वृथैव तत् ॥ ८२ ॥ यच्चाक्रुश्य ददात्यंग दत्त्वा वाक्रोशति द्विजम् ॥ पैशाचं तद्वृथा दानं दाननाशास्त्रयस्त्वमी ॥ ८३ ॥ इति सप्तपदैर्बद्धं दानमाहात्म्य मुत्तमम् ॥ शक्त्या ते कीर्तितं राजन्साधु वाऽसाधु वा वद ॥ ८४ ॥ ॥ धर्मवर्मोवाच ॥ ॥ अद्य मे सफलं जन्म अद्य मे सफलं तपः ॥ अद्य ते कृतकृत्योऽस्मि कृतः कृतिमतां वर ॥ ८५ ॥ पठित्वा सकलं जन्म ब्रह्मचारी यथा वृथा ॥ बहुक्लेशात्प्राप्तभार्यः सा वृथाऽप्रियवादिनी ॥ ८६ ॥ क्लेशेन कृत्वा कूपं वा स च क्षारोदको वृथा ॥ बहुक्लेशैर्जन्म नीतं विना धर्मं तथा वृथा ॥ ८७ ॥ एवं मे यद्वृथा नाम जातं तत्सफलं त्वया ॥ कृतं तस्मान्नमस्तुभ्यं द्विजेभ्यश्च नमोनमः ॥ ८८ ॥ सत्यमाह पुरा विष्णुः कुमारान्विष्णुसद्मनि ॥ ८९ ॥ नाहं तथाद्मि यजमानहविर्वितानश्च्योतद्घृतप्लुतमदन्हुतभुङ्मुखेन ॥ यद्ब्राह्मणस्य मुखतश्चरतोनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥ ९० ॥ तन्मयाऽशर्मणा वापि यद्विप्रेष्वप्रियं कृतम् ॥ सर्वस्य प्रभवो विप्रास्तत्क्षमंतां प्रसादये ॥ ९१ ॥ त्वं च कोसि न सामान्यः प्रणम्याहं प्रसादये ॥ आत्मानं ख्यापय मुने प्रोक्तश्चेत्यब्रवं तदा ॥ ९२ ॥ ॥ नारद उवाच ॥ ॥ नारदोऽस्मि नृपश्रेष्ठ स्थानकार्थी समागतः ॥ प्रोक्तं च देहि मे द्रव्यं भूमिं च स्थानहेतवे ॥ ९३ ॥ यद्यपीयं देवतानां भूमिर्द्रव्यं च पार्थिव ॥ तथापि यस्मिन्यः काले राजा प्रार्थ्यः स निश्चितम् ॥ ९४ ॥ सहीश्वरस्यावतारो भर्ता दाताऽभयस्य सः ॥ तथैव त्वामहं याचे द्रव्यशुद्धिपरीप्सया ॥ पूर्वं ममालयं देहि देयार्थे प्रार्थनापरः ॥ ९५ ॥ ॥ ॥ ॥ राजोवाच ॥ यदि त्वं नारदो विप्र राज्यमस्त्वखिलं तव ॥ अहं हि ब्राह्मणानां ते दास्यं कर्ता न संशयः ॥ ९६ ॥ ॥ नारद उवाच ॥ ॥ ॥ यद्यस्माकं भवान्भक्तस्तत्ते कार्यं च नो वचः ॥ ९७ ॥ सर्वं यत्तदेहि मे द्रव्यमुक्तं भुवं च मे सप्तगव्यूतिमात्राम् ॥ भूयात्त्वत्तोप्यस्य

---

१ दानानीति शेषः । इति कानीयसानि दानान्याहुरिति वाक्यपूर्तिः । २ भवेत्--इ०पा० । ३ च--इ०पा० । ४ पूर्वमिति । देयार्थे--यत्त्वया मे देयं तत्स्थापनार्थं पूर्वं प्रथमं मम आलयं स्थानं प्रार्थनापरः प्रार्थनां पिपर्तीति प्रार्थनापरः कामपूरकः त्वं देहि । यत्त्वया पूर्वं प्रतिश्रुतं ''गवां च सप्तनियुतं सुवर्णं तावदेव तु । सप्त ग्रामान्प्रयच्छामि श्लोकव्याख्यां करोति यः''इति, तावतोऽस्य त्वद्देयस्य स्थापनार्थं मम आलयं विपुलगावासस्थानं देहीत्यर्थो बोध्यः ।

रक्षेति सोऽपि मेने त्वहं चिंतये चार्थशेषम् ॥ ९८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे नारदार्जुनसंवादे दानभेदप्रशंसावर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततोऽहं धर्मवर्माणं प्रोच्य तिष्ठेद्धनं त्वयि ॥ कृत्यकाले ग्रहीष्यामीत्यागमं रैवतं गिरिम् ॥ १ ॥ आसं प्रमुदितश्चाहं पश्यंस्तं गिरिसत्तमम् ॥ आह्वयानं नरान्साधून्भूमेर्भुजमिवोच्छ्रितम् ॥ २ ॥ यस्मिन्नानाविधा वृक्षाः प्रकाशंते समंततः ॥ साधुं गृहपतिं प्राप्य पुत्रभार्यादयो यथा ॥ ३ ॥ मुदिता यत्र संतृप्ता वाशंते कोकिलादयः ॥ सद्गुरोर्ज्ञानसंपन्ना यथा शिष्यगणा भुवि ॥ ४ ॥ यत्र तप्त्वा तपो मर्त्या यथेप्सितमवाप्नुयुः ॥ श्रीमहादेवमासाद्य भक्तो यद्वन्मनोरथम् ॥ ॥ ५ ॥ तस्याहं च गिरेः पार्थ समासाद्य महाशिलाम् ॥ शीतसौरभ्यमंदेन प्रीणितोऽचिंतयं हृदि ॥ ६ ॥ तावन्मया स्थानमाप्तं यदतीव सुदुर्लभम् ॥ इदानीं ब्राह्मणार्थेऽहं कुर्वे तावदुपक्रमम् ॥ ७ ॥ ब्राह्मणाश्च विलोक्या मे ये हि पात्रतमा मताः ॥ तथा हि चात्र श्रूयंते वचांसि श्रुतिवादिनाम् ॥ ८ ॥ न जलोत्तरणे शक्ता यद्वन्नौः कर्णवर्जिता ॥ तद्वच्छ्रेष्ठोऽप्यनाचारो विप्रो नोद्धरणक्षमः ॥ ९ ॥ ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ॥ तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते ॥ १० ॥ दानपात्रमतिक्रम्य यदपात्रे प्रदीयते ॥ तद्दत्तं गामतिक्रम्य गर्दभस्य गवाह्निकम् ॥ ११ ॥ ऊषरे वापितं बीजं भिन्नभांडे च गोदुहम् ॥ भस्मनीव हुतं हव्यं मूर्खे दानमशाश्वतम् ॥ १२ ॥ विधिहीने तथा ऽपात्रे यो ददाति प्रतिग्रहम् ॥ न केवलं हि तद्याति शेषं पुण्यं प्रणश्यति ॥ १३ ॥ भूराप्ता गौस्तथा भोगाः सुवर्णं देहमेव च ॥ अश्वश्चक्षुस्तथा वासो घृतं तेजस्तिलाः प्रजाः ॥ १४ ॥ घ्नंति तस्मादविद्वांस्तु बिभियाच्च प्रतिग्रहात् ॥ स्वल्पकेनाप्यविद्वांस्तु पंके गौरिव सीदति ॥ १५ ॥ तस्माद्ये गूढतपसो गूढस्वाध्यायसाधकाः ॥ स्वदारनिरताः शांतास्तेषु दत्तं सदाऽक्षयम् ॥ १६ ॥ देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥ पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ १७ ॥ न विद्यया केवलया तपसा वापि पात्रता ॥ यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते ॥ १८ ॥ तेषां त्रयाणां मध्ये च विद्या मुख्यो महागुणः ॥ विद्यां विनांधवद्विप्राश्चक्षुष्मंतो हि ते मताः ॥ १९ ॥ तस्माच्चक्षुष्मतो विद्वान्देशे देशे परीक्षयेत् ॥ प्रश्नान्ये मम वक्ष्यंति तेभ्यो दास्याम्यहं ततः ॥२०॥ इति संचिंत्य मनसा तस्माद्देशात्समुत्थितः ॥

१ धनं त्वयि तिष्ठेत्--इदानीं त्वत्समीप एव तिष्ठतु--कृत्यकाले--यदा धनस्य कार्यं स्यात्तदा तद्धनं ग्रहीष्यामि--इति योजना । २ वसन्ते--इ०पा० । ३ वायुनेति शेषः । ४ भिन्नभाण्डेषु--इ०पा० ।

आश्रमेषु महर्षीणां विचराम्यस्मिं फाल्गुन ॥ २१ ॥ इमाञ्छ्लोकान्गायमानः प्रश्नरूपाञ्छृणुष्व तान् ॥ मातृकां को विजानाति कतिधा कीदृशा
क्षराम् ॥ २२ ॥ पंचपंचाद्भुतं गेहं को विजानाति वा द्विजः ॥ बहुरूपां स्त्रियं कर्तुमेकरूपां च वत्ति कः ॥ २३ ॥ को वा चित्रकथाबंधं वेत्ति संसार
गोचरः ॥ को वार्णवमहाग्राहं वेत्ति विद्यापरायणः ॥ २४ ॥ को वाष्टविधं ब्राह्मण्यं वेत्ति ब्राह्मणसत्तमः ॥ युगानां च चतुर्णां वा को मूलदिवसा
न्वदेत् ॥ २५ ॥ चतुर्दशमनूनां वा मूलवासरं वेत्ति कः ॥ कस्मिंश्चैव दिने प्राप पूर्वं वा भास्करो रथम् ॥ २६ ॥ उद्वेजयति भूतानि कृष्णाहिरिव
वेत्ति कः ॥ को वास्मिन्घोरसंसारे दक्षदक्षतमो भवेत् ॥ २७ ॥ पंथानावपि द्वौ कश्चिद्वेत्ति वक्ति च ब्राह्मणः ॥ इति मे द्वादश प्रश्नान्ये विदुर्ब्राह्मणो
त्तमाः ॥ २८ ॥ ते मे पूज्यतमास्तेषामहमाराधकश्चिरम् ॥ इत्यहं गायमानो वै भ्रमितः सकलां महीम् ॥ २९ ॥ ते चाहुर्दुःखदाः ख्याताः प्रश्नास्ते
कुर्महे नमः ॥ इत्यहं सकलां पृथ्वीं विचिंत्यालब्धब्राह्मणः ॥ ३० ॥ हिमाद्रिशिखरासीनो भूयश्चिंतामवाप्तवान् ॥ सर्वे विलोकिता विप्राः किमतः
कर्तुमुत्सहे ॥३१॥ ततो मे चिंतयानस्य पुनर्जाता मतिस्त्वियम् ॥ अद्यापि न गतश्चाहं कलापग्राममुत्तमम् ॥३२॥ यस्मिन्विप्राः संवसंति मूर्ताजीव
तपांसि च ॥ चतुराशीतिसाहस्राः श्रुताध्ययनशालिनः ॥३३॥ स्थाने तस्मिन्गमिष्यामीत्युक्त्वाहं चलितस्तदा ॥ खेचरो हिममाक्रम्य परं पारं गत
स्ततः ॥३४॥ अद्राक्षं पुण्यभूमिस्थं ग्रामरत्नमहं महत् ॥ शतयोजनविस्तीर्णं नानावृक्षसमाकुलम् ॥ ३५ ॥ यत्र पुण्यवतां संति शतशः प्रवराश्रमाः ॥
सर्वेषामपि जीवानां यत्रान्योन्यं न दुष्टता ॥ ३६ ॥ यज्ञभाजां मुनीनां यदुपकारकरं सदा ॥ सतां धर्मवतां यद्वदुपकारो न शाम्यति ॥ ३७ ॥
मुनीनां यत्र परमं स्थानं चाप्यविनाशकृत् ॥ स्वाहास्वधावषट्कारहन्तकारो न नश्यति ॥३८॥ यत्र कृतयुगस्यार्थं बीजं पार्थावशिष्यते ॥ सूर्य
स्य सोमवंशस्य ब्राह्मणानां तथैव च ॥ ३९ ॥ स्थानकं तत्समासाद्य प्रविष्टोऽहं द्विजाश्रमान् ॥ तत्र ते विविधान्वादान्विवदंते द्विजोत्तमाः ॥४०॥
परस्परं चिंतयाना वेदा मूर्तिधरा यथा ॥ तत्र मेधाविनः केचिदर्थमन्यैः प्रपूरितम् ॥ ४१ ॥ विचिक्षिपुर्महात्मानो नभोगतमिवामिषम् ॥ तत्रा
हं करमुद्यम्य प्रावोचं पूर्यतां द्विजाः ॥ ४२ ॥ काकारावैः किमेतैर्वो यद्यस्ति ज्ञानशालिता ॥ व्याकुरुध्वं ततः प्रश्नान्मम दुर्विषहान्बहून् ॥ ४३ ॥
॥ ॥ ब्राह्मणा ऊचुः ॥ ॥ वद ब्राह्मण प्रश्नान्स्वाञ्छ्रुत्वाऽऽधास्यामहे वयम् ॥ परमो ह्येष नो लाभः प्रश्नान्पृच्छति यद्भवान् ॥ ४४ ॥ अहं

१ अस्मि--अहमित्यर्थः। विभक्तिप्रतिरूपकमव्ययमिदम्। २ इत्थम्--इ०पा०। ३ यत्र स्थानमनुत्तमम्--इ०पा०। ४ चिताण्डजाम्--इ०पा०।

पूर्विकया ते वै न्यषेधंत परस्परम् ॥ अहं पूर्वमहं पूर्वमिति वीरा यथा रणे ॥ ४५ ॥ ततस्तानब्रवं प्रश्नानहं द्वादश पूर्वकान् ॥ श्रुत्वा ते मामवोचंत लीलायंतो मुनीश्वराः ॥ ४६ ॥ किं ते द्विज बालप्रश्नैरमीभिः स्वल्पकैरपि ॥ अस्माकं यन्निहीनं त्वं मन्यसे स ब्रवीत्वमून् ॥ ४७ ॥ ततोतिविस्मितश्चाहं मन्यमानः कृतार्थताम् ॥ तेषां निहीनं संचिंत्य प्रावोचं प्रब्रवीत्वयम् ॥ ४८ ॥ ततः सुतनुनामा स बालोऽबालोऽभ्युवाच माम् ॥ मम मंदायते वाणी प्रश्नैः स्वल्पैस्तव द्विज ॥ तथापि वच्मि मां यस्मान्निहीनं मन्यते भवान् ॥ ४९ ॥ ॥ सुतनुरुवाच ॥ ॥ अक्षरास्तु द्विपंचाशन्मातृकायाः प्रकीर्तिताः ॥ ५० ॥ ॐकारः प्रथमस्तत्र चतुर्दश स्वरास्तथा ॥ स्पर्शाश्चैव त्रयस्त्रिंशदनुस्वारस्तथैव च ॥ ५१ ॥ विसर्जनीयश्च परो जिह्वामूलीय एव च ॥ उपध्मानीय एवापि द्विपंचाशदमी स्मृताः ॥ ५२ ॥ इति ते कथिता संख्या अर्थं चैषां शृणु द्विज ॥ अस्मिन्नर्थे चेतिहासं तव वक्ष्यामि यः पुरा ॥ ५३ ॥ मिथिलायां प्रवृत्तोऽभूद्ब्राह्मणस्य निवेशने ॥ मिथिलायां पुरा पुर्यां ब्राह्मणः कौथुमाभिधः ॥ ५४ ॥ येन विद्याः प्रपठिता वर्तंते भुवि या द्विज ॥ एकत्रिंशत्सहस्राणि वर्षाणां स कृतादरः ॥ ५५ ॥ क्षणमप्यनवच्छिन्नं पठित्वा गेहवानभूत् ॥ ततः केनापि कालेन कौथुमस्याभवत्सुतः ॥ ५६ ॥ जडवद्वर्त्तमानः स मातृकां प्रत्यपद्यत ॥ पठित्वा मातृकामन्यन्नाध्येति स कथंचन ॥ ५७ ॥ ततः पिता खिन्नरूपी जडं तं समभाषत ॥ अधीष्व पुत्रकाधीष्व तव दास्यामि मोदकान् ॥ ५८ ॥ अथान्यस्मै प्रदास्यामि कर्णावुत्पाटयामि ते ॥ ५९ ॥ ॥ पुत्र उवाच ॥ ॥ तात किं मोदकार्थाय पठ्यते लोभहेतवे ॥ पठनंनाम यत्पुंसां परमार्थं हि तत्स्मृतम् ॥ ६० ॥ ॥ कौथुम उवाच ॥ ॥ एवं ते वदमानस्य आयुर्भवतु ब्रह्मणः ॥ साध्वी बुद्धिरियं तेऽस्तु कुतो नाध्येष्यतः परम् ॥ ६१ ॥ ॥ पुत्र उवाच ॥ ॥ तात सर्वं परिज्ञेयं ज्ञातमत्रैव वै यतः ॥ ततः परं कंठशोषः किमर्थं क्रियते वद ॥ ६२ ॥ ॥ पितोवाच ॥ ॥ विचित्रं भाषसे बाल ज्ञातोऽत्रार्थश्च कस्त्वया ॥ ब्रूहि ब्रूहि पुनर्वत्स श्रोतुमिच्छामि ते गिरम् ॥ ६३ ॥ ॥ पुत्र उवाच ॥ ॥ एकत्रिंशत्सहस्राणि पठित्वापि त्वया पितः ॥ नानातर्कान्भ्रांतिरेव संधिता मनसि स्वके ॥ ६४ ॥ अयमयं चायमिति धर्मो यो दर्शनोदितः ॥ तेषु वातायते चेतस्तव तन्नाशयामि ते ॥ ६५ ॥ उपदेशं पठस्येव नैवार्थज्ञोऽसि तत्त्वतः ॥ पाठमात्रा हि ये विप्रा द्विपदाः पशवो हि ते ॥ ६६ ॥ तत्ते ब्रवीमि तद्वाक्यं मोहमार्तंडमद्भुतम् ॥ ६७ ॥ अकारः कथितो ब्रह्मा उकारो

१ अस्माकं मध्ये यं ब्राह्मणं प्रति निहीनं प्रज्ञया मन्दं स्वल्पज्ञं पण्डितं मन्यसे स ब्राह्मणोऽमूंस्त्वत्कृतान्प्रश्नान्ब्रवीतु । महतां पण्डितानामुत्तरदानयोग्यस्थेमानस्त्वत्प्रश्ना न सन्तीति भावः । २ च ब्रवीत्वयम्–इ० पा० ३ यः–इ० पा० । ४ ललमानः–इ० पा० । ५ कायशोषः–इ० पा० । ६ यत्–इ० पा० । ७ नैवार्थं शांसि तत्त्वतः–इ० पा० ।

विष्णुरुच्यते ॥ मकारश्च स्मृतो रुद्रस्त्रयश्चैते गुणाः स्मृताः ॥ ६८ ॥ अर्धमात्रा च या मूर्ध्नि परमः स सदाशिवः ॥ एवमोंकारमाहात्म्यं श्रुतिरेषा सनातनी॥६९॥ ॐकारस्य च माहात्म्यं याथात्म्येनं न शक्यते ॥ वर्षाणामयुतेनापि ग्रंथकोटिभिरेव वा ॥७०॥ पुनर्यत्सारसर्वस्वं प्रोक्तं तच्छ्रूयतां परम् ॥ अःकारांता अकाराद्या मनवस्ते चतुर्दश ॥ ७१ ॥ स्वायंभुवश्च स्वारोचिरौत्तमो रैवतस्तथा ॥ तामसश्चाक्षुपः षष्ठस्तथा वैवस्वतोऽधुना ॥ ॥७२॥ सावर्णिर्ब्रह्मसावर्णी रुद्रसावर्णिरेव च ॥ दक्षसावर्णिरेवापि धर्मसावर्णिरेव च ॥७३॥ रौच्यो भौत्यस्तथा चापि मनवोऽमी चतुर्दश ॥ श्वेतः पांडुस्तथा रक्तस्ताम्रः पीतश्च कापिलः ॥७४॥ कृष्णः श्यामस्तथा धूम्रः सुपिशंगः पिशंगकः ॥ त्रिवर्णः शबलो वर्णैः कर्कंधुर इति क्रमात् ॥ ७५ ॥ वैवस्वतः क्षकारश्च तात कृष्णः प्रदृश्यते ॥ ककाराद्या हकारांतास्त्रयस्त्रिंशच्च देवताः ॥ ७६ ॥ ककाराद्याष्ठकारांता आदित्या द्वादश स्मृताः ॥ धाता मित्रोऽर्यमा शक्रो वरुणश्चांशुरेव च ॥ ७७ ॥ भगो विवस्वान्पूपा च सविता दशमस्तथा ॥ एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते ॥ ७८ ॥ जघन्यजः स सर्वेपामादित्यानां गुणाधिकः ॥ डकाराद्या बकारांता रुद्राश्चैकादशैव तु ॥ ७९ ॥ कपाली पिंगलो भीमो विरूपाक्षो विलोहितः ॥ अजकः शासनः शास्ता शंभुश्चण्डो भवस्तथा ॥ ८० ॥ भकाराद्याः षकारांता अष्टौ हि वसवो मताः ॥ ध्रुवो घोरश्च सोमश्च आपश्चैव नलोऽनिलः ॥ ८१ ॥ प्रत्यूपश्च प्रभासश्च अष्टौ ते वसवः स्मृताः ॥ सौ हश्चेत्यश्विनौ ख्यातौ त्रयस्त्रिंशदिमे स्मृताः ॥ ८२ ॥ अनुस्वारो विसर्गश्च जिह्वामूलीय एव च ॥ उपध्मानीय इत्येते जरायुजास्तथांडजाः ॥ ८३ ॥ स्वेदजाश्चोद्भिजाश्चेति तेत जीवाः प्रकीर्तिताः॥ भावार्थः कथितश्चायं तत्त्वार्थं शृणु सांप्रतम् ॥ ८४ ॥ ये पुमांसस्त्वमून्देवान्समाश्रित्य क्रियापराः ॥ अर्धमात्रात्मके नित्ये पदे लीनास्त एव हि ॥ ८५ ॥ चतुर्णां जीवयोनीनां तदेव परिमुच्यते ॥ यदाभून्मनसा वाचा कर्मणा च यजेत्सुरान् ॥ ८६ ॥ यस्मिञ्छास्त्रे त्वमी देवा मानिता नैव पापिभिः ॥ तच्छास्त्रं हि न मंतव्यं यदि ब्रह्मा स्वयं वदेत् ॥ ८७ ॥ अमी च देवाः सर्वत्र श्रौते मार्गे प्रतिष्ठिताः ॥ पापण्डशास्त्रे सर्वत्र निपिद्धाः पापकर्मभिः ॥ ८८ ॥ तदमून्ये व्यतिक्रम्य तपो दानमथो जपम् ॥ प्रकुर्वंति दुरात्मानो वेपंते मरुतः पथि ॥ ८९ ॥ अहो मोहस्य माहात्म्यं पश्यताविजितात्मनाम् ॥ पठंति मातृकां पापा मन्यंते न सुरानिह ॥ ९० ॥ ॥ सुतनुरुवाच ॥ ॥ इति तस्य वचः श्रुत्वा पिताभूदतिविस्मितः ॥ पप्रच्छ च बहून्प्रश्नान्सोप्य

१ एषा ॐकाररूपा--सनातनी--श्रुतिः--सर्ववेदानामोंकारप्रभवत्वात्--"यो वेदादौ स्वरः प्रोक्तः" इत्याद्युक्तेः--'तस्य वाचकः प्रणवः' इति सनातनब्रह्मवाचकत्वादोंकारस्य सनातनत्वम् । २ वर्णयितुमिति शेषः । ३ प्रयत्यंते--ख० , प्रपश्यंते--ख० च पा० । ४ तात--सांतिगर्थे कश्यपूर्वोऽपि तातशब्दः । ५ भजते पुमान्--ख० पा० । ६ भगति--ख० पा० ।

वादीत्तथातथा ॥ ९१ ॥ मयापि तव प्रोक्तोऽयं मातृकाप्रश्न उत्तमः ॥ द्वितीयं शृणु तं प्रश्नं पंचपंचाद्भुतं गृहम् ॥ ९२ ॥ पंचभूतानि पञ्चैव कर्मज्ञानेंद्रियाणि च ॥ पंच पंचापि विषया मनोबुद्ध्यहमेव च ॥ ९३ ॥ प्रकृतिः पुरुषश्चैव पञ्चविंशः सदाशिवः ॥ पञ्चपञ्चभिरेतैस्तु निष्पन्नं गृहमुच्यते ॥ ९४ ॥ देहमेतदिदं वेद तत्त्वतो यात्यसौ शिवम् ॥ बहुरूपां स्त्रियं प्राहुर्बुद्धिं वेदांतवादिनः ॥ ९५ ॥ सा हि नानार्थभजनान्नानारूपं प्रपद्यते ॥ धर्मस्यैकस्य संयोगाद्बहुधाप्येकिकैव सा ॥ ९६ ॥ इति यो वेद तत्त्वार्थं नासौ नरकमाप्नुयात् ॥ मुनिभिर्यच्च न प्रोक्तं यन्न मन्येत दैवतान् ॥ ९७ ॥ वचनं तद्बुधाः प्राहुर्बंधं चित्रकथं त्विति ॥ यच्च कामान्वितं वाक्यं पंचमं वाप्यतः शृणु ॥ ९८ ॥ एको लोभो महान्ग्राहो लोभात्पापं प्रवर्तते ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ॥ ९९ ॥ लोभान्मोहश्च माया च मानः स्तम्भः परेप्सुता[1] ॥ अविद्याऽप्रज्ञता चैव सर्वं लोभात्प्रवर्तते ॥ १०० ॥ हरणं परवित्तानां परदाराभिमर्शनम् ॥ साहसानां च सर्वेषामकार्याणां क्रियास्तथा ॥ १०१ ॥ स लोभः सह मोहेन विजेतव्यो जितात्मना ॥ दम्भो द्रोहश्च निंदा च पैशुन्यं मत्सरस्तथा ॥ १०२ ॥ भवन्त्येतानि सर्वाणि लुब्धानामकृतात्मनाम् ॥ सुमहांत्यपि शास्त्राणि धारयंति बहुश्रुताः ॥ १०३ ॥ छेत्तारः संशयानां च लोभग्रस्ता[2] व्रजंत्यधः ॥ लोभक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ॥ १०४ ॥ अन्तःक्षुरा वाङ्मधुराः कूपाश्छन्नास्तृणैरिव ॥ कुर्वते ये बहून्मार्गांस्तांस्तान्हेतुबलान्विताः ॥ १०५ ॥ सर्वमार्गं विलुंपंति लोभाज्जातिषु निष्ठुराः ॥ धर्मावतंसकाः क्षुद्रा मुष्णंति ध्वजिनो[3] जगत् ॥ १०६ ॥ एतेऽतिपापिनो ज्ञेया नित्यं लोभसमन्विताः ॥ जनको युवनाश्वश्च वृषादर्भिः प्रसेनजित् ॥ ॥ १०७ ॥ लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये जनाधिपाः ॥ तस्मात्त्यजंति ये लोभं तेऽतिक्रामंति सागरम् ॥ १०८ ॥ संसाराख्यमतोऽन्ये ये ग्राहग्रस्ता न संशयः ॥ अथ ब्राह्मणभेदांस्त्वमष्टौ विप्रावधारय ॥ १०९ ॥ मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ॥ अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥ ११० ॥ एते ह्यष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ॥ तेषां परः परः श्रेष्ठो विद्यावृत्तविशेषतः ॥ १११ ॥ ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ॥ अनुपेतः क्रियाहीनो मात्र इत्यभिधीयते ॥ ११२ ॥ एकोद्देश्यमतिक्रम्य[4] वेदस्याचारवानृजुः ॥ स ब्राह्मण इति प्रोक्तो निभृतः सत्यवाग्घृणी ॥ ११३ ॥ एकां शाखां सकल्पां च षड्भिरंगैरधीत्य च ॥ षट्कर्मनिरतो विप्रः श्रोत्रियोनाम धर्मवित् ॥ ११४ ॥ वेदवेदांगत

१ परेप्सुता—परधनलिप्सेत्यर्थः । २ लोभत्रस्ताः—इ० पा० । ३ ध्वजिनः—धर्मध्वजिनः—दांभिकतया धृतधार्मिकवेषाः—इत्यर्थः । ४ एकोद्देश्यमतिक्रम्य—कामनां वर्जयित्वा—वेदस्याचारवान्—वेदोदितसदाचारकर्मानुष्ठानतत्पर इत्यर्थः ।

त्वज्ञः शुद्धात्मा पापवर्जितः ॥ श्रेष्ठः श्रोत्रियवान्प्राज्ञः सोऽनूचान इति स्मृतः ॥११५॥ अनूचानगुणोपेतो यज्ञस्वाध्याययंत्रितः ॥ भ्रूण इत्युच्यते शिष्टैः शेषभोजी जितेंद्रियः ॥११६॥ वैदिकं लौकिकं चैव सर्वज्ञानमवाप्य यः ॥ आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥११७॥ ऊर्ध्वरेता भवत्यग्र्यो नियताशी नसंश यी ॥ शापानुग्रहयोः शक्तः सत्यसंधो भवेदृषिः ॥ ११८ ॥ निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ॥ ध्यानस्थो निष्क्रियो दांतस्तुल्यमृत्कांचनो मुनिः ॥ ११९ ॥ एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः ॥ त्रिशुक्लानाम विप्रेंद्राः पूज्यन्ते सवनादिषु ॥१२०॥ इत्येवंविधविप्रत्वमुक्तं शृणु युगादयः ॥ नवमी कार्तिके शुक्ला कृतादिः परिकीर्तिता ॥ १२१ ॥ वैशाखस्य तृतीया या शुक्ला त्रेतादिरुच्यते ॥ माघे पञ्चदशीनाम द्वापरादिः स्मृता बुधैः ॥ १२२ ॥ त्रयोदशी नभस्ये च कृष्णा सा हि कलेः स्मृता ॥ युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः ॥ १२३ ॥ एताश्चतस्रस्तिथयो युगाद्या दत्तं हुतं चाक्षयमाशु विद्यात् ॥ युगेयुगे वर्षशतेन दानं युगादिकाले दिवसेन तत्फलम् ॥ १२४ ॥ युगाद्याः कथिता ह्येता मन्वाद्याः शृणु सांप्रतम् ॥ अश्वयुक्छुक्लनवमी द्वादशी कार्तिके तथा ॥ १२५ ॥ तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥ फाल्गुनस्य त्वमावास्या पौषस्यैकादशी तथा ॥ १२६ ॥ आषाढस्यापि दशमी माघमासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा तथाषाढी च पूर्णिमा ॥ १२७ ॥ कार्तिकी फाल्गुनी चैत्री ज्येष्ठे पञ्चदशी सिता ॥ मन्वंतरादयश्चैता दत्तस्याक्षयकारकाः ॥ १२८ ॥ यस्यां तिथौ रथं पूर्वं प्राप देवो दिवाकरः ॥ सा तिथिः कथिता विप्रैर्माघे या रथसप्तमी ॥ १२९ ॥ तस्यां दत्तं हुतं चेष्टं सर्वमेवाक्षयं मतम् ॥ सर्वदारिद्र्यशमनं भास्करप्री

१ श्रोत्रियवान्--वेदाध्ययनपरायणशिष्यवृन्दसम्पन्न इत्यर्थः । २ युगादयो या भवन्ति ता इति शेषः । ३ पंचदशी--अमा--बोध्या । न तु पूर्णिमा । तथा च मन्वादि--युगादितिथिवर्णनं मुहूर्तचिंतामणौ प्रथमे शुभाशुभप्रकरणे "मन्वाद्याश्चितिथौ मधौ तिथिरवौ ऊर्जे शुचौ दिक्तिथौ ज्येष्ठान्ते च तिथिस्त्विषे नव तपस्यश्वाः सहस्ये शिवाः-(भाद्रेऽग्निश्च सिते त्वमाष्ट नभसः कृष्णे युगाद्याः सिते गोऽग्नी बाहुलराधयोर्मदनदर्शो भाद्रमाघासिते ॥ ९७ ॥" इति । अत्रेदं तावद्विचार्य--माघकृष्णामा--द्वापरादिः, भाद्रपदकृष्णत्रयोदशी कलियुगादिः, इति मूले स्पष्टमुक्तम् । परं तदेतत्--'मदनदर्शौ भाद्रमाघासिते' इत्यनेन मुहूर्तचिन्तामणिस्थवचनेन विरुध्यते । तत्र हि यथासंख्यमित्युक्त्वा पीयूषधाराव्याख्यायां भाद्रपदकृष्णत्रयोदशी द्वापरादिः, माघकृष्णामा कल्यादिरिति स्पष्टं व्याख्यातम् । एवं प्रमाणद्वैधे सन्देहः संतिष्ठते । तदर्थं प्रमाणान्तरं तावदन्वेषणीयं स्यात् । तच्च यथोक्तं पीयूषधारायां नारदवचनं--"कार्तिके शुक्लनवमी चादिः कृतयुगस्य सा । त्रेतादिर्माधवे शुक्ला तृतीया पुण्यसंमिता ॥ कृष्णा पंचदशी माघे द्वापरादिरुदीरिता । कल्यादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥" इति । एतेन चेदं सिद्धं--युगादितिथीनामत्र मूल एवोक्तः क्रमः समीचीन इति । मुहूर्तचिन्तामणिकारैः स्वीकृतः क्रमो नैतत्प्रमाणद्वयगोचरः । स्यात्स प्रमाणान्तरगोचरस्तत्र प्रमाणवचनं मृग्यम् । ४ एता मन्वादितिथयो मुहूर्तचिन्तामण्युक्तार्थापेक्षया पौर्वापर्यक्रमे विसंवादानुक्रमा दृश्यन्ते । स्वायंभुवादिमनूनामाश्विनशुक्लनवम्यादिः क्रमोऽत्र मूले, चैत्रशुक्लतृतीयादिः क्रमो मुहूर्तचिन्तामणौ । अत्र च निर्णयः सुधीभिः प्रमाणांतरं परिचिन्त्य बोद्धव्यः । यथा श्रुत एवात्र स्वायंभुवादिमन्वादिपरिसंख्यया बोध्यः । ५ इष्टम्--पूजनं कृतमित्यर्थः । हुतमित्यनेनैव अंशस्योक्तत्वादपौनरुक्त्या वाक्यमेवार्थः साधुः ।

तये मतम् ॥१३०॥ नित्योद्वेजकमाहुर्यं बुधास्तं शृणु तत्त्वतः ॥ यश्च याचनिको नित्यं न स स्वर्गस्य भाजनम् ॥१३१॥ उद्वेजयति भूतानि यथा चौरास्तथैव सः ॥ नरकं याति पापात्मा नित्योद्वेगकरस्त्वसौ ॥ १३२ ॥ इहोपपत्तिर्मम केन कर्मणा क्व च प्रयातव्यमितो मयेति ॥ विचार्य चैवं प्रतिकारकारी बुधैः स चोक्तो द्विज दक्षदक्षः ॥ १३३ ॥ मासैरष्टभिरह्ना च पूर्वेण वयसायुषा ॥ तत्कर्म पुरुषः कुर्याद्येनांते सुखमेधते ॥ १३४ ॥ अर्चिर्धूमश्च मार्गौ द्वावाहुर्वेदांतवादिनः॥अर्चिषा याति मोक्षं च धूमेनावर्तते पुनः॥१३५॥यज्ञैरासाद्यते धूमो नैष्कर्म्येणार्चिराप्यते॥एतयोरपरो मार्गः पाखंड इति कीर्त्यते॥१३६॥यो देवान्मन्यते नैव धर्मांश्च मनुसूचितान्॥नैतौ स याति पंथानौ तत्त्वार्थोऽयं निरूपितः॥१३७॥इति ते कीर्तिताः प्रश्नाः शक्त्या ब्राह्मणसत्तम ॥ साधु वाऽसाधु वा ब्रूहि ख्यापयात्मानमेव च ॥ १३८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कलापग्रामवासिसुतनुब्राह्मणेन नारदप्रश्नोत्तरकथनंनाम पंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ श्रीनारद उवाच ॥ ॥ इति श्रुत्वा फाल्गुनाहं रोमांचपुलकीकृतः ॥ स्वरूपं प्रकटीकृत्य ब्राह्मणानिदमब्रवम् ॥ १ ॥ अहो धन्यः पितास्माकं यस्य सृष्टस्य पालकाः ॥ युष्मद्विधा ब्राह्मणेंद्राः सत्यमाह पुरा हरिः ॥ २ ॥ मत्तोऽप्यनंतात्परतः परस्मात्समस्तभूताधिपतेर्न किंचित् ॥ तेषां किमु स्यादितरेण येषां द्विजेश्वराणां मम मार्गवादिनाम् ॥ ३ ॥ तत्सर्वथाद्य धन्योऽस्मि संप्राप्तं जन्मनः फलम् ॥ यद्भवन्तो मया दृष्टाः पापोपद्रववर्जिताः[1] ॥ ४ ॥ ततस्ते सहसोत्थाय शातातपपुरोगमाः ॥ अर्घ्यपाद्यादिसत्कारैः पूजयामासुर्मां द्विजाः ॥ ५ ॥ प्रोक्तवन्तश्च मां पार्थ वचः साधुजनोचितम्[2] ॥ धन्या वयं हि देवर्षे त्वमस्मान्यदिहागतः ॥ ६ ॥ कुतो वाऽऽगमनं तुभ्यं गन्तव्यं वा क्व सांप्रतम् ॥ अत्राप्यागमने कार्यमुच्यतां मुनिसत्तम ॥ ७ ॥ श्रुत्वा प्रीतिकरं वाक्यं द्विजानामिति पांडव ॥ प्रत्यवोचं मुनीन्द्रांस्ताञ्छ्रूयतां द्विजसत्तमाः ॥ ८ ॥ अहं हि ब्रह्मणो वाक्याद्विप्राणां स्थानकं शुभम् ॥ दातुकामो महातीर्थे महीसागरसंगमे ॥ ९ ॥ परीक्षन्ब्राह्मणानत्र प्राप्तो यूयं परीक्षिताः ॥ अहं वः स्थापयिष्यामि चानुजानीत[3] तद्द्विजाः ॥ १० ॥ एवमुक्तो विलोक्यैव द्विजाञ्छातातपोऽब्रवीत् ॥ देवानामपि दुष्प्राप्यं सत्यं नारद भारतम् ॥ ११ ॥ किं पुनश्चापि तत्रैव महीसागरसंगमः ॥ यत्र स्नातो महातीर्थफलं सर्वमुपाश्नुते ॥ १२ ॥ पुनरेको महान्दोषो बिभीमो नितरां यतः ॥ तत्र चौराः सुबहवो निर्घृणाः

---

१ पापोद्रवविवर्जिताः–इ० पा० । २ साधुजनोदितम्–इ० पा० । ३ चानुजानीत–इ० पा० ।

प्रियसाहसाः ॥ १३ ॥ स्पर्शेषु षोडशं चैकविंशं गृह्णंति नो धनम् ॥ धनेन तेन हीनानां कीदृशं जन्म नो भवेत् ॥ १४ ॥ वरं बुभुक्षया वासो मा
चौरकरगा वयम् ॥ ॥ अर्जुन उवाच ॥ ॥ अद्भुतं वर्ण्यते विप्र के हि चौराः प्रकीर्तिताः ॥ १५ ॥ किं धनं च हरंत्येते येभ्यो बिभ्यति ब्राह्मणाः ॥
॥ ॥ नारद उवाच ॥ ॥ कामक्रोधादयश्चौरास्तप एव धनं तथा ॥ १६ ॥ तस्यापहारभीतास्ते मामूचुरिति ब्राह्मणाः ॥ तानहं प्राब्रवं पश्चाद्वि
जानीत द्विजोत्तमाः ॥ १७ ॥ जाग्रतां तु मनुष्याणां चौराः कुर्वंति किं खलाः ॥ भयभीतश्चालसश्च तथा चाशुचिरेव यः ॥ १८ ॥ तेन किं
नाम संसाध्यं भूमिस्तं ग्रसते नरम् ॥ १९ ॥ ॥ शातातप उवाच ॥ ॥ वयं चौरभयाद्भीतास्ते हरंति धनं महत् ॥ कर्तुं तदा कथं शक्यमंग
जागरणं तथा ॥ २० ॥ खलाश्चौरा गताः क्वापि ततो नत्वाऽऽगता वयम् ॥ तस्मात्सर्वं संत्यजामो भयभीता वयं मुने ॥ २१ ॥ प्रतिग्रहश्च वै
घोरः पष्ठांऽशफलदस्तथा ॥ एवं ब्रुवति तस्मिंश्च हारीतोनाम चाब्रवीत् ॥ २२ ॥ मूढबुद्ध्या हि को नाम महीसागरसंगमम् ॥ त्यजेच्च यत्र मोक्षश्च
स्वर्गश्च करगोऽथ वा ॥ २३ ॥ कलापादिषु ग्रामेषु को वसेत विचक्षणः ॥ यदि वासः स्तम्भतीर्थे क्षणार्धमपि लभ्यते ॥ २४ ॥ भयं च चौरजं
सर्वं किं करिष्यति तत्र नः ॥ कुमारनाथं मनसि पालकं कुर्वतां दृढम् ॥ २५ ॥ साहसं च विना भूतिर्न कथंचन प्राप्यते ॥ तस्मान्नारद तत्राहमा
यास्ये तव वाक्यतः ॥ २६ ॥ षड्विंशतिसहस्राणि ब्राह्मणा मे परिग्रहे ॥ षट्कर्मनिरताः शुद्धा लोभदम्भविवर्जिताः ॥ २७ ॥ तैः सार्धमागमि
ष्यामि ममेदं मतमुत्तमम् ॥ इत्युक्ते वचने तांश्च कृत्वाहं दंडमूर्धनि ॥ २८ ॥ निवृत्तः सहसा पार्थ खेचरोऽतिमुदान्वितः ॥ शतयोजनमात्रं तु
हिममार्गमतीत्य च ॥ २९ ॥ केदारं समुपायातो युक्तस्तैर्द्विजसत्तमैः ॥ आकाशेन सुशक्यश्च बिलेनाथ स देशकः ॥ ३० ॥ अतिक्रांतुं नान्यथा च
तथा स्कंदप्रसादतः ॥ ३१ ॥ ॥ अर्जुन उवाच ॥ क्व कलापं च तद्ग्रामं कथं शक्यं बिलेन च ॥ कथं स्कंदप्रसादः स्यादेतन्मे ब्रूहि नारद ॥ ३२ ॥
॥नारद उवाच॥ ॥ केदाराद्धिमसंयुक्तं योजनानां शतं स्मृतम् ॥ तदंते योजनशतं विस्तृतं तत्कलापकम् ॥ ३३ ॥ तदंते योजनशतं वालुकार्णव
मुच्यते ॥ शतयोजनमात्रः स भूमिस्वर्गस्ततः स्मृतः ॥ ३४ ॥ बिलेन च यथा शक्यं गंतुं तत्र शृणुष्व तत् ॥ निरन्नं वै निरुदकं देवमाराधयेद्गु
हम् ॥ ३५ ॥ दक्षिणायां दिशि ततो निष्पापं मन्यते यदा ॥ तदा गुहोऽस्य दिशति स्वप्ने गच्छेति भारत ॥ ३६ ॥ ततो गुहात्पश्चिमतो बिल

१ कादयो मावसानाः स्पर्शाः, तत्र कादिष्वक्षरेषु षोडशं 'त' इति, एकविंशं 'प' इति, एवं च 'तप' इति जातम्, तदेव धनं तपोरूपं धनमित्यर्थो निष्पन्नः । २ चौरवशगाः—इ० पा० । ३ ब्राह्मणा अकुतो भयम्—इ० पा० । ४ जितक्रोधमनुष्याणाम्—इ० पा० । ५ अहं तान्ब्राह्मणान्मम दण्डस्य यष्टीकृतस्य मूर्धनि मस्तके कृत्वा स्थापयित्वेत्यर्थः ।

मस्ति बृहत्तरम् ॥ तत्र प्रविश्य गंतव्यं क्रमाणां शतसप्तकम् ॥ ३७ ॥ तत्र मारकतं लिंगमस्ति सूर्यसमप्रभम् ॥ तदग्रे मृत्तिका चास्ति स्वर्ण वर्णा सुनिर्मला ॥ ३८ ॥ नमस्कृत्य च तल्लिंगं गृहीत्वा मृत्तिकां च ताम् ॥ आगंतव्यं स्तंभतीर्थे समाराध्य कुमारकम् ॥ ३९ ॥ कोलं वा कूपतो ग्राह्यं भूतायां निशि तज्जलम् ॥ तेनोदकेन मृत्तिकया कृत्वा नेत्रद्वयाञ्जनम् ॥ ४० ॥ उद्वर्तनं च देहस्य कदाचित्षष्टिमे पदे ॥ नेत्रांजनप्रभावाच्च बिलं पश्यति शोभनम् ॥ ४१ ॥ तन्मध्येन ततो याति गात्रोद्वर्त्तप्रभावतः ॥ कारीषैर्नाम चात्युग्रैर्भक्ष्यते नैव कीटकैः ॥ ४२ ॥ बिलमध्ये च संपश्यन्सिद्धान्भास्करसन्निभान् ॥ यात्येवं यात्यसौ पार्थ कलापं ग्राममुत्तमम् ॥ ४३ ॥ तत्र वर्षसहस्राणि चत्वार्यायुःप्रकीर्तितम् ॥ फलानां भोजनं च स्यात्पुनः पुण्यं च नार्ज्जयेत् ॥ ४४ ॥ इत्येतत्कथितं तुभ्यमतश्चाभूच्छृणुष्व तत् ॥ तपःसामर्थ्यतः सूक्ष्मान्दण्डस्याग्रे निधाय तान् ॥ ॥ ४५ ॥ द्विजानहं समायातो महीसागरसंगमम् ॥ ४६ ॥ तदोत्तार्य मया मुक्तास्तीरे पुण्यजलाशये ॥ ततो मया कृतं स्नानं सह तैर्द्विजसत्तमैः ॥ ॥ ४७ ॥ निःशेषदोषदावाग्नौ महीसागरसंगमे ॥ पितॄणां देवतानां च कृत्वा तर्पणसत्क्रियाः ॥ ४८ ॥ जपमानाः परं जप्यं निविष्टाः संगमे वयम् ॥ भास्करं समवेक्षंतश्चिंतयंतो हरिं हृदि ॥ ४९ ॥ तस्मिंश्चैवांतरे पार्थ देवाः शक्रपुरोगमाः ॥ आदित्याद्या ग्रहाः सर्वे लोकपालाश्च संगताः ॥ ५० ॥ देवानां योनयो ह्यष्टौ गंधर्वाप्सरसां गणाः ॥ महोत्सवे ततस्तस्मिन्गीतवादित्र उत्तमे ॥ ५१ ॥ पादप्रक्षालनं कर्तुं विप्राणामुद्यतस्त्वहम् ॥ तस्मिन्काले चाशृणवमहमातिथ्यवाक्यताम् ॥ ५२ ॥ सामध्वनिसमायुक्तां तृतीयस्वरनादिताम् ॥ अतीव मनसो रम्यां शिवभक्तिमिवोत्तमाम् ॥५३॥ विप्रैरुत्थाय संपृष्टः कस्त्वं विप्र क्व चागतः ॥ किं वा प्रार्थयसे ब्रूहि यत्ते मनसि रोचते ॥५४॥ ॥ विप्र उवाच ॥ ॥ मुनिः कपिलनामाहं नारदाय निवेद्यताम् ॥ आगतः प्रार्थनायैव तच्छ्रुत्वाहमथाब्रवम् ॥ ५५ ॥ धन्योहं यदिहायातः कपिल त्वं महामुने ॥ नास्त्यदेयं तवास्माभिः पात्रं नास्ति तवाधिकम् ॥ ५६ ॥ ॥ कपिल उवाच ॥ ॥ ब्रह्मपुत्र त्वया देयं यदि मे त्वं शृणुष्व तत् ॥ अष्टौ विप्रसहस्राणि मम देहीति नारद ॥ ५७ ॥ भूमिदानं करिष्यामि कलापग्रामवासिनाम् ॥ ब्राह्मणानामहं चैषां तदिदं क्रियतां विभो ॥ ५८ ॥ ततो मया प्रतिज्ञातमेवमस्तु महामुने ॥ त्वयापि क्रियतां स्थानं कापिलं कपिलोत्तमम् ॥ ५९ ॥ श्राद्धे वा प्राप्तकाले वा ह्यतिथिर्विमुखीभवेत् ॥ यस्याश्रममुपायातस्तस्य सर्वं हि निष्फलम् ॥ ६० ॥ स गच्छेद्रौरवाँल्लोकान्योऽतिथिं नाभिपूजयेत् ॥ अतिथिः पूजितो येन स देवैरपि पूज्यते ॥ ६१ ॥ दानैर्यज्ञैस्त

१ माहेश्वरम्–इ० पा० । २ कूलं वा–इ० पा० । ३ षाष्टिमे–षष्टितमे–इत्यर्थः । ४ निनीय–इ० पा० ।

तस्तस्मिन्भोजितः कपिलो मुनिः ॥ ततो महामुनिः श्रीमान्हारीतो ह्वयित[1]स्तदा ॥६२॥ पादप्रक्षालनार्थाय सिद्धदेवसमागमे ॥ हारीतश्च पुरस्कृत्य वामपादं तदा स्थितः ॥६३॥ ततो हासो महाञ्जज्ञे सिद्धाप्सरःसुपर्वणाम् ॥ विचिंत्य बहुधा पृथ्वीं साधु साधुकृता द्विजाः ॥६४॥ ततो ममापि मनसि शोकवेगो महानभूत् ॥ सत्यां चैव तथा मेने गाथां पूर्वबुधेरिताम् ॥६५॥ सर्वेष्वपि च कार्येषु हेतिशब्दो विगर्हितः ॥ कुर्वतामतिकार्याणि शिलांपा[2]तो ध्रुवं भवेत् ॥ ६६ ॥ ततोहमब्रवं विप्रान्यूयं मूर्खा भविष्यथ ॥ धनधान्याल्पसंयुक्ता दारिद्र्यकलिलावृताः ॥ ६७ ॥ एवमुक्ते प्रहस्यैव हारीतः प्राब्रवीदिदम् ॥ तवैवेयं मुने हानिर्यदस्माञ्छपते भवान् ॥ ६८ ॥ कः शापो दीयते तुभ्यं शापोयमयमेव ते ॥ ततो विमृश्य भूयोऽहमब्रवं किमहं द्विज ॥ ६९ ॥ तथाविधस्य भवतो वामपादप्रदानतः ॥ ७० ॥ ॥ हारीत उवाच ॥ ॥ शृणु तत्कारणं धीमञ्छून्यता मे यतो भवेत् ॥ ७१॥ इति चिंतयतश्चित्ते हा दुःखोऽयं प्रतिग्रहः ॥ प्रतिग्रहेण विप्राणां ब्राह्मं तेजो हि शाम्यति ॥ ७२ ॥ महादानं हि गृह्णानो ब्राह्मणः स्वं शुभं हि यत् ॥ ददाति दातुर्दाता च अशुभं यच्छति स्वकम् ॥ ७३ ॥ दाता प्रतिग्रहीता च वचनं हि परस्परम् ॥ मन्यतेऽधःकरो यस्य सोऽल्पबुद्धिः प्रहीयते ॥ ७४ ॥ इति चिंतयतो मह्यं शून्यताभूद्धि नारद ॥ निद्रार्तश्च भयार्तश्च कामार्तः शोकपीडितः ॥ ७५ ॥ हृतस्वश्चान्यचित्तश्च शून्या ह्येते भवंति च ॥ तदेषु मतिमान्कोपं न कुर्वीत यदि त्वया ॥ ७६ ॥ कृतः कोपस्ततस्तुभ्यमेवं हानिरियं मुने ॥ ततस्तांपा[3]न्वितश्चाहं तान्विप्रानब्रवं पुनः ॥ ७७ ॥ धिङ्मामस्तु च दुर्बुद्धिमविमृश्यार्थकारिणम् ॥ कुर्वतामविमृश्यैव तत्किमस्ति न यद्भवेत् ॥७८॥ सहसा[4] न क्रियां कुर्या त्पदमेतन्महापदाम् ॥ विमृश्यकारिणं धीरं वृणते सर्वसंपदः ॥ ७९ ॥ सत्यमाह महाबुद्धिश्चिरकारी पुरा हि सः ॥ पुरा हि ब्राह्मणः कश्चित्प्रख्यातोंगिरसां कुले ॥ ८० ॥ चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः ॥ चिरेण सर्वकार्याणि यो विमृश्य प्रपद्यते ॥ ८१ ॥ चिरकार्याभिसंपत्तेश्चिरकारी तथोच्यते ॥ अलसग्रहणं प्राप्तो दुर्मेधावी तथोच्यते ॥ ८२ ॥ बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ व्यभिचारेण कस्मिन्स व्यतिक्रम्यापरान्सुतान् ॥ ८३ ॥ पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ स तथेति चिरेणोक्तः स्वभावाच्चिरकारकः ॥ ८४ ॥ विमृश्य चिरकारित्वाच्चिंतयामास वै चिरम् ॥ पितुराज्ञां कथं कुर्या न हन्यां मातरं कथम् ॥ ८५ ॥ कथं धर्मच्छलेनास्मिन्निमज्जेयमसाधुवत् ॥ पितुराज्ञा परो धर्मो

१ ह्वयितः—आमन्त्रितः—प्रार्थित इत्यर्थः । २ शिवालापः—इ० पा० । ३ तपस्विनः—इ० पा० । ४ अमुमेवार्थं भारविराह—"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥" इत्यस्मिन्पद्ये निर्जगौ ।

ह्यधर्मो मातृरक्षणम् ॥ ८६ ॥ अस्वतंत्रं च पुत्रत्वं किं तु मां नात्र पीडयेत् ॥ स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ॥ ८७ ॥ पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ अनवज्ञा पितुर्युक्ता युक्तं मातुश्च रक्षणम् ॥ ८८ ॥ क्षमायोग्यावुभावेतौ नातिवर्तेत वै कथम् ॥ पिता ह्यात्मानमाधत्ते जायायां जज्ञिवानिति ॥ ८९ ॥ शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ सोऽहमात्मा स्वयं पित्रा पुत्रत्वे परिकल्पितः ॥ ९० ॥ जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि ॥ पर्याप्तः स दृढीकारः पितुर्गौरवलिप्सया ॥ ९१ ॥ शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ तस्मात्पितुर्वचः कार्यं न विचार्यं कथंचन ॥ ९२ ॥ पातकान्यपि चूर्यंते पितुर्वचनकारिणः ॥ पिता स्वर्गः पिता धर्मः पिता परमकं तपः ॥ ९३ ॥ पितरि प्रीतिमापन्ने सर्वाः प्रीणंति देवताः ॥ आशिषस्ता भजंत्येनं पुरुषं प्राह याः पिता ॥ ९४ ॥ निष्कृतिः सर्वपापानां पिता यदभिनंदति ॥ मुच्यते बंधनात्पुष्पं फलं वृंतात्प्रमुच्यते ॥ ९५ ॥ क्लिश्यन्नपि सुतः स्नेहं पिता स्नेहं न मुंचति ॥ एतद्विचिंत्य तं तावत्पुत्रस्य पितृगौरवम् ॥ ९६ ॥ पिता नाल्पतरं स्थानं चिंतयिष्यामि मातरम् ॥ यो ह्ययं मयि संघातो मर्त्यत्वे पांचभौतिकः ॥९७॥ अस्य मे जननी हेतुः पावकस्य यथारणिः ॥ माता देहारणिः पुंसः सर्वस्यार्थस्य निर्वृतिः ॥९८॥ मातृलाभे सनाथत्वमनाथत्वं विपर्यये ॥ न स शोचति नाप्येनं स्थावर्यमपि कर्षति ॥ ९९ ॥ श्रिया हीनोऽपि यो गेहे अंबेति प्रतिपद्यते ॥ पुत्रपौत्रसमापन्नो जननीं यः समाश्रितः ॥ १०० ॥ अपि वर्षशतस्यांते स द्विहायनवच्चरेत् ॥ समर्थं वाऽसमर्थं वा कृशं वाप्यकृशं तथा ॥ १ ॥ रक्षयेच्च सुतं माता नान्यः पोष्यविधानतः ॥ तदा स वृद्धो भवति तदा भवति दुःखितः ॥ २ ॥ तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः ॥ ॥ ३ ॥ नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रपा ॥ कुक्षिसंधारणाद्धात्री जननाज्जननी तथा ॥ ४ ॥ अंगानां वर्धनादंबा वीरसूत्वे च वीरसूः ॥ शिशोः शुश्रूषणाच्छुश्रूर्माता स्यान्माननात्तथा ॥ ५ ॥ देवतानां समावापमेकत्वं पितरं विदुः ॥ मर्त्यानां देवतानां च पूगो नात्येति मातरम् ॥ ६ ॥ पतिता गुरवस्त्याज्या माता च न कथंचन॥ गर्भधारणपोषाभ्यां तेन माता गरीयसी॥७॥ एवं स कौशिकीतीरे बलिं राजानमीक्षतीम् ॥ स्त्रीवृत्तिं चिरकालत्वाद्धन्तुं दिष्टः स्वमातरम् ॥ ८ ॥ विमृश्य चिरकालं हि चिंतांतं नाभ्यपद्यत ॥ एतस्मिन्नंतरे शक्रो ब्राह्मणं रूपमास्थितः ॥ ९ ॥ गायन्गा

१ पित्रा मातृहननविषयेऽनुज्ञायां कृतायामिदानीं मातृरक्षणम्--अधर्मः स्यात् अन्यथा सर्वदैव मातृरक्षणं हि पुत्रस्य धर्म एवेति रहस्यं बोध्यम्। २ अवाप्तवान्--इ० पा०। ३ नाभिवर्तेत--इ० पा०। ३ बालत्वे दुग्धपानप्रदत्वात्प्रसादद्वयं मातुः। ४ नैव कदाचन--इ० पा०।

थामुपायातः पितुस्तस्याश्रमांतिके ॥ अनृता हि स्त्रियः सर्वाः सूत्रकारो यदब्रवीत् ॥११०॥ अतस्ताभ्यः फलं ग्राह्यं न स्याद्दोपेक्षणः सुधीः ॥ इति श्रुत्वा तमानर्च मेधातिथिरुदारधीः ॥ ११ ॥ दुःखितश्चिंतयन्प्राप्तो भृशमश्रूणि वर्तयन् ॥ अहोऽहमीर्ष्ययाक्षिप्तो मग्नोऽहं दुःखसागरे ॥ १२ ॥ हत्वा नारीं च साध्वीं च को नु मां तारयिष्यति ॥ सत्वरेण मयाज्ञप्तश्चिरकारी ह्युदारधीः ॥१३॥ यद्ययं चिरकारी स्यात्स मां त्रायेत पातकात् ॥ चिरकारिक भद्रं ते भद्रं ते चिरकारिक ॥ १४ ॥ यदद्य चिरकारी त्वं ततोऽसि चिरकारिकः ॥ त्राहि मां मातरं चैव तपो यच्चार्जितं मया ॥ १५ ॥ आत्मानं पातके विष्टं शुभाह्व चिरकारिक ॥ एवं स दुःखितः प्राप्तो गौतमोऽचिंतयत्तदा ॥ १६ ॥ चिरकारिकं ददर्शाथ पुत्रं मातुरुपांतिके ॥ चिरकारी तु पितरं दृष्ट्वा परमदुःखितः ॥ १७ ॥ शस्त्रं त्यक्त्वा स्थितो मूर्ध्ना प्रसादायोपचक्रमे ॥ मेधातिथिः सुतं दृष्ट्वा शिरसा पतितं भुवि ॥ ॥ १८ ॥ पत्नीं चैव तु जीवंतीं परामभ्यगमन्मुदम् ॥ हन्यादिति न सा वेद शस्त्रपाणौ स्थिते सुते ॥ १९ ॥ बुद्धिरासीत्सुतं दृष्ट्वा पितुश्चरणयो र्नतम् ॥ शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ १२० ॥ ततः पित्रा चिरं स्मृत्वा चिरं चाघ्राय मूर्धनि ॥ चिरं दोर्भ्यां परिष्वज्य चिरंजीवेत्यु दाहृतः॥२१॥चिरं मुदान्वितः पुत्रं मेधातिथिरथाब्रवीत्॥चिरकारिक भद्रं ते चिरकारी भवेच्चिरम्॥२२॥चिराय यत्कृतं सौम्य चिरमस्मिन्न दुःखितः॥ गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः॥२३॥चिरेण मंत्रं संधीयाच्चिरेण च कृतं त्यजेत्॥चिरेण विहितं मित्रं चिरं धारणमर्हति॥२४॥ रोगे दर्पे च माने च द्रोहे पापे च कर्मणि ॥ अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते॥२५॥बंधूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च॥अव्यक्तेष्वपराधेषु चिरकारी प्रश स्यते॥२६॥चिरं धर्मान्निषेवेत कुर्याच्चान्वेषणं चिरम्॥चिरमन्वास्य विदुषश्चिरमिष्टानुपास्य च॥२७॥चिरं विनीय चात्मानं चिरं यात्यनवज्ञताम् ॥ ब्रुव तश्च परस्यापि वाक्यं धर्मोपसंहितम् ॥२८॥ चिरं पृच्छेच्च शृणुयाच्चिरं न परिभूयते ॥ धर्मे शत्रौ शस्त्रहस्ते पात्रे च निकटस्थिते ॥२९॥ भये च साधुपूजायां चिरकारी न शस्यते ॥ एवमुक्त्वा पुत्रभार्यासहितः प्राप्य चाश्रमम् ॥ १३० ॥ ततश्चिरमुपास्याथ दिवं यातश्चिरं मुनिः ॥ वयं त्वेवं ब्रुवन्तोऽपि मोहेनैवं प्रतारिताः ॥ ३१ ॥ कलौ च भवतां विप्रा मच्छापो निपतिष्यति ॥ केचित्सदा भविष्यंति विप्राः सर्वगुणैर्युताः ॥ ३२ ॥ पादप्रक्षालनं कृत्वा ततोऽहं धर्मवर्मणः ॥ समीपे साक्षिणो देवान्कृत्वा संकल्पमाचरम् ॥ ३३ ॥ कांचनैर्गोप्रदानैश्च गृहदानैर्धनादिभिः ॥ भार्याभू पणवस्त्रैश्च कृतार्था ब्राह्मणाः कृताः ॥ ३४ ॥ ततः करं समुद्यम्य प्राहेन्द्रो देवसंगमे ॥ हरांगरुद्धवामार्द्धा यावद्देवी गिरेः सुता ॥ ३५ ॥ गणा

१ ततो यथार्जितं.मया—इ० पा० । २ प्रतारिताः—इ० पा० ।

धीशो वयं यावद्यावत्रिभुवनं त्विदम् ॥ तावन्नन्यादिदं स्थानं नारदस्थापितं सुराः ॥ ३६ ॥ ब्रह्मशापो रुद्रशापो विष्णुशापस्तथैव च ॥ द्विजशापस्तथा भूयादिदं स्थानं विलुंपतः[1] ॥ ३७ ॥ ततस्तथेति तैः सर्वैर्हृष्टैस्तत्र तथोदितम् ॥ एवं मया स्थापिते स्थानकेऽस्मिन्संस्थापयामास च कापिलं मुनिः॥ स्थाने उभे देवकृते प्रसन्नास्ततो ययुर्देवता देवसद्म ॥१३८॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे नारदीयस्थानप्रतिष्ठावर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥ ॥ छ ॥ ॥ अर्जुन उवाच ॥ ॥ महीसागरमाहात्म्यमद्भुतं कीर्तितं त्वया ॥ विस्मयः परमो मह्यं प्रहर्षश्चोपजायते ॥ १ ॥ तदहं विस्तराच्छ्रोतुमिदमिच्छामि नारद ॥ कस्य यज्ञे मही ज्ञाना वह्नितापाभिता पिता ॥ २ ॥ ॥ नारद उवाच ॥ ॥ महदाख्यानमाख्यास्ये यथा जाता महीनदी ॥ शृण्वन्नेतां कथां पुण्यां पुण्यमाप्स्यसि पांडव ॥ ३ ॥ पुराभूद्भूपतिर्भूमाविन्द्रद्युम्न इति श्रुतः ॥ वदान्यः सर्वधर्मज्ञो मान्यो मानयिता प्रभुः ॥ ४ ॥ उचितज्ञो विवेकस्य निवासो गुणसागरः ॥ न तदस्ति धरापृष्ठे नगरं ग्रामपत्तनम् ॥ ५ ॥ तदीयपूर्तधर्मस्य चिह्नेन न यदंकितम् ॥ कन्यादानानि बहुधा ब्राह्मेण विधिना व्यधात् ॥ ६ ॥ भूपालोऽसौ ददौ दानमासहस्राद्धनार्थिनाम् ॥ दशमीदिवसे रात्रौ गजपृष्ठेन दुन्दुभिः ॥ ७ ॥ ताड्यते तत्पुरे प्रातः कार्यमेकादशीव्रतम् ॥ यज्वना तेन भूपेन विच्छिन्नं सोमपायिनाम् ॥ ८ ॥ स्वर्णैरास्तृता दर्भैर्द्व्यंगुलोत्सेधिता मही ॥ गंगायां सिकता धारा वर्षतो दिवि तारकाः ॥ ९ ॥ शक्या गणयितुं प्राज्ञैस्तदीयं सुकृतं न तु ॥ ईदृशैः सुकृतैरेष तेनैव वपुषा नृपः ॥ १० ॥ धाम प्रजापतेः प्राप्तो विमानेन कुरूद्वह ॥ बुभुजे स तदा भोगान्दुर्लभानमरैरपि ॥ ११ ॥ अथ कल्पशतस्यांते[2] व्यतीते तं महीपतिम् ॥ प्राह प्रजापतिः सेवावसरायातमात्मनः ॥ १२ ॥ ॥ ब्रह्मोवाच ॥ ॥ इंद्रद्युम्न द्रुतं गच्छ धरापृष्ठं नृपोत्तम ॥ न स्थातव्यं मदीयेऽद्य लोके क्षणमपि त्वया ॥ १३ ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ कस्माद्ब्रह्मन्नितो भूमौ मां प्रेषयसि सम्प्रति ॥ सति पुण्ये मदीये तु बहुले वद कारणम् ॥ १४ ॥ ॥ ब्रह्मोवाच ॥ ॥ न पुण्यं केवलं राजन्युक्तं स्वर्गस्य साधकम् ॥ विना निष्कल्मषां कीर्तिं त्रिलोकीतलविस्तृताम् ॥ १५ ॥ तव कीर्तिसमुच्छेदः सांप्रतं वसुधातले ॥ संजातश्चिरकालेन गत्वा तां कुरु नूतनाम् ॥१६॥ यदि वांछा महीपाल मम धामनि संस्थितौ ॥ १७ ॥ ॥ इन्द्रद्युम्न उवाच ॥ ॥ मदीयं सुकृतं ब्रह्मन्कथं भूमौ भवेदिति ॥ किं कर्तव्यं मया नैतन्मम चेतसि तिष्ठति ॥१८॥ ॥ ब्रह्मोवाच ॥ ॥ बलवानेष भूपाल कालः कलयति स्वयम् ॥१९॥ ब्रह्मांडान्यपि मां चैव गणना का भवादृशाम् ॥

१ य इदं स्थानं विलुंपेच्चौर्याद्युपद्रवानत्र यः कुर्यात्तस्य ब्रह्मादिशापः स्यात्, एतेनात्र चौरादिभीतिशंका या मुनीनामासीत्सा निरस्तेति रहस्यम्। २ अथ–इ० पा०।

तदेतदेव मन्येऽहं तव भूपाल सांप्रतम्॥२०॥यत्कीर्तिमात्मनो व्यक्तिं नीत्वाभ्ये[1]हि पुनर्दिवम् ॥ शुश्रुवानिति वाचं स ब्रह्मणः पृथिवीपतिः ॥ २१ ॥
पश्यतिस्म तथात्मानं महीतलमुपागतम् ॥ कांपिल्यनगरे भूयः पप्रच्छात्मानमात्मना ॥ २२ ॥ नगरं स तदा देशमं[2]प्राक्षीदिति विस्मितः ॥
॥ जना ऊचुः ॥ ॥ न जानीमो वयं भूपमिंद्रद्युम्नं न तत्पुरम् ॥ २३ ॥ यत्त्वं[3] पृच्छसि भो भद्र कञ्चित्पृच्छ चिरायुषम् ॥ ॥ इन्द्रद्युम्न उवाच ॥ ॥
कः संप्रति धरापृष्ठे चिरायुः प्रथितो जनाः ॥ २४ ॥ पृथिवीजयराज्येस्मिन्यत्र प्रब्रूत मा चिरम् ॥ ॥ जना ऊचुः ॥ ॥ श्रूयते नैमिषारण्ये
सप्तकल्पस्मरो मुनिः ॥ २५ ॥ मार्कंडेय इति ख्यातस्तं गत्वा पृच्छ संशयम् ॥ तथोपदिष्टस्तैर्गत्वा तत्र तं मुनिपुंगवम् ॥ २६ ॥ निशम्य प्रणिप
त्याह नृपः स्वहृदयस्थितम् ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ चिरायुर्भगवान्भूमौ विश्रुतः सांप्रतं ततः ॥ २७ ॥ पृच्छाम्यहं भवान्वेत्ति इंद्रद्युम्नं नृपं
न वा ॥ २८ ॥ ॥ श्रीमार्कंडेय उवाच ॥ ॥ सप्तकल्पान्तरे नाभूत्कोपींद्रद्युम्नसंज्ञितः ॥ भूपाल किमहं वच्मि तवान्यत्पृच्छ संशयम् ॥ २९ ॥
स निराशस्तदाकर्ण्य वचो भूपोग्निसाधने[4] ॥ समुद्योगं तदा चक्रे तं दृष्ट्वाह तदा मुनिः[5] ॥ ३० ॥ ॥ मार्कंडेय उवाच ॥ ॥ मा साहसमिदं कार्षीः
भद्र वाचं शृणुष्व मे ॥ एति जीवंतमानंदो नरं वर्षशतादपि ॥ ३१ ॥ तत्करोमि प्रतीकारं तव दुःखोपशांतये ॥ शृणु भद्र ममास्तीह बको मित्रं
चिरंतनः ॥ ३२ ॥ नाडीजंघ इति ख्यातः स त्वा ज्ञास्यत्यसंशयम् ॥ तस्मादेहि द्रुतं यावदावां तत्र व्रजावहे ॥३३॥ परोपकारैकफलं जीवितं हि
महात्मनाम् ॥ यदि ज्ञास्यत्यसंदिग्धमिंद्रद्युम्नं स वक्ष्यति ॥ ३४ ॥ तौ प्रस्थिताविति तदा विप्रेंद्रनृपपुंगवौ ॥ हिमाचलं प्रति प्रीतौ नाडीजंघा
लयं प्रति ॥ ३५ ॥ बकोऽथ मित्रं स्वं वीक्ष्य चिरकालादुपागतम् ॥ मार्कंडेयं ययौ प्रीत्युत्कंठितः सम्मुखं द्विजै[6]ः ॥ ३६ ॥ कृतसंविदभूत्पूर्वं कुश
लस्वागतादिना ॥ पप्रच्छानंतरं कार्यं वँदागमनकारणम्[7] ॥ ३७ ॥ मार्कंडेयोथ तं प्राह बकं प्रस्तुतमीप्सितम् ॥ इंद्रद्युम्नं भवान्वेत्ति भूपालं
पृथिवीतले ॥ ३८ ॥ एतस्य मम मित्रस्य तेन ज्ञातेन कारणम् ॥ नो वायं त्यजति प्राणान्पुरा वह्निप्रवेशनात् ॥ ३९ ॥ एतस्य प्राणरक्षार्थं ब्रूहि
जानासि चेन्नृपम् ॥ ४० ॥ ॥ नाडीजंघ उवाच ॥ ॥ चतुर्दश स्मराम्यस्मिं[8] कल्पान्विप्रेंद्र सांप्रतम् ॥ आस्तां तद्दर्शनं वार्तामपि वा[9] न स्मरा
म्यहम् ॥ ४१ ॥ इंद्रद्युम्नो महीपालः कोऽपि नासीन्महीतले ॥ एतावन्मात्रमेवाहं जानामि द्विजपुंगव ॥ ४२ ॥ ॥ नारद उवाच ॥ ॥ ततः स

१ आयाहि–इ० पा० । २ अप्राक्षीत्–इ०पा० । ३ न दृष्टो न श्रुतः कोपि–इ०पा० । ४ अग्निसाधने समुद्योगम्–अग्निं प्रज्वाल्य तस्मिन्प्रवेशने उद्योगम्,–काष्ठादिसंपादनोपक्रममित्यर्थः । ५ पुनर्मुनिः–इ०पा० ।
६ द्विजाः–इ०पा० । ७ तदागमनकारणम्–इ० पा० । ८ अस्मीत्यहमर्थकं विभक्तिप्रतिरूपकमव्ययम् । ९ नास्य–इ० पा० ।

विस्मयाविष्टस्तस्यायुरिति शुश्रुवान् ॥ पप्रच्छ राजा को हेतुर्दानस्य तपसोऽथ वा ॥ यदायुरीदृशं दीर्घं संजातमिति विस्मितः ॥ ४३ ॥
॥ ॥ नाडीजंघ उवाच ॥ ॥ घृतकंबलमाहात्म्यान्मम देवस्य शूलिनः ॥ दीर्घमायुरिदं विप्र शापाद्बकवपुः शृणु ॥४४॥ पुरा जन्मन्यहं बालो ब्राह्मणस्याभवं भुवि ॥ पाराशर्यसगोत्रस्य विश्वरूपस्य सन्मुनेः ॥४५॥ बालको बक इत्येवं प्रतीतोऽतिप्रियः पितुः ॥ चपलोऽतीव बालत्वे निसर्गादेव भद्रक ॥ ४६ ॥ अथ मारकतं लिंगं देवतावसरात्पितुः ॥ चापल्याद्बालभावाच्चापहृत्य निहितं मया ॥४७॥ घृतस्य कुंभे संक्रांतौ मकरस्योत्तरायणे ॥ अथ प्रातर्व्यतीतायां निशि यावत्पिता मम ॥ ४८ ॥ निर्माल्यापनयं चक्रे तावच्छून्यं शिवालयम् ॥ निशम्य कांदिशीको मां पप्रच्छ मधुरस्वरम् ॥ ॥४९॥वत्स क्व नु त्वया लिंगं नूनं विनिहितं वद ॥ दास्यामि वांछितं यत्ते भक्ष्यमन्यत्त्वदीप्सितम् ॥५०॥ ततो मया बालभावाद्भक्ष्यलुब्धेन तत्पितुः॥ घृतकुंभांतराकृष्य भद्रलिंगं समर्पितम् ॥५१॥ अथ काले तु संप्राप्ते प्रमीतोऽहं नृपालये ॥ जातो जातिस्मरस्तावदानर्ताधिपतेः सुतः ॥५२॥घृतकंबलमाहात्म्यान्मकरस्थे दिवाकरे ॥ अपि बाल्यादवज्ञानात्संयोगाद्घृतलिंगयोः ॥ ५३ ॥ ततः संस्थापितं लिंगं प्राग्जन्म स्मरता मया ॥ ततः प्रभृति लिंगानि घृतेनाच्छादयाम्यहम् ॥ ५४ ॥ पितृपैतामहं प्राप्य राज्यं शक्त्यनुरूपतः ॥ ततः प्रसन्नो भगवान्पार्वतीपतिराह माम् ॥ ५५ ॥ पूर्वजन्मनि तुष्टोऽहं घृतकंबलपूजया ॥ प्रयच्छाम्यस्मि ते राज्यमधुनाभिमतं वृणु ॥ ५६ ॥ ततो मया वृतः प्रादाद्गाणपत्यं मदीप्सितम् ॥ कैलासे मां शिवो नित्यं संतुष्टः प्राह चेति च ॥ ५७ ॥ तेनैव हि शरीरेण प्रणतं पुरतः स्थितम् ॥ अद्यप्रभृति संक्रांतौ मकरस्यापरोपि यः ॥ ५८ ॥ घृतेन पूजां कर्तासौ भावी मम गणः स्फुटम् ॥ इत्युक्त्वा मां शिवो भद्र गणकोटीश्वरं व्यधात् ॥ ५९ ॥ प्रतीपपालकंनाम संस्थितं शिवशासनम् ॥ ततः कामादिभिः षड्भिः पदैश्चंक्रमणात्मिकाम् ॥ ६० ॥ निसर्गचपलां प्राप्य भ्रमरीमिव तां श्रियम् ॥ नैवालमभवं तस्या धारणे दैवयोगतः ॥ ६१ ॥ विचचार तदा मत्तः किलाहं वारणो यथा ॥ कृत्याकृत्यविचारेण विमुक्तोऽतीव गर्वितः ॥ ६२ ॥ विद्यामभिजनं लक्ष्मीं प्राप्य नीचनरो यथा ॥ आपदां पात्रतामेति सिंधूनामिव सागरः ॥ ६३ ॥ अथ काले व्यतिक्रांते कियन्मात्रे यदृच्छया ॥ विचरन्नगमं शैलं हिमानीरुद्धकंदरम् ॥ ६४ ॥ तपस्यति मुनिस्तत्र गालवो भार्यया सह ॥ सदैव तीव्रतपसा कृशो धमनिसंततः ॥ ६५ ॥ ब्राह्मणस्य हि देहोयं नैवैहिकफलप्रियः ॥ कृच्छ्राय तपसे चेह प्रेत्यानंतसुखाय च ॥ ६६ ॥ तस्य भार्याऽतिरूपेण विजिग्ये विश्ववर्णिनी ॥ तन्वी श्यामा मृगाक्षी सा पीनोन्नतपयोधरा ॥ ६७ ॥

१ वरेण—इति शेषः । २ घृतकुंभान्तः—आकृष्य—इति पदच्छेदः । घृतकुम्भमध्यात् आकृष्य निष्कास्येत्यर्थः । ३ तात—इ०पा०। ४ अस्मि—अहमित्यर्थः । ५ मां प्राहेति पूर्वेण सम्बन्धः । ६ सर्वशासनम्—इ०गा० ।

हंसगद्गदसंभाषा मत्तमातंगगामिनी ॥ विस्तीर्णजघना मध्ये क्षामा दीर्घशिरोरुहा ॥ ६८ ॥ निम्ननाभिर्विधात्रैषा निर्मिता संदिदृक्षुणा ॥ विकीर्ण मिव सौंदर्यमेकपात्रमिव स्थितम् ॥ ६९ ॥ ततोऽविनीतस्तां वीक्ष्य भद्र गालववल्लभाम् ॥ अहमासं शरव्रातैस्ताडितः पुष्पधन्विना ॥ विवेकिनो ऽपि मुनयस्तावदेव विवेकिनः ॥ ७० ॥ यावन्न हरिणाक्षीणामपांगविवरेक्षिताः ॥ मया व्यवसितं चित्ते तदानीं तां जिहीर्षुणा ॥ ७१ ॥ इति चेति हरिष्यामि तपसा रक्षितां मुनेः ॥ अस्याः कृते यदि शपेन्मुनिस्तत्र पराभवः ॥ ७२ ॥ मम भावी भवेदेषा भार्या मृत्युरुतापि मे ॥ तस्माच्छिष्यो भवाम्यस्य शुश्रूषानिरतो मुनेः ॥ ७३ ॥ प्राप्यांतरं हरिष्यामि नास्य योग्येयमंगना ॥ इति व्यवस्य विद्यार्थिमूर्तिमास्थाय गालवम् ॥ ७४ ॥ नम स्कृत्य वचोऽवोचमिति भाव्यर्थनोदितः ॥ तथा मतिस्तथा मित्रं व्यवसायस्तथा नृणाम् ॥ ७५ ॥ भवेदवश्यं तद्भावि यथा पुंभिः पुरा कृतम् ॥ विवेकवैराग्ययुतो भगवंस्त्वामुपस्थितः ॥ ७६ ॥ शिष्योऽहं भवता पाठ्यं कर्णधारं महामुनिम् ॥ अपारपारदं विष्णुं विप्रमूर्तिमुपाश्रितम् ॥ ७७ ॥ नमस्ये चेतनं ब्रह्म प्रत्यक्षं गालवाख्यया ॥ अविद्याकृष्णसर्पेण दष्टं तद्विषपीडितम् ॥ ७८ ॥ उपदेशमहामंत्रैर्मां जांगुलिक[1] जीवय ॥ महामोहमहा वृक्षो हृद्यावापसमुत्थितः ॥ ७९ ॥ त्वद्वाक्यतीक्ष्णधारेण कुठारेण क्षयं व्रजेत् ॥ अपवर्गपथव्यापी मूढसंसर्गसेचनः ॥ ८० ॥ छिद्यतां सूत्रधारेण[2] विद्यापरशुनाधुना ॥ भजामि तव शिष्योऽहं वरिवस्यापरश्चिरम् ॥ ८१ ॥ समिद्दर्भान्मूलफलं दारूणि जलमेव च ॥ आहरिष्येऽनुगृह्णीष्व विनीतं मामुपस्थितम् ॥ ८२ ॥ इत्थं पुरा बकाभिख्यं बकवृत्तिमुपाश्रितम् ॥ तदाऽऽर्जवे कृतमतिरनुज ग्राह मां मुनिः[3] ॥ ८३ ॥ ततोऽतीव विनीतोऽहं भूत्वा तं ब्राह्मणीयुतम् ॥ विश्वासनाय सुदृढं तोषयामि दिनेदिने ॥ ८४ ॥ स[4] च जान न्मुनिः पत्नीं पात्रभूतामविश्वसन् ॥ स्त्रीचरित्रविदंके तां विधाय स्वपिति द्विजः ॥ ८५ ॥ अथान्यस्मिन्दिने साभूद्ब्राह्मण्यथ रजस्वला ॥ तद्दूरशायिनी रात्रौ विश्वासान्मे तपस्विनी ॥ ८६ ॥ इदमन्तरमित्यंतर्विचिंत्याहं[5] प्रहर्षितः ॥ मलिम्लुचाकृतिर्भूत्वा निशीथे तामथाहरम् ॥ ८७ ॥ विललाप तदा बाला ह्रियमाणा मयोच्चकैः ॥ मैवं मैवमिति ज्ञात्वा मां स्वरेणाब्रवीन्मुनिम् ॥ ८८ ॥ बकवृत्तिरयं दुष्टो धर्मकंचुकमाश्रितः ॥ हरते मां दुराचारस्तस्मात्त्वं त्राहि गालव ॥ ८९ ॥ तव शिष्यः पुरा भूत्वा कोप्यथेपोद्य मलिम्लुचः ॥ मां जिहीर्षति तद्रक्ष शरण्य शरणं भव ॥९०॥ तद्वाक्यसमकालं स प्रबुद्धो गालवो मुनिः ॥ तिष्ठतिष्ठेति मामुक्त्वा गतिस्तम्भं व्यधान्मम ॥ ९१ ॥ ततश्चित्राकृतिरहं स्तम्भितो मुनिनाऽभवम् ॥

१ जांगुलिक—विषवैद्य इत्यर्थः । 'विषवैद्यो जांगुलिकः' इत्यमरः । २ सूत्रधारेण काष्ठपाटनकरेण तक्ष्णेत्यर्थः । ३ कृतमतिः—दत्तावधान इत्यर्थः । ४ सः—द्विजः गालवमुनिः—इत्यर्थः । ५ अन्तः—अन्तःकरणे—इत्यर्थः ।

व्रीडितं प्रविशामीव स्वांगानि किल लज्जया ॥ ९२ ॥ ततः प्रकुपितः प्राह मामभ्येत्याथ गालवः ॥ तद्वज्रदुःसहं वाक्यं येनाहमभवं बकः ॥ ॥ ९३ ॥ ॥ गालव उवाच ॥ ॥ बकवृत्तिमुपाश्रित्य वंचितोऽहं यतस्त्वया ॥ तस्माद्बकस्त्वं भविता चिरकालं नराधम ॥ ९४ ॥ इति शप्तोऽहमभवं मुनिनाऽधर्ममाश्रितः ॥ परदारोपसेवार्थमनर्थमिममागतः ॥ ९५ ॥ न हीदृशमनायुष्यं लोके किंचन विद्यते ॥ यादृशं पुरुषस्येह परदारोपसेवनम् ॥ ९६ ॥ ततः सती सा मत्स्पर्शदूषितांगी तपस्विनी ॥ मया विमुक्ता स्नात्वा मां तथैवानुशशाप ह ॥ ९७ ॥ एवं ताभ्यामहं शप्तो ह्यश्वत्थपर्णवद्भयात् ॥ कंपमानः प्रणम्योभाववोचं तत्र दम्पती ॥ ९८ ॥ गणोऽहमीश्वरस्यैव दुर्विनीततरो युवाम् ॥ निरोधमेवं कुरुतं भगवंतावनुग्रहम् ॥ ९९ ॥ वाचि क्षुरो नावनीतं हृदयं हि द्विजन्मनाम् ॥ प्रकुप्यंति प्रसीदंति क्षणेनापि प्रसादिताः ॥ १०० ॥ त्वयि विप्रतिपन्नस्य त्वमेव शरणं मम ॥ भूमौ स्खलितपादानां भूमिरेवावलंबनम् ॥ १०१ ॥ गणाधिपत्यमपि मे जातं परिभवास्पदम् ॥ विपदंता हि जायन्ते दुर्विनीतस्य सम्पदः ॥ २ ॥ विदुरेष्यद्धियाऽपायं परतोऽन्ये विवेकिनः ॥ नैवोभयं विदुर्नीचा विनाऽनुभवमात्मनः ॥ ३ ॥ दुर्विनीतः श्रियं प्राप्य विद्यामैश्वर्यमेव वा ॥ न तिष्ठति चिरं स्थाने यथाहं मदगर्वितः ॥४॥ विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ॥ एते मदा मदांधानामेत एव सतां दमाः ॥ ५ ॥ नोदर्कशालिनी बुद्धिर्येषामविजितात्मनाम् ॥ तैः श्रियश्चपला वाच्यं नीयंते मादृशैर्जनैः ॥ ६ ॥ तत्प्रसीद मुनिश्रेष्ठ शापांतं मेऽधुना कुरु ॥ दुर्विनीतेष्वपि सदा क्षमाचारा हि साधवः ॥ ७ ॥ इत्थं वचसि विज्ञप्ते विनीतेनापि वै मया ॥ प्रसादप्रवणो भूत्वा शापांतं मे तदा व्यधात् ॥ ॥ ८ ॥ ॥ गालव उवाच ॥ ॥ छन्नकीर्तिसमुद्धारसहायस्त्वं भविष्यसि ॥ यदेन्द्रद्युम्नभूपस्य तदा मोक्षमवाप्स्यसि ॥ ९ ॥ इत्यहं मुनिशापेन तदाप्रभृति पर्वते ॥ हिमाचले बको भूत्वा काश्यपेयो वसामि च ॥ ११० ॥ राज्यं चिरायुरिति मे घृतकम्बलस्य जातिस्मरत्वमधुनापि तथानुभावान् ॥ शापाद्बकत्वमभवन्मुनिगालवस्य तद्भद्र सर्वमुदितं भवताद्य पृष्टम् ॥ १११ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे महीप्रादुर्भावे सप्तमोऽध्यायः ॥ ७ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ नाडीजंघबकेनोक्तां वाचमाकर्ण्य भूपतिः ॥ मार्कंडेयेन संयुक्तो बभूवातीव दुःखितः ॥ १ ॥ तं निशम्य मुनिर्भूपं दुःखितं साश्रुलोचनम् ॥ समानव्यसनः प्राह तदर्थं स पुनर्ब

१ यथा निरोधं कृतवन्तौ—तथा—अनुग्रहमपि कुरुतम्—इति वक्तव्यं बोद्धव्यम् । २ विवेकिनः परतः अन्यस्मात् एष्यत् आगमिष्यन्तम् अपायं धिया ( विवेकशालिन्या ) ( अपायागमात् पूर्वमेव ) विदुः । विवेकशालित्वात् । ३ श्रियः 'चपला' इति वाच्यम्—दोषम्—नीयंते इत्यर्थः । मदान्धानां श्रियः शीघ्रमेव नश्यन्ति—इति भावः । ४ निशम्य—दृष्ट्वेत्यर्थः ।

कम् ॥ २ ॥ विधायाशां महाभाग त्वदंतिकमुपागतौ ॥ आवां चिरायुर्ज्ञातांशाविन्द्रद्युम्नमिति द्विज ॥ ३ ॥ निष्पन्नं नास्य तत्कार्यं प्राणानेष मुमुक्षति ॥ वह्निप्रवेशेन परं वैराग्यं समुपागतः ॥ ४ ॥ तन्मामुपागतोऽहं च त्वां सिद्धं नास्य वांछितम् ॥ तदेनमनुयास्यामि मरणेन त्वया शपे ॥ ५ ॥ आशां कृत्वाभ्युपायातं निराशं नेक्षितुं क्षमाः ॥ भवंति साधवस्तस्माज्जीवितान्मरणं वरम् ॥ ६ ॥ प्रार्थितं चामुनात्रस्थं मया चास्मै प्रतिश्रुतम् ॥ त्वां मित्रं तत्परिज्ञाने धृत्वा हृदि चिरायुषम् ॥ ७ ॥ असंपादयतो नार्थं प्रतिज्ञातं ममायुषा ॥ कलुषेणार्थिनामाशापूरकेण सखेऽधुना ॥ ८ ॥ प्रतिश्रुतं कृतं श्लाघ्या दासतांत्यजपक्कणे ॥ हरिश्चंद्रस्येव नृणां न श्लाघ्या सत्यसंधता ॥ ९ ॥ मित्रस्नेहस्य पर्यायस्तच्च साप्तपदं स्मृतम् ॥ स्नेहः स कीदृशो मित्रे दुःखिते यो न दृश्यते ॥ १० ॥ तदवश्यमहं साकमधुना वह्निसाधनम् ॥ करिष्ये कीर्तिवपुषः कृते सत्यमिदं सखे ॥ ११ ॥ अनुजानीहि मामेतद्दर्शनं तव पश्चिमम् ॥ त्वया सह महाभाग नाडीजंघ द्विजोत्तम ॥ १२ ॥ ॥ नारद उवाच ॥ वज्रवद्दुःसहां वाचं मार्कंडेयसमीरिताम् ॥ शुश्रुवान्स क्षणं ध्यात्वा प्रतीतः प्राह तावुभौ ॥ १३ ॥ ॥ नाडीजंघ उवाच ॥ ॥ यद्येवं तदिदं मित्रं विशंतं ज्वलनेऽधुना ॥ निवारय मुनिश्रेष्ठ मत्तोऽस्ति चिरजीवितः ॥ १४ ॥ प्राकारकर्णनामासावुलूकः शिवपर्वते ॥ स ज्ञास्यति महीपालमिंद्रद्युम्नं न संशयः ॥ १५ ॥ तस्मादहं त्वया सार्धममुना च शिवालयम् ॥ व्रजामि तं शिखरिणं मित्रकार्यप्रसिद्धये ॥ १६ ॥ इत्येवमुक्त्वा ते जग्मुस्त्रयोऽपि द्विजपुंगवाः ॥ कैलासं ददृशुस्तत्र तमुलूकं स्वनीडगम् ॥ १७ ॥ कृतसंविदसौ तेन बकः स्वागतपूजया ॥ पृष्टश्च तावुभौ प्राह तत्सर्वमभिवांछितम् ॥ १८ ॥ चिरायुरसि जानीषे यदीन्द्रद्युम्नभूपतिम् ॥ तद्ब्रूहि तेन ज्ञानेन कार्यं जीवामहे वयम् ॥ १९ ॥ इति पृष्टः स विमना मित्रकार्यप्रसाधनात् ॥ कौशिकः प्राह जानामि नेन्द्रद्युम्नमहं नृपम् ॥ २० ॥ अष्टाविंशत्प्रमाणा मे कल्पा जातस्य भूतले ॥ न दृष्टो न श्रुतो वासाविंद्रद्युम्नो नृपः क्षितौ ॥ २१ ॥ तच्छ्रुत्वा विस्मितो भूपस्तस्यायुरतिमात्रतः ॥ दुःखितोऽपि तदा हेतुं पप्रच्छासौ तदायुषः ॥ २२ ॥ एवमायुर्यदि तव कथं प्राप्तं ब्रवीहि तत् ॥ उलूकत्वं कथमिदं जुगुप्सितमतीव च ॥ २३ ॥ ॥ प्राकारकर्ण उवाच ॥ ॥ शृणु भद्र यथा दीर्घमायुर्मे शिवपूजनात् ॥ जुगुप्सितमुलूकत्वं शापेन च महामुनेः ॥ २४ ॥ वसिष्ठकुलसंभूतः पुराहमभवं द्विजः ॥ घंट इत्यभिविख्यातो वाराणस्यां शिवे रतः ॥ २५ ॥ धर्मश्रवणनिष्ठस्य साधूनां संसदि स्वयम् ॥ श्रुत्वास्मि पूजयामीशं बिल्वपत्रैरखंडितैः ॥ २६ ॥ न मालती न मंदारः शतपत्रं न

१ कलुषेण—कपटेनेत्यर्थः । कलुकेन—इ० पाठान्तरम् । २ अथः—इ०पा० । ३ कौशिकः—उलूकः । ४ अस्मि—अहमित्यर्थः ।

मल्लिका ॥ तथा प्रियाणि श्रीवृक्षो यथा मदनविद्विषः ॥ २७ ॥ अखंडबिल्वपत्रेण एकेन शिवमूर्धनि ॥ निहितेन नरैः पुण्यं प्राप्यते लक्षपुष्पजम् ॥ २८ ॥ अखंडितैर्बिल्वपत्रैः श्रद्धया स्वयमाहृतैः ॥ लिंगप्रपूजनं कृत्वा वर्षलक्षं वसेद्दिवि ॥ २९ ॥ सच्छास्त्रेभ्य इति श्रुत्वा पूजयाम्यहमीश्वरम् ॥ त्रिकालं श्रद्धया पत्रैः श्रीवृक्षस्य त्रिभिस्त्रिभिः ॥ ३० ॥ ततो वर्षशतस्यांते तुतोष शशिशेखरः ॥ प्रत्यक्षीभूय मामाह मेघगंभीरया गिरा ॥ ३१ ॥ ॥ ईश्वर उवाच ॥ ॥ तुष्टोस्मि तव विप्रेंद्राखंडबिल्वदलार्चनात् ॥ वृणीष्वाभिमतं यत्ते दास्याम्यपि च दुर्लभम् ॥ ३२ ॥ अखंडबिल्वपत्रेण महातुष्टिः प्रजायते ॥ एकेनापि यथान्येषां तथा न मम कोटिभिः ॥ ३३ ॥ इत्युक्तोऽहं भगवता शंभुना स्वमनःस्थितम् ॥ वृणोमि स्म वरं देव कुरु मामजरामरम् ॥ ३४ ॥ अथ लीलाविलासो मां तथेत्युक्त्वाऽविचारितम् ॥ ययावदर्शनं प्रीतिमहं च महतीं गतः ॥ ३५ ॥ कृतकृत्यं तदात्मानमज्ञासिषमहं क्षितौ ॥ एतस्मिन्नेव काले तु भृगुवंश्योऽभवद्द्विजः ॥ ३६ ॥ अवदातत्रिजन्मासवक्षविद्याक्षरार्थवित् ॥ सुदर्शनेति प्रथिता प्रिया तस्याभवत्सती ॥ ३७ ॥ अतीव मुदिता पत्युर्मुखं प्रेक्ष्यास्य दर्शनात् ॥ तनया देवलस्यैषा रूपेणाप्रतिमा भुवि ॥ ३८ ॥ तस्यां तस्मादभूत्कन्या निर्विशेषा निजारणेः ॥ निवृत्तबालभावाभूत्कुमारी यौवनोन्मुखी ॥ ३९ ॥ नालं बभूव तां दातुं तनयां गुणशालिनीम् ॥ कस्यापि जनकः सा च वयःसंधौ मयेक्षिता ॥ ४० ॥ प्रविशद्यौवनाभोगभावैरतिमनोहरा ॥ निर्वास्यमानैरपरैस्तिलतंदुलिताकृतिः ॥ ४१ ॥ क्रीडमाना वयस्याभिर्लावण्यप्रतिमेव सा ॥ व्यचिंतयमहं विप्र तां निरीक्ष्य सुमध्यमाम् ॥ ४२ ॥ अनन्याकृतिमन्योऽसौ विधिर्येनेति निर्मिता ॥ ततः सात्त्विकभावानां तत्क्षणादस्मि गोचरम् ॥ ४३ ॥ प्रापितो लीलयाहत्य बाणैः कुसुमधन्विना ॥ ततो मया स्खलद्वाचं पृष्टा कस्येति तत्सखी ॥ ४४ ॥ प्राहेति भृगुवंश्यस्य कन्येयं द्विजजन्मनः ॥ अनूढाद्यापि केनापि समायातात्र खेलितुम् ॥ ४५ ॥ ततः कुसुमबाणेन शरव्रातैर्भृशं हतः ॥ पितरं प्रणतो गत्वा ययाचे तां भृगूद्वहम् ॥ ४६ ॥ स च मां सदृशं ज्ञात्वा शीलेन च कुलेन च ॥ अतीव चार्थिने मह्यं ददौ वाचा पुरः क्रमात् ॥ ४७ ॥ ततः सा तनया तस्य भार्गवस्याशृणोदिति ॥ दत्तास्मि तस्मै विप्राय विरूपायेति जल्पताम् ॥ ४८ ॥ रोरूयमाणा जननीमाह पश्य यथा कृतम् ॥ अतीवानुचितं दत्त्वा जनकेन तथा वरे ॥ ४९ ॥ विषमालोड्य पास्यामि प्रवेक्ष्यामि हुताशनम् ॥ वरं न तु विरूपस्योद्वोढुर्भार्या कथंचन ॥ ५० ॥ ततः संबोध्य जननी तां सुतामाह भार्गवम् ॥ न देयास्मै त्वया कन्या विरूपायेति चाग्रहात् ॥ ५१ ॥ स वल्लभावचः श्रुत्वा धर्मशास्त्राण्यवेक्ष्य च ॥ दत्तामपि हरेत्पूर्वां

१ मदनविद्विपः–शंकरस्य । २ लीलाविलासः–शिवः–लीलाविलासत्वादेव अविचारितमेव यथा स्यात्तथा 'तथास्तु' इत्युक्त्वाऽदर्शनं ययाविति योजना ।

श्रेयांश्चेद्वर आव्रजेत् ॥ ५२ ॥ अर्वाक्छिलाक्रमणतो निष्ठा स्यात्सप्तमे पदे ॥ इति व्यवस्य प्रददावन्यस्मै ता : सुताम् ॥ ५३ ॥ श्वोभाविनि विवाहे तु तच्च सर्वं मया श्रुतम् ॥ ततोतीव विलक्ष्योहं वयस्यानां पुरस्तदा ॥ ५४ ॥ नाशकं वदनं भद्र तथा दर्शयितुं निजम् ॥ कामातोंतीव तां सुतामर्वाङ्निशि तदाहरम् ॥ ५५ ॥ नीत्वा दुर्गतमेकांतेऽकार्षमौद्वाहिकं विधिम् ॥ गांधर्वेण विवाहेन ततोऽकार्षं हृदीप्सितम् ॥ ॥ ५६ ॥ अनिच्छंतीं तदा बालां बलात्सुरतसेवनम् ॥ अथानुपदमागत्य तत्पिता प्रातरेव माम् ॥ ५७ ॥ निश्वस्य संवृतो विप्रैस्तां वीक्ष्योद्वाहितां सुताम् ॥ शशाप कुपितो भद्र मां तदानीं स भार्गवः ॥ ५८ ॥ ॥ भार्गव उवाच ॥ ॥ निशाचरस्य धर्मेण यत्त्वयोद्वाहिता सुता ॥ तस्मान्निशाचरः पाप भव त्वमविलंबितम् ॥ ५९ ॥ इति शप्तः प्रणम्यैनं पादोपग्रहपूर्वकम् ॥ हाहेति च ब्रुवन्गाढं साश्रुनेत्रं सगद्गदम् ॥ ६० ॥ ततोहमब्रवं कस्माददोषं मां भवानिति ॥ शपते भवता दत्ता मम वाचा पुरा सुता ॥ ६१ ॥ सोद्वाहिता मया कन्या दानं सकृदिति स्मृतिः ॥ सकृज्जल्पंति राजानः सकृज्जल्पंति पण्डिताः ॥ ६२ ॥ सकृत्कन्याः प्रदीयंते त्रीण्येतानि सकृत्सकृत् ॥ किं च प्रतिश्रुतार्थस्य निर्वाहस्तत्सतां व्रतम् ॥ ॥ ६३ ॥ भवादृशानां साधूनां तस्य त्यागो विगर्हितः ॥ प्रतिश्रुता त्वया लब्धा तदा कालमियं मया ॥ ६४ ॥ उद्वोढा चाधुना नाहमुचितः शापभाजनम् ॥ वृथा शपन्ति मह्यं च भवंतस्तद्विचार्यताम् ॥ ६५ ॥ यो दत्त्वा कन्यकां वाचा पश्चाद्धरति दुर्मतिः ॥ स याति नरकं चेति धर्मशास्त्रेषु निश्चितम् ॥६६॥ तदाकर्ण्य व्यवस्यासौ तथ्यं मद्वचनं हृदा ॥ पश्चात्तापसमोपेतो मुनिर्मामित्यथाब्रवीत् ॥६७॥ न मे स्यादन्यथा वाणी उलूकस्त्वं भविष्यति ॥ निशाचरो ह्युलूकोऽपि प्रोच्यते द्विजसत्तम ॥६८॥ यदेंद्रद्युम्नविज्ञाने सहायस्त्वं भविष्यसि॥तदा त्वं प्रकृतिं विप्र प्राप्स्यसीत्यब्रवीत्स माम् ॥६९॥ तद्वाक्यसमकालं च कौशिकत्वमिदं मम ॥ एतावंति दिनान्यासीदष्टाविंशद्दिनं विधेः॥७०॥बिल्वीदलैरिति पुरा शशिशेखरस्य संपूजनेन मम दीर्घतरं किलायुः ॥ संजातमत्र च जुगुप्सितमस्य शापात्कैलासरोधसि निशाचररूपमासीत् ॥ ७१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां माहेश्वरखण्डे कौमारिकाखण्डे महीनदीप्रादुर्भावे बिल्वदलमाहात्म्यवर्णनंनामाष्टमोऽध्यायः ॥८॥छ॥ ॥ उलूक उवाच ॥ ॥ ॥ इतीदमुक्तमखिलं पूर्वजन्मसमुद्भवम् ॥ स्वरूपमायुषो हेतुः कौशिकत्वस्य चेति मे ॥ १ ॥ इत्युक्त्वा विरते तस्मिन्पुरुहूतसनामनि ॥ नाडीजंघो बको मित्रमाह तं दुःखितो वचः ॥ २ ॥ ॥ नाडीजंघ उवाच ॥ ॥ यदर्थं वयमायातास्तन्न सिद्धं महामते ॥ कार्यं तन्मरणं नूनं त्रयाणाम

१ विलक्ष्यः--लज्जितः--इत्यर्थः । २ वाक्यम्--इति शेषः । ३ स्वरूपम्--इत्यर्थः । ४ कैलासपर्वतनिर्यन्मंदाकिनीनदीतीरसमीपवर्तिप्रदेशे--इत्यर्थो बोध्यः ।

प्युपागतम् ॥ ३ ॥ इंद्रद्युम्नापरिज्ञाने भद्रकोऽयं मुमूर्षति ॥ तस्यानु मित्रं मार्कंडस्तं चान्वहमपि स्फुटम् ॥ ४ ॥ मित्रकार्ये विनिर्वृत्ते म्रियमाणं निरीक्षते ॥ यो मित्रं जीवितं तस्य धिगस्निग्धं दुरात्मनः ॥ ५ ॥ तदेतावनुयास्यामि म्रियमाणावहं द्विज ॥ आपृच्छे त्वां नमस्कार आश्लेपश्चाथ पश्चिमः ॥ ६ ॥ प्रतिज्ञातमनिष्पाद्य मित्रस्याभ्यागतस्य च ॥ कथंकारं न लज्जंते हताशा जीवितेप्सवः ॥ ७ ॥ तस्माद्वह्निं प्रवेक्ष्यामि सार्धमाभ्यामसंशयम् ॥ आपृष्टोऽस्यधुना स्नेहान्मम देहि जलांजलिम् ॥ ८ ॥ इत्युक्तवत्युलूकोऽसौ नाडीजंघे सगद्गदम् ॥ साश्रुनेत्रं स्थिरीभूय प्राह वाचं सुधामुचम् ॥ ९ ॥ ॥ उलूक उवाच ॥ ॥ मयि जीवति मित्रे मे भवान्मरणमेति च ॥ अद्यप्रभृति कस्तर्हि हृदा मम लभिष्यति ॥ १० ॥ अस्त्युपायो महानत्र गन्धमादनपर्वते ॥ मत्तश्चिरायुर्मित्रोस्ति गृध्रः प्राणसमः सुहृत् ॥ ११ ॥ स विज्ञास्यति वोऽभीष्टमिंद्रद्युम्नं महीपतिम् ॥ इत्युक्त्वा पुरतस्तस्थावुलूकः स च भूपतिः ॥ १२ ॥ मार्कंडेयो बकश्चैव प्रययुर्गंधमादनम् ॥ तमायांतमथालोक्य वयस्यं पुरतः स्थितम् ॥ १३ ॥ स्वकुलायात्प्रहृष्टोऽसौ गृध्रः संमुखमाययौ ॥ कृतसंविदसौ पूर्वं स्वागतासनभोजनैः ॥ १४ ॥ उलूकं गृध्रराजश्च कार्यं पप्रच्छ तं तथा ॥ स चाचख्यावयं मित्रं बको मेऽस्य मुनिः किल ॥ १५ ॥ मुनेरपि तृतीयोऽयं मित्रं चार्थोयमुद्यतः ॥ इंद्रद्युम्नपरिज्ञाने स्वयं जीवति नान्यथा ॥ १६ ॥ वह्निं प्रवेक्ष्यते व्यक्तमयं तदनु वै वयम् ॥ मया निषिद्धोऽयं ज्ञात्वा त्वां चिरंतनमात्मना ॥ १७ ॥ तच्चेज्जानासि तं ब्रूहि चतुर्णां देहि जीवितम् ॥ संरक्ष्याप्नुहि सत्कीर्तिं क्षयं चाखिलपाप्मनः ॥ १८ ॥ ॥ गृध्र उवाच ॥ ॥ षट्पंचाशद्व्यतीता मे कल्पा जातस्य कौशिक ॥ न दृष्टो न श्रुतोऽस्माभिरिंद्रद्युम्नो महीपतिः ॥ १९ ॥ तच्छ्रुत्वा विस्मयाविष्ट इंद्रद्युम्नोऽपि दुःखितः ॥ पप्रच्छ जीविते हेतुमतिमात्रे विहंगमम् ॥ २० ॥ ॥ गृध्र उवाच ॥ ॥ शृणु भद्र पुरा जातो मर्कटोऽहं च चापलः ॥ आसं कदाचिदभवद्वसंतोऽथ ऋतुः क्रमात् ॥ २१ ॥ तत्राग्रे देवदेवस्य वनमध्ये शिवालये ॥ भवोद्भवस्य पुरतो जगद्योगेश्वराभिधे ॥ २२ ॥ चतुर्दशीदिने हस्तनक्षत्रे हर्षणाभिधे ॥ योगे चैत्रे सिते पक्ष आसीद्दमनकोत्सवः ॥ २३ ॥ अत्र सौवर्ण्यदोलायां लिंग आरोपिते जनैः ॥ निशायामधिरुह्याऽहं दोलां तां च व्यचालयम् ॥२४॥ निसर्गाज्जातिचापल्याच्चिरकालं पुनःपुनः ॥ अथ प्रभात आयाता जनाः पूजाकृते कपिम् ॥२५॥ दोलाधिरूढमालोक्य लकुटैर्मां व्यताडयन् ॥ दोलासंस्थित एवाहं प्रमीतः शिवमंदिरे ॥२६॥ तेषां प्रहारैः सुदृढैर्बहुभिर्वज्रदुःसहैः ॥ शिवांदोलनमाहात्म्याज्जातोऽहं नृपमंदिरे ॥ २७ ॥ काशीश्वरस्य तनयः प्रतीतोऽस्मि कुशध्वजः ॥ जाति

१ सुहृदामभिलप्यति—इ० पा० । २ शुचिः—इ० पा० । ३ चित्रानक्षत्रे—इ० पा० । मूलस्थो हस्तनक्षत्रे इत्येव पाठः साधुः । पौर्णमास्या एव चित्रानक्षत्रेण समन्वितत्वस्य "सास्मिन्पौर्णमासीति संज्ञायाम्" इत्यनेनोचितत्वात् ।

ततो विमानमालंब्य देवदूतस्तमुच्चकैः ॥ इंद्रद्युम्नमुवाचेदं शृण्वतां नाकवासिनाम् ॥ १९ ॥ ॥ देवदूत उवाच ॥ ॥ नवीकृताधुना कीर्तिस्तव भूपाल निर्मला ॥ त्रिलोक्यामपि तच्छीघ्रं विमानमिदमारुह ॥ २० ॥ गम्यतां ब्रह्मणो लोकमाकल्पं तपसोर्जितम् ॥ प्रेपितोऽहमनेनैव तवानयनकारणात् ॥ २१ ॥ यावत्कीर्तिर्मनुष्यस्य पृथिव्यां प्रथिता भवेत् ॥ तावानेव भवेत्स्वर्गी सति पुण्ये ह्यनंतके ॥ २२ ॥ सुरालयसरोवापीकूपारामादिकल्पना ॥ एतदर्थं हि पूर्ताख्या धर्मशास्त्रेषु निश्चिता ॥ २३ ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ अमी ममैव सुहृदो मार्कंडबककौशिकाः ॥ गृध्रकूर्मौ प्रभावोऽयममीषां मम वृद्धये ॥ २४ ॥ तच्चेदमी मया साकं ब्रह्मलोकं प्रयांत्युत ॥ पुरःस्थितास्तदायास्ये ब्रह्मलोकं च नान्यथा ॥ २५ ॥ परेषामनपेक्ष्यैव कृतप्रतिकृतं हि यः ॥ प्रवर्तते हितायैव स सुहृत्प्रोच्यते बुधैः ॥ २६ ॥ स्वार्थोद्युक्तधियो ये स्युरन्वर्थास्ते प्यसुंधराः ॥ मरणं प्रकृतिश्चैवं जीवितं विकृतिर्यदा ॥ २७ ॥ प्राणिनां परमो लाभः केवलं प्राणिसौहृदम् ॥ दरिद्रा रागिणोऽसत्यप्रतिज्ञाता गुरुद्रुहः ॥ २८ ॥ मित्रावसानिनः पापाः प्रायो नरकमंडनाः ॥ परार्थनघास्तदमी पंच संप्रति साधवः ॥ २९ ॥ मम कीर्तिसमुद्धारः स प्रभावो महात्मनाम् ॥ अमीषां यदि ते स्वर्गं प्रयास्यन्ति मया सह । तदाहमपि यास्यामि देवदूतान्यथा न हि ॥ ३० ॥ ॥ देवदूत उवाच ॥ ॥ एते हरगणाः सर्वेशापभ्रष्टाः क्षितिं गताः ॥ ३१ ॥ शापांते हरपार्श्वे तु यास्यंति पृथिवीपते ॥ विहायेमानतो भूप त्वमागच्छ मया सह ॥ ३२ ॥ न चैषां रोचते स्वर्गो हित्वा देवं महेश्वरम् ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ यद्येवं गच्छ तद्दूत नायास्येहं त्रिविष्टपम् ॥ ३३ ॥ तथा तथा यति ष्यामि भविष्यामि यथा गणः ॥ अविशुद्धिक्षयाधिक्यदूषणैरेष निंदितः ॥ ३४ ॥ स्वर्गः सदानुश्रविकस्तस्मादेनं न कामये ॥ तत्रस्थस्य पुनः पातो भयं न व्येति मानसात् ॥ ३५ ॥ पुनः पातो यतः पुंसस्तस्मात्स्वर्गं न कामये ॥ सति पुण्ये स्वयं तेन पातितो निजलोकतः ॥ ३६ ॥ चतुर्मुखेन वैलक्ष्यं गतोऽस्मि कथमेमि तम् ॥ इतीदमुक्त्वा दूतं तं शृण्वतोऽस्यैव विस्मयात् ॥ ३७ ॥ अप्राक्षीद्भूपतिः कूर्मं तदायुःकारणं तदा ॥ इदमायुः कथं जातं कूर्म दीर्घतमं तव ॥ ३८ ॥ सुहृन्मित्रं गुरुस्त्वं मे येन कीर्तिर्ममोद्धृता ॥ ३९ ॥ ॥ कूर्म उवाच ॥ ॥ शृणु भूप कथां दिव्यां श्रवणात्पापनाशिनीम् ॥ कथां सुमधुरामेतां शिवमाहात्म्यसंयुताम् ॥ ४० ॥ शृण्वन्निमामपि कथां नृपते म

१ चैतान्--पु० पा० । २ लोभः--पु०पा० । ३ गन्तास्यहं--पु० पा० ।

नुष्यः सुश्रद्धया भवति पापविमुक्तदेहः ॥ शंभोः प्रसादमभिगम्य यथायुरेवमासीत्प्रसादत इयं मम कूर्मता च ॥ ४१ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीप्रादुर्भावे दशमोऽध्यायः ॥ १० ॥ ॥ छ ॥ ॥ कूर्म उवाच ॥ ॥ शांडिल्य इति विख्यातः पुराहमभवं द्विजः ॥ बालभावे मया भूप क्रीडमानेन निर्मितम् ॥ १ ॥ पुरा प्रावृषि पांशूत्थं शिवायतनमुच्छ्रितम् ॥ जलार्द्रवालुकाप्रायं प्रांशुप्राकारशोभितम् ॥ २ ॥ पंचायतनविन्यासमनोहरतरं नृप ॥ विनायकशिवासूर्यमधुसूदनमूर्तिमत् ॥ ३ ॥ पीतमृत्स्वर्णकलशं ध्वजमालाविभूषितम् ॥ काष्ठतोरणविन्यस्तं दोलकेन विभूषितम् ॥ ४ ॥ दृढप्रांशुसमुद्भूतसोपानश्रेणिभासुरम् ॥ सर्वाश्चर्यमयं दिव्यं वयस्यैः संवृतेन मे ॥ ५ ॥ तत्र जागेश्वरं लिंगं कृत्वाथ विनिवेशितम् ॥ बाल्यादुपलरूपं तद्वर्षावारिविशुद्धिमत् ॥ ६ ॥ बकपुष्पैस्तथान्यैश्च केदारोत्थैः समाहृतैः ॥ कोमलैरपरैः पुष्पैर्वृतिवल्लीसमुद्भवैः ॥ ७ ॥ कूष्मांडैश्चैव वर्णाढ्यैरुन्मत्तकुसुमायुतैः ॥ मंदारैर्बिल्वपत्रैश्च दूर्वाद्यैश्च नवांकुरैः ॥ ८ ॥ पूजा विरचिता रम्या शंभोरिति मया नृप ॥ ततस्तांडवमारब्धमनपेक्षितसत्क्रियम् ॥ ९ ॥ शिवस्य पुरतो बाल्याद्गीतं च स्वरवर्जितम् ॥ अकार्षं सकृदेवाहं बाल्ये शिशुगणावृतः ॥ १० ॥ ततो मृतोऽहं जातश्च विप्रो जातिस्मरो नृप ॥ वैदिशे नगरेऽकार्षं शिवपूजां विशेषतः ॥ ११ ॥ शिवदीक्षामुपागम्यानुगृहीतः शिवागमैः ॥ शिवप्रासाद आधाय लिंगं श्रद्धासमन्वितः ॥१२॥ कल्पकोटिं वसेत्स्वर्गे यः करोति शिवालयम् ॥ यावंति परमाणूनि शिवस्यायतने नृप ॥ १३ ॥ भवंति तावद्वर्षाणि कारकः शिवसद्मनि ॥ इति पौराणवाक्यानि स्मरञ्छैलं शिवालयम् ॥ १४ ॥ अकारिषमहं रम्यं विश्वकर्मविधानतः ॥ मृन्मयं काष्ठनिष्पन्नं पाक्वेष्टं शैलमेव वा ॥ १५ ॥ कृतमायतनं दद्यात्क्रमाद्दशगुणं फलम् ॥ भस्मशायी त्रिषवणो भिक्षान्नकृतभोजनः ॥ १६ ॥ जटाधरस्तपस्यंश्च शिवाराधनतत्परः ॥ इत्थं मे कुर्वतो जातं पुनर्भूप प्रमापणम्[१] ॥ १७ ॥ जातो जातिस्मरस्तत्र तृतीयेहं भवांतरे ॥ सार्वभौमो महीपालः प्रतिष्ठाने पुरोत्तमे ॥ १८ ॥ जयदत्त इति ख्यातः सूर्यवंशसमुद्भवः ॥ ततो मया बहुविधाः प्रासादाः कारिता नृप ॥ १९ ॥ तस्मिन्भवांतरे शंभोराराधनपरेण च ॥ ततो निरूपिता जाता बकपुष्पपुरस्सराः ॥ २० ॥ सौवर्णै राजतै रत्ननिर्मितैः कुसुमैर्नृप ॥ तथाविधेऽन्नदानादि करोमि नृपसत्तम ॥ २१ ॥ केवलं शिवलिंगानां पूजां पुष्पैः करोम्यहम् ॥ ततो मे भगवाञ्छंभुः संतुष्टोऽथ वरं ददौ ॥ २२ ॥ अजरामरतां राजंस्तेनैव वपुषा वृतः ॥ ततस्तथाविधं प्राप्यानन्यसाधारणं वरम् ॥ २३ ॥ विचरामि

१ प्रमापणम्-मरणमित्यर्थः ।

महीमेतां मदांध इव वारणः ॥ शिवभक्तिं विहायाथ नृपोऽहं मदनातुरः ॥ २४ ॥ प्रधर्षयितुमारब्धः स्त्रियः परपरिग्रहाः ॥ आयुषस्त पसः कीर्तेस्तेजसो यशसः श्रियः ॥ २५ ॥ विनाशकारणं मुख्यं परदारप्रधर्षणम् ॥ सकर्णः श्रुतिहीनोऽसौ पश्यन्नंधो वदञ्जडः ॥ २६ ॥ अचेतनश्चेतनावान्मूर्खो विद्वानपि स्फुटम् ॥ तदा भवति भूपाल पुरुषः क्षणमात्रतः ॥ २७ ॥ यदैव हरिणाक्षीणां गोचरं याति चक्षुषाम् ॥ मृतस्य निरये वासो जीवतश्चेश्वराद्भयम् ॥२८॥ एवं लोकद्वयं हंत्री परदारप्रधर्षणा ॥ जरामरणहीनोहमिति निश्चयमास्थितः ॥ २९ ॥ ऐहिकामुष्मिकभयं विहायाहं ततः परम् ॥ प्रधर्षयितुमारब्धस्तदा भूप परस्त्रियः ॥ ३० ॥ अथ मां संपरिज्ञाय मर्यादारहितं यमः ॥ वरप्रदानादीशस्य तदंतिकमुपा ययौ ॥ व्यजिज्ञपन्मदीयं च शंभोर्धर्मव्यतिक्रमम् ॥ ३१ ॥ ॥ यम उवाच ॥ ॥ नाहं तवानुभावेन गुप्तस्यास्य विनिग्रहम् ॥ ३२ ॥ शक्नोमि पापीनो देव मन्नियोगेऽन्यमादिश ॥ जगदाधाररूपा हि त्वयेशोक्ताः पतिव्रताः ॥ ३३ ॥ गावो विप्राः सनिगमा अलुब्धा दानशीलिनः ॥ सत्य निष्ठा इति स्वामिंस्तेषां मुख्यतमा सती ॥ ३४ ॥ तास्तेन धर्षिता लुप्तं मदीयं धर्मशासनम् ॥ वरदानप्रमत्तेन तवैव परिभूय माम् ॥ ३५ ॥ जय दत्तेन देवेश प्रतिष्ठानाधिवासिना ॥ इमां धर्मस्य भगवान्गिरमाकर्ण्य कोपितः ॥ शशाप मां समानीय वेपमानं कृतांजलिम् ॥ ३६ ॥ ॥ ईश्वर उवाच ॥ ॥ यस्माद्दुष्टसमाचार धर्षितास्ते पतिव्रताः ॥ ३७ ॥ कामार्तेन मया शप्तस्तस्मात्कूर्मः क्षणाद्भव ॥ ततः प्रणम्य विज्ञप्तः शापतापहरो मया ॥ ३८ ॥ प्राह षष्टितमे कल्पे विशापो भविता गणः ॥ मदीय इति संप्रोच्य जगामादर्शनं शिवः ॥ ३९ ॥ अहं कूर्मस्तदा जातो दशयोजनविस्तृतः ॥ समुद्रसलिले नीतस्त्वयाहं यज्ञसाधने ॥ ४० ॥ पुरस्ताद्यायजूकेन[1] स्मरंस्तच्च बिभेमि ते ॥ दग्धस्त्वयाहं पृष्ठेत्र व्रणान्येतानि पश्य मे ॥ ४१ ॥ चयनानि बहून्यत्र कल्पसूत्रविधानतः ॥ पृष्ठोपरि कृतान्यासन्निंद्रद्युम्न तदा त्वया ॥ ४२ ॥ भूयः संतापिता यज्ञैः पृथिवी पृथिवीपते ॥ सुस्राव सर्वतीर्थानां सारं साऽभून्महीनदी ॥ ४३ ॥ तस्यां च स्नानमात्रेण सर्वपापैः प्रमुच्यते ॥ ततो नैमित्तिके कस्मिन्नपि प्रलय आगतः ॥ ४४ ॥ प्लवमानमिदं राजन्मानसं शतयोजनम् ॥ षट्पंचाशत्प्रमाणेन कल्पा मम पुरा नृप ॥ ४५ ॥ व्यतीता इह चत्वारः शेषे मोक्षस्ततः परम् ॥ एवमायुरिदं दीर्घमेवं शापाच्च कूर्मता ॥ ४६ ॥ ममाभूदीश्वरस्यैव सतीधर्मद्रुहो नृप ॥ ब्रूहि किं क्रियतां शत्रोरपि ते गृहगामिनः ॥ ४७ ॥ मम पृष्ठिश्चिरं[2] भूप त्वया दग्धाग्निनाऽपुरा ॥ अहं ज्वलंतीमिव तां पश्याम्यद्यापि सत्रिणा[3] ॥ ४८ ॥ इदं विमानमायातं त्वया कस्मान्निरा

१ 'यायजूकोऽतियष्टारे'—इत्यमरः । २ अधुना—इ॰ पा॰ । ३ सत्रिणा—अद्यापि ज्वलन्तीं पृष्ठिं पश्यामि—इत्यनेन—कीर्तिरखंडितानुगतिर्वर्णिता ततस्ते स्वर्गादिलोका उचिताः—इति तात्पर्यम् ।

कृतम् ॥ देवदूतसमायुक्तं भुंक्ष्व भोगान्निजार्जितान् ॥ ४९ ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ चतुर्मुखेन तेनाहं स्वर्गान्निर्वासितः स्वयम् ॥ विलक्ष्यो[1] न प्रयास्यामि पाताधिक्यादिदूषिते ॥ ५० ॥ तस्माद्विवेकवैराग्यमविद्यापापनाशनम् ॥ आलिंग्याहं यतिष्यामि प्राप्य बोधं विमुक्तये ॥ ५१ ॥ तन्मे गृहागतस्याद्य यथातिथ्यकरो भवान् ॥ तदादिश यथाऽपारपारदः कोपि मे गुरुः ॥ ५२ ॥ ॥ कूर्म उवाच ॥ ॥ लोमशोनाम दीर्घायुर्मत्तोऽप्यस्ति महामुनिः ॥ मया कलापग्रामे स पूर्वं दृष्टः क्वचिन्नृप ॥ ५३ ॥ ॥ इंद्रद्युम्न उवाच ॥ ॥ तस्मादागच्छ गच्छामस्तमेव सहिता वयम् ॥ प्राहुः पूततमां तीर्थादपि सत्संगतिं बुधाः ॥ ५४ ॥ इत्थं निशम्य नृपतेर्वचनं तदानीं सर्वेऽपि ते षडथ तं मुनिमुख्यमाशु ॥ चित्ते विधाय मुदिताः प्रययुर्द्विजेंद्रं जिज्ञासवः सुचिरजीवितहेतुमस्य ॥ ५५ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीप्रादुर्भावे कूर्माख्याननामैकादशोऽध्यायः ॥ ११ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ अथ ते ददृशुः पार्थ संयमस्थं महामुनिम् ॥ क्रियायोगसमायुक्तं तपोमूर्तिधरं यथा ॥ १ ॥ जटास्त्रिषवणस्नानकपिलाः शिरसा तदा ॥ धारयन्तं लोमशाख्यमाज्यसिक्तमिवानलम् ॥ २ ॥ सव्यहस्ते तृणौघं च च्छायार्थे विप्रसत्तमम् ॥ दक्षिणे चाक्षमालां च बिभ्रतं मैत्रमार्गगम् ॥ ३ ॥ अहिंसयन्दुरुक्ताद्यैः प्राणिनो भूमिचारिणः ॥ यः सिद्धिमेति जप्येन स मैत्रो मुनिरुच्यते ॥ ४ ॥ बकभूपद्विजोलूकगृध्रकूर्मा विलोक्य च ॥ नेमुः कलापग्रामे तं चिरंतनतपोनिधिम् ॥५॥ स्वागतासनसत्कारेणामुना तेऽति सत्कृताः ॥ यथोचितं प्रतीतास्तमाहुः कार्यं हृदि स्थितम् ॥६॥ ॥ ॥ कूर्म उवाच ॥ ॥ इन्द्रद्युम्नोऽयमवनीपतिः सत्रिजनाग्रणीः ॥ कीर्तिलोपान्निरस्तोऽयं वेधसा नाकपृष्ठतः ॥७॥ मार्कंडेयादिभिः प्राप्य कीर्त्युद्धारं च सत्तम ॥ नायं कामयते स्वर्गं पुनःपातादिभीषणम् ॥८॥ भवतानुगृहीतोऽयमिहेच्छति महोदयम् ॥ प्रणोद्य[2]स्तदयं भूपः शिष्यस्ते भगवन्मया ॥ त्वत्सकाशमिहानीतो ब्रूहि साध्वस्य वांछितम् ॥ ९ ॥ परोपकरणं नाम साधूनां व्रतमाहितम् ॥ विशेषतः प्रणोद्यानां[3] शिष्यवृत्तिमुपेयुषाम् ॥ १० ॥ अप्रणोद्येषु पापेषु साधु[4] प्रोक्तमसंशयम् ॥ विद्वेषं मरणं चापि कुरुतेऽन्यतरस्य च ॥११॥ अप्रमत्तः प्रणोद्येषु मुनिरेष प्रयच्छति ॥ तदेवेति भवानेवं धर्मं वेत्ति कुतो वयम् ॥१२॥ ॥ लोमश उवाच ॥ ॥ कूर्म युक्तमिदं सर्वं त्वयाभिहितमद्य नः ॥ धर्मशास्त्रोपनतं तत्स्मारिताः स्म पुरातनम् ॥१३॥

१ विलक्ष्यो लज्जित इत्यर्थः । २ प्रबोध्यः–इ० पा० । प्रणोद्यः–प्रबोध्य इत्येवार्थः । ३ प्रबोध्यानाम्–इ० पा० । ४ यत्साधु उपदेशवाक्यं प्रोक्तं, तत्–असंशयम्–अन्यतरस्य गुरोर्वा पापस्य शिष्यस्य वा विद्वेषं वा मरणं वा कुरुते–इति योजना ।

ब्रूहि राजन्सुविश्रब्धं सन्देहं हृदयस्थितम् ॥ कस्ते किमब्रवीच्छेपं वक्ष्याम्यहं न संशयः ॥ १४ ॥ ॥ इन्द्रद्युम्न उवाच ॥ ॥ भगवन्प्रथमः प्रश्नस्तावदेव ममोच्यताम् ॥ ग्रीष्मकालेऽपि मध्यस्थे रवौ किं न तवाश्रमः ॥ १५ ॥ कुटीमात्रोऽपि यच्छाया तृणैः शिरसि पाणिगैः ॥ १६ ॥ ॥ ॥ लोमश उवाच ॥ ॥ मर्तव्यमस्त्यवश्यं च काय एष पतिष्यति ॥ कस्यार्थे क्रियते गेहमनित्यभवमध्यगैः ॥ १७ ॥ यस्य मृत्युर्भवेन्मित्रं पीतं वाऽमृतमुत्तमम् ॥ तस्यैतदुचितं वक्तुमिदं मे श्वो भविष्यति ॥ १८ ॥ इदं युगसहस्रेषु भविष्यमभवद्दिनम् ॥ तदप्यद्यत्वमापन्नं का कथा मरणावधेः ॥ १९ ॥ कारणानुगतं कार्यमिदं शुक्रादभूद्वपुः ॥ कथं विशुद्धिमायाति क्षालितांगारवद्वद ॥ २० ॥ तदस्यापि कृते पापं शत्रुष ड्वर्गनिर्जिताः ॥ कथंकारं न लज्जन्ते कुर्वाणा नृपसत्तम ॥ २१ ॥ तद्ब्रह्मण इहोत्पन्नः सिकताद्वयसम्भवः ॥ निगमोक्तं पठञ्छृण्वन्निदं जीविष्यते कथम् ॥ २२ ॥ तथापि वैष्णवी माया मोहयत्यविवेकिनम् ॥ हृदयस्थं न जानंति ह्यपि मृत्युं शतायुषः ॥ २३ ॥ दन्ताश्चलाश्चला लक्ष्मीर्यौवनं जीवितं नृप ॥ चलाचलमतीवेदं दानमेवं गृहं नृणाम् ॥ २४ ॥ इति विज्ञाय संसारमसारं च चलाचलम् ॥ कस्यार्थे क्रियते राजन्कुटजादि परिग्रहः ॥२५॥ ॥ इन्द्रद्युम्न उवाच ॥ ॥ चिरायुर्भगवानेव श्रूयते भुवनत्रये ॥ तदर्थमहमायातस्तत्किमेवं वचस्तव ॥२६॥ ॥ लोमश उवाच ॥ ॥ प्रतिकल्पं मच्छरीरादेकरोमपरिक्षयः ॥ जायते सर्वनाशे च मम भावि प्रमापणम् ॥ २७ ॥ पश्य जानुप्रदेशं मे द्व्यंगुलं रोमवर्जितम् ॥ जातं वपुस्तद्बिभेमि मर्तव्ये सति किं गृहैः ॥ २८ ॥ ॥ नारद उवाच ॥ ॥ इत्थं निशम्य तद्वाक्यं स प्रहस्यातिविस्मितः ॥ भूपालस्तस्य पप्रच्छ कारणं तादृशायुषः ॥ २९ ॥ ॥ इन्द्रद्युम्न उवाच ॥ ॥ पृच्छामि त्वामहं ब्रह्मन्यदायुरिदमीदृशम् ॥ तव दीर्घं प्रभावोऽसौ दानस्य तपसोऽथवा ॥ ३० ॥ ॥ ॥ लोमश उवाच ॥ ॥ शृणु भूप प्रवक्ष्यामि पूर्वजन्मसमुद्भवाम् ॥ शिवधर्मयुतां पुण्यां कथां पापप्रणाशनीम् ॥३१॥ अहमासं पुरा शूद्रो दरिद्रोऽतीवभूतले ॥ भ्रमामि वसुधापृष्ठे ह्यशनापीडितो भृशम् ॥ ३२ ॥ ततो मया महल्लिंगं जालिमध्यगतं तदा ॥ मध्याह्नेऽस्य जलाधारो दृष्टश्चैवा विदूरतः ॥ ३३ ॥ ततः प्रविश्य तद्वारि पीत्वा स्नात्वा च शांभवम् ॥ तल्लिंगं स्नापितं पूजा विहिता कमलैः शुभैः ॥ ३४ ॥ अथ क्षुत्क्षामकंठोऽहं श्रीकंठं तं नमस्य च ॥ पुनः प्रचलितो मार्गे प्रमीतो नृपसत्तम ॥ ३५ ॥ ततोऽहं ब्राह्मणगृहे जातो जातिस्मरः सुतः ॥ स्नापनाच्छिवलिंगस्य सकृत्कमलपूजनात् ॥ ३६ ॥ स्मरन्विलसितं मिथ्या सत्याभासमिदं जगत् ॥ अविद्यामयमित्येवं ज्ञात्वा मूकत्वमास्थितः ॥ ३७ ॥ तेन विप्रेण

१ भगवान्—त्वम्—इत्यर्थोत्र बोध्यः—"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति महर्षेर्भगवच्छब्दवाच्यत्वम् । २ जलाधारः—तीर्थजलाशयः—इत्यर्थः ।

वार्धक्ये समाराध्य महेश्वरम् ॥ प्राप्तोऽहमिति मे नाम ईशान इति कल्पितम् ॥ ३८ ॥ ततः स विप्रो वात्सल्यादगदान्सुबहून्मम ॥ चकार व्यपनेष्यामि मूकत्वमिति[1] निश्चयः[2] ॥ ३९ ॥ मंत्रवादान्बहून्वैद्यानुपायानपरानपि ॥ पित्रोस्तथा महामायासंबद्धमनसोस्तथा ॥ ४० ॥ निरीक्ष्य मूढतां हास्यमासीन्मनसि मे तदा ॥ तथा यौवनमासाद्य निशि हित्वा निजं गृहम् ॥ ४१ ॥ संपूज्य कमलैः शंभुं ततः शयनमभ्यगाम् ॥ ततः प्रमीते पितरि मूढ[3]इत्यहमुज्झितः ॥ ४२ ॥ संबंधिभिः प्रतीतोऽथ फलाहारमवस्थितः ॥ प्रतीतः पूजयामीशमब्जैर्बहुविधैस्तथा ॥ ४३ ॥ अथ वर्षशतस्यांते वरदः शशिशेखरः ॥ प्रत्यक्षो याचितो देहि जरामरणसंक्षयम् ॥ ४४ ॥ ॥ ईश्वर उवाच ॥ ॥ अजरामरता नास्ति नामरूपभृतो यतः ॥ ममापि देहपातः स्यादवधिं कुरु जीविते ॥ ४५ ॥ इति शंभोर्वचः श्रुत्वा मया वृतमिदं तदा ॥ कल्पांते रोमपातोऽस्तु मरणं सर्वसंक्षये ॥ ॥ ४६ ॥ ततस्तव गणो भूयामिति मेऽभीप्सितो वरः ॥ तथेत्युक्त्वा स भगवान्हरश्चादर्शनं गतः ॥ ४७ ॥ अहं तपसिनिष्ठश्च[4] ततः प्रभृति चाभवम् ॥ ब्रह्महत्यादिभिः पापैर्मुच्यते शिवपूजनात् ॥ ४८ ॥ ब्रध्नाब्जैरितरैर्वापि कमलैर्नात्र संशयः ॥ एवं कुरु महाराज त्वमप्याप्स्यसि वांछितम् ॥ ४९ ॥ हरभक्तस्य लोकस्य त्रिलोक्यां नास्ति दुर्लभम् ॥ बहिःप्रवृत्तिं संगृह्य ज्ञानकर्मेन्द्रियादि च ॥ ५० ॥ लयः सदाशिवे नित्यमंतर्योगोऽयमुच्यते ॥ दुष्करत्वाद्बहिर्योगं शिव एव स्वयं जगौ ॥ ५१ ॥ पंचभिश्चार्चनं भूतैर्विशिष्टफलदं ध्रुवम् ॥ क्लेशकर्मविपाकाद्यैराशयैश्चाप्य संयुतम् ॥५२॥ ईशानमाराध्य जपन्प्रणवं मुक्तिमाप्नुयात् ॥ सर्वपापक्षये जाते शिवे भवति भावना ॥५३॥ पापोपहतबुद्धीनां शिवे वार्तापि दुर्लभा ॥ दुर्लभं भारते जन्म दुर्लभं शिवपूजनम् ॥ ५४ ॥ दुर्लभं जाह्नवीस्नानं शिवे भक्तिः सुदुर्लभा ॥ दुर्लभं ब्राह्मणे दानं दुर्लभं वह्निपूजनम् ॥ ५५ ॥ अल्पपुण्यैश्च दुष्प्रापं पुरुषोत्तमपूजनम् ॥ ५६ ॥ लक्षेण धनुषां योगस्तदर्धेन हुताशनः ॥ पात्रं शतसहस्रेण रेवा रुद्रश्च षष्टिभिः ॥ ५७ ॥ इतीदमुक्तमखिलं मया तव महीपते ॥ यथायुरभवद्दीर्घं समाराध्य महेश्वरम् ॥ ५८ ॥ न दुर्लभं न दुष्प्रापं न चासाध्यं महात्मनाम् ॥ शिवभक्तिकृतां पुंसां त्रिलोक्यामिति निश्चितम् ॥ ५९ ॥ नंदीश्वरस्य तेनैव वपुषा शिवपूजनात् ॥ सिद्धिमालोक्य को राजञ्छंकरं न नमस्यति ॥ ॥ ६० ॥ श्वेतस्य च महीपस्य श्रीकंठं च नमस्यतः ॥ कालोपि प्रलयं यातः कस्तमीशं न पूजयेत् ॥ १६ ॥ यदिच्छया विश्वमिदं जायते व्यव

१ वै पुनः—इ० पा० । २ इति निश्चयो यस्य स इतिनिश्चयः इति समस्तं पदं ब्राह्मणस्य विशेषणमिदम् । ३ मूकः—इ० पा० । ४ तपसिनिष्ठः—इत्यलुक्समासः—उरसिलोमेतिवत् । "हलदन्तात्—" इत्यत्र 'संज्ञायाम्' इत्यस्य योगविभागेन पार्थक्येन असंज्ञायामपि पूर्वेणालुक् । ५ पदम्—इ०, स्थानम्—इ०, घटम्—इ० च पा० ।

तिष्ठते ॥ तथा संलीयते चांते कस्तं न शरणं व्रजेत् ॥ ६२ ॥ एतद्रहस्यमिदमेव नृणां प्रधानं कर्तव्यमत्र शिवपूजनमेव भूप ॥ यस्यांतरायपदवीमुपयांति लोकाः[1] सद्यो नरः शिवनतः शिवमेति सत्यम् ॥ ६३ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीप्रादुर्भावे लोमशवृत्तान्ते शिवपूजनमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥ छ ॥

॥ ॥ नारद उवाच ॥ ॥ इति तस्य मुनींद्रस्य भूपतिः शुश्रुवान्वचः ॥ प्राह नाहं गमिष्यामि त्वां विहाय नरं[3] क्वचित् ॥ १ ॥ लिंगमाराधयिष्येऽद्य सर्वसिद्धिप्रदं नृणाम् ॥ त्वयैवानुगृहीतोऽद्य यांतु सर्वे यथागतम् ॥ २ ॥ तद्भूपतिवचः श्रुत्वा बको गृध्रोऽथ कच्छपः ॥ उलूकश्च तथैवोचुः प्रणता लोमशं मुनिम्[2] ॥ ३ ॥ स च सर्वसुहृद्विप्रस्तथेत्येवाह तांस्तदा ॥ प्रणोद्यान्प्रणतान्सर्वाननुजग्राह शिष्यवत् ॥ ४ ॥ शिवदीक्षाविधानेन लिंगपूजां समादिशत् ॥ तेषामनुग्रहपरो मुनिः प्रणतवत्सलः[4] ॥ तीर्थादप्यधिकं स्थाने सतां साधुसमागमः ॥ ५ ॥ पचेलिमफलः[5] सद्यो दुरंतकलुपापहः ॥ अपूर्वः कोऽपि सद्गोष्ठीसहस्रकिरणोदयः ॥ ६ ॥ य एकांततयात्यंतमंतर्गततमोपहः ॥ साधुगोष्ठीस मुद्भूतसुखामृतरसोर्मयः ॥ ७ ॥ सर्वे वराः सुधाकाराः शर्करामधुपड्गसाः[6] ॥ ततस्ते साधुसंसर्गं संप्राप्ताः शिवशासनात् ॥ ८ ॥ आरेभिरे क्रियायोगं मार्कंडनृपपूर्वकाः ॥ तेषां तपस्यतामेवं समाजग्मे[7] कदाचन ॥ तीर्थयात्रानुषंगेन लोमशालोकनोत्सुकः ॥ ९ ॥ मुख्या पुरुषयात्रा हि तीर्थयात्रानुषंगतः ॥ सद्भिः समाश्रितो[8] भूप भूमिभागस्तथोच्यते ॥ १० ॥ कृतार्हणातिथ्यविधिं विश्रांतं मां च फाल्गुन ॥ प्रणम्य तेऽथ पप्रच्छुर्नाडीजंघपुरःसराः ॥ ११ ॥ ॥ त उचुः ॥ ॥ शापभ्रष्टा वयं ब्रह्मंश्चत्वारोऽपि स्वकर्मणा ॥ तन्मुक्तिसाधनार्थाय स्थानं किंचित्समादिश ॥ १२ ॥ इयं हि निष्फला भूमिः सफलं भारतं मुने ॥ १३ ॥ तत्रापि क्वचिदेकत्र सर्वतीर्थफलं वद ॥ इति पृष्टस्त्वहं तैश्च तानब्रवमिदं तदा ॥ १४ ॥ संवर्तं परिपृच्छध्वं स वो वक्ष्यति तत्त्वतः ॥ सर्वतीर्थफलावाप्तिकारकं भूप्रदेशकम् ॥ १५ ॥ ॥ त उचुः ॥ ॥ कुत्रासौ विद्यते योगी नाज्ञासिष्म वयं च तम् ॥ संवर्तदर्शनान्मुक्तिरिति चास्मदनुग्रहः ॥ १६ ॥ यदि जानासि तं ब्रूहि सुहृत्संगो न निष्फलः ॥ ततोऽहमब्रवं तांश्च विचार्येदं पुनःपुनः ॥ १७ ॥ वाराणस्यामसावास्ते संवर्तो गुप्तलिंगभृत् ॥ मलदिग्धो विवसनो भिक्षाशी कृतपादनु ॥ १८ ॥

१ लोकाः स्वर्गसत्यादयो लोकाः । २ निलयम्—इ०पा० । ३ अन्यं नरमित्यर्थः । ४ सुव्रतवत्सलः—इ०पा० । ५ पचेलिमफलः—परिपक्वफलः इत्यर्थः । तदुत्तमफलः—इ०पा० । ६ सुधासीधुशर्करामधुपड्गसाः—इ० पा० । ७ समाजग्मे—अहं नारदः समागतः इत्यर्थः । समागतोऽस्मि—इति वा । ८ सद्भिः समाश्रितं मुक्तिस्थानं किंचित्समादिश—इ०पा० ।

करपात्रकृताहारः सर्वथा निष्परिग्रहः ॥ भावयन्ब्रह्म परमं प्रणवाभिधमीश्वरम् ॥ १९ ॥ भुक्त्वा निर्याति सायाह्ने वनं न ज्ञायते जनैः ॥ योगीश्वरोऽसौ तद्रूपाः सन्त्यन्ये लिंगधारिणः ॥ २० ॥ वक्ष्यामि लक्षणं तस्य यथा ज्ञास्यथ तं मुनिम् ॥ प्रतोल्या राजमार्गे तु निशि भूमौ शवं जनैः ॥ २१ ॥ अविज्ञातं स्थापनीयं स्थेयं तदविदूरतः ॥ यस्तां भूमिमुपागम्य अकस्माद्विनिवर्तते ॥ २२ ॥ स संवर्तो न चाक्रामत्येष शल्यमसंशयम् ॥ प्रष्टव्योऽभिमतं चासावुपाश्रित्य विनीतवत् ॥ २३ ॥ यदि पृच्छति केनाहमाख्यात इति मां ततः ॥ निवेद्य चैतद्वक्तव्यं त्वामाख्यायाग्निमाविशत् ॥ २४ ॥ तच्छ्रुत्वा ते तथा चक्रुः सर्वेपि वचनं मम ॥ प्राप्य वाराणसीं दृष्ट्वा संवर्तं ते तथा व्यधुः[1] ॥ २५ ॥ शवं दृष्ट्वा च तैर्न्यस्तं संवर्तो वै न्यवर्तत ॥ क्षुत्परीतोऽपि तं ज्ञात्वा ययुस्तमनु शीघ्रगम् ॥ २६ ॥ तिष्ठ ब्रह्मन्क्षणमिति जल्पंतो राजमार्गगम् ॥ याति निर्भर्त्सयत्येप निवर्तध्वमिति ब्रुवन् ॥ २७ ॥ समया[2] मामरे भोऽद्य नागंतव्यं न वो हितम् ॥ पलायनमसौ कृत्वा गत्वा दूरतरं सरः ॥ कुपितः प्राह तान्सर्वान्केनाख्यातोऽहमित्युत ॥ २८ ॥ निवेदयत शीघ्रं मे यथा भस्म करोमि तम् ॥ शापाग्निनाथ वा युष्मान्यदि सत्यं न वक्ष्यथ ॥ २९ ॥ अथ प्रकंपिताः प्राहुर्नारदेनेति तं मुनिम् ॥ स तानाह पुनर्यातः पिशुनः क्व नु संप्रति ॥ ३० ॥ लोकानां येन शापाग्नौ भस्मशेषं करोमि तम् ॥ ब्रह्मबंधुमहं प्राहुर्भीतास्ते तं पुनर्मुनिम् ॥ ३१ ॥ ॥ त ऊचुः ॥ ॥ त्वां निवेद्य स चास्माकं प्रविष्टो हव्यवाहनम् ॥ तत्कालमेव विप्रेंद्र न विद्मस्तत्र कारणम् ॥ ३२ ॥ ॥ संवर्त उवाच ॥ ॥ अहमप्येवमेवास्य कर्ता तेन स्वयं कृतम् ॥ तद्ब्रूत कार्यं नैवात्र चिरं स्थास्यामि वः कृते ॥ ॥ ३३ ॥ ॥ अर्जुन उवाच ॥ ॥ यदि नारद देवर्षे प्रविष्टोऽसि हुताशनम् ॥ जीवितस्तत्कथं भूय आश्चर्यमिति मे वद ॥ ३४ ॥ ॥ ॥ ॥ नारद उवाच ॥ ॥ न हुताशः समुद्रो वा वायुर्वा वृक्षपर्वतः ॥ आयुधं वा न मे शक्ता देहपाताय भारत ॥ ३५ ॥ पुनरेतत्कृतं चापि संवर्तो मन्यते यथा ॥ अहं सन्मानितश्चेति वह्निं प्राप्याप्यगामहम् ॥ ३६ ॥ यथा पुष्पगृहे कश्चित्प्रविशत्यंग फाल्गुन ॥ तथाहमग्निं संविश्य यातवानुत्तरं शृणु ॥ ३७ ॥ संवर्तस्तान्पुनः प्राह मार्कंडेयसुखानिति ॥ विशल्यः क्रियतां पंथाः क्षुधितोऽहं पुनः पुरीम् ॥ भिक्षार्थं पर्यटिष्यामि प्रश्नं प्रब्रूत चैव मे ॥ ३८ ॥ ॥ त ऊचुः ॥ ॥ शापभ्रष्टा वयं मोक्षं प्राप्स्यामस्त्वदनुग्रहात् ॥ प्रतीकारं तदाख्याहि प्रणतानां महामुने ॥ ३९ ॥ यत्र तीर्थे सर्वतीर्थफलं प्राप्नोति मानवः ॥ तत्तीर्थं ब्रूहि संवर्त तिष्ठामो यत्र वै वयम् ॥ ४० ॥ ॥ संवर्त उवाच ॥ ॥ नमस्कृत्य कुमाराय दुर्गाभ्यश्च नरो

---

१ व्यधुः—अकार्षुः—इत्यर्थः । विदुः—इति पाठान्तरम् । २ समया—समीपे—इत्यर्थः ।

त्तमाः ॥ तीर्थं च संप्रवक्ष्यामि महीसागरसंगमम् ॥ ४१ ॥ अमुना राजसिंहेन इंद्रद्युम्नेन धीमता ॥ यजनाद्व्यंगुलोत्सेधा कृतेयं वसुधायदा ॥ ॥ ४२ ॥ तदा संताप्यमानाया भुवः काष्ठस्य वै यथा ॥ सुस्राव यो जलौघश्च सर्वदेवनमस्कृतः ॥ ४३ ॥ महीनाम नदी सा च पृथिव्यां यानि कानिचित् ॥ तीर्थानि तेषां सलिलसंभवं तज्जलं विदुः ॥ ४४ ॥ महीनाम समुत्पन्ना देशे मालवकाभिधे ॥ दक्षिणं सागरं प्राप्ता पुण्योभयतटा शिवा ॥ ४५ ॥ सर्वतीर्थमयी पूर्वं महीनाम महानदी ॥ किं पुनर्यः समायोगस्तस्याश्च सरितां पतेः ॥ ४६ ॥ वाराणसी कुरुक्षेत्रं गंगा रेवा सरस्वती ॥ ४७ ॥ तापी पयोष्णी निर्विंध्या चन्द्रभागा इरावती ॥ कावेरी शरयूश्चैव गंडकी नैमिपं तथा ॥ ४८ ॥ गया गोदावरी चैव अरुणा वरुणा तथा ॥ एताः पुण्याः शतशोन्या याः काश्चित्सरितो भुवि ॥ ४९ ॥ सहस्रविंशतिश्चैव पट्शतानि तथैव च ॥ तासां सारसमुद्धृतं महीतोयं प्रकीर्तितम् ॥५०॥ पृथिव्यां सर्वतीर्थेषु स्नात्वा यत्फलमाप्यते ॥ तन्महीसागरे प्रोक्तं कुमारस्य वचो यथा ॥५१॥ एकत्र सर्वतीर्थानां यदि संयोगमिच्छथ ॥ तद्गच्छथ महापुण्यं महीसागरसंगमम् ॥ ५२ ॥ अहं चापि च तत्रैव बहून्वर्षगणान्पुरा ॥ अवसं चागतश्चात्र नारदस्य भयात्तथा ॥ ॥ ५३ ॥ स हि तत्र समीपस्थः पिशुनश्च विशेपतः ॥ मरुत्तः कुरुते यत्नं तस्मै ब्रूयादिदं भयम् ॥ ५४ ॥ अत्र दिग्वाससां मध्ये बहूनां तत्समस्त्वहम् ॥ निवसाम्यतिप्रच्छन्नो मरुत्तादतिभीतवत् ॥ ५५ ॥ पुनरत्रापि मां नूनं कथयिष्यति नारदः ॥ तथाविधा हि चेष्टास्य पिशुनस्य प्रदृश्यते ॥ ॥ ५६ ॥ भवद्भिश्च न चाप्यत्र वक्तव्यं कस्यचित्कचित् ॥ मरुत्तः कुरुते यत्नं भूपालो यज्ञसिद्धये ॥ ५७ ॥ देवाचार्येण संत्यक्तो भ्रात्रा मे कारणांतरे ॥ गुरुपुत्रं च मां ज्ञात्वा यज्ञार्त्विज्यस्य कारणात् ॥ ५८ ॥ अविद्यांतर्गतैर्यज्ञकर्मभिर्न प्रयोजनम् ॥ मम हिंसात्मकैरस्ति निगमोक्तैरचेतनैः ॥ ५९ ॥ समित्पुष्पकुशप्रायैः साधनैर्यद्यचेतनैः ॥ क्रियते तत्तथा भावि कार्यं कारणवन्नृणाम् ॥ ६० ॥ तद्यूयं तत्र गच्छध्वं शीघ्रमेव नृपानुगाः ॥ अस्ति विप्रः स्वयं ब्रह्मा याज्ञवल्क्यश्च तत्र वै ॥ ६१ ॥ स हि पूर्वं मिथेः पुर्यां वसन्नाश्रममुत्तमम् ॥ आगच्छमानं नकुलं दृष्ट्वा गार्गीं वचोऽब्रवीत् ॥ ६२ ॥ गार्गि रक्ष पयो भद्रे नकुलोऽयमुपेति च ॥ पयः पातुं कृतिमतिं नकुलं तं निराकुरु ॥ ६३ ॥ इत्युक्तो नकुलः क्रुद्धः स हि क्रुद्धः पुराऽभवत् ॥ जमदग्नेः पूर्वजैश्च शप्तः प्रोवाच तं मुनिम् ॥ ॥ ६४ ॥ अहो वा धिग्धिगित्येव भूयो धिगिति चैव हि ॥ निर्लज्जता मनुष्याणां दृश्यते पापकारिणाम् ॥ ६५ ॥ कथं ते नाम पापानि प्रकुर्वंति

१ महीसागरसंगमं–इ०पा० । २ प्रच्छन्ना–इ०पा० ।

नराधमाः ॥ मरणांतरिता येषां नरके तीव्रवेदना ॥ ६६ ॥ निमेषोऽपि न शक्येत जीविते यस्य निश्चितम् ॥ तन्मात्रपरमायुर्यः पापं कुर्यात्कथं स च ॥ ६७ ॥ त्वं मुने मन्यसे चेदं कुलीनोऽस्मीति बुद्धिमान् ॥ ततः क्षिपसि मां मूढ नकुलोऽयमिति स्मयन् ॥ ६८ ॥ किमधीतं याज्ञवल्क्य का योगेश्वरता तव ॥ निरपराधं क्षिपसि धिगधीतं हि तत्तव ॥ ६९ ॥ कस्मिन्वेदे स्मृतौ कस्यां प्रोक्तमेतद्ब्रवीहि मे ॥ परुषैरिति वाक्यैर्मां नकुलेति ब्रवीपि यत् ॥ ७० ॥ किमिदं नैव जानासि यावत्यः परुषा गिरः ॥ परः संश्राव्यते तावच्छंकवः श्रोत्रतः पुरा ॥ ७१ ॥ कंठे यमानुगाः पादं कृत्वा तस्य सुदुर्मतेः ॥ अतीव रुदतो लोहशंकून्क्षेप्स्यंति कर्णयोः ॥ ७२ ॥ वावदूकाश्च ध्वजिनो मुष्णंति कृपणाञ्जनान् ॥ स्वयं हस्तसहस्रेण धर्मस्यैवं भवद्विधाः ॥ ७३ ॥ वज्रस्य दिग्धशस्त्रस्य कालकूटस्य चाप्युत ॥ समेन वचसा तुल्यं मृत्योरिति ममाभवत् ॥[1] ७४ ॥ कर्णनासिकनाराचान्निर्हरंति शरीरतः ॥ वाक्छल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ७५ ॥ यंत्रपीडैः समाक्रम्य वरमेष हतो नरः ॥ न तु तं परुषैर्वाक्यैर्जिघांसेत कथंचन ॥ ७६ ॥ त्वया त्वहं याज्ञवल्क्य नित्यं पंडितमानिना ॥ नकुलोसीति तीव्रेण वचसा ताडितः कुतः ॥ ७७ ॥ ॥ ॥ संवर्त उवाच ॥ ॥ इति श्रुत्वा वचस्तस्य भृशं विस्मितमानसः ॥ याज्ञवल्क्योऽब्रवीदेतत्प्रबद्धकरसंपुटः ॥ ७८ ॥ नमोऽधर्माय महते न विद्मो यस्य वै भवम् ॥ परमाणुमपि व्यक्तं कोत्र विद्यामदः सताम् ॥ ७९ ॥ विरंचिविष्णुप्रमुखाः सोमेंद्रप्रमुखास्तथा ॥ सर्वज्ञास्तेऽपि मुह्यंति गणनास्मादृशां च का ॥ ८० ॥ धर्मज्ञोऽस्मीति यो मोहादात्मानं प्रतिपद्यते ॥ स वायुं मुष्टिना बद्धुमीहते कृपणो नरः ॥ ८१ ॥ केचिदज्ञानतो नष्टाः केचिज्ज्ञानमदादपि[2] ॥ ज्ञानं प्राप्यापि नष्टाश्च केचिदालस्यतोऽधमाः ॥ ८२ ॥ वेदस्मृतीतिहासेषु पुराणेषु प्रकल्पितम् ॥ चतुःपादं तथा धर्मं नाचरत्यधमः पशुः ॥ ८३ ॥ स पुरा शोचते व्यक्तं प्राप्य तच्चांतकं[3] गृहम् ॥ तथाहि गृह्यकारेण श्रुतौ प्रोक्तमिदं वचः ॥ ८४ ॥ नकुलं सकुलं ब्रूयान्न कंचिन्मर्मणि स्पृशेत् ॥ प्रपठन्नपि चैवाहमिदं सर्वं तथा शुकः ॥ ८५ ॥ आलस्येनाप्यनाचाराद्वृथाकार्येकमंग तत् ॥८६॥ केवलं पाठमात्रेण यश्च संतुष्यते नरः ॥ तथा पंडितमानी च कोन्यस्तस्मात्पशुर्मतः ॥ ८७ ॥ न च्छंदांसि वृजिनात्तारयंति मायाविनं माययाऽऽवर्तमानम् ॥ नीडं शकुंता इव जातपक्षाश्छंदास्येनं प्रजहत्यंतकाले ॥ ८८ ॥ स्वर्गाय बद्धकक्षो यः पाठमात्रेण ब्राह्मणः ॥ स बालो मातुरंकस्थो ग्रहीतुं सोममिच्छति ॥ ८९ ॥ तद्भवान्सर्वथा मह्यमनयं सोढुमर्हसि ॥ सर्वः कोऽपि वदत्येवं तन्मयैवमुदाहृतम् ॥ ९० ॥ ॥ नकुल

१ जीवने--इ०पा० । २ केचिन्नष्टा मदादपि--इ०पा० । ३ आंतकम्--अंतकस्येदमान्तकम्--यमसदनमित्यर्थः ।

उवाच ॥ ॥ वृथेदं भाषितं तुभ्यं सर्वलोकेन यत्समम् ॥ आत्मानं मन्यसे नैतद्वक्तुं योग्यं महात्मनाम् ॥ ९१ ॥ वाजिवारणलोहानां काष्ठपाषाणवाससाम् ॥ नारीपुरुषतोयानामंतरं महदंतरम् ॥ ९२ ॥ अन्ये चेत्प्राकृता लोका बहुपापानि कुर्वते ॥ प्रधानपुरुषेणापि कार्यं तत्पृष्ठतो नु किम् ॥ ९३ ॥ सर्वार्थं निर्मितं शास्त्रं मनोबुद्धी तथैव च ॥ दत्ते विधात्रा सर्वेषां तथापि यदि पापिनः ॥ ९४ ॥ ततो विधातुः को दोषस्त एव खलु दुर्भगाः ॥ ब्राह्मणेन विशेषेण किं भाव्यं लोकवद्यतः ॥ ९५ ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥ स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ९६ ॥ तस्मात्सदा महद्भिश्च आत्मार्थं च परार्थतः ॥ सतां धर्मो न संत्याज्यो न्याय्यं तच्छिक्षणं तव ॥ ९७ ॥ यस्मात्त्वया पीडितोऽहं घोरेण वचसा मुने ॥ तस्माच्छीघ्रं त्वां शप्स्यामि शापयोग्यो हि मे मतः ॥ ९८ ॥ नकुलोऽसीति मामाह भवांस्तस्मात्कुलाधमः ॥ शीघ्रमुत्पत्स्यसे मोहात्त्वमेव नकुलो मुने ॥ ९९ ॥ ॥ संवर्त उवाच ॥ ॥ इति वाचं समाकर्ण्य भाव्यर्थकृतनिश्चयः ॥ याज्ञवल्क्यो मरौ देशे विप्रस्याजायतात्मजः ॥ १०० ॥ दुराचारस्य पापस्य निघृणस्यातिवादिनः ॥ दुष्कुलीनस्य जातोऽसौ तदा जातिस्मरः सुतः ॥ १०१ ॥ सोऽथ ज्ञानात्समालोक्य भर्तृयज्ञ इति द्विजः ॥ गुप्तक्षेत्रं समापन्नो महीसागरसंगमम् ॥ १०२ ॥ तत्र पाशुपतो भूत्वा शिवाराधनतत्परः ॥ स्वायंभुवं महाकालं पूजयन्वर्ततेऽधुना ॥ १०३ ॥ यो हि नित्यं महाकालं श्रद्धया पूजयेत्पुमान् ॥ स दौष्कुलीनदोषेभ्यो मुच्यतेऽहिरिव त्वचः ॥ १०४ ॥ यथायथा श्रद्धयासौ तल्लिंगं परिपश्यति ॥ तथातथा विमुच्येत दोषैर्जन्मशतोद्भवैः ॥ १०५ ॥ भर्तृयज्ञस्तु तत्रैव लिंगस्याराधनात्क्रमात् ॥ बीजदोषाद्विनिर्मुक्तस्तल्लिंगमहिमा त्वसौ ॥ १०६ ॥ बभ्रुं च नकुलं प्राह विमुक्तो दुष्टजन्मतः ॥ यस्मात्तस्मादिदं तीर्थं ख्यातं वै बभ्रु पावनम् ॥ १०७ ॥ तस्माद्व्रजध्वं तत्रैव महीसागरसंगमम् ॥ पंच तीर्थानि सेवन्तो मुक्तिमाप्स्यथ निश्चितम् ॥ १०८ ॥ इत्येवमुक्त्वा संवर्तो ययावभिमतं द्विजः ॥ भर्तृयज्ञं मुनिं प्राप्य ते च तत्र स्थिताभवन्[2] ॥ १०९ ॥ ततस्तानाह स ज्ञात्वा गणाञ्ज्ञानेन शांभवान् ॥ महद्रो विमलं पुण्यं गुप्तक्षेत्रे यदत्र वै ॥ ॥ ११० ॥ भवन्तोऽभ्यागता यत्र महीसागरसंगमः ॥ स्नानं दानं जपो होमः पिंडदानं विशेषतः ॥ १११ ॥ अक्षयं जायते सर्वं महीसागरसंगमे ॥ कृतं तथाऽक्षयं सर्वं स्नानदानक्रियादिकम् ॥ ११२ ॥ यदात्र स्थानकं चक्रे देवर्षिर्नारदः पुरा ॥ तदा ग्रहैर्वरा दत्ताः शनिना च वरस्त्वसौ ॥ ११३ ॥ शनैश्चरेण संयुक्ता त्वमावास्या यदा भवेत् ॥ श्राद्धं तत्र प्रकुर्वीत स्नानदानपुरःसरम् ॥ ११४ ॥ यदि श्रावणमासस्य शनैश्चर

१ लोकवत्—प्राकृतसामान्यलोकवत्—भाव्यं किम्—अपि तु नेति तात्पर्यम् । २ सन्धिरार्षः । स्थिता अभवन्—इति पदच्छेदः ।

दिने शुभा ॥ कुहूर्भवति तस्यां तु संक्रांतिं कुरुते रविः ॥ ११५ ॥ तस्यामेव तिथौ योगो व्यतीपातो भवेद्यदि ॥ पुष्करंनाम तत्पर्व सूर्यपर्वशताधिकम् ॥ ११६ ॥ सर्वयोगसमावापः कथंचिदपि लभ्यते ॥ तस्मिन्दिने शनिं लोहं कांचनं भास्करं तथा ॥ ११७ ॥ महीसागरसंसर्गे पूजयीत यथाविधि ॥ शनिमंत्रैः शनिं ध्यात्वा सूर्यमंत्रैर्दिवाकरम् ॥ ११८ ॥ अर्घ्यं दद्याद्भाकरस्य सर्वपापप्रशांतये ॥ प्रयागादधिकं स्नानं दानं क्षेत्रात्कुरोरपि ॥ ११९ ॥ पिंडदानं गयाक्षेत्रादधिकं पांडुनंदन ॥ इदं संप्राप्यते पर्व महद्भिः पुण्यराशिभिः ॥ १२० ॥ पितॄणामक्षया तृप्तिर्जायते दिवि निश्चितम् ॥ यथा गयाशिरः पुण्यं पितॄणां तृप्तिदं परम् ॥ १२१ ॥ तथा समधिकः पुण्यो महीसागरसंगमः ॥ १२२ ॥ अग्निश्च रेतो मृडया च देहे रेतोधा विष्णुरमृतस्य नाभिः ॥ एवं ब्रुवञ्छ्रद्धया सत्यवाक्यं ततोऽवगाहेत महीसमुद्रम् ॥ १२३ ॥ मुखं च यः सर्वनदीषु पुण्यः पाथोधिरंबा प्रवरा मही च ॥ समस्ततीर्थाकृतिरेतयोश्च ददामि चार्घ्यं प्रणमामि नौमि ॥ १२४ ॥ ताम्रा रस्याः पयोवाहाः पितृप्रीतिप्रदाः शुभाः ॥ सस्यमाला महासिन्धुर्दातुर्दात्री पृथुस्तुता ॥ इन्द्रद्युम्नस्य कन्या च क्षितिजन्मा इरावती ॥ १२५ ॥ महीपर्णा महीशृंगा गंगा पश्चिमवाहिनी ॥ नदी राजनदी चेति नामाष्टादशमालिकाम् ॥ १२६ ॥ स्नानकाले च सर्वत्र श्राद्धकाले पठेन्नरः ॥ पृथुनोक्तानि नामानि यज्ञमूर्तिपदं व्रजेत् ॥ १२७ ॥ महीदोहे महानंदसंदोहे विश्वमोहिनि[1] ॥ जातासि सरितां राज्ञि पापं हर महीद्रवे ॥ इत्यर्घ्यमंत्रः ॥ १२८ ॥ कंकणं रजतस्यापि योऽत्र निक्षिपते नरः ॥ स जायते महीपृष्ठे धनधान्ययुते कुले ॥ १२९ ॥ महीं च सागरं चैव रौप्यकंकणपूजया ॥ पूजयामि भवेन्मा मे द्रव्यनाशो दरिद्रता ॥ १३० ॥ कंकणक्षेपणम् ॥ यत्फलं सर्वतीर्थेषु सर्वयज्ञैश्च[2] यत्फलम् ॥ तत्फलं स्नानदानेन महीसागरसंगमे ॥ १३१ ॥ विवादे च समुत्पन्ने अपराधी च यो मतः ॥ जलहस्तः सदा वाच्यो महीसागरसंगमे ॥ १३२ ॥ संस्नाप्याघोरमंत्रेण स्थाप्य नाभिप्रमाणके ॥ जले करं समुद्धृत्य दक्षिणं वाचयेद्द्रुतम् ॥ १३३ ॥ यदि धर्मोऽत्र सत्योऽस्ति सत्यश्चेत्संगमस्त्वसौ ॥ सत्याश्चेत्क्रतुद्रष्टारः सत्यं स्यान्मे शुभाशुभम् ॥ १३४ ॥ एवमुक्त्वा करं क्षिप्य दक्षिणं सकलं ततः ॥ निःसृतः पापकारी चेज्ज्वरेणापीड्यते क्षणात् ॥ १३५ ॥ सप्ताहाद्दृश्यते चापि तावन्निर्दोषवान्मतः ॥ अत्र स्नात्वा च जप्त्वा च तपस्तप्त्वा तथैव च ॥ १३६ ॥ रुद्रलोकं सुबहवो गताः पुण्येन कर्मणा ॥ सोमवारे विशेषेण स्नात्वा योऽत्र सुभक्तितः ॥१३७॥ पंच तीर्थानि कुरुते मुच्यते पंचपातकैः ॥ इत्याद्युक्तं बहुविधं तीर्थमाहात्म्यमुत्तमम् ॥१३८॥

१ विश्वजीविनि—इ० पा० । २ सर्वयज्ञेश्च—इ० पा० ।

भर्तृयज्ञः शिवस्योचे तेषामाराधने क्रमम् ॥ शिवागमोक्तमादिश्य पूजायोगं यथाविधि ॥ १३९ ॥ शिवभक्तिसमुद्रैकपूरितः प्राह तान्मुनिः ॥ न
शिवात्परमो देवः सत्यमेतच्छिवव्रताः ॥ १४० ॥ शिवं विहाय यो ह्यन्यदसत्किंचिदुपासते ॥ करस्थं सोऽमृतं त्यक्त्वा मृगतृष्णां प्रधावति ॥१४१॥
शिवशक्तिमयं ह्येतत्प्रत्यक्षं दृश्यते जगत् ॥ लिंगांकं च भगांकं च नान्यदेवांकितं क्वचित् ॥ १४२ ॥ यश्च तं पितरं रुद्रं त्यक्त्वा मातरमं
विकाम् ॥ वर्ततेऽसौ स्वपितरं त्यक्त्वोदपितृपिंडकः ॥ यस्य रुद्रस्य माहात्म्यं शतरुद्रीयमुत्तमम् ॥ १४३ ॥ शृणुध्वं यदि पापानामिच्छध्वं क्षालनं
परम् ॥ ब्रह्मा हाटकलिंगं च समाराध्य कपर्दिनः ॥ १४४ ॥ जगत्प्रधानमिति च नाम जप्त्वा विराजते ॥ कृष्णमूले कृष्णलिंगं नाम चार्जितमेव
च ॥ १४५ ॥ सनकाद्यैश्च तल्लिंगं पूज्याजयुर्जगद्गतिम् ॥ दर्भांकुरमयं सप्त मुनयो विश्वयोनिकम् ॥ १४६ ॥ नारदस्त्वंतरिक्षे च जगद्बीजमिदं
गृणन् ॥ वज्रमिंद्रो लिंगमेवं विश्वात्मानं च नाम च ॥ १४७ ॥ सूर्यस्ताम्रं तथा लिंगं नाम विश्वसृजं जपन् ॥ चंद्रश्च मौक्तिकं लिंगं जपन्नाम जग
त्पतिम् ॥१४८॥ इंद्रनीलमयं वह्निर्नाम विश्वेश्वरं जपन् ॥ पुष्परागं गुरुर्लिंगं विश्वयोनिं जपन्हरम् ॥१४९॥ पद्मरागमयं शुक्रो विश्वकर्मेति नाम
च ॥ हेमलिंगं च धनदो जपन्नाम्ना तथेश्वरम् ॥ १५० ॥ रौप्यजं विश्वदेवाश्च नामापि जगतांपतिम् ॥ वायवो रीतिजं लिंगं शंभुमित्येव नाम च ॥
॥१५१॥ कांशजं वसवो लिंगं स्वयंभुमिति नाम च ॥ त्रिलोहं मातरो लिंगं नाम भूतेशमेव च ॥ १५२ ॥ लौहं च रक्षसां नाम भूतभव्यभवोद्भवम् ॥
गुह्यकाः सीसजं लिंगं नाम योगं जपंति च ॥ १५३ ॥ जैगीषव्यो ब्रह्मरंध्रं नाम योगेश्वरं जपन् ॥ निमिर्नयनयोर्लिंगे जपञ्शर्वेति नाम च ॥
॥१५४॥ धन्वंतरिर्गोमयं च सर्वलोकेश्वरेश्वरम् ॥ गंधर्वा दारुजं लिंगं सर्वश्रेष्ठेति नाम च॥१५५॥ वैडूर्यं राघवो लिंगं जगज्ज्येष्ठेति नाम च ॥ बाणो
मारकतं लिंगं वसिष्ठमिति नाम च ॥१५६॥ वरुणः स्फाटिकं लिंगं नाम्ना च परमेश्वरम्॥ नागा विद्रुमलिंगं च नाम लोकत्रयंकरम्॥१५७॥भारती तारं
लिंगं च नाम लोकत्रयाश्रितम् ॥ शनिश्च संगमावर्ते जगन्नाथेति नाम च ॥ १५८ ॥ शनिदेशे मध्यरात्रौ महीसागरसंगमे ॥ जातीजं रावणो लिंगं
जपन्नाम सुदुर्जयम् ॥ १५९ ॥ सिद्धाश्च मानसं नाम काममृत्युजरातिगम् ॥ उंछजं च बलिर्लिंगं ज्ञानात्मेत्यस्य नाम च ॥ १६० ॥ मरीचिपाः
पुष्पजं च ज्ञानगम्येति नाम च ॥ शकृताः शकृतं लिंगं ज्ञानज्ञेयेति नाम च ॥ १६१ ॥ फेनपाः फेनजं लिंगं नाम चापि सुदुर्विदम् ॥ कपिलो

१ [illegible] । २ अजयुः--[illegible] । ३ लिंगलिंगं च--पु० पा० । ४ जगतां गतिम्--पु० पा० । ५ स्वयंभुरिति नाम च--पु० पा० । ६ [illegible]--पु० पा० । ७ [illegible]--पु० पा० ।
८ [illegible]--पु० पा० । ९ [illegible]--पु० पा० । १० [illegible]--पु० पा० ।

वालुकालिंगं वरदं च जपन्हरम् ॥ १६२ ॥ सारस्वतो वाचिलिंगं नाम वागीश्वरेति च ॥ गणा मूर्तिमयं लिंगं नाम रुद्रेति चाब्रुवन् ॥ १६३ ॥ जांबूनदमयं देवाः शितिकण्ठेति नाम च ॥ शंखलिंगं बुधो नाम कनिष्ठमिति संजपन् ॥ १६४ ॥ अश्विनौ मृन्मयं लिंगं नाम्ना चैव सुवेधसम् ॥ विनायकः पिष्टलिंगं नाम्ना चापि कपर्दिनम् ॥ १६५ ॥ नावनीतं कुजो लिंगं नाम चापि करालकम् ॥ तार्क्ष्य ओदनलिंगं च हर्यक्षेति हि नाम च ॥ ॥ १६६ ॥ गौडं कामस्तथा लिंगं रतिदं चेति नाम च ॥ शची लवणलिंगं तु बभ्रुकेशेति नाम च ॥ १६७ ॥ विश्वकर्मा च प्रासादलिंगं याम्येति नाम च ॥ विभीषणश्च पांसूत्थं सुहृत्तमेति नाम च ॥ वंशांकुरोत्थं सगरो नाम संगतमेव च ॥ १६८ ॥ राहुश्च रामठं लिंगं नाम गम्येति कीर्तयन् ॥ लेप्यलिंगं तथा लक्ष्मीर्हरिनेत्रेति नाम च ॥ १६९ ॥ योगिनः सर्वभूतस्थं स्थाणुरित्येव नाम च ॥ नानाविधं मनुष्याश्च पुरुषंनाम नाम च ॥ १७० ॥ तेजोमयं च ऋक्षाणि भगं नाम च भास्वरम् ॥ किंनरा धातुलिंगं च सुदीप्तमिति नाम च ॥ १७१ ॥ देवदेवेति नामास्ति लिंगं च ब्रह्मराक्षसाः ॥ दंतजं वारणा लिंगं नाम रंहसमेव च ॥ १७२ ॥ सप्तलोकमयं साध्या बहुरूपेति नाम च ॥ दूर्वांकुरमयं लिंगमृतवः सर्वनाम च ॥ १७३ ॥ कौंकुममप्सरसो लिंगं नाम शंभोः प्रियेति च ॥ सिंदूरजं चोर्वशी च नाम च प्रियवासनम् ॥ १७४ ॥ ब्रह्मचारि गुरुर्लिंगं नाम चोष्णीपिणं विदुः ॥ अलक्तकं च योगिन्यो नाम चास्य सुबभ्रुकम् ॥ १७५ ॥ श्रीखंडं सिद्धयोगिन्यः सहस्राक्षेति नाम च ॥ डाकिन्यो मांसलिंगं च नाम चास्य च मीढुषम् ॥ १७६ ॥ अप्यन्नजं च मनवो गिरिशेति च नाम च ॥ अगस्त्यो व्रीहिजं वापि सुशांतमिति नाम च ॥ १७७ ॥ यवजं देवलो लिंगं पतिमित्येव नाम च ॥ वल्मीकजं च वाल्मीकिश्चिरवासीति नाम च ॥ १७८ ॥ प्रतर्दनो बाणलिंगं हिरण्यभुजनाम च ॥ [illegible]जिकं च तथा दैत्या नाम उग्रेति कीर्तितम् ॥ १७९ ॥ निष्पावजं दानवाश्च लिंगनाम च दिक्पतिम् ॥ मेघा नीरमयं लिंगं पर्जन्यपतिनाम च ॥ १८० ॥ राजमाषमयं यक्षा नाम भूतपतिं स्मृतम् ॥ तिलान्नजं च पितरो नाम वृषपतिस्तथा ॥ १८१ ॥ गौतमो गोरजमयं नाम गोपतिरेव च ॥ [illegible]ः फलमयं नाम वृक्षावृतेति च ॥ १८२ ॥ स्कंदः पाषाणलिंगं च नाम सेनान्य एव च ॥ नागश्चाश्वतरो धान्यं मध्यमेत्यस्य नाम च ॥ १८३ ॥ पुरोडाशमयं यज्वा स्रुवहस्तेति नाम च ॥ यमः कालायसमयं नाम प्राह च धन्विनम् ॥ १८४ ॥ यवांकुरं जामदग्न्यो भर्गदेवेति नाम च ॥ [illegible]रवाश्चान्नमयं बहुरूपेति नाम च ॥ १८५ ॥ मांधाता शर्करालिंगं नाम बाहुयुगेति च ॥ गावः पयोमयं लिंगं नाम

नेत्रसहस्रकम् ॥ १८६ ॥ साध्या भर्तृमयं लिंगं नाम विश्वपतिः स्मृतम् ॥ नारायणो नरो मौंजं सहस्रशिरनाम च ॥ १८७ ॥ तार्क्ष्यं पृथुस्तथा लिंगं सहस्रचरणाभिधम् ॥ पक्षिणो व्योमलिंगं च नाम सर्वात्मकेति च ॥ १८८ ॥ पृथिवी मेरुलिंगं च द्वितनुश्चास्य नाम च ॥ भस्मलिंगं पशुपतिर्नाम चास्य महेश्वरः ॥ १८९ ॥ ऋषयो ज्ञानलिंगं च चिरंस्थानेति नाम च ॥ ब्राह्मणा ब्रह्मलिंगं च नाम ज्येष्ठेति तं विदुः ॥ १९० ॥ गोरोचनमयं शेषो नाम पशुपतिः स्मृतम् ॥ वासुकिर्विषलिंगं च नाम वै शंकरेति च ॥ १९१ ॥ तक्षकः कालकूटाख्यं बहुरूपेति नाम च ॥ हालाहलं च कर्कोट एकाक्ष इति नाम च ॥ १९२ ॥ शृंगी विषमयं पद्मो नाम धूर्जटिरेव च ॥ पुत्रः पितृमयं लिंगं विश्वरूपेति नाम च ॥ १९३ ॥ पारदं च शिवा देवी नाम त्र्यम्बक एव च ॥ मत्स्याद्याः शास्त्रलिंगं च नाम चापि वृषाकपिः ॥ १९४ ॥ एवं किं बहुनोक्तेन यद्यत्सत्त्वं विभूतिमत् ॥ जगत्यामस्ति तज्जातं शिवाराधनयोगतः ॥ १९५ ॥ भस्मनो यदि वृक्षत्वं ज्ञायते नीरसेवनात् ॥ शिवभक्तिविहीनस्य ततोऽस्य फलमुच्यते ॥ १९६ ॥ धर्मार्थकाममोक्षाणां यदि प्राप्तौ भवेन्मतिः ॥ ततो हरः समाराध्यस्त्रिजगत्याः प्रदो मतः ॥ १९७ ॥ य इदं शतरुद्रीयं प्रातःप्रातः पठिष्यति ॥ तस्य प्रीतः शिवो देवः प्रदास्यत्यखिलान्वरान् ॥ १९८ ॥ नातः परं पुण्यतमं किंचिदस्ति महाफलम् ॥ सर्ववेदरहस्यं च सूर्येणोक्तमिदं मम ॥ १९९ ॥ वाचा च यत्कृतं पापं मनसा वाप्युपार्जितम् ॥ पापं तन्नाशमायाति कीर्तिते शतरुद्रिये ॥ २०० ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ भयान्मुच्येत भीतश्च जपेद्यः शतरुद्रियम् ॥ २०१ ॥ नाम्नां शतेन यः कुम्भैः पुष्पैस्ता वद्गिरीश्वरम् ॥ प्रणामानां शतेनापि मुच्यते सर्वपातकैः ॥ २०२ ॥ लिंगानां शतमेतच्च शतमाराधकास्तथा ॥ नामानि च शतं सर्वदोषसंनाशकं स्मृतम् ॥ २०३ ॥ विशेषादेषु लिंगेषु यः पठिष्यति पंचसु ॥ पंचभिर्विषयोद्भूतैः स दोषैः परिमुच्यते ॥ २०४ ॥ ॥ नारद उवाच ॥ ॥ निशम्यैवं प्रार्थ्य तेऽपि गुप्तक्षेत्रे मुदान्विताः ॥ पंचलिंगान्यर्चयंतः शिवध्यानपराभवन् ॥ २०५ ॥ ततो बहुतिथे काले प्रत्यक्षीभूय शंकरः ॥ प्राह तान्मुदितो देवस्तेषां भक्तिविशेषतः ॥ २०६ ॥ ॥ शिव उवाच ॥ ॥ बकोलूकगृध्रकूर्मा इन्द्रद्युम्न च पार्थिव ॥ सारूप्यां मुक्तिमापन्ना मल्लोके निवसिष्यथ ॥ २०७ ॥ लोमशश्चापि मार्कंडो जीवन्मुक्तौ भविष्यतः ॥ इत्युक्ते देवदेवेन लिंगं स्थापितवान्नृपः ॥ २०८ ॥ इन्द्रद्युम्नेश्वरं नाम

१ बाहुयुतेति च--इ० पा० । २ वीरद्वानेति--इ० पा० । ३ वसुलिंगं च--इ० पा० । ४ प्रमोदतः--इ० पा० । ५ तु--इ० पा० । ६ ते--इन्द्रद्युम्नादयः अपि । ७ शिवध्यानपराः अभवन्--इति पदच्छेदः । सन्धिरार्षः ।

महाकालाख्यमित्युत ॥ ज्ञात्वा तीर्थगुणान्राजा कीर्तिमिच्छंश्चिरंतनीम् ॥ २०९ ॥ त्रिरम्यमतुलं लिंगं संस्थाप्येदमुवाच ह ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ॥ २१० ॥ इन्द्रद्युम्नेश्वरं लिंगं नंदताच्छाश्वतीः समाः ॥ ततस्तथेति भगवाञ्छिवः प्रोच्याब्रवीत्पुनः ॥ २११ ॥ अत्र यो नियतं लिंगमैंद्रद्युम्नं प्रपूजयेत् ॥ स गणो जायते नूनं मम लोके निवत्स्यति ॥ २१२ ॥ इत्युक्त्वा सह तैश्चैव पंचभिः शशिशेखरः ॥ रुद्रलोकमगादेवस्तेऽपि जाता गणाः पुनः ॥ २१३ ॥ एवं प्रभावो राजाभूदिंद्रद्युम्नो महीपतिः ॥ यजता येन वीरेण निर्मितेयं महीनदी ॥ २१४ ॥ एवंविधः स पुण्योऽयं महीसागरसंगमः ॥ अभूत्ततोऽपि संक्षेपात्तव पार्थ प्रकीर्तितः ॥ २१५ ॥ स्नात्वात्र संगमे यश्च इन्द्रद्युम्नेश्वरं नरः ॥ पूजयेत्तस्य वासः स्याद्यत्रेशः पार्वतीपतिः ॥ २१६ ॥ सर्वबन्धहरं लिंगं गाणपत्यप्रदं त्विदम् ॥ यतो बन्धान्विहायैव स्थापितं तेन फाल्गुन ॥ २१७ ॥ इतीदमुक्तं तव पुण्यकारि माहात्म्यमस्योत्तमसंगमस्य ॥ माहात्म्यमत्यद्भुतपुण्यमिन्द्रद्युम्नेश्वरस्यापि च पुण्यकारि ॥ २१८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महीसागरसंगममाहात्म्यशतरुद्रियलिंगमाहात्म्येन्द्रद्युम्नेश्वरलिंगमाहात्म्य वर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ छ ॥ ॥ अर्जुन उवाच ॥ ॥ कुमारनाथमाहात्म्यं यत्त्वयोक्तं कथांतरे ॥ तदहं श्रोतुमिच्छामि विस्तरेण महामुने ॥ १ ॥ ॥ नारद उवाच ॥ ॥ तारकं विनिहत्यैव वज्रांगतनयं प्रभुः ॥ गुहः संस्थापयामास लिंगमेतच्च फाल्गुन ॥ २ ॥ दर्शनाच्छ्रवणाद्ध्यानात्पूजया श्रुतिवंदनैः ॥ सर्वपापापहः पार्थ कुमारेशो न संशयः ॥ ३ ॥ ॥ अर्जुन उवाच ॥ ॥ अत्याश्चर्यमयी रम्या कथेयं पापनाशिनी ॥ विस्तरेण च मे ब्रूहि याथातथ्येन नारद ॥ ४ ॥ वज्रांगः कोप्यसौ ...त्यः किंप्रभावश्च तारकः ॥ कथं स निहतश्चैव जातश्चैव कथं गुहः ॥ ५ ॥ कथं संस्थापितं लिंगं कुमारेश्वरसंज्ञितम् ॥ किं फलं चास्य लिंगस्य ...द्विस्तरान्मम ॥ ६ ॥ ॥ नारद उवाच ॥ ॥ प्रणिपत्य कुमाराय सेनान्ये चेश्वराय च ॥ शृणु चैकमनाः पार्थ कुमारचरितं महत् ॥ ...॥ मानसो ब्रह्मणः पुत्रो दक्षो नाम प्रजापतिः ॥ षष्टिं सोऽजनयत्कन्या वीरिण्यां नाम फाल्गुन ॥ ८ ॥ ददौ स दश धर्माय कश्यपाय ...विंशतिं सोमाय चतस्रोरिष्टनेमिने ॥ ९ ॥ भूतांगिरःकृशाश्वेभ्यो द्वेद्वे चैव ददौ प्रभुः ॥ नामधेयान्यमूषां च सपत्नीनां च मे शृणु ...प्रतिप्रभवा लोका आपूरितास्त्रयः ॥ भानुर्लम्बा ककुद्धूमिर्विश्वा साध्या मरुत्वती ॥ ११ ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः

...पा० । २ तत्रेति शेषः । ३ कुहूर्मित्रा—इ० पा० ।

त्वा तु वज्रांगः प्रणतो वाक्यमब्रवीत् ॥ ६१ ॥ न मे कृत्यमनेनास्ति मातुराज्ञा कृता मया ॥ त्वं सुरासुरनाथो वै मम च प्रपितामहः ॥ ६२ ॥ करिष्ये त्वद्वचो देव एप मुक्तः शतक्रतुः ॥ न च कांक्षे शक्रभुक्तामिमां त्रैलोक्यराजताम् ॥ ६३ ॥ परभुक्तां यथा नारी परभुक्तामिव स्रजम् ॥ यच्च त्रिभुवनेष्वस्ति सारं तन्मम कथ्यताम् ॥ ६४ ॥ ॥ ब्रह्मोवाच ॥ ॥ तपसो न परं किंचित्तपो हि महतां धनम् ॥ तपसा प्राप्यते सर्वं तपोयोग्योऽसि पुत्रक ॥ ६५ ॥ ॥ वज्रांग उवाच ॥ ॥ तपसे मे रतिर्देव न विघ्नं तत्र मे भवेत् ॥ त्वत्प्रसादेन भगवन्नित्युक्त्वा विरराम सः ॥ ६६ ॥ ॥ ब्रह्मोवाच ॥ ॥ क्रूरभावं परित्यज्य यदीच्छसि तपः सुत ॥ अनया चित्तबुद्ध्या तत्त्वयाप्तं जन्मनः फलम् ॥ ॥ ६७ ॥ इत्युक्त्वा पद्मजः कन्यां ससर्जायतलोचनाम् ॥ तामस्मै प्रददौ देवः पत्न्यर्थं पद्मसंभवः ॥ ६८ ॥ वरांगीति च नामास्याः कृतवांश्च पितामहः ॥ जगाम च ततो ब्रह्मा कश्यपेन समं दिवम् ॥ ६९ ॥ वज्रांगोऽपि तया सार्धं जगाम तपसे वनम् ॥ ऊर्द्धबाहुः स दैत्येंद्रोऽतिष्ठदब्दसहस्रकम् ॥ ७० ॥ कालं कमलपत्राक्षः शुद्धबुद्धिर्महातपाः ॥ तावानधोमुखः कालं तावत्पंचाग्निसाधकः ॥ ७१ ॥ निराहारो घोरतपास्तपोराशिरजायत ॥ ततः सोंऽतर्जले चक्रे कालं वर्षसहस्रकम् ॥ ७२ ॥ जलांतरप्रविष्टस्य तस्य पत्नी महाव्रता ॥ तस्यैव तीरे सरसस्तत्परा मौनमाश्रिता ॥ ७३ ॥ निराहारं पतिं मत्वा तपस्तेपे पतिव्रता ॥ तस्यास्तपसि वर्तंत्या इंद्रश्चक्रे विभीषिकाम् ॥ ७४ ॥ भूत्वा तु मर्कटाकारस्तस्याआभ्याशमागतः ॥ अपविध्य दृशं तस्या मूत्रविष्ठे चकार सः ॥ ७५ ॥ तथा विलोलवसनां विलोलवदनां तथा ॥ विलोलकेशां तां चक्रे विधित्सुस्तपसः क्षतिम् ॥ ७६ ॥ ततश्च मेपरूपेण[1] क्लेशं तस्याश्चकार सः ॥ ततो भुजंगरूपेण बद्ध्वा चरणयोर्द्वयोः ॥ ७७ ॥ अपाकर्षत दूरं स तस्माद्देवभृतस्तथा[2] ॥ तपोबलाच्च सा तस्य न वध्यत्वं जगाम ह ॥ ७८ ॥ क्षमया च महाभागा क्रोधमण्वपि नाकरोत् ॥ ततो गोमायुरूपेण तमदूषयदाश्रमम् ॥ ७९ ॥ अग्निरूपेण तस्याश्च स ददाह महाश्रमम् ॥ चकर्ष वायुरूपेण महोग्रेण च तां शुभाम् ॥ एवं सिंहवृकाद्याभिर्भीषिकाभिः पुनःपुनः ॥ ८० ॥ विरराम यदा नैव वज्रांगमहिषी तदा ॥ शैलस्य दुष्टतां मत्वा शापं दातुं व्यवस्यत ॥ ८१ ॥ तां शापाभिमुखीं दृष्ट्वा शैलः पुरुषविग्रहः ॥ उवाच तां वरारोहां त्वरयाथ सुलोचनाम् ॥८२॥ ॥ शैल उवाच ॥ ॥ नाहं महाव्रते दुष्टः सेव्योऽहं सर्वदेहिनाम् ॥ अतिखेदं करोत्येष ततः क्रुद्धस्तु वृत्रहा ॥ ॥८३॥ एतस्मिन्नंतरे जातः कालो वर्षसहस्रिकः ॥ तस्मिन्याते स भगवान्काले कमलसंभवः॥८४॥तुष्टः प्रोवाच वज्रांगं तमागम्य जलाशये ॥८५॥

१ मेषरूपेण--इ० पा० । २ देवभृतः--देवाः भृताः पालिता येन--इंद्रः इत्यर्थः ।

॥ ॥ ब्रह्मोवाच ॥ ॥ ददामि सर्वकामांस्ते उत्तिष्ठ दितिनन्दन ॥ एवमुक्तस्तदोत्थाय दैत्येंद्रस्तपसो निधिः ॥ उवाच प्रांजलिर्वाक्यं सर्वलोकपितामहम् ॥ ८६ ॥ ॥ वज्रांग उवाच ॥ ॥ आसुरो मेऽस्तु मा भावः शक्रराज्ये च मा रतिः॥ तपोधर्मरतिश्चास्तु वृणोम्येतत्पितामह ॥ ८७ ॥ एवमस्त्विति तं ब्रह्मा प्राह विस्मितमानसः ॥ उपेक्षते च शक्रं स भाव्यर्थं कोऽतिवर्तते ॥८८॥ ऋषयो मनुजा देवाः शिवब्रह्ममुखा अपि ॥ भाव्यर्थं नातिवर्तंते वेलामिव महोदधिः ॥ ८९ ॥ इति चिंत्य विरिंचोऽपि तत्रैवांतरधीयत ॥ वज्रांगोऽपि समाप्ते तु तपसि स्थिरसंयमः ॥ ९० ॥ आहारमिच्छन्स्वां भार्यां न ददर्शाश्रमे स्वके ॥ भार्याहीनोऽफलश्चेति स संचिंत्य इतस्ततः ॥९१॥ विलोकयन्स्वकां भार्यां विधित्सुः कर्म नैत्यकम् ॥ विलोकयन्ददर्शाथ इहामुत्र सहायिनीम् ॥ ९२ ॥ रुदन्तीं स्वां प्रियां दीनां तरुप्रच्छादिताननाम्॥तां विलोक्य ततो दैत्यः प्रोवाच परिसांत्वयन् ॥९३॥ ॥ ॥ वज्रांग उवाच ॥ ॥ केन तेऽपकृतं भीरु वर्तंत्यास्तपसि स्वके ॥ कथं रोदिषि वा बाले मयि जीवति भर्तरि ॥ कं वा कामं प्रयच्छामि शीघ्रं प्रब्रूहि भामिनि ॥९४॥ गृहेश्वरीं सद्गुणभूषितां शुभां पंग्वंधयोगेन पतिं समेताम् ॥ न लालयेत्पूरयेन्नैव कामं स किं पुमान्न पुमान्मे मतोस्ति ॥ ॥ ९५ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये वज्रांगेतिहासवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ छ ॥ ॥ वरांग्युवाच ॥ ॥ नाशितास्म्यपविद्धास्मि त्रासिता पीडितास्मि च ॥ रौद्रेण देवनाथेन नष्टनाथेव भूरिशः ॥ १ ॥ दुःखपारमपश्यंती प्राणांस्त्यक्तुं व्यवस्थिता ॥ पुत्रं मे घोरदुःखस्य तारकं देहि चेत्कृपा ॥ २ ॥ एवमुक्तस्तु दैत्येंद्रो दुःखितोऽचिंतयद्धृदि ॥ आसुरेष्वपि भावेषु स्पृहा यद्यपि नास्ति मे ॥ ३ ॥ तथापि मन्ये शास्त्रेभ्यस्त्वनुकंप्या प्रियेति यत् ॥ सर्वाश्रमानुपादाय स्वाश्रमेण कलत्रवान् ॥ ४ ॥ व्यसनार्णवमत्येति जलयानैरिवार्णवम् ॥ यामाश्रित्येंद्रियारातीन्दुर्जयानितराश्रयैः ॥ ५ ॥ गेहिनो हेलया जिग्युर्दस्यून्दुर्गपतिर्यथा ॥ न केऽपि प्रभवस्तां चाप्यनुकर्तुं गृहेश्वरीम् ॥ ६ ॥ अथायुषा वा कात्स्न्र्येन धर्मे दित्सुर्यथैव च ॥ यस्यां भवति चात्मैव ततो जाया निगद्यते ॥ ७ ॥ भर्तव्या एव यस्माच्च तस्माद्भार्येति सा स्मृता ॥ सा एव गृहमुक्तं च गृहिणी सा ततः स्मृता ॥ ८ ॥ संसारकल्मषात्त्रात्री कलत्रमिति सा ततः ॥ एवंविधां प्रियां को वै नानुकंपितुमर्हति ॥ ९ ॥ त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ॥ भार्या कर्म च विद्या च संसाध्यं यत्नतस्त्रयम् ॥ १० ॥ तदेनां पीडितां चेद्यः[1] पतिर्भूत्वा न पालये ॥ ततो यास्ये शास्त्रवादान्नरकांतं न संशयः ॥ ११ ॥ अह

[1] चेच--इ० पा० ।

मप्येनमिंद्रं वै शक्तो जेतुं यथाऽनृणाम् ॥ पुनः कामं करिष्येऽस्या दास्ये पुत्रं महाबलम् ॥ १२ ॥ इति संचिंत्य वज्रांगः कोपव्याकुललोचनः ॥ प्रतिकर्तुं महेंद्राय तपो भूयो व्यवस्यत ॥१३॥ ज्ञात्वा तु तस्य संकल्पं ब्रह्मा क्रूरतरं पुनः ॥ आजगाम त्वरायुक्तो यत्राऽसौ दितिनंदनः ॥ ॥ १४ ॥ उवाचैनं स भगवान्प्रभुर्मधुरया गिरा ॥ १५ ॥ ॥ ब्रह्मोवाच ॥ ॥ किमर्थं भूय एव त्वं नियमं क्रूरमिच्छसि ॥ आहाराभिमुखो दैत्य तन्मे ब्रूहि महाव्रतः ॥ १६ ॥ यावदब्दसहस्रेण निराहारेण वै फलम् ॥ त्यजता प्राप्तमाहारं लब्धं ते क्षणमात्रतः ॥ १७ ॥ त्यागो ह्यप्राप्तकामानां न तथा च गुरुः स्मृतः ॥ यथा प्राप्तं परित्यज्य कामं कमललोचन ॥ श्रुत्वैतद्ब्रह्मणो वाक्यं दैत्यः प्रांजलिरब्रवीत् ॥ १८ ॥ ॥ दैत्य उवाच ॥ ॥ पत्न्यर्थेऽहं करिष्यामि तपो घोरं पितामह ॥ पुत्रार्थमुग्रतश्चाहं यः स्याद्गीर्वाणदर्पहा ॥ १९ ॥ एतच्छ्रुत्वा वचो देवः पद्मगर्भोद्भवस्तदा ॥ उवाच दैत्यराजानं प्रसन्नश्चतुराननः ॥ २० ॥ ॥ ब्रह्मोवाच ॥ ॥ अलं ते तपसा वत्स मा क्लेशे विस्तरे विश ॥ पुत्रस्ते तारकोनाम भविष्यति महाबलः ॥ २१ ॥ देवसीमंतिनीकाम्यधम्मिल्लकविमोक्षणः ॥ इत्युक्तो दैत्यराजस्तु प्रणम्य प्रपितामहम् ॥ २२ ॥ विसृज्य गत्वा महिषीं नंदयामास तां मुदा ॥ तौ दंपती कृतार्थौ च जग्मतुश्चाश्रमं तदा ॥ २३ ॥ आहितं च ततो गर्भं वरांगी वरवर्णिनी ॥ पूर्णं वर्षसहस्रं तु दधारोदर एव हि ॥ २४ ॥ ततो वर्षसहस्रांते वरांगी समसूयत ॥ जायमाने तु दैत्येंद्रे तस्मिँल्लोकभयंकरे ॥ २५ ॥ चचाल सकला पृथ्वी प्रोद्धूताश्च महार्णवाः ॥ चेलुर्धराधराश्चापि वबुर्वाता विभीषणाः ॥ २६ ॥ जेपुर्जप्यं मुनिवरा व्याधविद्धा मृगा इव ॥ जहुः कांतिं च सूर्याद्या नीहाराश्छादयन्दिशः ॥ २७ ॥ जाते महासुरे तस्मिन्सर्व एव महासुराः ॥ आजग्मुर्हर्षितास्तत्र तथा चासुरयोषितः ॥ २८ ॥ जगुर्हर्षसमाविष्टा ननृतुश्चासुरांगनाः॥ ततो महोत्सवे जाते दानवानां पृथासुत ॥ २९ ॥ विषण्णमनसो देवाः समहेंद्रास्तदाभवन् ॥ जातमात्रस्तु दैत्येंद्रस्तारकश्चंडविक्रमः ॥ ३० ॥ अभिषिक्तोऽसुरो दैत्यैः कुरंगमहिषादिभिः ॥ सर्वासुरमहाराज्ये युतः सर्वैर्महासुरैः ॥ ३१ ॥ स तु प्राप्तमहाराज्यस्तारकः पांडुसत्तम ॥ उवाच दानवश्रेष्ठान्युक्तियुक्तमिदं वचः ॥ ३२ ॥ शृणुध्वमसुराः सर्वे वाक्यं मम महाबलाः ॥ श्रुत्वा वः स्थेयसी बुद्धिः क्रियतां वचने मम ॥ ३३ ॥ अस्माकं जातिधर्मेण विरूढं वैरमक्षयम् ॥ करिष्याम्यहं तद्वैरं तेषां च विजयाय च ॥ ३४ ॥ किं तु तत्तपसा

१ लब्धमात्रम्—इ०पा० । २ अडभाव आर्षः । आच्छादयन्—इत्यस्य सहचरितमिदं क्रियापदमपेक्षितम् । ३ कुरंगमहिषादिभिः—तन्नामकैर्दैत्यैरित्यर्थः । ४ स्थेयसी—स्थिरा—इत्यर्थः ।

साध्यं मन्येऽहं सुरसंगमम् ॥ तस्मादादौ करिष्यामि तपो घोरं दनोः सुताः ॥ ३५ ॥ ततः सुरान्विजेष्यामो भोक्ष्यामोऽथ जगत्त्रयम् ॥ युक्तोपायो हि पुरुषः स्थिरश्रीरेव जायते ॥ ३६ ॥ अयुक्तश्चपलः प्राप्तामपि रक्षितुमक्षमः ॥ तच्छ्रुत्वा दानवाः सर्वे वाक्यं तस्यासुरस्य तु ॥ ३७ ॥ साधुसाध्वित्यथोचुस्ते वचनं तस्य विस्मिताः ॥ सोऽगच्छत्पारियात्रस्य गिरेः कंदरमुत्तमम् ॥ ३८ ॥ सर्वर्तुकुसुमाकीर्णनानौषधिविदीपितम् ॥ नानाधातुरसस्रावविचित्रनानागृहाश्रयम् ॥ ३९ ॥ अनेकाकारबहुलं पृथक्पक्षिकुलाकुलम् ॥ नानाप्रस्रवणोपेतं नानाविधजलाशयम् ॥ ॥ ४० ॥ प्राप्य तत्कंदरं दैत्यश्चकार विपुलं तपः ॥ वहन्पाशुपतीं दीक्षां पंच मंत्राञ्जजाप सः ॥ ४१ ॥ निराहारः पंचतपा वर्षायुतमभूत्किल ॥ ततः स्वदेहादुत्कृत्य कर्षंकर्षं दिनेदिने ॥ ४२ ॥ मांसस्याग्नौ जुहावैव ततो निर्मांसतां गतः ॥ ततो निर्मांसदेहः स तपोराशिरजायत ॥ ४३ ॥ जज्वलुः सर्वभूतानि तेजसा तस्य सर्वतः ॥ उद्विग्नाश्च सुराः सर्वे तपसा तस्य भीषिताः ॥ ४४ ॥ एतस्मिन्नंतरे ब्रह्मा परमं तोषमागतः ॥ तारकस्य वरं दातुं जगाम शिखरं गिरेः ॥ ४५ ॥ प्राप्य तं शैलराजानं हंसस्यंदनमास्थितः ॥ उवाच तारकं देवो गिरा मधुरया तदा ॥ ४६ ॥ ॥ ब्रह्मोवाच ॥ ॥ उत्तिष्ठ पुत्र तपसो नास्त्यसाध्यं तवाधुना ॥ वरं वृणीष्वाभिमतं यत्ते मनसि वर्तते ॥ ४७ ॥ इत्युक्तस्तारको दैत्यः प्रांजलिः प्राह तं विभुम् ॥ ४८ ॥ ॥ तारक उवाच ॥ ॥ वयं प्रभो जातिधर्माः कृतवैराः सहामरैः ॥ तैश्च निःशेषिता दैत्याः कृताः क्रूरैर्भृशं सवत ॥ ४९ ॥ तेषामहं समुद्धर्ता भवेयमिति मे मतिः ॥ अवध्यः सर्वभूतानामस्त्राणां च महौजसाम् ॥ ५० ॥ स्यामहं चामरैश्चैष वरो मम हृदि स्थितः ॥ एतन्मे देहि देवेश नान्यं वै रोचये वरम् ॥ ५१ ॥ तमुवाच ततो दैत्यं विरंचोऽमरनायकः ॥ न युज्यते विना मृत्युं देहिनो देहधारणम् ॥ जातस्य हि ध्रुवो मृत्युः सत्यमेतच्छ्रुतीरितम् ॥ ५२ ॥ इति संचिंत्य वरय वरं यस्मान्न शंकसे ॥ ततः संचिंत्य दैत्येंद्रः शिशुतः सप्तवासरात् ॥ ॥ ५३ ॥ ॥ तारक उवाच ॥ ॥ वासराणां च सप्तानां वर्जयित्वा तु बालकम् ॥ देवानामप्यवध्योऽहं भूयासं तेन याचितः ॥ ५४ ॥ वव्रे महासुरो मृत्युं ब्रह्माणं मानमोहितः ॥ ब्रह्मा प्रोचे ततस्तं च तथेति हरवाक्यतः ॥ ५५ ॥ जगाम त्रिदिवं देवो दैत्योऽपि स्वकमालयम् ॥ उत्तीर्णतपसस्तं च दैत्यं दैत्येश्वरास्तदा ॥ ५६ ॥ परिवव्रुः फलाकीर्णं वृक्षं शकुनयो यथा ॥ तस्मिन्महति राज्यस्थे तारके दितिनंदने ॥ ५७ ॥ ब्रह्मणाभिहि

१ वाक्यम्— इ० पा० । २ भक्ष्यामः—इ० पा० । ३ ततः दैत्येन्द्रः यदि मृत्युर्भवेदेव तर्हि सः अत्यंतमशक्यः कथं स्यादिति विचार्य सप्तवासरात् शिशोः सकाशान्मृत्युर्भवत्विति ब्रह्माणं वरं याचे—इति संचिंत्य—तारक उवाचेत्युक्तेन संबंधः ।

तस्थाने महार्णवतटोत्तरे ॥ तरवो जज्ञिरे पार्थ तत्र सर्वर्तवः शुभाः ॥ ५८ ॥ कांतिर्द्युतिर्धृतिर्मेधा श्रीरखंडा च दानवम् ॥ परिवव्रुर्गुणाकीर्णं निश्छिद्राः सर्व एव हि ॥ ५९ ॥ कालागरुविलिप्तांगं महामुकुटमंडितम् ॥ रुचिरांगदसन्नद्धं महासिंहासने स्थितम् ॥ ६० ॥ नृत्यंत्यप्सरसः श्रेष्ठा गन्धर्वा गाययंति च ॥ चन्द्रार्कौ दीपमार्गेषु व्यजनेषु च मारुतः ॥ ग्रहा अग्रेसरास्तस्य जीवादेशप्रभाषिणः ॥ ६१ ॥ एवं स्वकाद्बाहुबलात्स दैत्यः संप्राप्य राज्यं परिमोदमानः ॥ कदाचिदाभाष्य जगाद मंत्रिणः प्रोद्धृत्तसर्वांगबलेन दर्पितः ॥ ६२ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये तारकासुरोत्पत्तिवर्णनंनाम पंचदशोऽध्यायः ॥ ॥ १५ ॥ ॥ छ ॥ ॥ तारक उवाच ॥ ॥ राज्येन बुद्बुदाभेन स्त्रीभिरक्षैश्च पानकैः ॥ मोहितो जन्म लब्ध्वात्र त्यजते पौरुषं नरः ॥ १ ॥ जन्म तस्य वृथा सर्वमाकल्पांतं न संशयः ॥ २ ॥ मातापितृभ्यां न करोति कामान्बन्धूनशोकान्न करोति यो वा ॥ कीर्तिं हि वा नार्जयते न मानं नरः स जातोऽपि मृतोऽत्र लोके ॥ ३ ॥ तस्माज्जयायामरपुंगवानां त्रैलोक्यलक्ष्मीहरणाय शीघ्रम् ॥ संयोज्यतां मे रथमष्टचक्रं बलं च मे दुर्जयदैत्यचक्रम् ॥ ४ ॥ ध्वजं च मे कांचनपट्टबन्धं छत्रं च मे मौक्तिकजालबद्धम् ॥ अद्याहमासां सुरकामिनीनां धम्मिल्लकांश्चाग्रथितान्करिष्ये ॥ ५ ॥ यथा पुरा मर्कटको जनन्यास्तस्याश्च सत्येन तु तारकः स्याम् ॥ ६ ॥ ॥ नारद उवाच ॥ ॥ तारकस्य वचः श्रुत्वा ग्रसनोनाम दानवः ॥ सेनानीर्दैत्यराजस्य तथा चक्रेऽविलंबितम् ॥७॥ आहत्य भेरीं गम्भीरां दैत्यानाहूय सत्वरः ॥ सज्जं चक्रे रथं दैत्यो दैत्यराजस्य धीमतः ॥ ॥ ८ ॥ गरुडानां सहस्रेण गरुडोपमितत्विषा ॥ ते हि पुत्राः सुपर्णस्य संस्थिता मेरुकन्दरे ॥ ९ ॥ विजित्य दैत्यराजेन वाहनत्वे प्रकल्पिताः ॥ अष्टाष्टचक्रः सरथश्चतुर्योजनविस्तृतः ॥१०॥ नानाक्रीडागृहयुतो गीतवाद्यमनोहरः ॥ गंधर्वनगराकारः संयुक्तः प्रत्यदृश्यत ॥ ११ ॥ आजग्मुस्तत्र दैत्याश्च दश चंडपराक्रमाः ॥ कोटिकोटिपरीवारा अन्ये च बहवो रणे ॥१२॥ तेषामग्रेसरो जम्भः कुजम्भोनंतरस्तथा ॥ महिषः कुञ्जरो मेघः कालनेमिर्निमिस्तथा ॥१३॥ मथनो जंभकः शुम्भो दैत्येंद्रा दश नायकाः ॥ दैत्येंद्रा गिरिवर्ष्माणः संति चंडपराक्रमाः ॥१४॥ नानाविधप्रहरणा नानाशस्त्रास्त्रपारगाः ॥ तारकस्याभवत्केतुर्बहुरूपो महाभयः ॥ १५ ॥ क्वचिच्च राक्षसो घोरः पिशाचध्वांक्षगृध्रकः ॥ एवं बहुविधाकारः स केतुः प्रत्यदृश्यत ॥ १६ ॥ केतुना मकरेणापि सेनानीर्ग्रसनो बभौ ॥ पैशाचं यत्र वदनं जंभस्यासीदयस्मयम् ॥ १७ ॥ खरो विधुतलांगूलः कुजम्भस्याभवद्ध्वजे ॥

१ गदामुकुटकुंडिनम्—इ० पा० ।

महिषस्य च गोमायुः कांतो हैमस्तथा[1] बभौ ॥१८॥ गृध्रो वै कुंजरस्यासीन्मेषस्याभूच्च राक्षसः ॥ कालनेमेर्महाकालो निमेरासीन्महातिमिः॥१९॥ राक्षसी मथनस्यापि ध्वांक्षोऽभूज्जंभकस्य च ॥ महावृकश्च शुम्भस्य ध्वजा एवंविधा बभुः ॥ २० ॥ अनेकाकारविन्यासादन्येषां च ध्वजा भवन्[2] ॥ शतेन शीघ्रवेगानां व्याघ्राणां हेममालिनाम् ॥ २१ ॥ ग्रसनस्य रथो युक्तो महामेघरवो बभौ ॥ शतेन चापि सिंहानां रथो जंभस्य योजितः ॥ २२ ॥ कुजंभस्य रथो युक्तः पिशाचवदनैः खरैः ॥ तावद्भिर्महिषस्योष्ट्रैर्गजस्य च हयैर्युतः ॥ २३ ॥ मेषस्य द्वीपिभिर्भीमैः कुञ्जरैः कालनेमिनः ॥ पर्वतं वै समारूढो निश्चिंत्य विधृतं गजैः ॥२४॥ चतुर्दंष्ट्रैर्गंधवद्भिश्चतुर्भिर्मेघसन्निभैः ॥ शतहस्तायते कृष्णे तुरंगे हेमभूषणे ॥२५॥ सितचामरजालेन शोभिते पुष्पदामनि[3] ॥ मथनोनाम दैत्येन्द्रः पाशहस्तो व्यराजत ॥२६॥ किंकिणीमालिनं चोष्ट्रमारूढोऽभूच्च जंभकः ॥ कालमुंचं महामेघमारूढः शुम्भदानवः ॥ २७ ॥ अन्ये च दानवा वीरा नानावाहनहेतयः ॥ प्रचण्डचित्रवर्माणः कुण्डलोष्णीषभूषिताः ॥ २८ ॥ नानाविधोत्तरासंगा नानामाल्यविभूषणाः ॥ नानासुगंधगंधाढ्या नानाबंदिशतस्तुताः ॥२९॥ नानावाद्यपरिस्यंदसाग्रेसरमहारथाः ॥ नानाशौर्यकथासक्तास्तस्मिन्सैन्ये महारथाः ॥ ३० ॥ तद्बलं दैत्यसिंहस्य भीमरूपं व्यदृश्यत ॥ भूमिरेणुसमालिंगत्तुरंगरथपत्तिकम् ॥ ३१ ॥ स च दैत्येश्वरः क्रुद्धः समारूढो महारथम् ॥ दशभिः शुशुभे दैत्यैर्दशबाहुरिवेश्वरः ॥ जगद्धंतुं प्रवृत्तो वा प्रतस्थेऽसौ सुरान्प्रति ॥ ३२ ॥ एतस्मिन्नंतरे वायुर्देवदूतः सुरालयम् ॥ दृष्ट्वा तद्दानवबलं जगामेंद्रस्य शंसितुम् ॥ ३३ ॥ स गत्वा तु सभां दिव्यां महेंद्रस्य महात्मनः ॥ शशंस मध्ये देवानामिदं कार्यमुपस्थितम् ॥ ३४ ॥ तच्छ्रुत्वा देवराजः स निमीलितविलोचनः ॥ बृहस्पतिमुवाचेदं वाक्यं काले महामतिः ॥ ३५ ॥ ॥ इन्द्र उवाच ॥ ॥ संप्राप्तोऽतिविमर्दोऽयं देवानां दानवैः सह ॥ कार्यं किमत्र तद्ब्रूहि नीत्युपायोपबृंहितम् ॥ ३६ ॥ एतच्छ्रुत्वा च वचनं महेंद्रस्य गिरांपतिः ॥ प्रत्युवाच महाभागो बृहस्पतिरुदारधीः ॥ ३७ ॥ ॥ बृहस्पतिरुवाच ॥ ॥ सामपूर्वं स्मृता नीतिश्चतुरंगामनीकिनीम् ॥ जिगीषतां सुरश्रेष्ठ स्थितिरेषा सनातनी ॥ ३८ ॥ साम दानं च भेदश्च चतुर्थो दंड एव च ॥ नीतौ क्रमात्प्रयोज्याश्च देशकालविशेषतः ॥ ३९ ॥ तत्र साम प्रयोक्तव्यमार्येषु गुणवत्सु च ॥ दानं लुब्धेषु भेदश्च शंकितेष्विति निश्चयः ॥ ४० ॥ दण्डश्चापि प्रयोक्तव्यो नित्यकालं दुरात्मसु ॥ साम दैत्येषु नैवास्ति निर्गुणत्वाद्दुरात्मसु ॥ ४१ ॥ श्रिया तेषां च किं कार्यं समृद्धानां तथापि यत् ॥ जातिधर्मेण चाभेद्या विधातुरपि ते मताः ॥ ४२ ॥ एको ह्युपायो दंडोऽत्र भवतां यदि रोचते ॥

१ तदा—इ०पा० । २ अभवन्—अत्राडभाव आर्षः । ३ पुष्पमालिनि—इ० पा० ।

दुर्जनः सुजनत्वाय कल्पते न कदाचन ॥ ४३ ॥ लालितः पालितो वापि स्वस्वभावं न मुंचति ॥ एवं मे मन्यते बुद्धिर्भवंतो यद्व्यवस्यताम् ॥ ॥ ४४ ॥ एवमुक्तः सहस्राक्ष एवमेवेत्युवाच ह ॥ कर्तव्यतां च संचिंत्य प्रोवाचामरसंसदि ॥ ४५ ॥ बहुमानेन मे वाचं शृणुध्वं नाकवासिनः ॥ ॥ ४६ ॥ भवंतो यज्ञभोक्तारः सतामिष्टाश्च सात्त्विकाः ॥ स्वे स्वे पदे स्थिता नित्यं जगतः पालने रताः ॥ ४७ ॥ भवतां च निमित्तेन बाधंते दानवेश्वराः ॥ तेषां सामादि नैवास्ति दंड एव विधीयताम् ॥ ४८ ॥ क्रियतां समरे बुद्धिः सैन्यं संयोज्यतामिति ॥ आवाह्यंतां च शस्त्राणि पूज्यं तां शस्त्रदेवताः ॥ ४९ ॥ इत्युक्ताः समनह्यंत देवानां ये प्रधानतः ॥ वाजिनामयुतेनाजौ हेमपट्टपरिष्कृताः ॥ ५० ॥ वाहनानि विमानानि योजयंतु ममामराः ॥ यमं सेनापतिं कृत्वा शीघ्रं निर्यात देवताः ॥ ५१ ॥ नानाश्चर्यगुणोपेता दुर्जया देवदानवैः ॥ रथो मातलिना युक्तो महेंद्रस्याप्यदृश्यत ॥ ५२ ॥ यमो महिषमास्थाय सेनाग्रे समवर्तत ॥ चंडकिंकिणिवृंदेन सर्वतः परिवारितः ॥५३॥ कल्पकालोज्ज्वलज्वालापूरितांबरगोचरः ॥ हुताश उरणारूढः शक्तिहस्तो व्यवस्थितः ॥ ५४ ॥ पवनोऽकुशपाणिस्तु विस्तारितमहाजवः ॥ महाऋक्षं समारूढः सेनाग्रे समदृश्यत ॥ ॥ ५५ ॥ भुजगेन्द्रं समारूढो जलेशो भगवान्स्वयम् ॥ महापाशधरो वीरः सेनायां समवर्तत ॥ ५६ ॥ नरयुक्ते रथे दिव्ये धनाध्यक्षो व्यचीचरत् ॥ महासिंहरवो युद्धे गदाहस्तो व्यवस्थितः ॥ ५७ ॥ राक्षसेशोऽथ निर्ऋती रथे रक्षोमुखैर्हयैः ॥ धन्वी रक्षोगणवृतो महारावो व्यदृश्यत ॥ ॥ ५८ ॥ चंद्रादित्यावश्विनौ च वसवः साध्यदेवताः ॥ विश्वेदेवाश्च रुद्राश्च सन्नद्धास्तस्थुराहवे ॥ ५९ ॥ हेमपीठोत्तरासंगाश्चित्रवर्मायुधध्वजाः ॥ गंधर्वाः प्रत्यदृश्यन्त कृत्वा विश्वावसुं मुखे ॥ ६० ॥ तथा रक्तोत्तरासंगा निर्मलायोविभूषणाः ॥ गृध्रध्वजा अदृश्यंत राक्षसा रक्तमूर्धजाः ॥ ६१ ॥ तथा भीमाशनिकराः कृष्णवस्त्रा महारथाः ॥ यक्षास्तत्र व्यदृश्यंत मणिभद्रादिकोटिशः ॥६२॥ ताम्रोलूकध्वजा रौद्रा द्वीपिचर्मांबरास्तथा॥पिशाचास्तत्र राजंते महावेगपुरःसराः ॥ ६३ ॥ तथैव श्वेतवसनाः सितपट्टपताकिनः ॥ मत्तेभवाहनप्रायाः किंनरास्तस्थुराहवे ॥ ६४ ॥ मुक्ताजालपरिष्कारो हंसो हारसमप्रभः ॥ केतुर्जलधिनाथस्य सौम्यरूपो व्यराजत ॥ ६५ ॥ पंचरागमहारत्नविटंको धनदस्य च ॥ ध्वजः समुत्थितो भाति यातुकाम इवांबरम् ॥ ६६ ॥ कार्ष्णलोहमयो ध्वांक्षो यमस्याभून्महाध्वजः ॥ राक्षसेशस्य वदनं प्रेतस्य ध्वज आबभौ ॥ ६७ ॥ हेमसिंहध्वजौ देवौ चन्द्रार्कावमितद्युती ॥ कुंभेन चित्रवर्णेन केतुराश्विनयोरभूत् ॥ ६८ ॥ मातंगो हेमरचितश्चित्ररत्नपरिष्कृतः ॥ ध्वजः शतक्रतोरासीत्सितचामरसंस्थितः ॥ ६९ ॥ अन्येषां च ध्वजास्तत्र नानारूपा बभू रणे ॥ सनागयक्षगंधर्वमहोरगनिशाचरा ॥ ७० ॥ सेना सा देवराजस्य दुर्जया प्रत्य

दृश्यत ॥ कोटयस्तास्त्रयस्त्रिंशन्नानादेवनिकायिनाम् ॥ ७१ ॥ हैमाचलाभे सितकर्णचामरे सुवर्णपद्मामलसुंदरस्रजि ॥ कृताभिरामोज्ज्वलकुंकुमांकुरे कपोललीलाविविमुक्तरावे ॥ ७२ ॥ श्रितस्तदैरावणनामकुंजरे महाबलश्चित्रविशेषितांबरः ॥ विशालवज्रांगवितानभूषितः प्रकीर्णकेयूरभुजाग्रमंडलः ॥ ७३ ॥ सहस्रदृग्बंदिसहस्रसंस्तुतस्त्रिविष्टपेऽशोभत पाकशासनः ॥ ७४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे तारकासुरदेवेन्द्रयुद्धोपक्रमवर्णनंनाम षोडशोऽध्यायः ॥ १६ ॥ ॥ नारद उवाच ॥ ॥ ततस्तयोः समायोगः सेनयोरुभयोरभूत् ॥ युगांते समनुप्राप्ते यथा क्षुब्धसमुद्रयोः ॥ १ ॥ सुरासुराणां संमर्दे तस्मिन्परमदारुणे ॥ तुमुलं सुमहत्क्रांते सेनयोरुभयोरपि ॥२॥ गर्जतां देवदैत्यानां शंखभेरीरवेण च ॥ तूर्याणां चैव निर्घोषैर्मातंगानां च बृंहितैः ॥३॥ हेषितैर्हयवृंदानां रथनेमिस्वनेन च ॥ घोषेण चैव तूर्याणां युगांत इव चाभवत् ॥४॥ रोषेणाभिपरीतांगास्त्यक्तजीवितचेतसः ॥ समसज्जन्त तेन्योन्यं प्रक्रमेणातिलोहिताः ॥५॥ रथा रथैः समासक्ता गजाश्चापि महागजैः ॥ पत्तयः पत्तिभिश्चैव हयाश्चापि महाहयैः ॥ ६ ॥ ततः प्रासाशनिगदाभिंडिपालपरश्वधैः ॥ शक्तिभिः पट्टिशैः शूलैर्मुद्गरैः कणयैर्गुडैः ॥ ७ ॥ चक्रैश्च शक्तिभिश्चैव तोमरैरंकुशैरपि ॥ कर्णिनालीकनाराचवत्सदंतार्द्धचंद्रकैः ॥ ८ ॥ भल्लैर्वेतसपत्रैश्च शुकतुंडैश्च निर्मलैः ॥ वृष्टिभिश्चाद्भुताकारैर्गगनं समपद्यत ॥ ९ ॥ संप्रच्छाद्य दिशः सर्वास्तमोमयमिवाभवत् ॥ प्राज्ञायंत न तेऽन्योन्यं तस्मिंस्तमसि संकुले ॥ १० ॥ अदृश्यभूतास्तमसि न्यकृंतंत परस्परम् ॥ ततो भुजैर्ध्वजैश्छत्रैः शिरोभिश्च सकुंडलैः ॥ ११ ॥ गजैस्तुरंगैः पादातैः पतद्भिः पतितैरपि ॥ आकाशशिरसो भ्रष्टैः पंकजैरिव भूश्चिता ॥ १२ ॥ भग्नदंता भिन्नकुंभाश्छिन्नदीर्घमहाकराः[1] ॥ गजाः शैलनिभाः पेतुर्धरण्यां रुधिरस्रवाः ॥ १३ ॥ भग्नेषाश्च रथाः पेतुर्भग्नाक्षाः शकलीकृताः ॥ पत्तयः कोटिशः पेतुस्तुरंगाश्च सहस्रशः ॥ १४ ॥ ततः शोणितनद्यश्च हर्षदाः पिशिताशिनाम् ॥ वैतालानंददायिन्यो व्यजायंत सहस्रशः ॥ १५ ॥ तस्मिंस्तथाविधे युद्धे सेनानीर्ग्रसनोऽरिहा ॥ बाणवर्षेण महता देवसैन्यमकंपयत् ॥ १६ ॥ ततो ग्रसनमालोक्य यमः क्रोधविमूर्छितः ॥ ववर्ष शरवर्षेण विशेषादग्निवर्चसा ॥ १७ ॥ स विद्धो बहुभिर्बाणैर्ग्रसनोऽतिपराक्रमः ॥ कृतप्रतिकृताकांक्षी धनुरानम्य भैरवम् ॥ १८ ॥ शरैः सहस्रैश्च पञ्चलक्षैश्चैव व्यताडयत् ॥ ग्रसनेन विमुक्तांस्ताञ्छरान्सोपि निवार्य च ॥ १९ ॥ बाणवृष्टिभिरुग्राभिर्यमो ग्रसनमर्दयत् ॥ कृतांतशरवृष्टीनां संततीः प्रतिसर्पतीः ॥ चिच्छेद शरवर्षेण ग्रसनो दानवेश्वरः ॥ २० ॥ विफलां

१ छिन्नदीर्घमहाकराः--विच्छिन्नलम्बमहाशुण्डाः--इत्यर्थः ।

तां समालोक्य यमः स्वशरसंततिम् ॥ २१ ॥ प्राहिणोन्मुद्गरं दीप्तं ग्रसनस्य रथं प्रति ॥ स तं मुद्गरमायांतमुत्पत्य रथसत्तमात् ॥ २२ ॥ जग्राह वामहस्तेन लीलया ग्रसनोऽरिहा ॥ तेनैव मुद्गरेणाथ यमस्य महिषं रुषा ॥ २३ ॥ ताडयामास वेगेन स पपात महीतले॥ उत्पत्याथ यमस्तस्मान्महिषान्निपतिष्यतः ॥ २४ ॥ प्रासेन ताडयामास ग्रसनं वदने दृढम् ॥ स तु प्रासप्रहारेण मूर्छितो न्यपतद्भुवि ॥ २५ ॥ ग्रसनं पतितं दृष्ट्वा जंभो भीमपराक्रमः ॥ यमस्य भिंडिपालेन प्रहारमकरोद्धृदि ॥ २६ ॥ यमस्तेन प्रहारेण सुस्राव रुधिरं मुखात् ॥ अतिगाढप्रहारार्त्तः कृतांतो मूर्छितोऽभवत् ॥ २७ ॥ कृतांतमर्दितं दृष्ट्वा गदापाणिर्धनाधिपः ॥ वृतो यक्षायुतगणैर्जंभं प्रत्युद्ययौ रुषा ॥ २८ ॥ जंभो रुषा तमायांतं दानवानीकसंवृतः ॥ जग्राह वाक्यं राज्ञस्तु यथा स्निग्धेन भाषितम् ॥ २९ ॥ ग्रसनो लब्धसंज्ञोऽथ यमस्य प्राहिणोद्गदाम् ॥ मणिहेमपरिष्कारां गुर्वीं परिघमर्दिनीम् ॥ ३० ॥ तामापतंतीं संप्रेक्ष्य गदां महिषवाहनः ॥ गदायाः प्रतिघातार्थं जगज्ज्वलनभैरवम् ॥ ३१ ॥ दंडं मुमोच कोपेन ज्वालामालासमाकुलम् ॥ स गदां वियति प्राप्य ररासांबुधरोद्धतम् ॥ ३२ ॥ संघट्टश्चाभवत्ताभ्यां शैलाभ्यामिव दुःसहः ॥ ताभ्यां निष्पेषनिर्ह्रादजडीकृतदिगंतरम् ॥ ३३ ॥ जगद्व्याकुलतां यातं प्रलयागमशंकया ॥ क्षणात्प्रशांतनिर्ह्रादं ज्वलदुल्कासमाचितम् ॥ ३४ ॥ निष्पेषणं तयोर्भीममभूद्गगनगोचरम् ॥ निहत्याथ गदां दण्डस्ततो ग्रसनमूर्धनि ॥ ३५ ॥ पपात पौरुषं हत्वा यथा दैवं पुरार्जितम् ॥ स तु तेन प्रहारेण दृष्ट्वा सतिमिरा दिशः ॥ ३६ ॥ पपात भूमौ निःसंज्ञो भूमिरेणुविभूषितः ॥ ततो हाहारवो घोरः सेनयोरुभयोरभूत् ॥ ३७ ॥ ततो मुहूर्तमात्रेण ग्रसनः प्राप्य चेतनाम् ॥ अपश्यत्स्वां तनुं ध्वस्तां विलोलाभरणांबराम् ॥ ३८ ॥ स चापि चिंतयामास कृतप्रतिकृतक्रियाम् ॥ धिगस्तु पौरुषं मह्यं प्रभोरग्रेसरः कथम् ॥ ३९ ॥ मय्याश्रितानि सैन्यानि जिते मयि जितानि च ॥ असंभावितरूपो हि सज्जनो मोदते सुखम् ॥ ४० ॥ संभावितस्त्वशक्तश्चेत्तस्य नायं परोऽपि वा ॥ एवं संचिंत्य वेगेन समुत्तस्थौ महाबलः ॥ ४१ ॥ मुद्गरं कालदण्डाभं गृहीत्वा गिरिसंनिभम् ॥ ग्रसनो घोरसंकल्पः संदष्टौष्ठपुटच्छदः ॥ ४२ ॥ रथेन त्वरितोऽगच्छदाससादांतकं रणे ॥ समासाद्य यमं युद्धे ग्रसनो भ्राम्य मुद्गरम् ॥ ४३ ॥ वेगेन महता रौद्रं चिक्षेप यममूर्धनि ॥ विलोक्य मुद्गरं दीप्तं यमः संभ्रांतलोचनः ॥ ४४ ॥ वंचयामास दुर्द्धर्षं मुद्गरं तं महाबलः ॥ तस्मिन्नपसृते दूरं चंडानां भीमकर्मणाम् ॥ ॥ ४५ ॥ याम्यानां किंकराणां च अयुतं निष्पिपेष ह ॥ ततस्तदयुतं दृष्ट्वा हतं किंकरवाहिनी ॥ ४६ ॥ दशार्बुदमिता क्रुद्धा ग्रसनायान्वधावत ॥ ग्रसनस्तु समालोक्य तां किंकरमयां शुभाम् ॥ ४७ ॥ मेने यमसहस्राणि तादृग्रूपबला हि सा ॥ विगाह्य ग्रसनं सेना ववर्ष शरवृष्टिभिः ॥ ४८ ॥

कल्पांतघोरसंकाशो बभूव स महारणः ॥ केचिच्छैलेन बिभिदुः केचिद्बाणैरजिह्मगैः ॥ ४९ ॥ पिपिषुर्गदया केचित्केचिन्मुद्गरवृष्टिभिः ॥ केचित्प्रासप्रहारैश्च ताडयामासुरुद्धताः॥५०॥अपरे किंकरास्तस्य ललंबुर्बाहुमंडले॥ शिलाभिरपरे जघ्नुर्द्रुमैरन्ये महोच्छ्र्यैः ॥५१॥ तस्यापरे च गात्रेषु दशनांश्च न्यपातयन् ॥ अपरे मुष्टिभिः पृष्ठं किंकरास्ताडयंति च ॥ ५२ ॥ एवं चाभिद्रुतस्तैः स ग्रसनः क्रोधमूर्छितः ॥ उत्साद्य[1] गात्रं भूपृष्ठे निष्पिपेष सहस्रशः ॥ ५३ ॥ कांश्चिदुत्थाय जघ्नेऽसौ मुष्टिभिः किंकरान्रणे ॥ कांश्चित्पादप्रहारेण धावन्नन्यानचूर्णयत् ॥ ५४ ॥ क्षणेकेन स तान्निन्ये यमलोकाय भारत ॥ स च किंकरयुद्धेन ववृधेऽग्निरिवैधसा ॥ ५५ ॥ तमालोक्य यमोऽश्रांतं श्रांतांस्तांश्च हतान्स्वकान् ॥ आजगाम समुद्यम्य दंडं महिषवाहनः ॥ ५६ ॥ ग्रसनस्तु तमायांतमाजघ्ने गदयोरसि ॥ अचिंतयित्वा तत्कर्म ग्रसनस्यांतकोऽरिहा ॥ ५७ ॥ व्याघ्रान्दंडेन संजघ्ने स रथान्न्यपतद्भुवि ॥ ततः क्षणेन चोत्थाय संचित्यात्मानमुद्धतः ॥ ५८ ॥ वायुवेगेन सहसा ययौ यमरथं प्रति ॥ पदातिः स रथं तं च समारुह्य यमं तदा[2] ॥ ॥ ५९ ॥ योधयामास बाहुभ्यामाकृष्य बलिनां वरः ॥ यमोऽपि शस्त्राण्युत्सृज्य बाहुयुद्धे प्रवर्तते ॥६०॥ ग्रसनं कटिवस्त्रे तु यमं गृह्य बलोत्कटः ॥ भ्रामयामास वेगेन संभ्रमाविष्टचेतसम् ॥६१॥ विमोच्याथ यमः कष्टात्कंठेऽवष्टभ्य चासुरम् ॥ बाहुभ्यां भ्रामयामास सोऽप्यात्मानममोचयत् ॥६२॥ ततो जघ्नतुरन्योन्यं मुष्टिभिर्निर्दयौ च तौ ॥ दैत्येंद्रस्यातिवीर्यत्वात्परिश्रांततरो यमः ॥ ६३ ॥ स्कंधे निधाय दैत्यस्य मुखं विश्रांतिमैच्छत ॥ तमालक्ष्य ततो दैत्यः श्रांतमुत्पाट्य चौजसा ॥ ६४ ॥ निष्पिपेष महीपृष्ठे विनिघ्नन्पार्ष्णिप[illegible]भिः ॥ ततो यमस्य वदनात्सुस्राव रुधिरं बहु ॥ ६५ ॥ निर्जीवमिति तं दृष्ट्वा ततः संत्यज्य दानवः ॥ जयं प्राप्योद्धतं नादं मुक्त्वा संत्रास्य [illegible]ताः ॥ ६६ ॥ स्वकं सैन्यं समासाद्य तस्थौ गिरिरिवाचलः ॥ ॥ ६७ ॥ नादेन तस्य ग्रसनस्य संख्ये महायुधैश्चार्दितसर्वगात्राः ॥ गते कृतांते वसुधां च निष्प्रभे चकंपिरे कांदिशिकाः सुरास्ते ॥ ६८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे तारकसैन्यदेवसैन्ययोर्मध्ये यमग्रसनयोर्युद्धवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ धनाधिपस्य जंभेन सायकैर्मर्मभेदिभिः ॥ दिशोपरुद्धाः क्रुद्धेन सैन्यं चाभ्यर्दितं भृशम् ॥ १ ॥ तद्दृष्ट्वा कर्म दैत्यस्य धनाध्यक्षः प्रतापवान् ॥ आक[illegible] कृष्टचापस्तु जंभमाजौ महाबलम् ॥ २ ॥ हृदि विव्याध बाणानां सहस्रेणाग्निवर्चसाम् ॥ स प्रहस्य ततो वीरो बाणानामयुतत्रयम् ॥ ३ ॥ [illegible] च [illegible] कोटिमर्बुदं चाक्षिपत्क्षण[illegible] ॥ तस्य तल्लाघवं

१ उत्साद्य–निर्धूय–कंपयित्वा–तानंगलग्नानन्यमर्किकरा[illegible]सायत्यथः । उत्सृज्य–इति पाठान्तरम् । २ यदा–इ० पा० । ३ [illegible] पा० ।

दृष्ट्वा क्रुद्धो गृह्य महागदाम् ॥ ४ ॥ धनाध्यक्षः प्रचिक्षेप स्वर्गेप्सुः स्वधनं यथा ॥ मुक्तायां च गदायां वै नादोऽभूत्प्रलये यथा ॥ ५ ॥ भूतानां
बहुधा रावा जज्ञिरे खे महाभयाः ॥ वायुश्च सुमहाञ्जज्ञे खमायान्मेघसंकुलम् ॥ ६ ॥ सा हि वैश्रवणस्यास्ते त्रैलोक्याभ्यर्चिता गदा ॥ आयांतीं तां
समालोक्य तडित्संघातदुर्दशाम् ॥ ७ ॥ दैत्यो गदाविघातार्थं शस्त्रवृष्टिं मुमोच ह ॥ चक्राणि कुणपान्प्रासाञ्छतघ्नीः पट्टिशांस्तथा ॥ ८ ॥
परिघान्मुशलान्वृक्षान्गिरींश्चातुलविक्रमः ॥ कदर्थीकृत्य शस्त्राणि तानि सर्वाणि सा गदा ॥ ९ ॥ कल्पांतभास्करो यद्वन्न्यपतद्दैत्यवक्षसि ॥ स
तया गाढभिन्नः सन्सफेनरुधिरं वमन् ॥ १० ॥ निःपपात रथाज्जंभो वसुधां गतचेतनः ॥ जंभं निपतितं दृष्ट्वा कुजंभो घोरनिश्चयः ॥ ११ ॥
धनाधिपस्य संक्रुद्धो नादेनापूरयन्दिशः ॥ चक्रे बाणमयं जालं शकुंतस्येव पंजरम् ॥ १२ ॥ विच्छिद्य बाणजालं च मायाजालमिवोत्कटम् ॥
मुमोच बाणानपरांस्तस्य यक्षाधिपो बली ॥१३॥ चिच्छेद लीलया तांश्च दैत्यः क्रोधीव सद्वचः ॥ निष्फलांस्तांस्ततो दृष्ट्वा बाणान्क्रुद्धो धनाधिपः
॥१४॥ शक्तिं जग्राह दुर्धर्षां शतघंटामहास्वनाम् ॥ प्रेपिता सा तदा शक्तिर्दारयामास तं हृदि॥१५॥यथाल्पबोधं पुरुषं दुःखं संसारसंभवम्॥तथास्य
हृदयं भित्त्वा जगाम धरणीतलम् ॥ १६ ॥ निमेषात्सोभिसंस्तम्भ्य दानवो दारुणाकृतिः ॥ जग्राह पट्टिशं दैत्यो गिरीणामपि भेदनम् ॥ १७ ॥
स तेन पट्टिशेनाजौ धनदस्य स्तनांतरम् ॥ वाक्येन तीक्ष्णरूपेण मर्माक्षरविसर्पिणा ॥१८॥ निर्बिभेदाभिजातस्य हृदयं दुर्जनो यथा ॥ तेन पट्टिश
घातेन धनेशः परिमूर्छितः ॥१९॥ निषसाद रथोपस्थे दुर्वाचा सुजनो यथा ॥ तथागतं तु तं दृष्ट्वा धनेशं वै मृतं यथा ॥२०॥ राक्षसो निर्ऋतिर्देवो
निशाचरबलानुगः ॥ अभिदुद्राव वेगेन कुजंभं भीमविक्रमम् ॥ २१ ॥ अथ दृष्ट्वातिदुर्धर्षं कुजंभो राक्षसेश्वरम् ॥ नोदयामास दैत्यान्स राक्षसेश
रथं प्रति ॥ २२ ॥ स दृष्ट्वा नोदितां सेनां प्रबलास्त्रां सुभीषणाम् ॥ रथादाप्लुत्य वेगेन निर्ऋती राक्षसेश्वरम् ॥ २३ ॥ खड्गेन तीक्ष्णधारेण चर्मपा
णिरधावत ॥ प्रविश्य दानवानीकं गजः पद्मसरो यथा ॥ २४ ॥ लोडयामास बहुधा विनिष्कृत्य सहस्रशः ॥ चिच्छेद कांश्चिच्छतशो बिभेदान्या
न्वरासिना ॥ २५ ॥ संदष्टौष्ठमुखैः पृथ्वीं दैत्यानां सोऽभ्यपूरयत् ॥ ततो निःशेषितप्रायां विलोक्य स्वां चमूं तदा ॥ २६ ॥ मुक्त्वा धनपतिं दैत्यः
कुजंभो निर्ऋतिं ययौ ॥ लब्धसंज्ञस्तु जंभोऽपि धनाध्यक्षपदानुगान् ॥ २७ ॥ जीवग्राहं स जग्राह बद्ध्वा पाशैः सहस्रधा ॥ मूर्तिमंति च रत्नानि
पद्मादींश्च निधींस्तथा ॥ २८ ॥ वाहनानि च दिव्यानि विमानानि च सर्वशः ॥ धनेशो लब्धसंज्ञस्तु तामवस्थां विलोक्य सः ॥ २९ ॥ निःश्व
सन्दीर्घमुष्णं च रोषात्ताम्रविलोचनः ॥ ध्यात्वास्त्रं गारुडं दिव्यं बाणं संधाय कार्मुके ॥ ३० ॥ मुमोच दानवानीके तं बाणं शत्रुदारणम् ॥

प्रथमं कार्मुकं तस्य वह्निज्वालमदृश्यत ॥ ३१ ॥ निश्चेरुर्विस्फुलिंगानां कोट्यो धनुषस्तथा ॥ ततो ज्वालाकुलं व्योम चक्रे चास्त्रं समंततः ॥ ॥ ३२ ॥ तदस्त्रं सहसा दृष्ट्वा जंभो भीमपराक्रमः ॥ संवर्तं मुमुचे तेन प्रशांतं गारुडं तदा ॥ ३३ ॥ ततस्तं दानवो दृष्ट्वा कुबेरं रोषविह्वलः ॥ अभिदुद्राव वेगेन पदातिर्धनदं नदन् ॥ ३४ ॥ अथाभिमुखमायांतं दैत्यं दृष्ट्वा धनाधिपः ॥ बभूव संभ्रमाविष्टः पलायनपरायणः ॥ ३५ ॥ ततः पलायतस्तस्य मुकुटो रत्नमंडितः ॥ पपात भूतले दीप्तो रविबिंबमिवांबरात् ॥ ३६ ॥ यक्षाणामभिजातानां भग्नं प्रववृते रणात् ॥ मर्तुं संग्राम शिरसि युक्तं नो भूपणाय तत् ॥ ३७ ॥ इति व्यवस्य दुर्धर्षा नानाशस्त्रास्त्रपाणयः ॥ युयुत्सवस्तथा यक्षा मुकुटं परिवार्य ते ॥ ३८ ॥ अभिमान धना वीरा[1] धनदस्य पदानुगाः ॥ तानमर्षाच्च संप्रेक्ष्य दानवश्चंडपौरुषः ॥ ३९ ॥ भुशुण्डीं भीषणाकारां गृहीत्वा शैलगौरवाम् ॥ रक्षिणो मुकुट स्याथ निष्पिपेष निशाचरान् ॥ ४० ॥ तान्प्रमथ्याथ नियुतं मुकुटं तं स्वके रथे ॥ समारोप्यामरारिपुर्जित्वा धनदमाहवे ॥४१॥ धनानि च निधी न्गृह्य स्वसैन्येन समावृतः ॥ नादेन महता देवान्द्रावयामास सर्वशः ॥ ४२ ॥ धनदोऽपि धनं सर्वं गृहीतो मुक्तमूर्धजः ॥ पदातिरेकः सन्त्रस्तः प्राप्यैवं[2] दीनवत्स्थितः ॥ ४३ ॥ कुजंभेनाथ संसक्तो रजनीचरनंदनः ॥ मायाममोघामाश्रित्य तामसीं राक्षसेश्वरः ॥ ४४ ॥ मोहयामास दैत्येन्द्रो जगत्कृत्वा तमोमयम् ॥ ततो विफलनेत्राणि दानवानां बलानि च ॥ ४५ ॥ न शेकुश्चलितुं तत्र पदादपि पदं तदा[3] ॥ ततो नानास्त्रवर्षेण दान वानां महाचमूः ॥ ४६ ॥ जघान निर्ऋतिर्देवस्तमसा संवृता[4] भृशम् ॥ हन्यमानेषु दैत्येषु कुजंभे मूढचेतसि ॥ ४७ ॥ महिषो दानवेन्द्रस्तु कल्पांतां भोदसन्निभः ॥ अस्त्रं चकार सावित्रमुल्कासंघातमंडितम् ॥ ४८ ॥ विजृंभत्यथ सावित्रे परमास्त्रे प्रतापिनि ॥ प्रणाशमगमत्तीव्रं तमो घोरमनंत रम् ॥ ४९ ॥ ततोऽस्त्रविस्फुलिंगांकं तमः शुक्लं व्यजायत ॥ प्रोत्फुल्लारुणपद्मौघं शरदीवामलं सरः ॥ ५० ॥ ततस्तमसि संशांते दैत्येन्द्राः प्राप्तच क्षुषः ॥ चक्रुः[5] क्रूरेण तमसा देवानीकं महाद्भुतम् ॥ ५१ ॥ अथादाय धनुर्घोरमिषुं चाशीविषोपमम् ॥ कुजंभोऽधावत क्षिप्रं रक्षोदेवबलं प्रति ॥ ॥ ५२ ॥ राक्षसेन्द्रस्तथायांतं दृष्ट्वा तं स पदानुगः ॥ विव्याध निशितैर्बाणैः कालाशनिसमस्वनैः ॥ ५३ ॥ नादानं न च सन्धानं न मोक्षो वास्य लक्ष्यते ॥ चिच्छेदोग्रैः शरव्रातैस्ताञ्छरानतिलाघवात् ॥ ५४ ॥ ध्वजं शरेण तीक्ष्णेन निचकर्तामरद्विषः ॥ सारथिं चास्य भल्लेन रथनीडादपाह रत् ॥ ५५ ॥ कालकल्पेन बाणेन तं च वक्षस्यताडयत् ॥ स तु तेन प्रहारेण चकम्पे पीडितो भृशम् ॥ ५६ ॥ दैत्येंद्रो राक्षसेन्द्रेण क्षितिकंपे

१ धीराः--इ० पा० । २ एवं--दशामिति शेषः । ३ तथा--इ० पा० । ४ तमसा संवृताः--इति दानवानां महाचमूः--इत्येतस्य विशेषणम् । ५ वत्रुः--इ० पा० ।

नगो यथा ॥ स मुहूर्तात्समाश्वास्य मत्वा तं दुर्जयं रणे ॥ ५७ ॥ पदातिरासाद्य रथं रक्षो वामकरेण च ॥ केशेषु निर्ऋतिं गृह्य जानुनाक्रम्य च स्थितः ॥ ५८ ॥ ततः खड्गेन च शिरश्छेत्तुमैच्छदमर्षणः ॥ ततः कलकलो जज्ञे देवानां सुमहांस्तदा ॥ कुजंभस्य वशं प्राप्तं दृष्ट्वा निर्ऋतिमाहवे ॥ ५९ ॥ एतस्मिन्नन्तरे देवो वरुणः पाशभृद्द्रुतः ॥ पाशेन दानवेंद्रस्य बबन्धाशु भुजद्वयम् ॥ ६० ॥ ततो बद्धभुजं दैत्यं विफलीकृतपौरुषम् ॥ ताडयामास गदया दयामुत्सृज्य पाशभृत् ॥ ६१ ॥ स तु तेन प्रहारेण स्रोतोभिः क्षतजं स्रवन् ॥ दधार कालमेघस्य रूपं विद्युल्लताभृतम् ॥ ६२ ॥ तदवस्थागतं दृष्ट्वा कुजंभं महिषासुरः ॥ व्यावृत्तवदनारावो भोक्तुमैच्छत्सुरावुभौ ॥ ६३ ॥ निर्ऋतिं वरुणं चैव तीक्ष्णदंष्ट्रोत्कटाननः ॥ तावभिप्रायमालोक्य तस्य दैत्यस्य दूषितम् ॥ ६४ ॥ त्यक्त्वा रथावुभौ भीतौ पदाती प्रद्रुतौ द्रुतम् ॥ जग्मतुर्महिषाद्भीतौ शरणं पाकशासनम् ॥ ६५ ॥ क्रुद्धोऽथ महिषो दैत्यो वरुणं समुपाद्रवत् ॥ तमंतकमुखासन्नमालोक्य हिमदीधितिः ॥ ६६ ॥ चक्रे शस्त्रं विसृष्टं हि हिमसंघातमुल्बणम् ॥ वायव्यं चास्त्रमतुलं चंद्रश्चक्रे द्वितीयकम् ॥ ६७ ॥ वायुना तेन चंडेन संशुष्केण हिमेन च ॥ महाहिमनिपातेन शस्त्रैश्चंद्रप्रणोदितैः ॥ ६८ ॥ गात्राण्यसुरसैन्यानामदह्यंत समंततः ॥ व्यथिता दानवाः सर्वे शीतच्छादितपौरुषाः ॥ ६९ ॥ न शेकुश्चलितुं तत्र नास्त्राण्यादातुमेव च ॥ महिषो निष्प्रयत्नश्च शीतेनाकंपिताननः ॥ ७० ॥ अंसमालिंग्य पाणिभ्यामुपविष्टो ह्यधोमुखः ॥ सर्वे ते निष्प्रतीकारा दैत्याश्चंद्रमसा जिताः ॥ ७१ ॥ रणेच्छां दूरतस्त्यक्त्वा तस्थुस्ते जीविताथिनः ॥ तत्राब्रवीत्कालनेमिर्दैत्यान्क्रोधविदीपितः ॥७२॥ भोभोः शृंगारिणः क्रूराः सर्वशस्त्रास्त्रपारगाः ॥ एकैकोऽपि जगत्कृत्स्नं शक्तस्तुलयितुं भुजैः ॥ ७३ ॥ एकैकोऽपि क्षमो ग्रस्तुं जगत्सर्वं चराचरम् ॥ एकैकस्यापि पर्याप्ता न सर्वेऽपि दिवौकसः ॥ ७४ ॥ किं त्रस्तनयनाश्चैव समरे परिनिर्जिताः ॥ न युक्तमेतच्छूराणां विशेषाद्दैत्यजन्मनाम् ॥ ७५ ॥ राज्ञश्च तारकस्यापि दर्शयिष्यथ किं मुखम् ॥ विरतानां रणाच्चासौ क्रुद्धः प्राणान्हरिष्यति ॥ ७६ ॥ इति ते प्रोच्यमानापि नोचुः किंचिन्महासुराः ॥ शीतेन नष्टश्रुतयो भ्रष्टवाक्याश्च ते तथा ॥ ॥ ७७ ॥ मूकास्तथाभवन्दैत्या मृतकल्पा महारणे ॥ तान्दृष्ट्वा नष्टचेतस्कान्दैत्याञ्छीतेन पीडितान् ॥ ७८ ॥ मत्वा कालक्षमं कार्यं कालनेमिर्महासुरः ॥ आश्रित्य मानवीं मायां वितत्य च महावपुः ॥ ७९ ॥ पूरयामास गगनं दिशो विदिश एव च ॥ निर्ममे दानवेन्द्रोऽसौ शरीरे भास्करायुतम् ॥ ८० ॥ दिशश्च विदिशश्चैव पूरयामास पावकैः ॥ ततो ज्वालाकुलं सर्वं त्रैलोक्यमभवत्क्षणात् ॥ ८१ ॥ तेन ज्वालासमूहेन हिमां

१ रक्षः—दैत्यराक्षसोऽत्र बोध्यः । २ विद्युल्लता भृताम्—इ० पा० । ३ गोप्तारम्—इ० पा० । ४ प्रोच्यमानाः अपि—इति पदच्छेदः । सन्धिरार्षः ।

शुरगमद्भुतम् ॥ ततः क्रमेण विभ्रष्टं शीतदुर्दिनमाबभौ ॥ ८२ ॥ तद्बलं दानवेंद्राणां मायया कालनेमिनः ॥ तद्दृष्ट्वा दानवानीकं लब्धसंज्ञं दिवाकरः ॥ उवाचारुणमत्यर्थं कोपरक्तांतलोचनः ॥ ८३ ॥ ॥ दिवाकर उवाच ॥ ॥ नयारुण रथं शीघ्रं कालनेमिरथो यतः ॥ ८४ ॥ विमर्दे तत्र विषमे भविता भूतसंक्षयः ॥ जित एषशशांकोऽथ वयं यद्बलमाश्रिताः ॥ ८५ ॥ इत्युक्तश्चोदयामास रथं गरुडपूर्वजः ॥ रथे स्थितोऽपि तैरश्वैः सितचामरधारिभिः ॥ ८६ ॥ जगद्दीपोऽथ भगवाञ्जग्राह विततं धनुः ॥ शरौघो वै पांडुपुत्र क्षिप्रमासीद्विषद्युतिः ॥८७॥ शंबरास्त्रेण संधाय बाणमेकं ससर्ज ह ॥ द्वितीयं चेन्द्रजालेनायोजितं प्रमुमोच ह ॥ ८८ ॥ शंबरास्त्रं क्षणाच्चक्रे तेषां रूपविपर्ययम् ॥ देवानां दानवं रूपं दानवानां च दैविकम् ॥ ॥ ८९ ॥ मत्वा सुरान्स्वकानेव जघ्ने घोरास्त्रलाघवात् ॥ कालनेमी रुषाविष्टः कृतांत इव संक्षये ॥ ९० ॥ कांश्चित्खड्गेन तीक्ष्णेन कांश्चिन्नाराचवृष्टिभिः ॥ कांश्चिद्गदाभिर्घोराभिः कांश्चिद्घोरैः परश्वधैः ॥ ९१ ॥ शिरांसि केषांचिदपातयद्रथाद्भुजांस्तथा सारथींश्चोग्रवेगान् ॥ कांश्चित्पिपेषाथ रथस्य वेगात्कांश्चित्तथात्यद्भुतमुष्टिपातैः ॥ ९२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे तारकसैन्यदेवसैन्ययोर्युद्धवर्णननामाष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ कालनेमी रुषाविष्टस्तेषां रूपं न बुद्धवान् ॥ ततो निमिं च दैत्येन्द्रं मत्वा देवं महाजवः ॥ १ ॥ केशेषु गृह्य तं वीरं चकर्ष च ननाद च ॥ ततो निमिरुवाचेदं कालनेमिं महाबलम् ॥ २ ॥ अहं निमिः कालनेमे सुतं मत्वा वधस्व मा ॥ भवता मोहितेनाजौ देवान्मत्वासुराः स्वकाः[2] ॥ ३ ॥ सुरैः सुदुर्जयाः कोट्यो निहता दश विद्धि तत् ॥ सर्वास्त्रवारणं मुंच ब्राह्ममस्त्रं त्वरान्वितः ॥ ४ ॥ स तेन बोधितो दैत्यो मुक्त्वा तं संभ्रमाकुलः ॥ बाणं ब्रह्मास्त्रविहितं मुमोच त्वरयान्वितः ॥ ५ ॥ ब्रह्मास्त्रं तत्प्रजज्वाल ततः खे सुमहाद्भुतम् ॥ देवानां चाभवत्सैन्यं सर्वमेव भयाकुलम् ॥ ६ ॥ शंबरास्त्रं ततः शांतं ब्राह्मप्रतिहतं तदा ॥ तस्मिन्प्रतिहते ह्यस्त्रे संक्रुद्धो भास्करः प्रभुः ॥ ७ ॥ महेंद्रजालमास्थाय चक्रे स्वां भीषणां तनुम् ॥ विस्फूर्जत्करसंघातसमाक्रांतजगत्त्रयः ॥ ८ ॥ ततापं दानवानीकं गलन्मज्जाङ्घ्रिशोणितम् ॥ चक्षूंषि दानवेन्द्राणां चकारांधानि स प्रभुः ॥ ९ ॥ गजानामगलन्मेदः पेतुश्चापि रथा भुवि ॥ तुरंगमाः श्वसंतश्च घर्मार्ता रथिनोपि च ॥ १० ॥ इतश्चेतश्च सलिलं प्रार्थयंतस्तृषातुराः ॥ गिरिद्रोणीश्च पादांश्च गिरीणां गहनानि च ॥ ११ ॥ तेषां प्रार्थयतां शीघ्रमन्योन्यं च विसर्पिणाम् ॥ दावाग्निरज्वलत्तीव्रो घोरो निर्दग्धपादपः ॥ १२ ॥ तोयार्थिनः पुरो दृष्ट्वा तोयं कल्लो

१ नोदयामास–इ०पा०। २ स्वकान् एव–राक्षसानेव–इत्यर्थः।

लमालितम् ॥ पुरःस्थितमपि प्राप्तुं न शेकुरुपसादितुम् ॥ १३ ॥ अप्राप्य सलिलं भूमावभ्याशे द्रुतमेव ते ॥ तत्रतत्र व्यदृश्यन्त मृता दैत्येश्वरा भुवि ॥ १४ ॥ रथा गजाश्च पतितास्तुरंगाश्च श्रमान्विताः ॥ स्थिता वमंतो धावंतो गलद्रुतवसास्रजः ॥ १५ ॥ दानवानां कोटिकोटि व्यदृश्यत मृतं तदा ॥ एवं क्षयो दानवानां तस्मिन्महति वर्तिते ॥ १६ ॥ प्रकोपोद्भूतताम्राक्षः कालनेमी रुषातुरः ॥ बभूव कालमेघाभः स्फुरद्रोमशतह्रदः ॥ ॥ १७ ॥ गंभीरास्फोटनिर्ह्रादजगद्धृदयकंपनः ॥ प्रच्छाद्य गगनं सूर्यप्रभां सर्वां व्यनाशयत् ॥ १८ ॥ ववर्ष शीतं च जलं दानवेन्द्रबलं प्रति ॥ दैत्यास्तां वृष्टिमासाद्य समाश्वस्तास्ततः क्रमात् ॥ १९ ॥ बीजांकुरा इव म्लानाः प्राप्य वृष्टिं धरातले ॥ ततः स मेघरूपेण[1] कालनेमिर्महासुरः ॥ ॥ २० ॥ शस्त्रवृष्टिं ववर्षोग्रां देवानीकेषु दुर्जयः[2] ॥ तया वृष्ट्या पीड्यमाना दैत्यैरन्यैश्च देवताः ॥ २१ ॥ गतिं कांचिन्न पश्यन्ति गावः शीतार्दिता इव ॥ परस्परं व्यलीयंत गजेषु तुरगेषु च ॥ रथेषु च भयत्रस्तास्तत्रतत्र निलिलियिरे ॥ २२ ॥ एवं ते लीयमानाश्च निहताः कालनेमिना ॥ दृश्यंते पतिता देवाः शस्त्रभिन्नांगसंधयः ॥ २३ ॥ विभिन्ना भिन्नमूर्धानस्तथा भिन्नोरुजानवः ॥ विपर्यस्तं रथांगैश्च पतितं ध्वजशक्तिभिः ॥ २४ ॥ तुरंगाणां सहस्राणि गजानामयुतानि च ॥ रक्तेन तेषां घोरेण दुस्तरा चाभवन्मही ॥ २५ ॥ एवमाजौ महादैत्यः कालनेमिर्महासुरः ॥ जघ्ने मुहूर्तमात्रेण गंधर्वाणां दशायुतम् ॥२६ ॥ यक्षाणां पंचलक्षाणि किंनराणां तथैव च ॥ जघ्ने पिशाचमुख्यानां सप्तलक्षाणि निर्भयः ॥ ॥ २७ ॥ इतरेषां न संख्यास्ति सुरजातिनिकायिनाम् ॥ जघ्ने स कोटिशः क्रुद्धः कालनेमिर्मदोत्कटः ॥ २८ ॥ एवं प्रतिभये भीमे तदामरमहाक्षये ॥ संक्रुद्धावश्विनौ वीरौ चित्रास्त्रकवचोज्ज्वलौ ॥ २९ ॥ जघ्नतुस्तौ रणे दैत्यमेकैकं षष्टिभिः शरैः ॥ निर्भिद्य ते[3] महादैत्यं सपुंखा विविशुर्महीम् ॥ ३० ॥ ताभ्यां बाणप्रहारैस्तु किंचित्सोऽवाप्तचेतनः ॥ जग्राह चक्रं लक्षारं तैलधौतं रणेऽधिकम् ॥ ३१ ॥ तेन चक्रेण सोऽश्विभ्यां चिच्छेद[4] रथकूबरम् ॥ जग्राहाथ धनुर्दैत्यः शरांश्चाशीविषोपमान् ॥ ३२ ॥ ववर्ष भिषजोर्मूर्ध्नि संछाद्याकाशगोचरम् ॥ तावप्यस्त्रैः स्मृतैः सर्वांश्छेदतुर्दैत्यसायकान् ॥ ३३ ॥ तच्च कर्म तयोर्दृष्ट्वा विस्मितः कोपमाविशत् ॥ जग्राह मुद्गरं भीमं कालदंडविभीषणम् ॥ ३४ ॥ स तमुद्भ्राम्य वेगेन चिक्षेपास्य रथं प्रति ॥ तं तु मुद्गरमायांतमालोक्यांबरगोचरे ॥ ३५ ॥ मुक्त्वा रथावुभौ वेगादाप्लुतौ तरसाश्विनौ ॥ तौ रथौ स तु निष्पिष्य मुद्गरोऽचलसंनिभः ॥ ३६ ॥ दारयामास धरणीं हेमजालपरिष्कृतः ॥ तस्य कर्माथ तद्दृष्ट्वा भिषजौ चित्रयोधिनौ ॥ ३७ ॥ वज्रास्त्रं च प्रकुर्वाणौ

१ मेघरूपी तु–इ०पा० । २ महाबलः–इ० पा० । ३ ते शराः–इत्यर्थः । ४ आर्षोऽयं प्रयोगः । चिच्छिदतुः–इत्यपेक्षितम् ।

दानवेंद्रमयुध्यताम् ॥ घोरवज्रप्रहारैस्तु दानवः स परिक्षतः ॥ ३८ ॥ रथो ध्वजो धनुश्चैव छत्रं च कवचं तथा ॥ क्षणेन शतधा भूतं सर्वसैन्यस्य पश्यतः ॥ ३९ ॥ तद्दृष्ट्वा दुष्करं कर्म सोऽश्विभ्यां भीमविक्रमः ॥ नारायणास्त्रं बलवान्मुमोच रणमूर्धनि ॥ ४० ॥ ततः शशाम वज्रास्त्रं कालनेमिस्ततो रुषा ॥ जीवग्राहं ग्राहयितुमश्विनौ तौ प्रचक्रमे ॥ ४१ ॥ तावभिप्रायमालक्ष्य संत्यज्य समरांगणम् ॥ पदाती वेपमानांगौ प्रद्रुतौ वासवो यतः ॥ ४२ ॥ तयोरनुगतो दैत्यः कालनेमिर्नदन्मुहुः ॥ प्राप्येंद्रस्य बलं क्रूरो दैत्यानीकपदानुगः ॥ ४३ ॥ स काल इव कल्पांते यदा वासवमाद्रुतः ॥ तं दृष्ट्वा सर्वभूतानि विविशुर्विह्वलानि तु ॥ ४४ ॥ हाहारावं प्रकुर्वाणास्तदा देवाश्च मेनिरे ॥ पराजयं महेंद्रस्य सर्वलोकक्षयावहम् ॥ ॥ ४५ ॥ चेलुः शिखरिणो मुख्याः पेतुरुल्का नभस्तलात् ॥ जगर्जुर्जलदा दिक्षु संभूतश्च महारवः ॥ ४६ ॥ तां भूतविकृतिं[1] दृष्ट्वा देवाः सेंद्रा भयावहाः ॥ मनसा शरणं जग्मुर्वासुदेवं जगत्पतिम् ॥ ४७ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ॥ जगद्धिताय कृष्णाय गोविंदाय नमोनमः ॥ ४८ ॥ स नो रक्षतु गोविंदो भयार्तास्ते जगुः[2] सुराः ॥ सुराणां चिंतितं ज्ञात्वा भगवान्गरुडध्वजः ॥ ४९ ॥ विबुध्यैव च पर्यंकाद्योगनिद्रां विहाय सः ॥ लक्ष्मीकरयुगांभोजलालितांघ्रिसरोरुहः ॥ ५० ॥ शारदांबरनीराब्जकांतिदेहच्छविः प्रभुः ॥ कौस्तुभोद्भासिहृदयः कांतकेयूरभास्करः ॥ ५१ ॥ विमृश्य सुरसंक्षोभं वैनतेयमथाह्वयत ॥ आहूतेऽवस्थितेतस्मिन्गरुडे दुःखिते भृशम् ॥ ५२ ॥ दृष्ट्य[3] नानास्त्रतीक्ष्णार्चिरारुह्यागात्सुराहवम् ॥ तत्रापश्यत देवेंद्रं भयभीतमभिद्रुतम् ॥ ५३ ॥ दानवेंद्रैर्नवांभोदसच्छायैः सर्वथोत्कटैः ॥ यथा हि पुरुषं घोरैरभाग्यैरर्थकांक्षिभिः[4] ॥ ५४ ॥ तत्राणायाव्रजद्विष्णुः स्तूयमानो मुहुः सुरैः ॥ अभाग्येभ्यः परित्रातुं सुकृतं निर्मलं यथा ॥ ५५ ॥ अथापश्यत दैत्येंद्रो वियति द्युतिमंडलम् ॥ स्फुरंतमुदयाच्छीघ्रं कांतं सूर्यशतं यथा ॥ ५६ ॥ प्रभवं ज्ञातुमिच्छंतो दानवास्तस्य तेजसः ॥ गरुडं तमथा पश्यन्कल्पांतानलभैरवम् ॥ ५७ ॥ तत्र स्थितं चतुर्बाहुं हरिं चानुपमद्युतिम् ॥ तमालोक्यासुरेंद्रास्तु हर्षसंपूर्णमानसाः ॥ ५८ ॥ अयं स देवः सर्वेषां शरणं केशवोऽरिहा ॥ अस्मिञ्जिते जिताः सर्वा देवता नात्र संशयः ॥ ५९ ॥ एनमाश्रित्य लोकेशा यज्ञभागभुजोऽमराः ॥ इत्युक्त्वा ते[5] समागम्य सर्व एव ततस्ततः ॥ ६० ॥ तं जघ्नुर्विविधैः शस्त्रैः परिवार्य समंततः ॥ कालनेमिप्रभृतयो दश दैत्यमहारथाः ॥ ६१ ॥ षष्ट्या विव्याध बाणानां कालनेमिर्जनार्दनम् ॥ निमिः शतेन बाणानां मथनोऽशीतिभिः शरैः ॥ ६२ ॥ जंभकश्चैव सप्तत्या शुंभो दशभिरेव च ॥ शेषा दैत्ये

१ भूतानां पृथिव्यादिपंचमहाभूतानाम्--विकृतिं--विकारम्--इत्यर्थः । २ भयार्तास्तेऽसकृज्जगुः-इ० पा० । ३ दृष्ट्वा--इ० पा० । ४ अर्थशालिभिः--इ० पा० । ५ यत्ताः--इ० पा० ।

श्वराः सर्वे विष्णुमेकैकशः शरैः ॥ ६३ ॥ दशभिर्दशभिः शल्यैर्जघ्नुः सगरुडं रणे ॥ तेषाममृष्यत्तत्कर्म विष्णुर्दानवसूदनः ॥ ६४ ॥ एकैकं दानवं जघ्ने षड्भिः षड्भिरजिह्मगैः ॥ आकर्णकृष्टैर्भूयश्च कालनेमिस्त्रिभिः शरैः ॥ ६५ ॥ विष्णुं विव्याध हृदये रोषाद्रक्तविलोचनः ॥ तस्याशोभंत ते बाणा हृदये तप्तकांचनाः ॥ ६६ ॥ मयूखा इव संदीप्ताः कौस्तुभस्य स्फुरत्त्विषः ॥ तैर्बाणैः किंचिदायस्तो हरिर्जग्राह मुद्गरम् ॥ ६७ ॥ स तमुद्राह्य वेगेन दानवाय मुमोच वै ॥ दानवेन्द्रस्तमप्राप्तं वियत्येव शतैः शरैः ॥ ६८ ॥ चिच्छेद तिलशः क्रुद्धो दर्शयन्पाणिलाघवम् ॥ ततो विष्णुः प्रकुपितः प्रासं जग्राह भैरवम् ॥ ६९ ॥ तेन दैत्यस्य हृदयं ताडयामास वेगतः ॥ क्षणेन लब्धसंज्ञस्तु कालनेमिर्महासुरः ॥ ७० ॥ शक्तिं जग्राह तीक्ष्णाग्रां हेमघंटाट्टहासिनीम् ॥ तया वामं भुजं विष्णोर्बिभेद दितिनंदनः ॥ ७१ ॥ भिन्नं शक्त्या भुजं तस्य स्रुतशोणितमाबभौ ॥ नीले बलाहके विद्युद्विद्योतंती यथा मुहुः ॥ ७२ ॥ ततो विष्णुः प्रकुपितो जग्राह विपुलं धनुः ॥ सप्तदश च नाराचांस्तीक्ष्णाग्रान्मर्मभेदिनः ॥ ७३ ॥ दैत्यस्य हृदयं षड्भिर्विव्याध च शरैस्त्रिभिः ॥ चतुर्भिः सारथिं चास्य ध्वजं चैकेन पत्रिणा ॥ ७४ ॥ द्वाभ्यां धनुर्ज्याधनुषी भुजं चैकेन पत्रिणा ॥ स विद्धो हृदये गाढं दोषैर्मूढो यथा नरः ॥ ७५ ॥ स्रुतरक्तारुणः प्रांशुः पीडाचलितमानसः ॥ चकंपे मारुतेनेव चोदितः किंशुकद्रुमः ॥ ७६ ॥ ततः कंपितमालक्ष्य गदां जग्राह केशवः ॥ तां च वेगेन चिक्षेप कालनेमिवधं प्रति ॥ ७७ ॥ सा पपात शिरस्युग्रा सहसा कालनेमिनः ॥ संचूर्णितोत्तमांगस्तु निष्पिष्टमुकुटोसुरः ॥ ७८ ॥ स्रुतरक्तौघरंध्रश्च स्रुतधातुरिवाचलः ॥ पपात स्वे रथे भग्नो विसंज्ञः शिष्टजीवनः ॥ ७९ ॥ पतितस्य रथोपस्थे दानवस्याच्युतोऽरिहा ॥ स्मितपूर्वमुवाचेदं वाक्यं चक्रायुधः प्रभुः ॥ ८० ॥ गच्छासुर विमुक्तोऽसि सांप्रतं जीव निर्वृतः ॥ ततः स्वल्पेन कालेन अहमेव तवांतकः ॥ ८१ ॥ एवं वचस्तस्य निशम्य विष्णोः सर्वेश्वरस्याथ रथं निमेषात् ॥ निनाय दूरं किल कालनेमिनो भीतस्तदा सारथिर्लोकनाथात् ॥ ८२ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे देवासुरसंग्रामे कालनेमिकृतयुद्धसंमर्दे विष्णुना सह कालनेमियुद्धवर्णनंनामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ तं दृष्ट्वा दानवाः सर्वे क्रुद्धाः स्वैःस्वैर्बलैर्वृताः ॥ सरघा इव माक्षिकं रुरुधुः सर्वतस्ततः ॥ १ ॥ पर्वताभे गजे भीमे मदस्राविणि दुर्दमे ॥ सितचित्रपताके तु प्रभिन्नकरटामुखे ॥ २ ॥ स्वर्णवर्णांचिते यद्वन्नगे दावाग्निसंवृते ॥ आरुह्याजौ निमिर्दैत्यो हरिं प्रत्युद्ययौ बली ॥ ३ ॥ तस्यासन्दानवा

१ यथा—ख० पा० । २ गाभीमग—ख० पा० ।

रौद्रा गजस्य परिरक्षिणः ॥ सप्तविंशतिकोट्यश्च किरीटकवचोज्ज्वलाः ॥ ४ ॥ अश्वमारुह्य शैलाभं मथनो हरिमाद्रवत् ॥ पंचयोजनप्रग्रीव मुष्ट्रमास्थाय जंभकः ॥ ५ ॥ शुम्भो मेषं समारुह्यावजद्द्वादशयोजनम् ॥ अपरे दानवेन्द्राश्च यत्ता नानास्त्रपाणयः ॥ ६ ॥ आजग्मुः समरे क्रुद्धा विष्णुमक्लिष्टकारिणम् ॥ परिघेण निमिर्दैत्यो मथनो मुद्गरेण च ॥ ७ ॥ शुम्भः शूलेन तीक्ष्णेन प्रासेन ग्रसनस्तथा ॥ चक्रेण क्रथनः क्रुद्धो जंभः शक्त्या महारणे ॥ ८ ॥ जघ्नुर्नारायणं शेषा विशिखैर्मर्मभेदिभिः ॥ तान्यस्त्राणि प्रयुक्तानि विविशुः पुरुषोत्तमम् ॥ ९ ॥ उपदेशा गुरोर्यद्वत्सच्छिष्यं बहुधेरिताः ॥ ततः क्रुद्धो हरिर्गृह्य धनुर्बाणांश्च पुष्कलान् ॥ १० ॥ ममर्द दैत्यसेनां तद्धर्ममर्थवचो यथा ॥ निमिं विव्याध विंशत्या बाणैरनलवर्चसैः ॥ ११ ॥ मथनं दशभिश्चैव शुम्भं पंचभिरेव च ॥ शतेन महिषं क्रुद्धो विव्याधोरसि माधवः ॥ १२ ॥ जंभं द्वादशभिस्तीक्ष्णैः सर्वांश्चैकैकशोऽष्टभिः ॥ तस्य तल्लाघवं दृष्ट्वा दानवाः क्रोधमूर्छिताः ॥ १३ ॥ चक्रुर्गाढतरं यत्नमावृण्वाना हरिं शरैः ॥ चिच्छेदाथ धनुर्ज्यां च निमिर्भल्लेन दानवः ॥ १४ ॥ हस्ताच्चापं च संरंभाच्चिच्छेद महिषासुरः ॥ पीडयामास गरुडं जंभो बाणायुतैस्त्रिभिः ॥ १५ ॥ भुजावस्य च विव्याध शुंभो बाणायुतेन वै ॥ ततो विस्मितचित्तस्तु गदां जग्राह माधवः ॥ १६ ॥ तां प्राहिणोत्स वेगेन मथनाय महाहवे ॥ तामप्राप्तां निमिर्बाणैर्मुशलाभैः सहस्रशः ॥ १७ ॥ आहत्य पातयामास विनदन्कालमेघवत् ॥ ततोऽन्तरिक्षे हाहेति भूतानां जज्ञिरे कथाः ॥ १८ ॥ नैतदस्ति बलं व्यक्तं यत्राशीर्यत सा गदा ॥ तां हरिः पतितां दृष्ट्वा अस्थाने प्रार्थनामिव॥ १९ ॥ जग्राह मुद्गरं घोरं दिव्यरत्नपरिष्कृतम् ॥ तं मुमोचातिवेगेन निमिमुद्दिश्य दानवम् ॥ २० ॥ तमायांतं वियत्येव त्रयो दैत्या ह्यवारयन् ॥ गदया जंभदैत्यस्तु ग्रसनः पट्टिशेन तु ॥२१॥ शक्त्या च महिषो दैत्यो विनदंतो महारवम् ॥ निराकृतं तमालोक्य दुर्जनैः सुजनं यथा ॥ २२ ॥ जग्राह शक्तिमुग्रोग्रां शतघंटामहास्वनाम् ॥ जंभाय तां समुद्दिश्य प्राहिणोद्भीषणे रणे ॥२३॥ तामायान्तीमथालोक्य जंभोऽन्यस्य रथात्त्वरात् ॥ आप्लुत्य लीलया गृह्णन्कामिनीं कामुको यथा ॥२४ ॥ तयैव गरुडं मूर्ध्नि जघ्ने स प्रहसन्बली ॥ ततो भूयो रथं प्राप्य धनुर्गृह्याभ्ययोजयत् ॥ २५ ॥ विचेताश्चाभवद्युद्धे गरुडः शक्तिपीडितः ॥ ततः प्रहस्य तं विष्णुः साधुसाध्विति भारत ॥ २६ ॥ करस्पर्शेन कृतवान्विमोहं विनतात्मजम् ॥ समाश्वास्य च तं वाग्भिः शक्तिं दृष्ट्वा च निष्फलाम् ॥२७॥ कुभार्यस्य यथा पुंसः सर्वं

१ कुम्भः--इ० पा० । २ धर्मं प्रति यथा अर्थवचः केवलस्वार्थसंपादनतत्परतया धर्मे विषयेऽनास्था स्यात्तां न दृष्ट्वा केवलं स्वार्थबुद्ध्या दम्भं पुरस्कृत्य प्रसारितं दांभिकवाग्जालं धर्मं मर्दयति तथा--इत्ययं गूढोऽभिप्रायः । ३ मुशलाग्रैः--इ० पा० । ४ विनदन्त्या--इ० पा० । ५ अभ्ययोधयत् ।

स्याच्चिंतितं वृथा ॥ दृढसारमहामौर्वीमन्यां संयोजयत्ततः ॥२८॥ कृत्वा च तलनिर्घोषं रौद्रमस्त्रं मुमोच सः॥ततोऽस्त्रतेजसा सर्वमाकाशं नैव दृश्यते ॥२९॥ भूमिर्दिशश्च विदिशो बाणजालमया बभुः ॥ दृष्ट्वा तदस्त्रमाहात्म्यं सेनानीर्ग्रसनोऽसुरः ॥ ३० ॥ ब्राह्ममस्त्रं चकाराशु सर्वास्त्रविनिवारणम् ॥ तेन तत्प्रशमं यातं रौद्रास्त्रं लोकभीषणम् ॥ ३१ ॥ अस्त्रे प्रतिहते तस्मिन्विष्णुर्दानवसूदनः ॥ कालदंडास्त्रमकरोत्सर्वलोकभयंकरम् ॥ ३२ ॥ संधीयमानेऽस्त्रे तस्मिन्मारुतः परुषो ववौ ॥ चकंपे च मही देवी भिन्नाश्चांबुधयोऽभवन् ॥ ३३ ॥ तदस्त्रमुग्रं दृष्ट्वा तु दानवा युद्धदुर्मदाः ॥ चक्रुरस्त्राणि दिव्यानि नानारूपाणि संयुगे ॥ ३४ ॥ नारायणास्त्रं ग्रसनस्तु चक्रे त्वाष्ट्रं निमिश्चास्त्रवरं मुमोच ॥ ऐषीकमस्त्रं च चकार जंभो युद्धस्य दण्डास्त्र निवारणाय ॥ ३५ ॥ यावच्च संधानवशं प्रयांति नारायणादीनि निवारणाय ॥ तावत्क्षणेनैव जघान कोटीर्दैत्येश्वराणां किल कालदंडः ॥ ३६ ॥ अनंतरं शांतभयं तदस्त्रं दैत्यास्त्रयोगेन च कालदण्डम् ॥ शांतं तदालोक्य हरिः स्वमस्त्रं कोपेन कालानलतुल्यमूर्तिः ॥ ३७ ॥ जग्राह चक्रं तपनायुतप्रभमुग्रारमात्मानमिव द्वितीयम् ॥ चिक्षेप सेनापतये ज्वलंतं चतुर्भुजः संयति संप्रगृह्य ॥ ३८ ॥ तदाव्रजच्चक्रमथो विलोक्य सर्वात्मना दैत्यवराः स्ववीर्यात् ॥ नाशक्नुवन्वारयितुं प्रचंडं दैवं यथा पूर्वमिवोपपन्नम् ॥ ३९ ॥ तदप्रतर्क्यं नवहेतितुल्यं चक्रं पपात ग्रसनस्य कण्ठे ॥ तद्रक्तधारारुणघोरनाभि जगाम भूयोपि करं मुरारेः ॥ ४० ॥ चक्राहतः संयति दानवश्च पपात भूमौ प्रममार चापि ॥ दैत्याश्च शेषा भृशशोकमापुः क्रोधं च केचित्पिपिषुर्भुजांश्च ॥ ४१ ॥ ततो विनिहते दैत्ये ग्रसने बलनायके ॥ निर्मर्यादमयुध्यंत हरिणा सह दानवाः ॥ ४२ ॥ पट्टिशैर्मुशलैः प्रासैर्गदाभिः कणपैरपि ॥ तीक्ष्णाननैश्च नाराचैश्चक्रैः शक्तिभिरेव च ॥ ४३ ॥ तदस्त्रजालं तैर्मुक्तं लब्धलक्षो जनार्दनः ॥ एकैकं शतधा चक्रे बाणैरग्निशिखोपमैः ॥ ४४ ॥ जघान तेषां संक्रुद्धः कोटिकोटिं जनार्दनः ॥ ततस्ते सहसा भूत्वा न्यपतन्केशवोपरि ॥ ४५ ॥ गरुडं जगृहुः केचित्पादयोः शतशोऽसुराः ॥ ललंबिरे च पक्षाभ्यां मुखे चान्ये ललंबिरे ॥ ४६ ॥ केशवस्यापि धनुषि भुजयोः शीर्षं एव च ॥ ललंबिरे महादैत्या निनदंतो मुहुर्मुहुः ॥ ४७ ॥ तदद्भुतं महद्दृष्ट्वा सिद्धचारणवार्तिकाः ॥ हाहेति मुमुचुर्नादमंबरे चास्तुवन्हरिम् ॥ ४८ ॥ ततो हरिर्विनिर्धूय पातयामास तान्भुवि ॥ यथा प्रबुद्धः पुरुषो दोषान्संसारसंभवान् ॥ ४९ ॥ विकोशं च ततः कृत्वा नंदकं खड्गमुत्तमम् ॥ चर्म चाप्यमलं विष्णुः पदातिस्तानधावत ॥ ५० ॥ ततो मुहूर्तमात्रेण पद्मानि दश केशवः ॥ चकर्त्त मार्गे बहुभिर्विचरन्दैत्यसत्तमान् ॥ ५१ ॥ ततो निमिप्रभृतयो विनद्यासुरस

१ भिन्नाः—इ० पा० । २ कणकैः—इ०पा० । कणपाख्यो वा कणकाख्यो वा आयुधविशेषः ।

त्तमाः ॥ अधावंत महेष्वासाः केशवं पादचारिणम् ॥ ५२ ॥ गरुत्मांश्चाभ्ययात्तूर्णमारुरोह च तं हरिः ॥ उवाच च गरुत्मंतं तस्मिंश्च तुमुले रणे ॥ ५३ ॥ अश्रांतो यदि तार्क्ष्यासि मथनं प्रति तद्व्रज ॥ श्रांतश्चेच्च मुहूर्तं त्वं रणादपसृतो भव ॥ ५४ ॥ ॥ तार्क्ष्य उवाच ॥ ॥ न मे श्रमोऽस्ति लोकेश किंचित्संस्मरतश्च मे ॥ यन्मे सुतान्वाहनत्वे कल्पयामास तारकः ॥ ५५ ॥ इति ब्रुवन्रणे दैत्यं मथनं प्रति सोऽगमत् ॥ दैत्यस्त्वभिमुखं दृष्ट्वा शंखचक्रगदाधरम् ॥ ५६ ॥ जघान भिंडिपालेन शितधारेण वक्षसि ॥ तं प्रहारमचिंत्यैव विष्णुस्तस्मिन्महाहवे ॥ ५७ ॥ जघान पंचभिर्बाणैर्गिरींद्रस्यापि भेदकैः ॥ आकर्णकृष्टैर्दशभिः पुनर्विद्धः स्तनांतरे ॥ ५८ ॥ विचेतनो मुहूर्तात्स संस्तभ्य मथनः पुनः ॥ गृहीत्वा परिघं मूर्ध्नि जनार्दनमताडयत् ॥ ५९ ॥ विष्णुस्तेन प्रहारेण किंचिदाघूर्णितोऽभवत् ॥ ततः कोपविवृत्ताक्षो गदां जग्राह माधवः ॥ ६० ॥ तया संताडयामास मथनं हृदये दृढम् ॥ स पपात तथा भूमौ चूर्णितांगो ममार च ॥ ६१ ॥ तस्मिन्निपतिते भूमौ मथने मथिते भृशम् ॥ अवसादं ययुर्दैत्याः सर्वे ते युद्धमण्डले ॥ ६२ ॥ ततस्तेषु विषण्णेषु दानवेष्वतिमानिषु ॥ चुकोप रक्तनयनो महिषो दानवेश्वरः ॥ ६३ ॥ प्रत्युद्ययौ हरिं रौद्रः स्वबाहुबलमाश्रितः ॥ तीक्ष्णधारेण शूलेन महिषो हरिमर्दयन् ॥ ६४ ॥ शक्त्या च गरुडं वीरो हृदयेऽभ्यहनद्दृढम् ॥ ततो विवृत्य वदनं महाचलगुहानिभम् ॥ ६५ ॥ ग्रस्तुमैच्छद्रणे दैत्यः सगरुत्मंतमच्युतम् ॥ अथाच्युतोऽपि विज्ञाय दानवस्य चिकीर्षितम् ॥ ६६ ॥ वदनं पूरयामास दिव्यैरस्त्रैर्महाबलः ॥ स तैर्बाणैरभिहतो महिषोऽचलसंनिभः ॥ ६७ ॥ परिवर्तितकायार्धः पपाताथ ममार च ॥ महिषं पतितं दृष्ट्वा जीवयित्वा पुनर्हरिः ॥ ६८ ॥ महिषं प्राह मत्तस्त्वं वधं नार्हसि दानव ॥ योषिद्वध्यः पुरोक्तस्त्वं साक्षात्कमलयोनिना ॥ ६९ ॥ उत्तिष्ठ गच्छ मन्मुक्तो द्रुतमस्मान्महारणात् ॥ इत्युक्तो हरिणा तस्माद्देशादपगतोऽसुरः ॥ ७० ॥ तस्मिन्पराङ्मुखे दैत्ये महिषे शुंभदानवः ॥ संदष्टौष्ठपुटाटोपो भ्रुकुटीकुटिलाननः ॥ ७१ ॥ निर्मथ्य पाणिना पाणिं धनुरादाय भैरवम् ॥ सज्जीकृत्य महाघोरान्मुमोच शतशः शरान् ॥७२॥ स चित्रयोधी दृढमुष्टिपातस्ततश्च विष्णुं गरुडं च दैत्यः ॥ बाणैर्ज्वलद्वह्निशिखानिकाशैः क्षिप्तैरसंख्यैः प्रतिघातहीनैः ॥७३॥ विष्णुश्च दैत्येंद्रशरार्दितो भृशं भुशुंडिमादाय कृतांततुल्याम् ॥ तया मुखं चास्य पिपेष संख्ये शुंभस्य जत्रुं च धराधराभम् ॥ ७४ ॥ ततस्त्रिभिः शुंभभुजं द्विपष्ट्या सूतस्य शीर्षं दशभिश्च केतुम् ॥ विष्णुर्विकृष्टैः श्रवणावसानं दैत्यस्य बाणैर्ज्वलनार्कवर्णैः ॥ ७५ ॥ स तैश्च विद्धो व्यथितो

१ पादचारिणः--इ० पा० । २ भिंदिपालेन--इ०, भिंडिनालेन--इ० च पा० । ३ कर्म एकाकिनं ययुः--इति कस्मिंश्चित्पुस्तके पाठः अस्यार्थो नावगम्यते । ४ विघूर्णेषु--इ० पा० ।

बभूव दैत्येश्वरो विस्रुतशोणिताक्तः ॥ ततोऽस्य किंचिच्चलितस्य धैर्यादुवाच शंखांबुजशार्ङ्गपाणिः ॥ ७६ ॥ योषित्सुव[illegible] [illegible] निशुंच शुंभाऽशुभ स्वल्पतरैरहोभिः ॥ मत्तोहंसि त्वं न वृथैव मूढ ततोऽपयातः स च शुंभदानवः ॥७७॥ जम्भोऽथ तद्विष्णुमुखान्निशम्य जगर्ज चोच्चैः कृतसिंहनादः ॥ प्रोवाच वाक्यं च सलीलमाजौ महाट्टहासेन जगद्विकंप्य ॥ ७८ ॥ किमेभिस्ते जलावास दैत्यैर्हीनपराक्रमैः ॥ मामासादय युद्धेऽस्मिन्यदि ते पौरुषं क्वचित् ॥ ७९ ॥ यत्ते पूर्वं हता दैत्या हिरण्याक्षमुखाः किल ॥ जंभस्तदाभवन्नैव पश्य मामद्य संस्थितम् ॥ ८० ॥ पश्य तालप्रतीकाशौ भुजावेतौ हरे मम ॥ वक्षो वा वज्रकठिनं मयि प्रहर तत्सुखम् ॥ ८१ ॥ इत्युक्तः केशवस्तेन सृक्किणी संलिहन्रुषा ॥ मुमोच परिघंघोरं गिरीणामपि दारणम् ॥ ८२ ॥ ततस्तस्याप्यनुपदं कालायसमयं दृढम् ॥ मुमोच मुद्गरं विष्णुर्द्वितीयं पर्वतं यथा ॥ ८३ ॥ तदायुधद्वयं दृष्ट्वा जंभो न्यस्य रथे धनुः ॥ आप्लुत्य परिघं गृह्य गरुडं तेन जघ्निवान् ॥ ८४ ॥ द्वितीयं मुद्गरं चानु गृहीत्वा विनदन्रणे ॥ सर्वप्राणेन गोविंदं तेन मूर्ध्नि जघान सः ॥ ८५ ॥ ताभ्यां चातिप्रहाराभ्यामुभौ गरुडकेशवौ ॥ मोहाविष्टौ विचेतस्कौ मृतकल्पाविवासताम् ॥ ८६ ॥ तदद्भुतं महद्दृष्ट्वा जगर्जुर्दैत्यसत्तमाः ॥ नैतान्हर्षमदोद्भूतानिदं सेहे जगत्तदा ॥८७॥ सिंहनादैस्तलोन्नादैर्धनुर्नादैश्च बाणजैः ॥ जंभं ते हर्षयामासुर्वासांस्यादुधुवुश्च ते ॥८८॥ शंखांश्च पूरयामासुश्चिक्षिपुर्देवता भृशम् ॥८९॥ संज्ञामवाप्याथ महारणे हरिः सवैनतेयः परिरभ्य जंभम् ॥ पराङ्मुखः संयुगादप्रधृष्यात्पलायनं वेगवश्चकार ॥९०॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे दैत्यैः सह विष्णोर्युद्धवर्णनंनाम विंशोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ तमालोक्य पलायंतं विध्वस्तध्वजकार्मुकम् ॥ दैत्यांश्च मुदितानिंद्रः कर्तव्यं नाध्यगच्छत ॥१॥ अथायान्निकटं विष्णोः सुरेशस्त्वरयान्वितः ॥ उवाच चैनं मधुरमुत्साहपरिबृंहितम् ॥ २ ॥ किमेभिः क्रीडसे देव दानवैर्दुष्टमानसैः ॥ दुर्जनैर्लब्धरंध्रस्य पुरुषस्य कुतः क्रियाः ॥ ३ ॥ शक्तेनोपेक्षितो नीचो मन्यते बलमात्मनः ॥ तस्मान्न नीचं मतिमानुपेक्षेत कथंचन ॥४॥ अथाग्रेसरसंपत्त्या रथिनो जयमाययुः ॥ कस्ते सखाभवत्पूर्वं हिरण्याक्षवधे विभो ॥ ५ ॥ हिरण्यकशिपुर्दैत्यो वीर्यशाली मदोद्धतः ॥ प्राप्य त्वां तृणवन्नष्टस्तत्र कोऽग्रेसरस्तव ॥ ६ ॥ पूर्वं प्रतिबला दैत्या मधुकैटभसन्निभाः ॥ निविष्टास्त्वां तु संप्राप्य शलभा इव पावकम् ॥ ७ ॥ युगेयुगे च दैत्यानां त्वत्तो नाशोऽभवद्धरे ॥ तथैवाद्येह भीतानां त्वं हि विष्णो सुराश्रयः ॥ ८ ॥ एवं संनोदितो विष्णुर्व्यवर्धत महाभुजः ॥ बलेन तेजसा ऋद्ध्या सर्वभूताश्रयोऽ

१ सृक्किणी—ओष्ठप्रान्तभागौ—इत्यर्थः । २ विध्वस्तध्वजकार्मुकम्—इ० पा० । ३ बध्नाम्—इ० पा० ।

रिहा ॥ ९ ॥ अथोवाच सहस्राक्षं केशवः प्रहसन्निव ॥ एवमेतद्यथा प्राह भवानस्मद्गतं वचः ॥ १० ॥ त्रैलोक्यदानवान्सर्वान्दग्धुं शक्तः क्षणा
दहम् ॥ दुर्जयस्तारकः किं तु मुक्त्वा सप्तदिनं शिशुम् ॥ ११ ॥ महिषश्चैव शुंभश्च उभौ वध्यौ च योषिता ॥ जंभो दुर्वाससा शप्तः शक्रवध्यो भवा
निति ॥ तस्मात्त्वं दिव्यवीर्येण जहि जंभं मदोत्कटम् ॥१२॥ अवध्यः सर्वभूतानां त्वामृते स तु दानवः ॥ १३ ॥ मया गुप्तो रणे जंभो जगत्कंटक
मुद्धर ॥ तद्वैकुंठवचः श्रुत्वा सहस्राक्षोमरारिहा ॥ १४ ॥ समादिशत्सुराध्यक्षान्सैन्यस्य रचनां प्रति ॥ ततश्चाभ्यर्थितो देवैर्विष्णुः सैन्यमकल्पयत् ॥
॥ १५ ॥ यत्सारं सर्वलोकस्य वीर्यस्य तपसोऽपि च ॥ तदैकादश रुद्रांश्च चकाराग्रेसरान्हरिः ॥ १६ ॥ व्यालीढांगा महादेवा बलिनो नीलकं
धराः ॥ चंद्रखंडत्रिपुंड्राश्च पिंगाक्षाः शूलपाणयः ॥ १७ ॥ पिंगोत्तुंगजटाजूटाः सिंहचर्मावसायिनः ॥ भस्मोद्धूलितगात्राश्च भुजमंडलभैरवाः ॥
॥ १८ ॥ कपालीशादयो रुद्रा विद्रावितमहाऽसुराः ॥ कपाली पिंगलो भीमो विरूपाक्षो विलोहितः ॥ १९ ॥ अजकः शासनः शास्ता शंभु
श्चंद्रो भवस्तथा ॥ एत एकादशानंतबला रुद्राः प्रभाविनः ॥ २० ॥ अपालयंत त्रिदशान्विगर्जंत इवांबुदाः ॥ हिमाचलाभे महति कांचनांबुरुह
स्रजि ॥ २१ ॥ प्रचंचलमहाहेमघंटासंहतिमंडिते ॥ ऐरावते चतुर्दंते मत्तमातंग आस्थितः ॥ २२ ॥ महामदजलस्रावे कामरूपे शतक्रतुः ॥ तस्थौ
हिमगिरेः शृंगे भानुमानिव दीप्तिमान् ॥ तस्यारक्षत्पदं सव्यं मारुतोऽमितविक्रमः ॥ २३ ॥ जुगोपापरमग्निश्च ज्वालापूरितदिङ्मुखः ॥ पृष्ठरक्षोऽभव
द्विष्णुः समरेशः शतक्रतोः ॥ २४ ॥ आदित्या वसवो विश्वे मरुतश्चाश्विनावपि ॥ गंधर्वा राक्षसा यक्षाः सकिंनरमहोरगाः ॥२५॥ कोटिशःकोटिशः
कृत्वा वृंदं चिह्नोपलक्षितम् ॥ विश्रावयंतः स्वां कीर्तिं बंदिवृन्दैः पुरःसरैः ॥ २६ ॥ चेलुर्दैत्यवधे हृष्टा नानावर्णायुधध्वजाः ॥ २७ ॥ शतक्रतोरमरनि
कायपालिता पताकिनी याननिनादनादिता ॥ सितोन्नतध्वजपटकोटिमंडिता बभूव सा दितिसुतशोकवर्धिनी ॥२८॥ आयांतीं तां विलोक्याथ सुर
सेनां गजासुरः ॥ गजरूपी महांश्चैव संहारांभोधिविक्रमः ॥ २९ ॥ परश्वधायुधो दैत्यो दशनौष्ठकसंपुटः ॥ ममर्द चरणे देवांश्चिक्षेपान्यान्करेण
च ॥३०॥ परान्परशुना जघ्ने दैत्येंद्रो रौद्रविक्रमः ॥ तस्यैवं निघ्नतः क्रुद्धा देवगन्धर्वकिंनराः ॥ ३१ ॥ मुमुचुः संहताः सर्वे चित्रशस्त्रास्त्रसंहतिम् ॥
परश्वधांश्च चक्राणि भिण्डिपालान्समुद्गरान् ॥ ३२ ॥ कुन्तान्प्रासाञ्छरांस्तीक्ष्णान्मुद्गरांश्चापि दुःसहान् ॥ तान्सर्वान्सोग्रसद्दैत्यो यूथपः
कवलानिव ॥ ३३ ॥ कोपस्फुरितदंष्ट्राग्रः करस्फोटेन नादयन् ॥ सुरान्निघ्नंश्चचाराजौ दुष्प्रेक्ष्यः सोऽथ दानवः ॥ ३४ ॥ यस्मिन्यस्मिन्निपतति सुर

१ जगत्कंटकं तमिति शेषः तं जंभमित्यर्थः ।

वृंदे गजासुरः ॥ तस्मिंस्तस्मिन्महाशब्दो हाहाकारो व्यजायत ॥३५॥ अथ विद्रवमानं तद्बलं प्रेक्ष्य समंततः ॥ रुद्राः परस्परं प्रोचुरहंकारोत्थिता द्विपः ॥ ३६ ॥ भोभो गृह्णत दैत्येंद्रं भिंदतैनं महाबलाः ॥ कर्पतैनं शितैः शूलैर्भञ्जतैनं हि मर्मसु ॥ ३७ ॥ कपाली वाक्यमाकर्ण्य शूलं सितशितं मुखे ॥ संमार्ज्य वामहस्तेन संरंभाद्विवृतेक्षणः ॥ ३८ ॥ प्रोत्फुल्लारुणनीलाब्जसंहतिः सर्वतो दिशः ॥ अथागाद्भ्रुकुटीवक्रो दैत्येंद्राभिमुखो रणे ॥ ॥ ३९ ॥ दृढेन मुष्टिबन्धेन शूलं विष्टभ्य निर्मलः ॥ जघान कुम्भदेशे तु कपाली गजदानवम् ॥४०॥ ततो दशापि ते रुद्रा निर्मलायोमयै रणे ॥ जघ्नुः शूलैस्तु दैत्येंद्रं शैलवर्ष्माणमाहवे ॥ ४१ ॥ सुस्राव शोणितं पश्चात्सर्वस्रोतस्सु तस्य वै ॥ शूलरक्तेन रुद्रस्य शुशुभे गजदानवः ॥ ४२ ॥ प्रोत्फुल्लामलनीलाब्जं शरदीवामलं सरः ॥ भस्मशुभ्रतनुच्छाये रुद्रे हंसैरिवावृतम् ॥ ४३ ॥ क्रुद्धं कपालिनं दैत्यः प्रचलत्कर्णपल्लवः ॥ भवं च दन्तैर्बिभिदे नाभिदेशे गजासुरः ॥ ४४ ॥ दृष्ट्वानुरक्तं रुद्राभ्यां नवरुद्रास्ततो द्रुतम् ॥ विव्यधुर्विशिखैः शूलैः शरीरममरद्विपः ॥ ४५ ॥ ततः कपालिनं त्यक्त्वा भवं चासुरपुंगवः ॥ वेगेन कुपितो दैत्यो नव रुद्रानुपाद्रवत् ॥ ममर्द चरणाघातैर्दन्तैश्चापि करेण च ॥ ४६ ॥ ततोऽसौ शूलयुद्धेन श्रममासादितो यदा ॥ तदा कपाली जग्राह करमस्यामरद्विपः ॥ ४७॥ भ्रामयामास चातीव वेगेन च गजासुरम् ॥ दृष्ट्वा श्रमातुरं दैत्यं किंचिच्छ्वावितजीवितम् ॥ ४८ ॥ निरुत्साहं रणे तस्मिन्गतयुद्धोत्सवोऽभवत् ॥ ततो भ्रमत एवास्य चर्म उत्कृत्य भैरवम् ॥ ४९ ॥ स्रवत्सर्वांगरक्तौघं चकारांबरमात्मनः ॥ तुष्टुवुस्तं तदा देवा बहुधा बहुभिः स्तवैः ॥ ५० ॥ ऊचुश्चैनं च यो हन्यात्स म्रियेत ततस्त्वसौ ॥ दृष्ट्वा कपालिनो रूपं गजचर्मांबरावृतम् ॥ ५१ ॥ वित्रेसुर्दुद्रुवुर्जघ्नुर्निपेतुश्च सहस्रशः ॥ एवं विलुलिते तस्मिन्दानवेन्द्रे महाबले ॥ ५२ ॥ गजं मत्तमथारुह्य शतदुन्दुभिनादितम् ॥ निमिरभ्यपतत्तूर्णं सुरसैन्यानि लोडयन् ॥ ५३ ॥ यांयां निमिगजो याति दिशं तांतां सवाहनाः ॥ दुद्रुवुश्चुक्रुशुर्देवा भयेना कंपिता मुहुः ॥ ५४ ॥ गन्धेन सुरमातंगा दुद्रुवुस्तस्य हस्तिनः ॥ पलायितेषु सैन्येषु सुराणां पाकशासनः ॥ ५५ ॥ तस्थौ दिक्पालकैः सार्धमष्टभिः केशवेन च ॥ संप्राप्तस्तस्य मातंगो यावच्छक्रगजं प्रति ॥ ५६ ॥ तावच्छक्रगजो भीतो मुक्त्वा नादं सुभैरवम् ॥ ध्रियमाणोऽपि यत्नेन चकोर इव तिष्ठति ॥ ५७ ॥ पलायति गजे तस्मिन्नारूढः पाकशासनः ॥ विपरीतमुखं युद्धं दानवेन्द्रेण सोऽकरोत् ॥ ५८ ॥ शतक्रतुस्तु शूलेन निमिं वक्षस्यताडयत् ॥ गदया दंतिनं तस्य गल्लदेशेऽहनद्दृशम् ॥ ५९ ॥ तं प्रहारमचिन्त्यैव निमिर्निर्भयपौरुषः ॥

१ मुखे अग्रभागे सितं सुतुष्टत्वात्--शितं तीक्ष्णीकृतं च--सितशितम्। एतादृशं शूलम्। २ कथंचिद्दंतैः--पु० पा०। ३ अद्रवन्--पु० पा०।

ऐरावतं कटीदेशे मुद्गरेणाभ्यताडयत् ॥ ६० ॥ स हतो मुद्गरेणाथ शक्रकुञ्जर आहवे ॥ जगाम पश्चात्पद्भ्यां च पृथिवीं भूधराकृतिः ॥ ॥ ६१ ॥ लाघवात्क्षिप्रमुत्थाय ततोऽमरमहागजः ॥ रणादपससर्पाथ भीषितो निमिहस्तिना ॥ ६२ ॥ ततो वायुर्ववौ रूक्षो बहुशर्करपांशुलः ॥ सम्मुखो निमिमातंगोऽकंपनोऽचलकंपनः ॥ स्रुतरक्तो बभौ शैलो धनधातुह्रदो यथा ॥ ६३ ॥ धनेशोऽपि गदां गुर्वीं तस्य दानवहस्तिनः ॥ मुमोच वेगान्न्यपतत्सा गदा तस्य मूर्धनि ॥ ६४ ॥ गजो गदानिपातेन स तेन परिमूर्छितः ॥ दंतैर्भित्त्वा धरां वेगात्पपाताचलसन्निभः ॥ ६५ ॥ पतिते च गजे तस्मिन्सिंहनादो महानभूत् ॥ सर्वतः सुरसैन्यानां गजबृंहितबृंहितः ॥ ६६ ॥ हेषारवेण चाश्वानां रणास्फोटैश्च धन्विनाम् ॥ गजं तं निहतं दृष्ट्वा निमिं चापि पराङ्मुखम् ॥ ६७ ॥ सुराणां सिंहनादं च सन्नादितदिगंतरम् ॥ जंभो जज्वाल कोपेन संदीप्त इव पावकः ॥ ॥ ६८ ॥ ततः स कोपरक्ताक्षो धनुष्यारोप्य सायकम् ॥ तिष्ठेति चाब्रवीत्तारं सारथिं चाप्यनंदयत् ॥ ६९ ॥ तमायांतमभिप्रेक्ष्य धनुष्याहितसायकम् ॥ शतक्रतुरदीनात्मा दृढमादत्त कार्मुकम् ॥ ७० ॥ बाणं च तैलधौताग्रमर्धचंद्रमजिह्मगम् ॥ ७१ ॥ तेनास्य सशरं चापं चिच्छेद बलवृत्रहा ॥ अपास्य तद्धनुश्छिन्नं जंभो दानवनंदनः ॥ ७२ ॥ अन्यत्कार्मुकमादाय वेगवद्भारसाधनम् ॥ शरांश्चाशीविषाकारांस्तैलधौतानजिह्मगान् ॥ ॥ ७३ ॥ शक्रं विव्याध दशभिर्जत्रुदेशे च पत्रिभिः ॥ हृदये च त्रिभिश्चैव द्वाभ्यां च स्कन्धयोर्द्वयोः ॥ ७४ ॥ शक्रोपि दानवेन्द्राय बाणजालमभीरयन् ॥ अप्राप्तान्दानवेन्द्रस्तु शरांश्छक्रभुजेरितान् ॥ ७५ ॥ चिच्छेद शतधाऽऽकाशे शरैरग्निशिखोपमैः ॥ ततश्च शरजालेन देवेन्द्रो दानवेश्वरम् ॥ ७६ ॥ आच्छादयत यत्नेन वर्षास्विव घनैर्नभः ॥ दैत्योऽपि बाणजालेन विव्याध सायकैः शितैः ॥ ७७ ॥ यथा वायुर्घनाटोपं यदवार्यं दिशां मुखे ॥ शक्रोऽथ क्रोधसंरंभान्न विशेषयते यदा ॥ ७८ ॥ दानवेन्द्रं तदा चक्रे गंधर्वास्त्रं महाद्भुतम् ॥ ततोऽस्य तेजसा व्याप्तमभूद्गगनगोचरम् ॥ ७९ ॥ गन्धर्वनगरैश्चापि नानाप्राकारतोरणैः ॥ मुंचद्भिरद्भुताकारैरस्त्रवृष्टिं समंततः ॥ ८० ॥ तयास्त्रवृष्ट्या दैत्यानां हन्यमाना महाचमूः ॥ जंभं शरणमागच्छत्त्राहित्राहीति भारत ॥ ८१ ॥ [1]ततो जंभो महावीर्यो विनद्य प्रहसन्मुहुः ॥ स्मरन्साधुसमाचारं दैत्यानामभयं ददौ ॥ ८२ ॥ ततोऽस्त्रं मौशलंनाम मुमोच सुमहाभयम् ॥ अथोग्रमुसलैः सर्वमभवत्पूरितं जगत् ॥ ८३ ॥ तैश्च भग्नानि सर्वाणि गंधर्वनगराणि च ॥ अथोग्रैकप्रहारेण रथमश्वं गजं सुरम् ॥८४॥ चूर्णयामास तत्क्षिप्रं शतशोऽथ सहस्रशः ॥ ततः सुराधिपः शक्रस्त्वाष्ट्रमस्त्रमुदैरयत् ॥ ८५ ॥ संध्यमाने ततश्चास्त्रे

१ घनधातुहृदो यथा—इ० पा० । २ शरीरे—इति शेषः ।

निश्चेरुः पावकार्चिषः ॥ ततो यंत्रमया विद्याः प्रादुरासन्सहस्रशः ॥८६॥ तैर्यंत्रैरभवद्युद्धमंतरिक्षं वितारकम् ॥ तैर्यंत्रैर्मौशलं भग्नं हन्यंते चासुरास्तदा ॥८७॥ शैलास्त्रं मुमुचे जंभो यंत्रसंघातचूर्णनम् ॥ व्यामप्रमाणैरुपलैस्ततो वर्षः प्रवर्तत ॥८८॥त्वाष्ट्रेण निर्मितान्याशु यानि यंत्राणि भारत ॥ तेनोपल निपातेन गतानि तिलशस्ततः॥८९॥ततः शिरस्सु देवानां शिलाः पेतुर्महाजवाः ॥ दारयंत्यश्च वसुधां चतुरंगबलं च तत् ॥ ९० ॥ ततो वज्रास्त्रमकरोत्स हस्राक्षः पुरंदरः॥ततः शिलामहावर्पं व्यशीर्यंत समंततः ॥९१॥ ततः प्रशांतैः शैलास्त्रैर्जंभो भूधरसन्निभः ॥ ऐषीकमस्त्रमकरोच्चूर्णितान्यपराक्रमः॥९२॥ ऐषीकेणागमन्नाशं वज्रास्त्रं गिरिदारणम् ॥ विजृंभत्यथ चैषीके परमास्त्रेऽतिदारुणे ॥ ९३ ॥ जज्वलुर्देवसैन्यानि सस्यंदनगजानि च ॥ दह्यमानेष्व नीकेषु तेजसास्त्रस्य सर्वतः ॥ ९४ ॥ आग्नेयमस्त्रमकरोद्बलहा पाकशासनः ॥ तेनास्त्रेण च तन्नाशमैषीकमगमत्तदा ॥ ९५ ॥ तस्मिन्प्रतिहते चास्त्रे पावकास्त्रं व्यजृंभत ॥ जज्वाल सेना जंभस्य रथः सारथिरेव च ॥ ९६ ॥ ततः प्रतिहतास्त्रोऽसौ दैत्येंद्रः प्रतिभानवान् ॥ वारुणास्त्रं मुमोचाथ शमनं पावकार्चिषाम् ॥ ९७ ॥ ततो जलधरैर्व्योम स्फुरद्विद्युल्लताकुलैः ॥ गंभीराक्षसमाधारैश्चाभ्यपूर्यत मेदिनी ॥ ९८ ॥ करींद्रकरतुल्याभिर्धा राभिः पूरितं जगत् ॥ शांतमाग्नेयमस्त्रं च विलोक्येंद्रश्चकार ह ॥ ९९ ॥ वायव्यमस्त्रमतुलं तेन मेघा ययुः क्षयम् ॥ वायव्यास्त्रबलेनाथ निर्धूते मेघमंडले ॥ १०० ॥ बभूवानाविलं व्योम नीलोत्पलदलप्रभम् ॥ वायुना चातिरूपेण कंपिताश्चैव दानवाः ॥१०१॥ न शेकुस्तत्र ते स्थातुं रणेऽपि बलिनोऽपि ये ॥ जंभस्ततोऽभवच्छैलो दशयोजनविस्तृतः ॥ १०२ ॥ मारुतप्रतिघातार्थं दानवानां बलाधिपः ॥ नानाश्चर्यसमायुक्तो नानाद्रुम लतावृतः ॥ १०३ ॥ ततः प्रशमिते वायौ दैत्येंद्रे पर्वताकृतौ ॥ महाशनिं वज्रमयीं मुमोचाशु शतक्रतुः ॥ १०४ ॥ तयाशन्या पतितया दैत्यस्याच लरूपिणः ॥ कंदराणि व्यशीर्यंत समंतान्निर्झराणि च ॥१०५॥ ततः सा दानवेंद्रस्य शैलमाया न्यवर्तत ॥ निवृत्तशैलमायोऽथ दानवेंद्रो मदोत्कटः ॥ १०६ ॥ बभूव कुंजरो भीमो महाशैलमयाकृतिः ॥ममर्द च सुरानीकं दंतैश्चाभ्यहनत्सुरान् ॥ १०७॥ बभंज पृष्ठतः कांश्चित्करेणाकृष्य दानवः ॥ ततः क्षपयतस्तस्य सुरसैन्यानि वृत्रहा ॥ १०८ ॥ अस्त्रं त्रैलोक्यदुर्धर्षं नारसिंहं मुमोच ह ॥ ततः सिंहसहस्राणि निश्चेरुर्मंत्रतेजसा ॥ १०९ ॥ हृष्टदंष्ट्राट्टहासानि क्रकचाभनखानि च ॥ तैर्विपाटितगात्रोऽसौ गजमायां व्यपोहयत् ॥ ११० ॥ ततश्चाशीविषो घोरोऽभवत्फणसमाकुलः ॥ विष निःश्वासनिर्दग्धसुरसैन्यमहारथः ॥ १११ ॥ ॥ ततोऽस्त्रं गारुडं चक्रे शक्रः संप्रहरन्रणे ॥ ततस्तस्माद्गरुत्मंतः सहस्राणि विनिर्ययुः ॥ ११२ ॥

१ तथा--इ०पा० । २ अत्राऽभाव आर्षः--प्रावर्तत । ३ गंभीराक्षाः गजाः तत्समाः आधाराः धारवर्षणाः येषां तैः । अयमेवार्थो युक्तः प्रतिभाति ।

तैर्गरुत्मद्भिरासाद्य जंभं भुजगरूपिणम् ॥ कृतस्तु खंडशो दैत्यः सास्य माया व्यनश्यत ॥ ११३ ॥ मायायां च प्रनष्टायां ततो जंभो महासुरः ॥
चकार रूपमतुलं चंद्रादित्यपदानुगम् ॥ ११४ ॥ विवृत्तनयनो ग्रस्तुमियेष सुरपुंगवान् ॥ ततोऽस्य प्राविशद्वक्त्रं समहारथकुंजरा ॥ ११५ ॥
सुरसेनाऽभवद्भीमं पातालोत्तालतालुकम् ॥ सैन्येषु ग्रस्यमानेषु दानवेन बलीयसा ॥ ११६ ॥ शक्रो दीनत्वमापन्नः श्रांतवाहनवाहनः ॥ कर्तव्यतां
नाध्यगच्छत्प्रोवाचेदं जनार्दनम् ॥ ११७ ॥ किमनंतरमेवास्ति कर्तव्यं नो विशेषतः ॥ तदादिश घटामोऽस्य दानवस्य युयुत्सतः ॥ ११८ ॥ ततो
हरिरुवाचेदं वज्रायुधमुदारधीः ॥ न सांप्रतं रणं त्याज्यं शत्रुकातरभैरवम् ॥ ११९ ॥ मा गच्छ मोहं मा गच्छ क्षिप्रमस्त्रं स्मर प्रभो ॥ नारायणास्त्रं
प्रयतः श्रुत्वेति मुमुचे स च ॥ १२० ॥ एतस्मिन्नंतरे दैत्यो विवृतास्योऽग्रसत्क्षणात् ॥ त्रीणित्रीणि च लक्षाणि किंनरोरगरक्षसाम् ॥ १२१ ॥ ततो
नारायणास्त्रं च निपपातास्य वक्षसि ॥ महास्त्रभिन्नहृदयः सुस्राव रुधिरं च सः ॥१२२॥ ततः स्वतेजसा रूपं तस्य दैत्यस्य नाशितम् ॥ ततश्चां
तर्दधे दैत्यः कृत्वा हासं महोत्कटम् ॥ १२३ ॥ गगनस्थः स दैत्येंद्रः शस्त्राशनिमतींद्रियः[1] ॥ मुमोच सुरसैन्यानां संहारकरणीं पराम् ॥ १२४ ॥
तथा परश्वधांश्चक्रवज्रबाणान्समुद्गरान् ॥ कुंतान्खड्गान्भिंडिपालानयोमुखभुशुंडांस्तथा ॥ १२५ ॥ ववर्ष दानवो रोषादवध्यानक्षयानपि ॥ तैरस्त्रै
र्दानवोन्मुक्तैर्देवानीकेषु भीषणैः ॥१२६॥ बाहुभिर्धरणी पूर्णा शिरोभिश्च सकुंडलैः ॥ ऊरुभिर्गजहस्ताभैः करींद्रैश्चाचलोपमैः ॥ १२७ ॥ भग्नेषा
दंडचक्राक्षै रथैश्च रथिभिः सह ॥ दुःसंचाराभवत्पृथ्वी मांसशोणितकर्दमा ॥ १२८ ॥ रुधिरौघह्रदावर्ता गजदेहशिलोच्चया ॥ कबंधनृत्यबहुला महा
सुरप्रवाहिनी ॥ १२९ ॥ शृगालगृध्रध्वांक्षाणां[2] परमानंदकारिणी ॥ पिशाचजातिभिः कीर्णं पीत्वाऽऽमिषं सशोणितम् ॥ १३० ॥ असंभ्रमाभि
र्भार्याभिः सह नृत्यद्भिरुद्धता ॥ काचित्पत्नी प्रकुपिता गजकुंभांतमौक्तिकैः[3] ॥ १३१ ॥ पिशाचो यत्र चाश्वानां खुरानेकत्र चाकरोत् ॥ कर्ण
पूरेषु मोदंते पश्यंत्यन्याः सरोषतः ॥ १३२ ॥ प्रसादयंति बहुधा महाकर्णार्थकोविदाः ॥ केचिद्वदन्ति भो देवा भो दैत्याः प्रार्थयामहे[4] ॥ १३३ ॥
आकल्पमेवं योद्धव्यमस्माकं तृप्तिहेतवे ॥ केचिदूचुरयं दैत्यो देवोयमतिमांसलः ॥ १३४ ॥ म्रियते यदि संग्रामे धातुर्दद्मोऽपर्याचितम् ॥ केचि
द्युध्यत्सु वीरेषु सृक्किणी संलिहंति च ॥ १३५ ॥ एतेन पयसा[5] विद्मो दुर्जनः सुजनो यथा ॥ केचिद्रक्तनदीनां च तीरेष्वास्तिक्यबुद्धयः ॥ १३६ ॥

१ अतींद्रियः--गुप्तरूपः--इत्यर्थोऽत्र बोध्यः । २ ध्वांक्षाः--काकाः--इत्यर्थः । ३ अलंकारार्थमिति शेषः । ४ नमस्यितं पूजादि इत्यर्थः । ५ केचित्पिशाचा वीरेषु युध्यत्सु सत्सु तद्रक्तरसास्वादसमुत्सुकतया मुखे पानीयम् ( अम्लवद्वस्तु दृष्ट्वा यथा निःसृतं भवति तथा ) यन्निरसरत्--एतेन पयसा मुखनिष्यन्दिना अयं योधः सुरसदेहो वा विदुष्टरसदेहो वा इति विद्मः ज्ञास्यामः इति मनसि निधाय ओष्ठप्रान्तभागौ संलिहन्ति । तन्निः सरज्जलं प्राशितुं सृक्किणी संलिहन्तीत्यर्थः ।

पितॄन्देवांस्तर्पयंति शोणितैश्चामिषैः शुभैः ॥ केचिदामिषराशिस्था दृष्ट्वान्यस्य करामिषम् ॥ १३७ ॥ देहिदेहीति वाशंतो धनिनः कृपणा यथा ॥ केचित्स्वयं अतृप्ताश्च दृष्ट्वा वै खादतः परान् ॥ १३८ ॥ सरोषमोष्ठौ निर्भुज्य पश्यंत्येवात्यसूयया ॥ केचित्स्वक्षुदरं क्रुद्धा निंदंति ताडयंति च ॥ १३९ ॥ सर्वभक्षमभीप्संतस्तृप्ताः परधनं यथा ॥ केचिदाहुरद्य एव श्लाघ्या सृष्टिस्तु वेधसः ॥ १४० ॥ सुप्रभातं सुनक्षत्रं पूर्वमासीद्वृथैव तत् ॥ एवं बहुविधालापे पलादानां ततस्ततः ॥ १४१ ॥ अदृश्यः समरे जंभो देवाञ्छस्त्रैरचूर्णयत् ॥ ततः शक्रो धनेशश्च वरुणः पवनोऽनलः ॥ १४२ ॥ यमोऽथ निर्ऋतिश्चापि दिव्यास्त्राणि महाबलाः ॥ आकाशे मुमुचुः सर्वे दानवायाभिसंध्य तु ॥ ॥ १४३ ॥ व्यर्थतां जग्मुरस्त्राणि देवानां दानवं प्रति ॥ यथातिक्रूरचित्तानामार्ये कृत्यशतान्यपि ॥ १४४ ॥ गतिं न विविदुश्चापि श्रांता दैत्याश्च देवताः ॥ दैत्यास्त्रभिन्नसर्वांगा गावः शीतार्दिता इव ॥ १४५ ॥ परस्परं व्यलीयंत हाहाकिंभाविवादिनः ॥ तामवस्थां हरिर्दृष्ट्वा देवाञ्छक्रमुवाच ह ॥ १४६ ॥ अघोरमंत्रं स्मर देवराज अस्त्रं हि यत्पाशुपतप्रभावम् ॥ रुद्रेण तुष्टेन तव प्रदत्तमव्याहतं वीरवराभिघाति ॥ १४७ ॥ एवं स शक्रो हरिबोधितस्तदा प्रणम्य देवं वृषकेतुमीश्वरम् ॥ समाददे बाणममित्रघातनं संपूजितं देवरणेऽर्द्धचंद्रम् ॥ १४८ ॥ धनुष्यजय्ये विनियोज्य बुद्धिमान्यं योजयत्तत्र अघोरमंत्रम् ॥ १४९ ॥ ततो वधायाशु मुमोच तस्य वा आकृष्य कर्णांतमकुंठदीधितिम् ॥ अथासुरः प्रेक्ष्य महास्त्रमापतद्विसृज्य मायां सहसा व्यवस्थितः ॥१५०॥ प्रवेपमानेन मुखेन युज्यताचलेन गात्रेण च संभ्रमाकुलः ॥ ततस्तु तस्यास्त्रवराभिमंत्रितः शरोऽर्धचंद्रः प्रसभं महारणे ॥ १५१ ॥ पुरंदरस्येष्वसनप्रमुक्तो मध्यार्कबिंबं वपुषा विडंबयन् ॥ १५२ ॥ किरीटकूटस्फुरकांतिसंकुलं सुगंधिनानाकुसुमाधिवासितम् ॥ प्रकीर्णधूमज्वलनाभमूर्धजं न्यपातयज्जंभशिरः सकुंडलम् ॥ १५३ ॥ तस्मिन्निंद्रहते जंभे प्रशशंसुः सुरा बहु ॥ वासुदेवोऽपि भगवान्साधु साध्विति चाब्रवीत् ॥ १५४ ॥ ततो जंभं हतं दृष्ट्वा दानवेन्द्राः पराङ्मुखाः ॥ सर्वे ते भग्नसंकल्पा दुद्रुवुस्तारकं प्रति ॥ १५५ ॥ तांश्च त्रस्तान्समालोक्य श्रुत्वा स चतुरो हतान् ॥ सारथिं प्रेरयामास याहींद्रं लघु संगरे ॥ १५६ ॥ तथेत्युक्त्वा स च प्रायात्तारके रथमास्थिते ॥ सावलेपं च सक्रोधं सगर्वं सपराक्रमम् ॥ १५७ ॥ साविष्कारं सधिक्कारं प्रयातो दानवेश्वरः ॥ स युक्तं रथमास्थाय सहस्रेण गरुत्मताम् ॥ १५८ ॥ सर्वायुधपरिष्कारं सर्वास्त्रपरिरक्षितम् ॥ त्रैलोक्यऋद्धिसंपन्नं कल्पांतांतकनादितम् ॥ १५९ ॥ सैन्येन महता युक्तो नादयन्विदिशो दिशः ॥

१ वाशन्तः शब्दायमानाः । वाशृ शब्दे धातुः । २ ह्यतृप्ता निधनं यथा—इ० पा० । ३ लघु--क्षिप्रमित्यर्थः ।

सहस्राक्षश्च तं दृष्ट्वा त्यक्त्वा वाहनदंतिनम् ॥ १६० ॥ रथं मातलिना युक्तं तप्तहेमपरिष्कृतम् ॥ चतुर्योजनविस्तीर्णं सिद्धसंघपरिष्कृतम् ॥१६१॥
गंधर्वकिंनरोद्गीतमप्सरोनृत्यसंकुलम् ॥ १६२ ॥ सर्वायुधमहाबाधं महारत्नसमाचितम् ॥ अध्यतिष्ठत्तं रथं च परिवार्य समंततः ॥ १६३ ॥ दंशिता[1]
लोकपालाश्च तस्थुः सगरुडध्वजाः ॥ ततश्चचाल वसुधा ववौ रूक्षो मरुद्गणैः[2] ॥ १६४ ॥ चेलुश्च सागराः सप्त तथाऽनश्यद्रवेः प्रभा ॥ ततो जज्वलुर
स्त्राणि ततोऽकंपंत वाहनाः ॥ १६५ ॥ ततः समस्तमुद्वृत्तं ततोऽदृश्यत तारकः ॥ एकतस्तारको दैत्यः सुरसंघास्तथैकतः ॥ १६६ ॥ लोकावसाद
मेकत्र लोकोद्धरणमेकतः ॥ चराचराणि भूतानि भयविस्मयवंति च ॥ १६७ ॥ प्रशशंसुः सुराः पार्थ तदा तस्मिन्समागमे ॥ १६८ ॥ अस्त्राणि
तेजांसि धनानि योधा यशो बलं वीरपराक्रमाश्च ॥ सत्त्वौजसान्यंग बभूवुरेषां देवासुराणां तपसः परं तु नः ॥ १६९ ॥ अथाभिमुखमायांतं
देवा विनतपर्वभिः ॥ बाणैरनलकल्पाग्रैर्विव्यधुस्तारकं प्रति ॥ १७० ॥ स तानचिंत्य दैत्येंद्रो देवबाणक्षतान्हृदि ॥ बाणैर्व्योम दिशः पृथ्वीं पूरया
मास दानवः ॥ १७१ ॥ नारायणं च सप्तत्या नवत्या च हुताशनम् ॥ दशभिर्मारुतं मूर्ध्नि यमं दशभिरेव च ॥ १७२ ॥ धनदं चैव सप्तत्या वरुणं
च तथाष्टभिः ॥ विंशत्या निर्ऋतिं दैत्यः पुनश्चाष्टभिरेव च ॥ १७३ ॥ विव्याध पुनरेकैकं दशभिर्मर्मभेदिभिः ॥ तथा च मातलिं दैत्यो विव्याध
त्रिभिराशुगैः ॥ १७४ ॥ गरुडं दशभिश्चैव महिषं नवभिस्तथा ॥ पुनर्दैत्योऽथ देवानां तिलशो नतपर्वभिः ॥ १७५ ॥ चकार वर्मजालानि
चिच्छेद च धनूंषि च ॥ ततो विकवचा देवा विधनुष्काः प्रपीडिताः ॥ १७६ ॥ चापान्यन्यानि संगृह्य यावन्मुंचंति सायकान् ॥ तावद्बाणं समा
धाय कालानलसमप्रभम् ॥ १७७ ॥ ताडयामास शक्रं स हृदि सोपि मुमोच ह ॥ ततोऽतरिक्षमालोक्य दृष्ट्वा सूर्यशताकृती ॥ १७८ ॥ तार्क्ष्य
विष्णू समाजघ्ने शराभ्यां तावमुह्यताम् ॥ प्रेतनाथस्य वह्नेश्च वरुणस्य शितैः शरैः ॥ १७९ ॥ निर्ऋतेश्चाकरोत्कायं भीतभीतं विमोहयन् ॥ निरु
च्छ्वासं समाहृत्य चक्रे बाणैः समीरणम् ॥ १८० ॥ ततः प्राप्य हरिः संज्ञां प्रोत्साह्य च दिशां पतीन् ॥ बाणेन सारथेः कायाच्छिरोऽहार्षीत्सकुण्ड
लम् ॥ १८१ ॥ धूमकेतोर्ज्वलत्क्रुद्धस्तस्य च्छित्त्वा न्यपातयत् ॥ दैत्यराजकिरीटं च चिच्छेद वासवस्ततः ॥ १८२ ॥ धनेशश्च धनुः क्रुद्धो बिभेद
बहुधा शरैः ॥ वायुश्चक्रे च तिलशो रथं वा क्षोणिकूबरम् ॥ १८३ ॥ निर्ऋतिस्तिलशो वर्म चक्रे बाणैस्ततो रणे ॥ कृत्वैतदतुलं कर्म
तिष्ठतिष्ठेति चाब्रुवन् ॥ १८४ ॥ लिहंतः सृक्किणीं देवा वासुदेवादयस्तदा ॥ दृष्ट्वा तत्कर्म देवानां तारकोऽतुलविक्रमः ॥ १८५ ॥

१ दंशिताः—शस्त्राद्यैः संनद्धाः—इत्यर्थः । २ मरुत्—वायुः—गणैः—सहेति शेषः ।

मुमोच मुद्गरं भीमं सहस्राक्षाय संगरे ॥ दृष्ट्वा मुद्गरमायांतमनिवार्यं रणाजिरे ॥ १८६ ॥ रथादाप्लुत्य धरणीमगमत्पाकशासनः ॥
मुद्गरोऽपि रथोपस्थे पपात परुषस्वनः ॥ १८७ ॥ स रथं चूर्णयामास न ममार च मातलिः ॥ गृहीत्वा पट्टिशं दैत्यो जघानोरसि केश
वम् ॥ १८८ ॥ स्कन्धे गरुत्मतः सोऽपि निषसाद विचेतनः ॥ खड्गेन राक्षसेन्द्रं च भित्त्वा भूमावपातयत् ॥ १८९ ॥ यमं च पातयामास भूमौ
दैत्यो मुखे हतम् ॥ वह्निं च भिंडिपालेन चक्रे हत्वा विचेतनम् ॥ १९० ॥ वायुं पदा तदाक्षिप्य पातयामास भूतले ॥ धनेशं तद्धनुष्कोट्या कुट्ट
यामास कोपनः ॥ १९१ ॥ ततो देवनिकायानामेकैकं क्षणमात्रतः ॥ तेषामेव जघानासौ शस्त्रैर्बालान्यथा गुरुः ॥ १९२ ॥ लब्धसंज्ञस्ततो
विष्णुश्चक्रं जग्राह दुर्धरम् ॥ दानवेंद्रवसामेदोरुधिरेणाभिरंजितम् ॥ १९३ ॥ मुमोच दानवेंद्रस्य दृढं वक्षसि केशवः ॥ पपात चक्रं दैत्यस्य पतितं
भास्करद्युति ॥ १९४ ॥ व्यशीर्यताथ कायेऽस्य नीलोत्पलमिवाश्मनि ॥ ततो वज्रं महेन्द्रोऽपि प्रमुमोचार्चितं चिरम् ॥ १९५ ॥ तस्मिञ्जयाशा
शक्रस्य दानवेन्द्राय संयुगे ॥ तारकस्य च संप्राप्य शरीरं शौर्यशालिनः ॥ १९६ ॥ विशीर्यत विकीर्णार्चिः शतधा खण्डशो गतम् ॥ ततो वायु
रदीनात्मा वेगेन महता नदन् ॥ १९७ ॥ ज्वलितज्वलनाभासमंकुशं प्रमुमोच ह ॥ विशीर्णं तस्य तच्चांगे दृष्ट्वा वायुर्महारुषा ॥ १९८ ॥ ततः शैले
न्द्रमुत्पाट्य पुष्पितद्रुमकंदरम् ॥ चिक्षेप दानवेन्द्राय दशयोजनविस्तृतम् ॥ १९९ ॥ महीधरं तमायांतं सस्मितं दैत्यपुंगवः ॥ जग्राह वामहस्तेन
बालः कन्दुकलीलया ॥ २०० ॥ ततस्तेनैव चाहत्य पातयामास चांतकम् ॥ दण्डं ततः समुद्यम्य कृतांतः क्रोधमूर्छितः ॥ २०१ ॥ दैत्येन्द्रमूर्ध्नि
चिक्षेप भ्राम्य वेगेन दुर्जयम् ॥ सोऽसुरस्यापतन्मूर्ध्नि दैत्यस्तं जगृहे स्मयन् ॥ २०२ ॥ कल्पांतलोकदहनो ज्वलनो रोषसंज्वलन् ॥ शक्तिं चिक्षेप
दुर्धर्षां दानवेन्द्राय संयुगे ॥ २०३ ॥ ततः शिरीषमालेव सास्य वक्षस्यराजत ॥ ततः खड्गं समाकृष्य कोशादाकाशनिर्मलम् ॥ २०४ ॥ द्युति
भासितत्रैलोक्यं लोकपालोऽपि निर्ऋतिः ॥ चिक्षेप दानवेन्द्राय तस्य मूर्ध्नि पपात ह ॥ २०५ ॥ पतितश्चागमत्खड्गः स शीघ्रं शतखण्डताम् ॥
जलेशश्च ततः क्रुद्धो महाभैरवरूपिणम् ॥ २०६ ॥ मुमोच पाशं दैत्येन्द्रभुजबन्धाभिलाषुकः ॥ स दैत्यभुजमासाद्य पाशः सद्यो व्यपद्यत ॥२०७॥
स्फुटितः क्रकचक्रूरदशनालिरहीश्वरः ॥ ततोऽश्विनौ सचंद्रार्कौ साध्याश्च वसवश्च ये ॥ २०८ ॥ यक्षराक्षसगन्धर्वाः सर्पाश्चास्त्रैः पृथग्विधैः ॥
जघ्नुर्दैत्येश्वरं सर्वे भूयशस्ते महाबलाः ॥२०९॥ न चास्त्राण्यस्यासज्जन्त गात्रे वज्राचलोपमे ॥ ततो देवानवप्लुत्य तारको दानवाधिपः ॥ २१० ॥

जघान कोटिशः क्रुद्धो मुष्टिपार्ष्णिभिरेव च ॥ तथाविधं तस्य वीर्यमालोक्य भगवान्हरिः ॥ २११ ॥ पलायध्वमहो देवा वदन्नन्तर्हितोऽभवत् ॥ शक्रादयस्ततो देवाः पलायनकृतादराः ॥ २१२ ॥ कालनेमिमुखैर्दैत्यैरुपरुद्धा मदोत्कटैः ॥ मुष्टिभिः पादघातैश्च केशेष्वाकृष्य तैर्मुदा ॥ २१३ ॥ तारिताः शुष्कसरितं देवमार्गाश्च दंशिताः ॥ बहुधा चाप्यकृष्यंत लोकपाला महासुरैः ॥ २१४ ॥ ततो निनादः संजज्ञे दैत्यानां बलशालिनाम् ॥ कम्पयन्पृथिवीं द्यां च पातालानि च भारत ॥ २१५॥ जयेति मुदिता दैत्यास्तुष्टुवुस्तारकं तदा॥शंखांश्च पूरयामासुः कुन्देन्दुसदृशप्रभान् ॥२१६॥ धनुर्बाणरवांश्चोग्रान्कराघातांश्च चक्रिरे ॥ भृशं हर्षान्विता दैत्या नेदुश्च ननृतुर्मुहुः ॥ २१७ ॥ ततो देवान्पुरस्कृत्य पशुपालः पशूनिव ॥ दैत्येन्द्रो रथमास्थाय जगाम सहितोऽसुरैः ॥ २१८ ॥ महीसागरकूलस्थं तारकः स पुरं बली ॥ योजनद्वादशायामं ताम्रप्राकारशोभितम् ॥२१९॥ प्रासादैर्बहुभिः कीर्णं दिव्याश्चर्योपशोभितम् ॥ यत्र शब्दास्त्रयो नैव जीर्यंते चानिशं पुरे ॥२२०॥ गीतघोषश्च व्याघोषो भुज्यंतां विषयास्त्विति ॥ तत्प्रविश्य पुरं राजा जगाम स्वकमालयम् ॥२२१॥ महोत्सवेन महता पुत्रस्त्रीप्रतिनंदितः ॥ तत्र दिव्यां सभां राजा प्राप्य सिंहासनस्थितः ॥२२२॥ स्तूयमानो दितिसुतैरप्सरोभिर्विनोदितः ॥ दिव्यासनस्थैर्दैत्येंद्रैर्वृतः सिंहैरिव प्रभुः ॥२२३॥ एतस्मिन्नंतरे काचिद्दिव्यस्त्री तत्पुरेऽभवत् ॥ विस्मितस्तैर्वृतो दैत्यैः प्रोवाचेदं स्मयन्निव ॥२२४॥ रूपेणानुपमा पार्थ नानाभरणभूषिता ॥ तां दृष्ट्वा तारको राजा भृशं वै विस्मितोऽभवत्॥२२५॥कासि देवि मम ब्रूहि किं मया रूपसुंदरि ॥ त्वत्समां योषितं नैव दृष्टवंतः पुरा वयम् ॥२२६॥ ॥ स्त्र्युवाच ॥ ॥ अहं त्रैलोक्यलक्ष्मीति विद्धि मां दैत्यसत्तम ॥ अर्जिता तपसा चास्मि त्वया वीर्येण वा विभो ॥ २२७ ॥ वीर्यवंतं त्वनलसं तपस्विनमकातरम् ॥ दातारं चापि भोक्तारं युक्त्या सेवामि तं नरम् ॥ २२८ ॥ भीरुं निर्विण्णमत्यर्थं साध्वीपीडाकरं नरम् ॥ सर्वातिशंकिनं सद्यस्त्यजामि दितिनंदन ॥ २२९ ॥ महेंद्रेण च माता ते यदा सा व्यपमानिता ॥ तदैव त्यक्तप्रायोऽसाविदानीं तव संवशे ॥ २३० ॥ तारकश्च ततः प्राह परमं चेति तां तदा ॥ सा चाविवेश तं देवी त्रिजगत्पूजिता रमा ॥ २३१ ॥ ततो दैत्याधिपं नार्यो दानवानां विभूषिताः ॥ वीरकांस्यमुपादाय वर्धयांचक्रिरे मुदा ॥ २३२ ॥ देवाश्च द्वारि तिष्ठंति बद्धा दैत्यैर्भृशातुराः ॥ उपहस्यमाना नारीभिर्दैत्यैरन्यैश्च नागरैः ॥२३३॥ एतस्मिन्नंतरे विष्णुर्दैत्यरूपं समास्थितः ॥ उपहासकमध्यस्थो गाथे द्वे प्राह बुद्धिमान् ॥२३४॥

१ शिशुपालः–इ० पा० । २ इदानीं "खंवायतं" इति नाम्ना गुर्जरदेशे प्रसिद्धं नगरमिदम् । ३ पुरस्त्रीप्रतिनंदितः–इ० पा० । ४ परस्मैपदमार्षम् । ५ परमं–बाढं तिष्ठत्यर्थः । ६ वीराणां युद्धाद्विजयमादाय गृहमागतानां नीराजनार्थं यत्कांस्यपात्रं तद्वीरकांस्यपात्रमित्युच्यते ।

इदमल्पतरंनाम यदमीषां च दृश्यते ॥ मातृक्रोधं स्मरन्राजा किंकिं यन्न करिष्यति ॥ २३५ ॥ बलीयांसं समासाद्य न नमेद्यो न चास्ति सः ॥ मर्कवच्चैतवाक्यैरुपायैः स्थीयतां सुराः ॥ २३६ ॥ उपहासमुखेनामी उपदेशं हरेर्मुखात् ॥ समाकर्ण्य ततो देवा मर्करूपेण संस्थिताः ॥ २३७ ॥ नृत्यंतस्ते च बहुधा दैत्याश्चासुरयोषितः ॥ भृशं च नोदयामासुर्मुदा भोज्यानि ते ददुः ॥ २३८ ॥ विष्णुर्दैत्यप्रतीहारं ततः प्रोवाच बुद्धिमान् ॥ विनोदाय महाराज्ञो मर्कानेतान्प्रकीर्तय ॥ २३९ ॥ प्रतीहारस्ततो हृष्टः सभामध्ये विवेश सः ॥ जानुभ्यां धरणीं गत्वा बद्ध्वा च करसंपुटम् ॥ ॥ २४० ॥ उवाचानाविलं वाक्यमल्पाक्षरपरिस्फुटम् ॥ दैत्येंद्र मर्कवृंदानि द्वारि तिष्ठंति ते प्रभो ॥ २४१ ॥ भृशं विनोदकारीणि स्पृहा चेद्द्रष्टुमर्हसि ॥ तन्निशम्याब्रवीद्राजा किं चिरं क्रियते त्वया ॥ २४२ ॥ क्षत्ता[1] चेति वचः श्रुत्वा कालनेमिं तदाब्रवीत् ॥ मर्कानेतान्महाराजो द्रष्टुमिच्छति शीघ्रतः ॥ २४३ ॥ रक्षपाल सहैभिस्त्वं राजानमनुकूलय ॥ कालनेमिरुपादाय मर्कान्यातो नृपं ततः ॥ २४४ ॥ मर्कमध्ये विष्णुमर्को यातस्त्यक्त्वा च दैत्यताम् ॥ ततस्तारकदैत्यस्य पुरतो ननृतुर्भृशम् ॥२४५॥ मर्का दैत्यकरोत्तालैर्हर्षनादविनोदितैः ॥ ततोऽतिमुदितो राजा तेषां नृत्येन सोऽब्रवीत् ॥ २४६ ॥ अभयं वो मर्कदेवास्तुष्टो यच्छाम्यहं त्विदम् ॥ मद्गृहे स्थीयतामेव न च कार्यं भयं हृदि ॥२४७॥ इति श्रुत्वा विष्णुमर्कः प्रनृत्यन्निदमब्रवीत् ॥ राजन्विज्ञातुमिच्छामस्तव गेहावधिं वयम्॥२४८॥एवमुक्ते प्रहस्याह तारको दैत्यसत्तमः॥त्रिभूमिकं हि मे गेहमिदं यद्भुवनत्रयम् ॥२४९॥ हरिमर्कस्ततः प्राह यद्येवं स्वं वचः स्मर ॥ त्रैलोक्ये विचरंत्वेते मर्का राजन्सुनिर्भयाः ॥ २५० ॥ अश्वमेधशतस्यापि सत्यं राजन्विशिष्यते ॥ धर्ममेनं स्मरन्सत्यं वचनं कुरु दैत्यप ॥ २५१ ॥ ततः सुविस्मितो दैत्यः प्राहेदं वचनं तदा ॥ मर्कटाहो प्रबुद्धोऽसि सत्यं ब्रूहि च को भवान् ॥ ॥ २५२ ॥ ॥ श्रीभगवानुवाच ॥ ॥ अहं नारायणोनाम यदि श्रोत्रमुपागतः ॥ देवानां रक्षणार्थाय मर्करूपमुपाश्रितः ॥ २५३ ॥ तच्चेन्मान्यतमो धर्मस्तव तद्वचनं स्वकम् ॥ परिपालय ते गेहं विचरंतु सुरास्त्वमी ॥ २५४ ॥ अवलेपश्च राजेंद्र न कर्तव्यस्त्वया हृदि ॥ वीरोऽहमिति संचिन्त्य पश्यता कालजं बलम् ॥ २५५ ॥ पर्यायैर्हन्यमानानामभिहंता न विद्यते ॥ मौढ्यमेतत्तु यद्दृष्टा कर्ताहमिति मन्यते ॥ १५६ ॥ ऋषींश्च देवांश्च महासुरांश्च त्रैविद्यवृद्धांश्च वने मुनींश्च ॥ कं वापदो[2] नोपनमंति काले कालस्य वीर्यं न तु कर्तुरेतत् ॥ २५७ ॥ न मंत्रबलवीर्येण प्रज्ञया पौरुषेण वा ॥ अलभ्यं लभ्यते काले काले सुतोपि विंदति ॥२५८॥ न मातृपितृशुश्रूषा न च दैवतपूजनम् ॥ नान्यो गुणसमाचारः पुरुषस्य सुखा

१ क्षत्ता—द्वारपालः—सूत्रधरः । २ कं वा पुरुषम् आपदः विपदः न उपनमन्ति अपि तु सर्वानेव ।

वहः ॥ २५९ ॥ न विद्या न तपो दानं न मित्राणि न बांधवाः ॥ शक्नुवंति परित्रातुं नरं कालेन पीडितम् ॥ २६० ॥ नागामिगमनार्थं हि प्रतिघातशतैरपि ॥ शक्नुवंति प्रतिव्योढुमृते कालबलं नराः ॥ २६१ ॥ देहवत्पुण्यकर्माणि जीववत्काल उच्यते ॥ द्वयोः समागमे दैत्य कार्याणां सिद्धिरिष्यते ॥ २६२ ॥ अहो दैत्य त्वद्विशिष्टा दैत्यानां कोटयः पुरा॥शाल्मलेस्तूलवत्क्षिप्ताः कालवातेन दुर्दशाः ॥ २६३ ॥ इदं तु लब्ध्वा त्वं स्थानमात्मानं बहु मन्यसे ॥ सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ २६४ ॥ न चेदमचलं स्थानमनंतं चापि कस्यचित् ॥ त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ २६५ ॥ अविश्वास्ये विश्वसिषि मन्यसे चाऽध्रुवं ध्रुवम् ॥ ममेदमिति मोहात्त्वं त्रिलोकीश्रियमीप्ससि ॥ २६६ ॥ नेयं तव न चास्माकं न चान्येषां स्थिरा मता ॥ अतिक्रम्य बहूनन्यांस्त्वयि तावदियं स्थिता ॥ २६७ ॥ कंचित्कालमियं स्थित्वा त्वयि तारक चंचला ॥ पुंश्चलीवातिचपला पुनरन्यं गमिष्यति ॥ २६८ ॥ सरत्नौषधिसंपन्नं ससरित्पर्वताकरम् ॥ तानिदानीं न पश्यामि यैर्भुक्तं भुवनत्रयम् ॥ २६९ ॥ हिरण्यकशिपुर्वीरो हिरण्याक्षश्च दुर्जयः ॥ प्रह्लादो नमुचिर्वीरो विप्रचित्तिर्विरोचनः ॥ २७० ॥ कीर्तिः शूरश्च वीरश्च वातापिरिल्वलस्तथा ॥ अश्वग्रीवः शंबरश्च पुलोमा मधुकैटभौ ॥ २७१ ॥ विश्वजित्प्रमुखाश्चान्ये दानवेंद्रा महाबलाः ॥ कालेन निहताः सर्वे कालो हि बलवत्तरः ॥ २७२ ॥ सर्वैर्वर्षायुतं तप्तं न त्वमेको महातपाः ॥ सर्वे सत्यव्रतपराः सर्वे चासन्बहुश्रुताः ॥ २७३ ॥ सर्वे यथार्हदातारः सर्वे दाक्षायणीसुताः ॥ ज्वलंतः प्रजयंतश्च कालेन प्रतिसंहताः ॥ २७४ ॥ मुंचेच्छां कामभोगेषु मुंचेमं श्रीभवं मदम् ॥ एतदैश्वर्यनाशे त्वां शोकः संपीडयिष्यति ॥२७५॥ शोककाले शुचो मा त्वं हर्षकाले च मा हर्षः ॥ अतीतानागते हि त्वा प्रत्युत्पन्नेन वर्तय ॥२७६॥ इंद्रं चेदागतः कालः सदा युक्तमतंद्रितम्॥ क्षमस्व न चिराद्दैत्य त्वामप्युपगमिष्यति॥२७७॥को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे॥ कालस्तु बलवान्प्राप्तस्तेन तिष्ठामि तारक॥ ॥२७८॥त्वमेव वेत्सि मां दैत्य योहं यादृक्पराक्रमः ॥ कल्पेकल्पे महादैत्याः कोटिशोऽर्बुदशो हताः ॥ २७९ ॥ येषां त्वं कोटिभागेऽपि परिपूर्णो न तारक॥ कल्पेकल्पे सृजामीदं ब्रह्मादि सकलं जगत् ॥ २८० ॥ इच्छन्संजीवयाम्येतदनिच्छन्नाशये क्षणात् ॥ न हि त्वां नोत्सहे हंतुं सर्वदैत्यसमायुतम् ॥ २८१ ॥ अंगुल्यग्रेण दैत्येंद्र पुनर्धर्मं न लोपये ॥ यद्यहं प्रवरो भूत्वा धर्मं ब्रह्मवरात्मकम् ॥ २८२ ॥ लोपयामि ततः कं च धर्मोऽयं शरणं व्रजेत् ॥ अहं कर्तेति मा मंस्थाः कर्ता यस्तु सदा प्रभुः ॥ २८३ ॥ सोऽयं कालः पचेद्विश्वं वृक्षे फलमिवागतम् ॥ यैरेव कर्मभिः सौख्यं दुःखं तैरेव

१ प्रतिव्यूढम्–इ० पा० । २ शाल्मलिवृक्षकार्पासवत्–इत्यर्थः । ३ सुरश्च–इ० पा० । ४ माहृषः–हर्षं न मन्यथाः–इत्यर्थः । ५ प्रत्युत्पन्नेन वर्तमानेन कालेन–इत्यर्थः ।

कर्मसि: ॥ २८४ ॥ प्राप्नोति पुरुषो दैत्य पश्य कालस्य चित्रताम् ॥ सर्वं कालवशादेव बोद्धव्यं धीयुतैर्नरैः ॥ २८५ ॥ स्वकर्मपरिपाकस्य फलं वै विदुर्बुधाः ॥ तस्मात्कर्म शुभं कार्यं पुण्यात्पुण्यात्मकं च यत् ॥ २८६ ॥ पुण्येन तत्र सौख्यं स्याद्दुःखं पापेन निश्चितम् ॥ इति संचिंत्य दैत्येंद्र स्वं वचः परिपालय ॥ मदुक्तं वचनं सर्वं यदि मंतुमिहार्हसि ॥ २८७ ॥ ॥ तारक उवाच ॥ ॥ मामत्र संस्थितं दृष्ट्वा कालनेमिमुखैर्युतम् ॥ २८८ ॥ कस्येह न व्यथेद्बुद्धिर्मृत्योरपि जिघांसतः ॥ सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ॥ २८९ ॥ ब्रवीषि यद्यत्त्वं वाक्यं तत्तथैव न संशयः ॥ को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ॥ २९० ॥ कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत् ॥ अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ॥ २९१ ॥ कालाग्नावाहितं घोरे गुह्ये सततगत्वरे[1] ॥ इदमद्य करिष्यामि श्वःकर्तास्मीतिवादिनः ॥ २९२ ॥ कालो हरति संप्राप्ते नदीवेग इवोन्मुखान् ॥ इदानीं तावदेवासौ मया दृष्टो न विस्मृतः ॥ २९३ ॥ कालेन ह्रियमाणानां प्रलापः श्रूयते नृणाम् ॥ ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च ॥ २९४ ॥ स्पृहामोहातिवादेषु लोकः सक्तो न बुध्यते ॥ गुरुं वाप्यगुरुं वापि कृत्याकृत्यं च केशव ॥ २९५ ॥ जानामि त्वामहं विष्णो सर्वभूतवरं प्रभुम् ॥ किं कुर्मः स्वस्वभावेन बलिना त्वां न मन्महे ॥ २९६ ॥ केचिद्व्रजंति त्वां भक्त्या वैरेण हेलया परे ॥ सर्वेनुकंप्यास्ते तुभ्यमंतरात्मासि देहिनाम् ॥ २९७ ॥ पुराणः शाश्वतो धर्मः सर्वप्राणभृतां समः ॥ मामालंब्य मया मुक्ता यांतु सर्वे दिवौकसः ॥ २९८ ॥ पुनर्मत्स्वरूपेण भ्रांतव्यं भुवनत्रयम् ॥ स्पृहापि यज्ञभागानां न कार्या समयस्त्वयम् ॥२९९॥ एवमुक्ते तारकेण देवा हर्षं प्रपेदिरे ॥ मुच्यते हृतलोमापि मेषो लाभो हि सौनिकात्[2] ॥ ३०० ॥ ॥ श्रीभगवानुवाच ॥ ॥ दैत्येंद्र भव तत्त्वज्ञो विद्याज्ञानतपोन्वितः ॥ कालं पश्यसि सुव्यक्तं पाणावामलकं यथा ॥ ३०१ ॥ कालचारित्रतत्त्वज्ञ शिवभक्त महामते ॥ वज्रांगसुत धन्योऽसि स्पृहणीयोऽसि धीमताम् ॥ ३०२ ॥ यावत्ते तपसो वीर्यं तावद्भुंक्ष्व जगत्त्रयम् ॥ एतेन समयेनैते चरिष्यंति सुरा जगत् ॥ ३०३ ॥ इत्युक्त्वा मर्कयूथेन वृतो नारायणः प्रभुः ॥ स्थानादस्मादपाक्रम्य मेरुं प्रति ययौ तदा ॥ ३०४ ॥ ततो मेरुं समागम्य प्रोवाच वचनं हरिः ॥ भवंतो यांतु ब्रह्माणं स धास्यति च वो हितम् ॥ ३०५ ॥ अप्रमत्तैः सदा भाव्यं पालयश्च समयस्तथा ॥ इत्युक्त्वा भगवान्विष्णुस्तत्रैवांतरधीयत ॥ ३०६ ॥ प्रणतः संस्तुतो देवैर्ब्रह्माणं च सुरा ययुः ॥ ३०७ ॥ दिव्यैरुत्तमैस्तत्र

१ सततगत्वरे—सततगामिनि—इत्यर्थः । २ सौनिकात्—पशुवधकरात्—सकाशात्—हृतलोमा हृतकेशः मेषः मुक्तः स एव तस्य जीवनरक्षणरूपो लाभ एव यथा, तथा संप्रति हृतयज्ञभागा देवा मुक्ताः स एव तेषां लाभ एव यत्तेषां जीवितदानम् सर्वत्र संचारानुमोदनं च । एवं चतस्य तारकस्य सर्वदेवानामुपरि अनुग्रह एवेति भावः ।

गतैरभिष्टुतो विदीप्ततेजा भुवनत्रयेऽपि ॥ वज्रांगपुत्रोऽपि मुमोद वीरः शिवप्रसादेन महर्द्धिमाप्य ॥ ३०८ ॥ स्वयमिन्द्रो निमिर्वह्निः कालनेमिर्यमोऽपि च ॥ स्तम्भश्च निर्ऋतिस्थाने महिषो वरुणस्तथा ॥ ३०९ ॥ मेषो वाताधिकारी च कुजंभो धनदोऽभवत् ॥ अन्येषां चाधिकारांश्च दैत्यानां तारको ददौ ॥ ३१० ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे देवासुरसंग्रामे तारकविजयवर्णननामैकविंशतितमोऽध्यायः ॥ २१ ॥ ॥ छ ॥ ॥ नारदउवाच ॥ ॥ एवं विप्रकृता देवा महेंद्रसहितास्तदा ॥ ययुः स्वायंभुवं धाम मर्करूपमुपाश्रिताः ॥ १ ॥ ततश्च विस्मितो ब्रह्मा प्राह तान्सुरपुंगवान् ॥ स्वरूपेणेह तिष्ठध्वं नात्र वस्तारकाद्भयम् ॥ २ ॥ ततो देवाः स्वरूपस्थाः प्रम्लानवदनांबुजाः ॥ तुष्टुवुः प्रणताः सर्वे पितरं पुत्रका यथा ॥ ३ ॥ नमो जगत्प्रसूत्यै ते हेतवे पालकाय च ॥ संहर्त्रे च नमस्तुभ्यं तिस्रोऽवस्थास्तव प्रभो ॥ ४ ॥ त्वमपः प्रथमं सृष्ट्वा तासु वीर्यमवासृजः ॥ तदण्डमभवद्धैमं यस्मिँल्लोकाश्चराचराः ॥ ५ ॥ वेदेष्वाहुर्विराड्रूपं त्वामेकरूपमीदृशम् ॥ पातालं पादमूलं च पार्ष्णिपादे रसातलम् ॥ ६ ॥ महातलं चास्य गुल्फौ जंघे चापि तलातलम् ॥ सुतलं जानुनी चास्य ऊरू च वितलातले ॥ ७ ॥ महीतलं च जघनं नाभिश्चास्य नभस्तलम् ॥ ज्योतिःपदमुरःस्थानं स्वर्लोको बाहुरुच्यते ॥ ८ ॥ ग्रीवा महश्च वदनं जनलोकः प्रकीर्त्यते ॥ ललाटं च तपोलोकः शीर्षं सत्यमुदाहृतम् ॥ ९ ॥ चन्द्रसूर्यौ च नयने दिशः श्रोत्रे नासिकाश्विनौ ॥ आत्मानं ब्रह्मरंध्रस्थमाहुस्त्वां वेदवादिनः ॥ १० ॥ एवं ये ते विराड्रूपं संस्मरंत उपासते ॥ जन्मबन्धविनिर्मुक्ता यांति त्वां परमं पदम् ॥ ११ ॥ एवं स्थूलं प्राणिमध्यं च सूक्ष्मं भावेभावे भावितं त्वां गृणंति ॥ सर्वत्रस्थं त्वामतः प्राहुर्वेदास्तस्मै तुभ्यं पद्मज इद्धिधेम ॥ १२ ॥ एवं स्तुतो विरंचिस्तु कृपयाभिपरिप्लुतः ॥ जानन्नपि तदा प्राह तेषामाश्वासहेतवे ॥ १३ ॥ सर्वे भवन्तो दुःखार्ताः परिम्लानमुखांबुजाः ॥ भ्रष्टायुधास्तथाऽकस्माद्भ्रष्टाभरणवाससः ॥ १४ ॥ ममैवेयं कृतिर्देवा भवतां यद्विडम्बना ॥ यद्वै राजशरीरे मे भवन्तो बाहुसंज्ञकाः ॥ १५ ॥ यद्यद्विभूतिमत्सत्त्वं धार्मिकं चोर्जितं महत् ॥ तत्रासीद्बाहुनाशो मे बाहुस्थाने च ते मम ॥ १६ ॥ तन्नूनं मम भग्नौ च बाहू तेन दुरात्मना ॥ येन चोपहृतं देवास्तन्ममाख्यातु मर्हथ ॥ १७ ॥ ॥ देवा ऊचुः ॥ ॥ योऽसौ वज्रांगतनयस्त्वया दत्तवरः प्रभो ॥ भृशं विप्रकृतास्तेन तत्त्वं जानासि तत्त्वतः ॥ १८ ॥ पश्चिमे महीसमुद्रस्य तटं शार्विकतीर्थकम् ॥ तदाक्रम्य कृतं तेन मरुभूमिसमं प्रभो ॥ १९ ॥ ऋद्धयः सर्वदेवानां गृहीतास्तेन सर्वतः ॥ स्व[illegible]स्वरू

१ समाश्रिताः—इ० पा० । २ भवतामैश्वर्यमिति शेषः ।

पेण स एव च जगत्पतिः ॥ २० ॥ चंद्रसूर्यौ ग्रहास्तारा यच्चान्यद्देवपक्षतः ॥ तच्च सर्वं निराकृत्य स्थापितो दैत्यपक्षकः ॥ २१ ॥ वयं च विधृता स्तेन बहूपहसितास्तथा ॥ विष्णोः प्रसादान्मुक्ताश्च कथंचिदिव कष्टतः ॥ २२ ॥ तद्वयं शरणं प्राप्ताः पीडिताः क्षुत्तृषार्दिताः ॥ धर्मरक्षा कराश्चेति संचिंत्य त्रातुमर्हसि ॥ २३ ॥ इत्युक्तः स्वात्मभूर्देवः सुरैर्दैत्यविचेष्टितम् ॥ सुरानुवाच भगवानतः संचिंत्य तत्त्वतः ॥ ॥ २४ ॥ अवध्यस्तारको दैत्यः सर्वैरपि सुरासुरैः ॥ यस्य वध्यश्च नाद्यापि स जातो भगवान्पुनः ॥ २५ ॥ मया च वरदानेन च्छन्दयित्वा निवारितः ॥ २६ ॥ तपसा स हि दीप्तोऽभूत्त्रैलोक्यदहनात्मकः ॥ स च वव्रे वधं दैत्यः शिशुतः सप्तवासरात् ॥ २७ ॥ स च सप्तदिनो बालः शंकराद्यो भविष्यति ॥ तारकस्य च वीरस्य वधकर्ता :भविष्यति ॥ २८ ॥ सतीनामा तु या देवी विनष्टा दक्षहेलया[1] ॥ सा भविष्यति कल्याणी हिमाचलशरीरजा ॥ २९ ॥ शंकरस्य च तस्याश्च यत्नः कार्यः समागमे ॥ अहमप्यस्य कार्यस्य शेषं[2] कर्ता न संशयः ॥ ३० ॥ इत्युक्तास्त्रिदशास्तेन साक्षात्कमलयोनिना ॥ जग्मुर्मेरुं प्रणम्येशं मर्करूपेण संवृताः ॥ ३१ ॥ ततो गतेषु देवेषु ब्रह्मा लोकपितामहः ॥ निशां सस्मार भगवान्स्वां तनुं पूर्वसंभवाम् ॥ ३२ ॥ ततो भगवती रात्रिरुपतस्थे पितामहम् ॥ तां विविक्ते समालोक्य तथोवाच विभावरीम् ॥ ३३ ॥ विभावरि महत्कार्यं विबुधानामुपस्थितम् ॥ तत्कर्तव्यं त्वया देवि शृणु कार्यस्य निश्चयम् ॥ ३४ ॥ तारकोनाम दैत्येंद्रः सुरकेतुरनिर्जितः[3] ॥ तस्याभावाय भगवाञ्जनयिष्यति यं शिवः ॥ ३५ ॥ सुतः स भविता तस्य तारकस्यांतकारकः ॥ अहं त्वादौ यदा जातस्तदापश्यं पुरःस्थितम् ॥ ॥ ३६ ॥ अर्धनारीश्वरं देवं व्याप्य विश्वमवस्थितम् ॥ दृष्ट्वा[4] तमब्रुवं देवं भजस्वेति च भक्तितः ॥ ३७ ॥ ततो नारी पृथग्जाता पुरुषश्च तथा पृथक्[5] ॥ तस्याश्चैवांशजाः सर्वाः स्त्रियस्त्रिभुवने स्मृताः ॥ ३८ ॥ एकादश च रुद्राश्च पुरुषास्तस्य चांशजाः ॥ तां नारीमहमालोक्य पुत्रं दक्षमथा ब्रवम् ॥ ३९ ॥ भजस्व पुत्रीं जगतीं[6] ममापि च तवापि च ॥ पुंदुःखनरकात्त्रात्री पुत्री ते भाविनी त्वियम् ॥ ४० ॥ एवमुक्तो मया दक्षः पुत्रीत्वे परि कल्पिताम् ॥ रुद्राय दत्तवान्भक्त्या नाम दत्त्वा सतीति यत् ॥ ४१ ॥ ततः काले च[7] कस्मिंश्चिदवमेने च तां पिता ॥ मुमूर्षुः पापसंकल्पो दुरात्मा कुलकज्जलः ॥ ४२ ॥ ये रुद्रं नैव मन्यंते ते स्फुटं कुलकज्जलाः ॥ पिशाचास्ते दुरात्मानो भवंति ब्रह्मराक्षसाः ॥ ४३ ॥ अवमानेन तस्यापि

१ यज्ञहेलया—इ० पा० । २ शेषभाग्—इ० पा० । ३ सुरकेतुः—सुराणां केतुरिवानिष्टफलसूचकः । आकाशे केतूदयो हि प्रायोऽनिष्टफलसूचको भवतीति ज्योतिःशास्त्रे । ४ श्रुत्वा—इति पाठः—परं सोऽप्रासंगिकः । ५ पुनः-इ०पा० । ६ जगती इदं जगत् ममापि, मया सृज्यमानत्वात् । तथापि, त्वत्संतत्या परिपूर्यमाणत्वात्—इत्यभिप्रायः । ७ तु—इ० पा० ।

यथा देवी जहौ तनुम् ॥ यथा यज्ञः स च ध्वस्तो भवेन विदितं हि ते[1] ॥ ४४ ॥ अधुना हिमशैलस्य भवित्री दुहिता च सा ॥ महेश्वरं पतिं सा च पुनः प्राप्स्यति निश्चितम् ॥ ४५ ॥ तदिदं च त्वया कार्यं मेनागर्भे प्रविश्य च ॥ तस्याश्छविं कुरु कृष्णां यथा काली भवेत्तु सा ॥ ॥ ४६ ॥ यदा रुद्रोपहसिता तपस्तप्स्यति सा महत् ॥ समाप्तनियमा देवी यदा चोग्रा भविष्यति ॥ ४७ ॥ स्वयमेव यदा रूपं सुगौरं प्रतिपत्स्यते ॥ विरहेण हरश्चास्या मत्वा शून्यं जगत्त्रयम् ॥ ४८ ॥ तस्यैव हिमशैलस्य कंदरे सिद्धसेविते ॥ प्रतीक्षमाणस्तां देवीमुग्रं संतप्स्यते तपः ॥ ॥ ४९ ॥ तयोः सुततंतपसोर्भविता यो महान्सुतः ॥ भविष्यति स दैत्यस्य तारकस्य निवारकः ॥ ५० ॥ तपसो हि विना नास्ति सिद्धिः कुत्रापि शोभने ॥ सर्वासां कर्मसिद्धीनां मूलं हि तप उच्यते ॥ ५१ ॥ त्वयापि दानवो देवि देहनिर्गतया तदा ॥ चंडमुंडपुरोगाश्च हंतव्या लोककदुर्जयाः ॥ ५२ ॥ यस्माच्चंडं च मुंडं च त्वं देवि निहनिष्यसि ॥ चामुंडेति ततो लोके ख्याता देवि भविष्यसि ॥ ५३ ॥ ततस्त्वां वरदे देवि लोकः संपूजयिष्यति ॥ भेदैर्बहुविधाकारैः सर्वगां कामसाधनीम् ॥ ५४ ॥ ओंकारवक्त्रां गायत्रीं त्वामर्चंति द्विजोत्तमाः ॥ ऊर्जितां बलदां चापि राजानः सुमहाबलाः ॥ ५५ ॥ वैश्याश्च भूतिमित्येव शिवां शूद्रास्तथा शुभे ॥ क्षांतिर्मुनीनामक्षोभ्या दया नियमिनामपि ॥ ५६ ॥ त्वं महोपायसन्दोहा नीतिर्नयविसर्पिणाम् ॥ परिस्थितिस्त्वमर्थानां त्वमहो प्राणिका मता ॥ ५७ ॥ त्वं युक्तिः सर्वभूतानां त्वं गतिः सर्वदेहिनाम् ॥ रतिस्त्वं रतिचित्तानां प्रीतिस्त्वं हृद्यदर्शिनाम् ॥ ५८ ॥ त्वं कांतिः शुभरूपाणां त्वं शांतिः शुभकर्मिणाम् ॥ त्वं भ्रांतिर्मूढचित्तानां त्वं फलं क्रतुयाजिनाम् ॥५९॥ जलधीनां महावेला त्वं च लीला विलासिनाम् ॥ संभूतिस्त्वं पदार्थानां स्थितिस्त्वं लोकपालिनी ॥ ६० ॥ त्वं कालरात्रिर्निःशेषभुवनावलिनाशिनी॥ प्रियकंठग्रहानन्ददायिनी त्वं विभावरी ॥ ६१ ॥ प्रसीद प्रणतानस्मान्सौम्यदृष्ट्या विलोकय॥ ६२ ॥ इति स्तुवंतो ये देवि पूजयिष्यंति त्वां शुभे ॥ ते सर्वकामानाप्स्यंति नियता नात्र संशयः ॥ ६३ ॥ इत्युक्ता तु निशादेवी तथेत्युक्त्वा कृताञ्जलिः ॥ जगाम त्वरिता पूर्वं गृहं हिमगिरेर्महत् ॥ ६४ ॥ तत्राऽऽसीनां महाहर्म्ये रत्नभित्तिसमाश्रये ॥ ददर्श मेनामापांडुच्छविवक्त्रसरोरुहाम् ॥ ६५ ॥ किंचिच्छ्यामसुखोदग्रस्तनभागावनामिताम् ॥ महौषधिगणाबद्धमंत्रराजनिषेविताम् ॥ ६६ ॥ ततः किंचित्प्रमिलिते मेनानेत्रांबुजद्वये ॥ आविवेश मुखं रात्रिर्ब्रह्मणो वचनात्तदा ॥ ६७ ॥ जन्मदाया जगन्मातुः क्रमेण जठरांतरम् ॥ अरंजयच्छविं देव्या गुहमातुर्विभावरी ॥ ६८ ॥ ततो जगन्मं

१ ते—त्वयेत्यर्थः । २ सुततपवपुषोः—इ० पा० । ३ शान्तिर्मुनीनामक्षोभ्या दया नियमिनोऽपि च—इ० पा० । ४ दयेति यमिनामपि—इत्यपि पा० । ५ मुक्तिः—इ० पा० । ६ गिरिम्—इ० पा० अप्रयोजकः । गृहमित्येव साधुः पाठः ।

गलदा मेना हिमगिरेः प्रिया ॥ ब्राह्मे मुहूर्ते सुभगे प्रासूयत शुभाननाम् ॥ ६९ ॥ तस्यां तु जायमानायां जंतवः स्थाणुजंगमाः ॥ अभवन्सुखिनः सर्वे सर्वलोकनिवासिनः ॥ ७० ॥ अभवत्क्रूरसत्त्वानां चेतः शांतं च देहिनाम् ॥ ज्योतिषामपि तेजस्त्वमभवत्सुतरां तदा ॥ ७१ ॥ वनाश्रिता श्चौषधयः स्वादवंति फलानि च ॥ गंधवंति च माल्यानि विमलं च नभोऽभवत् ॥ ७२ ॥ मारुतश्च सुखस्पर्शो दिशश्च सुमनोहराः ॥ विस्मृतानि च शास्त्राणि प्रादुर्भावं प्रपेदिरे ॥ ७३ ॥ प्रभावस्तीर्थमुख्यानां तदा पुण्यतमोऽभवत् ॥ सत्ये धर्मे चाध्ययने यज्ञे दाने तपस्यपि ॥ ७४ ॥ सर्वेषामभवच्छ्रद्धा जन्मकाले गुहारणेः ॥ अंतरिक्षेमराश्चापि प्रहर्षोत्फुल्ललोचनाः ॥ ७५ ॥ हरिब्रह्ममहेंद्रार्कवायुवह्निपुरोगमाः ॥ पुष्पवृष्टिं प्रमुमुचुस्तस्मिन्मेनागृहे शुभे ॥ ७६ ॥ मेरुप्रभृतयश्चापि मूर्तिमंतो महानगाः ॥ तस्मिन्महोत्सवे प्राप्ता वीरकांस्योपशोभिताः ॥ ७७ ॥ सागराः सरितश्चैव समाजग्मुश्च सर्वशः ॥ ७८ ॥ हिमशैलोऽभवल्लोके तदा सर्वैश्चराचरैः ॥ सेव्यश्चाप्यभिगम्यश्च पूजनीयश्च भारत ॥ ७९ ॥ अनुभूयोत्सवं ते च जग्मुः स्वानालयांस्तदा ॥ ८० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कुमारेशमाहात्म्ये पार्वतीजन्मवर्णनंनाम द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततश्च शैलजा देवी चिक्रीड सुभगा तदा ॥ देवगंधर्वकन्याभिर्नगकिंनरसंभवाः ॥ मुनीनां चापि याः कन्यास्ताभिः सार्धं च शोभना ॥१॥ कदाचिदथ मेरुस्थो वासवः पांडुनंदन ॥ सस्मार मां ययौ चाहं संस्मृतो वासवं तदा ॥ २ ॥ मां दृष्ट्वा च सहस्राक्षः समुत्थायातिहर्षितः ॥ पूजयामास तां पूजां प्रतिगृह्याहमब्रुवम् ॥ ३ ॥ महासुरमहोन्मादकालानल दिवस्पते ॥ कुशलं विद्यते कच्चित्तव कच्चिच्च नंदसि ॥ ४ ॥ पृष्टस्त्वेवं मया शक्रः प्रोवाच वचनं स्मयन् ॥ कुशलस्यांकुरस्तावत्संभूतो भुवनत्रये ॥५॥ तत्फलोदयसंपत्तौ तद्भवान्संस्मृतो मुने ॥ वेत्सि सर्वमतं त्वं वै तथापि परिनोदकः ॥६॥ निर्वृतिं परमां याति निवेद्यार्थं सुहृज्जने ॥७॥ तद्भवाञ्छैलजां देवीं शैलेंद्रं शैलवल्लभाम् ॥ हरं संभावय वरं यन्नान्यं रोचयंति ते ॥८॥ ततस्तद्वाक्यमाकर्ण्य गतोऽहं शैलसत्तमम् ॥ ओषधिप्रस्थनिलयं साक्षादिव दिवस्पतिम् ॥९॥ तत्र हैमे स्वयं तेन महाभक्त्या निवेदिते ॥ महासने पूजितोहमुपविष्टो महासुखम् ॥१०॥ गृहीतार्घ्यं ततो मां च पप्रच्छ श्लक्ष्णया गिरा ॥ कुशलं तपसः शैलः शनैः फुल्लाननांबुजः ॥११॥ अहमप्यस्य तत्प्रोच्य प्रत्यवोचं गिरीश्वरम् ॥ त्वया शैलेंद्र पूर्वा वाप्यपरां च दिशं तथा ॥ १२ ॥ अवगाह्य स्थितवता क्रियते प्राणिपालना ॥ अहो धन्योसि विप्रेंद्राः साहाय्येन तवाचल ॥१३॥ तपोजप

१ प्रागूयन्त—इति शेषः। २ धर्मे—इ० पा०। ३ वीरकांस्यं नीराजनपात्रं तेन उपशोभिताः। ४ वा—इ० पा०।

व्रतस्नानैः साधयंत्यात्मनः परम् ॥ यज्ञांगसाधनैः कांश्चित्कंदादिफलदानतः ॥ १४ ॥ त्वं समुद्धरसि विप्रान्किमतः प्रोच्यते तव ॥ अन्येऽपि जीवा बहुधा त्वामुपाश्रित्य भूधर ॥ १५ ॥ मुदिताः प्रतिवर्तंते गृहस्थमिव प्राणिनः ॥ शीतमातपवर्षांश्च क्लेशान्नानाविधान्संहन्[1] ॥ १६ ॥ उपाकरोषि जंतूनामेवंरूपा हि साधवः ॥ किमतः प्रोच्यते तुभ्यं धन्यस्त्वं पृथिवीधर ॥ १७ ॥ कंदरं यस्य चाध्यास्ते स्वयं तव महेश्वरः ॥ इत्युक्तवति वाक्यं च यथार्थं मयि फाल्गुन ॥ १८ ॥ हिमशैलस्य महिषी मेना आगाद्दिदृक्षया ॥ अनुयाता दुहित्रा च स्वल्पाश्च परिचारिकाः ॥ १९ ॥ लज्जयानतसर्वांगी[2] प्रविवेश सदो महत् ॥ ततो मां शैलमहिषी ववंदे प्रणिपत्य सा ॥ २० ॥ वस्त्रनिर्गूढवदना पाणिपद्मकृतांजलिः ॥ तामहं सत्यरूपाभिराशीर्भिः समवर्धयम् ॥ ॥ २१ ॥ पतिव्रता शुभाचारा सुभगा वीरसूः शुभे ॥ सदा वीरवती चापि भव वंशोन्नतिप्रदे ॥ २२ ॥ ततोऽहं विस्मिताक्षीं च हिमवद्गिरिपुत्रिकाम् ॥ मृदुवाण्या प्रत्यवोचमेहि बाले ममांतिकम् ॥ २३ ॥ ततो देवी जगन्माता बालभावं स्वकं मयि ॥ दर्शयंती स्वपितरं कंठे गृह्यांकमाविशत् ॥ २४ ॥ उवाच वाचं तां मंदं मुनिं वंदय पुत्रिके ॥ मुनेः प्रसादतोऽवश्यं पतिमाप्स्यसि संमतम् ॥ २५ ॥ इत्युक्ता सा ततो बाला वस्त्रांतपिहितानना ॥ किंचित्सहुंकृतोत्कंपं प्रोच्य नोवाच किंचन ॥ २६ ॥ ततो विस्मितचित्तोहमुपचारविदांवरः ॥ प्रत्यवोचं पुनर्देवीमेहि दास्यामि ते शुभे ॥ २७ ॥ रत्नक्रीडनकं रम्यं स्थापितं सुचिरं मया ॥ इत्युक्ता सा तदोत्थाय पितुरंकात्सवेगतः ॥ २८ ॥ वंदमाना च मे पादौ मया नीतांकमात्मनः ॥ मन्यता तां जगत्पूज्यामुक्तं बाले तवोचितम् ॥ २९ ॥ न तत्पश्यामि यत्तुभ्यं दद्म्याशीः का तवोचिता ॥ इत्युक्ते मातृवात्सल्याच्छैलेन्द्रमहिषी तदा ॥ ३० ॥ नोदयामास मां मंदमनाशीःशंकिता तदा ॥ भगवन्वेत्सि सर्वं त्वमतीतानागतं प्रभो ॥ ३१ ॥ तदहं ज्ञातुमिच्छामि कीदृशोऽस्याः पतिर्भवेत् ॥ श्रुत्वेति सस्मितमुखः प्रावोचं नर्मवल्लभः ॥ ३२ ॥ न जातोऽस्याः पतिर्भद्रे वर्तते च कुलक्षणः ॥ नग्नोऽतिनिर्धनः क्रोधी वृतः क्रूरैश्च सर्वदा ॥ ३३ ॥ श्रुत्वेति संभ्रमाविष्टो ध्वस्तवीर्यो हिमाचलः ॥ मां तदा प्रत्युवाचेदं साश्रुकण्ठो महागिरिः ॥ ३४ ॥ अहो विचित्रः संसारो दुर्वेद्यो महतामपि ॥ प्रवरस्त्वपि शक्त्या यो नरेषु न कृपायते ॥ ३५ ॥ यत्नेन महता तावत्पुण्यैर्बहुविधैरपि ॥ साधयंत्यात्मनो लोको मानुष्यमतिदुर्लभम् ॥ ३६ ॥ अध्रुवं तद्ध्रुवत्वे च कथंचित्परिकल्प्यते ॥ तत्रापि दुर्लभानाम समानव्रतचारिणी ॥ ३७ ॥ साध्वी महाकुलोत्पन्ना भार्या या स्यात्पतिव्रता ॥ तत्रापि दुर्लभं यच्च तया धर्मनिषेवणम् ॥ ३८ ॥ सह वेदपुराणोक्तं जगत्त्रयहितावहम् ॥ एतत्सुदुर्लभं यच्च तस्यां चैव प्रजा

१ सहमानः—इत्यर्थः । आर्षं परस्मैपदित्वं सहेः । २ लज्जावनतसर्वाङ्गी—इ० पा० ।

यते ॥ ३९ ॥ तदपत्यमपत्यार्थं संसारे किल नारद ॥ एतेपां दुर्लभानां हि किंचित्प्राप्नोति पुण्यवान् ॥ ४० ॥ सर्वमेतदवाप्नोति स कोपि यदि वा न वा ॥ किंचित्केनाधि हि न्यूनं संसारः कुरुते नरम् ॥ ४१ ॥ अथ सांसारिको दोपः स्वंकृतं यत्र भुज्यते ॥ गार्हस्थ्यं च प्रशंसंति वेदाः सर्वेऽपि नारद ॥ ४२ ॥ नेति केचित्तत्र पुनः कथं ते यदि नो गृही ॥ अतो धात्रा च शास्त्रेषु सुतलाभः प्रशंसितः ॥ ४३ ॥ पुनश्च सृष्टिवृद्ध्यर्थं नरकत्राणनाय च ॥ तत्र स्त्रीणां समुत्पत्तिं विना सृष्टिर्न जायते ॥ ४४ ॥ सा च जातिप्रकृत्यैव कृपणा दैन्यभागिनी ॥ तासामुपरि मावज्ञा भवेदिति च वेधसा ॥ शास्त्रेपूक्तमसंदिग्धं वाक्यमेतन्महत्फलम् ॥ ४५ ॥ दशपुत्रसमा कन्या दशपुत्रान्प्रवर्द्धयन् ॥ यत्फलं लभते मर्त्यस्तल्लभ्यं कन्ययैकया ॥ ४६ ॥ तस्मात्कन्या पितुः शोच्या सदा दुःखविवर्धिनी ॥ ४७ ॥ यापि स्यात्पूर्णसर्वार्था पतिपुत्रधनान्विता ॥ त्वयोक्तं च कृते ह्यस्यास्तद्वाक्यं मम शोकदम् ॥ ४८ ॥ केन दोपेण मे पुत्री न योग्या आशिपा मता ॥ न जातोऽस्याः पतिः कस्माद्वर्तते वा कुलक्षणः ॥ ४९ ॥ निर्धनश्च मुने कस्मात्सर्वेपां सर्वदः क्रुतः ॥ इति दुर्घटवाक्यं ते मनो मोहयतीव मे ॥ ५० ॥ इति तं पुत्रवात्सल्यात्सभार्यं शोकसंप्लुतम् ॥ अहमाश्वासयं वाग्भिः सत्याभिः पांडुनंदन ॥ ५१ ॥ मा शुचः शैलराज त्वं हर्षस्थानेऽतिपुण्यभाक् ॥ शृणु तद्वचनं मह्यं यन्मयोक्तं च ह्यर्थवत् ॥ ५२ ॥ जगन्माता त्वियं बाला पुत्री ते सर्वसिद्धिदा ॥ पुरा भवेऽभवद्भार्या सतीनाम्ना भवस्य या ॥ ५३ ॥ तदस्याः किमहं दद्मि रवेर्दीपमिवाल्पकः ॥ संचिंत्येति महादेव्या नाशिपं दत्तवानहम् ॥ ५४ ॥ न जातोऽस्याः पतिश्चेति वर्तते च भवो हि सः ॥ न स जातो महादेवो भूतभव्यभवोद्भवः ॥ ५५ ॥ शरण्यः शाश्वतः शास्ता शंकरः परमेश्वरः ॥ ५६ ॥ सर्वे देवा यत्पदमामनंति वेदैश्च सर्वैरपि यो न लभ्यः ॥ ब्रह्मादिविश्वं ननु यस्य शैल बालस्य वा क्रीडनकं वदंति ॥ ५७ ॥ स चामंगलयशीलोऽपि मंगलायतनो हरः ॥ निर्धनः सर्वदश्चासौ वेद स्वं स्वयमेव सः ॥५८॥ स च देवोऽचलः स्थाणुर्महादेवोऽजरो हरः ॥ भविष्यति पतिः सोऽस्यास्तत्किमर्थं तु शोचसि ॥ ५९ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये हिमवदाश्वासनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ एवं श्रुत्वा सभार्यः स प्रमोदप्लुतमानसः ॥ प्रणम्य मामिति प्राह यद्येवं पुण्यवानहम् ॥ १ ॥ पुनः किंचित्प्रवक्ष्यामि पुत्र्या मे दक्षिणः करः ॥ उत्तानः कारणं किं तच्छ्रोतुमिच्छामि नारद ॥ २ ॥ इति

१ संयुक्ता—ट० पा० । २ प्रकीर्तिताः—ट०पा० । ३ पा—ग्रंथ—ह्यर्थः ।

पृष्टोऽस्मि शैलेन प्रावोचं कारणं तदा ॥ सर्वदैव करो ह्यस्याः सर्वेषां प्राणिनां प्रति ॥ ३ ॥ अभयस्य प्रदाताऽसावुत्तानस्तु करस्ततः ॥ एषा भार्या जगद्भर्तुर्वृषांकस्य महीधर ॥ ४ ॥ जननी सर्वलोकस्य भाविनी भूतभाविनी ॥ तद्यथा शीघ्रमेवैषा योगं यातु पिनाकिना ॥ ५ ॥ त्वया विधेयं विधिवत्तथा शैलेन्द्रसत्तम ॥ अस्त्यत्र सुमहत्कार्यं देवानां हिमभूधर ॥ ६ ॥ इति प्रोच्य तमापृच्छ्य प्रावोचं वासवाय तत् ॥ मम भूयस्तु कर्तव्यं तन्मया कृतमेव हि ॥ ७ ॥ किं तु पंचशरः प्रेर्यः कार्यशेषेऽत्र वासव ॥ इत्यादिश्य गतश्चाहं तारकं प्रति फाल्गुन ॥ ८ ॥ कलिप्रियत्वात्तस्यैनमर्थं कथयितुं स्फुटम् ॥ हिमाद्रिरपि मे वाक्यप्रेरितः पार्वतीं प्रति ॥ ९ ॥ भवस्याराधनां कर्तुं ससखीमादिशत्तदा ॥ सा तं परिचचारेशं तस्या दृष्ट्वा सुशीलताम् ॥ १० ॥ पुष्पतोयफलाद्यानि नियुक्ता पार्वती व्यधात् ॥ महेन्द्रोपि च मद्वाक्यात्स्मरं सस्मार भारत ॥ ११ ॥ स च तत्स्मरणं ज्ञात्वा वसंतरतिसंयुतः ॥ चूतांकुरास्त्रः सहसा प्रादुरासीन्मनोभवः ॥ १२ ॥ तमाह च वचो धीमान्स्मयन्निव च तं स्पृशन् ॥ उपदेशेन बहुना किं त्वां प्रति रतिप्रिय ॥ १३ ॥ चित्ते वससि तेन त्वं वेत्सि भूतमनोगतम् ॥ तथापि त्वां वदिष्यामि स्वकार्यपरतां स्मरन् ॥ १४ ॥ ममैकं सुमहत्कार्यं कर्तुमर्हसि मन्मथ ॥ महेश्वरं कृपानाथं सतीभार्यावियोजितम् ॥ १५ ॥ संयोजय पुनर्देव्या हिमाद्रिगृहजातया ॥ देवी देवश्च तुष्टौ ते करिष्यत इहेप्सितम् ॥ १६ ॥ ॥ मदन उवाच ॥ ॥ अलीकमेतद्देवेन्द्र स हि देवस्तपोरतिः ॥ नान्यासादयितव्यानि तेजांसि मनुरब्रवीत् ॥ १७ ॥ वेदान्तेषु च मां विप्रा गर्हयंति पुनःपुनः ॥ महाशनो महापाप्मा कामोऽयमनलो महान् ॥ १८ ॥ आवृतं ज्ञानमेतेन ज्ञानिनां नित्यवैरिणा ॥ तस्मादयं सदा त्याज्यः कामोऽहिरिव सत्तमैः ॥ १९ ॥ एवं शीलस्य मे कस्मात्प्रतुष्यति महेश्वरः ॥ मद्यपस्येव पापस्य वासुदेवो जगद्गुरुः ॥ २० ॥ ॥ इंद्र उवाच ॥ ॥ मैवं ब्रूहि महाभाग त्वां विना कः पुमान्भुवि ॥ धर्ममर्थं तथा कामं मोक्षं वा प्राप्तुमीश्वरः ॥ २१ ॥ यत्किंचित्साध्यते लोके मूलं तस्य च कामना ॥ कथं कामं विनिंदंति तस्मात्ते मोक्षसाधकाः ॥ २२ ॥सत्यं चापि श्रुतेर्वाक्यं तव रूपं त्रिधागतम् ॥ तामसं राजसं चैव सात्त्विकं चापि मन्मथ ॥ २३ ॥ असुक्तितः

१ 'अभितः परितः' इत्यादिना द्वितीयाप्राप्तावपि सम्बन्धसामान्यविवक्षायां षष्ठी । सर्वेभ्यः प्राणिभ्यः अभयस्य प्रदाता—इत्यर्थोऽत्र विवक्षित एव । २ तदा— इ० पा० । ३ तं हिमाद्रिकंदरस्थं तपस्तप्यन्तं शंकरं परिचचार । तस्याः पार्वत्याः सुशीलतां दृष्ट्वा । तेन शंकरेण—इति शेषः । तेन शंकरेण नियुक्ता निजपरिचरणार्थं कृताज्ञा पार्वती । शंकरार्थमिति शेषः शंकरं परिचरितुमित्यर्थः । पुष्पतोयफलाद्यानि व्यधात्—आनीय समर्प्य परिचचारेति श्लोकार्थः ।

कामनया रूपं तत्तामसं तव ॥ सुखबुद्ध्या स्पृहा या च रूपं तद्राजसं तव ॥ २४ ॥ केवलं यावदर्थार्थं तद्रूपं सात्त्विकं तव ॥ तत्ते रूपत्रयमिदं ब्रूहि नोपासते हि के ॥ २५॥ त्वं साक्षात्परमः पूज्यः कुरु कार्यमिदं हि नः ॥ अथ वा पीडितान्दृष्ट्वा सामान्यानपि पंडिताः ॥ स्वप्राणैरपि त्रायंति परमेतन्महाफलम् ॥ २६ ॥ इति संचिंत्य कार्यं त्वं सर्वथा कुरु तत्स्फुटम् ॥ २७॥ इत्या कर्ण्य तथेत्युक्त्वा वसंतरतिसंयुतः ॥ पिकादिसैन्यसंपन्नो हिमाद्रिं प्रययौ स्मरः ॥ २८ ॥ तत्रापश्यत शंभोः स पुण्यमाश्रममंडलम् ॥ नानावृक्षसमाकीर्णं शांतसत्त्वसमाकुलम् ॥ २९ ॥ तत्रापश्यत्त्रिनेत्रस्य वीरकंनाम द्वारपम् ॥ यथा साक्षान्महेशानं गणांश्चायुतशोऽस्य च ॥ ३० ॥ ददर्श च महेशानं नासाग्रकृतलोचनम् ॥ देवदारुद्रुमच्छायावेदिका मध्यमाश्रितम् ॥ समकायं सुखासीनं समाधिस्थं महेश्वरम् ॥ ३१ ॥ निस्तरंगं विनिगृह्य स्थितमिंद्रियगोचरान् ॥ आत्मानमात्मना देवं प्रविष्टं तपसो निधिम् ॥ ३२ ॥ तं तथाविधमालोक्य सोंतर्भेदाय यत्नवान् ॥ भ्रमरध्वनिव्याजेन विवेश मदनो मनः ॥ ३३ ॥ एतस्मिन्नंतरे देवो विकासितविलोचनः ॥ सस्मार नगराजस्य तनयां रक्तमानसः ॥ ३४ ॥ निवेदिता वीरकेण विवेश च गिरेः सुता ॥ तस्मिन्काले महाभागा सदा यद्वदुपैति सा ॥ ३५ ॥ ततस्तस्यां मनः स्वीयमनुरक्तमवेक्ष्य च ॥ निगृह्य लीलया देवः स्वकं पृष्ठमवैक्षत ॥ तावदापूर्णधनुषमपश्यत रतिप्रियम्[1]॥ ॥ ३६ ॥ तत्राशक्त्पया देवो नानास्थानेषु सोऽगमत् ॥ तावत्पश्यति पृष्ठस्थमाकृष्य धनुषः शरम् ॥ ३७ ॥ स नदीः पर्वतांश्चैव आश्रमान्सरसीस्तथा ॥ परिभ्रमन्महादेवः पृष्ठस्थं तमवैक्षत ॥ ३८ ॥ जगत्त्रयं परिभ्रम्य पुनरागात्स्वमाश्रमम् ॥ पृष्ठस्थमेव तं वीक्ष्य निःश्वासं मुमुचे हरः ॥ ३९ ॥ ततस्तृतीयनेत्रोत्थवह्निना नाकवासिनाम् ॥ क्रोशतां गमितः कामो भस्मत्वं पांडुनंदन ॥ ४० ॥ स तु तं भस्मसात्कृत्वा हरनेत्रोद्भवोऽनलः ॥ व्यजृंभत जगद्दग्धुं ज्वालापूरितदिङ्मुखः ॥ ४१ ॥ ततो भवो जगद्धेतोर्व्यभजज्जातवेदसम् ॥ साहंकारे जने चंद्रे सुमनस्सु च गीतके ॥ ४२ ॥ भृंगेषु कोकिलास्येषु विहारेषु स्मरानलम् ॥ तत्प्राप्तौ स्नेहसंयुक्तं कामिनां हृदयं किल ॥ ४३ ॥ ज्वालयत्यनिशं सोऽग्निर्दुश्चिकित्स्योऽसुखावहः॥ विलोक्य हरनिःश्वासज्वालाभस्मीकृतं स्मरम् ॥ ४४ ॥ विललाप रतिर्दीना मधुना बंधुना सह ॥ विलपंती सुबहुशो मधुना परिसांत्विता ॥ ४५ ॥ रत्याः प्रलापमाकर्ण्य देवदेवो वृषध्वजः ॥ कृपया परया प्राह कामपत्नीं निरीक्ष्य च ॥ ४६ ॥ अमूर्तोऽपि ह्ययं भद्रे कार्यं सर्वं पतिस्तव ॥ रतिकाले ध्रुवं बाले करिष्यति न संशयः ॥ ४७ ॥ यदा विष्णुश्च भविता वसुदेवात्मजो विभुः ॥ तदा तस्य सुतो यः स्यात्स

१ प्रिय—इ० पा० ।

पतिस्ते भविष्यति ॥४८॥ सा प्रणम्य ततो रुद्रमिति प्रोक्ता रतिस्ततः ॥ जगाम स्वेच्छया गत्या वसंतादिभिरन्विता ॥ ४९ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कामदहनोनाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ छ ॥ ॥ अर्जुन उवाच ॥ ॥ देवर्षे वर्ण्यते चेयं कथा पीयूषसोदरा ॥ पुनरेतन्मुने ब्रूहि यदा वेत्ति महेश्वरः ॥ १ ॥ भगवान्स्वां सतीं भार्यां वधार्थं चापि तारकम् ॥ सत्याश्च विरहात्तप्यन्ददाह किमसौ स्मरम् ॥ २ ॥ त्वयैवोक्तं स विरहात्सत्यास्तप्यति वै तपः ॥ हिमाद्रिमास्थितो देवस्तस्याः संगमवांछया ॥ ३ ॥ ॥ नारद उवाच ॥ ॥ सत्यमेतत्पुरा पार्थ भवस्येदं मनीषितम् ॥ अतप्ततपसा योगो न कर्तव्यो मयाऽनया ॥ ४ ॥ तपो विना शुद्धदेहो न कथंचन जायते ॥ अशुद्धदेहेन समं संयोगो नैव दैहिकः ॥ ५ ॥ महत्कर्माणि यानीह तेषां मूलं सदा तपः ॥ नातप्ततपसां सिद्धिर्महत्कर्माणि यांति वै ॥ ६ ॥ एतस्मात्कारणाद्देवो दर्पितं तं ददाह तु ॥ ततो दग्धे स्मरे चापि पार्वतीमपि व्रीडिताम् ॥ ७ ॥ विहाय सगणो देवः कैलासं समपद्यत ॥ देवी च परमोद्विग्ना प्रस्खलंती पदेपदे ॥ ८ ॥ जीवितं स्वं विनिंदंती बभ्रामेतस्ततश्च सा ॥ हिमाद्रिरपि स्वे शृंगे रुदतीं पृष्टवान्रतिम् ॥ ९ ॥ कासि कस्यासि कल्याणि किमर्थं चापि रोदिषि ॥ पृष्टा सा च रतिः सर्वं यथावृत्तं न्यवेदयत् ॥ १० ॥ निवेदिते तथा रत्या शैलः संभ्रांतमानसः ॥ प्राप्य स्वां तनयां पाणावादायागात्स्वकं पुरम् ॥ ११ ॥ सा तत्र पितरौ प्राह सखीनां वदनेन च ॥ दुर्भगेन शरीरेण किमनेन हि कारणम् ॥ १२ ॥ देहवासं परित्यक्ष्ये प्राप्स्ये वाभिमतं पतिम् ॥ असाध्यं चाप्यभीष्टं च कथं प्राप्यं तपो विना ॥ १३ ॥ नियमैर्विविधैस्तस्माच्छोषयिष्ये कलेवरम् ॥ अनुजानीत मां तत्र यदि वः करुणा मयि ॥ १४ ॥ श्रुत्वेति वचनं माता पिता च प्राह तां शुभाम् ॥ उ मेति चपले पुत्रि न क्षमं तावकं वपुः ॥ १५ ॥ सोढुं क्लेशात्मरूपस्य तपसः सौम्यदर्शने ॥ भावीन्यप्यनिवार्याणि वस्तूनि च सदैव तु ॥ १६ ॥ भाविनोर्था भवंत्येव नरस्यानिच्छतोपि हि ॥ तस्मान्न तपसा तेऽस्ति बाले किंचित्प्रयोजनम् ॥ १७ ॥ ॥ ॥ श्रीदेव्युवाच ॥ ॥ यदिदं भवतो वाक्यं न सम्यगिति मे मतिः ॥ केवलं न हि दैवेन प्राप्तुमर्थो हि शक्यते ॥१८॥ त्किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वभावतः ॥ पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ॥ १९॥ ब्रह्मणा चापि ब्रह्मत्वं प्राप्तं किल तपोबलात् ॥ अन्यैरपि च यल्लब्धं तन्न

१ क्षुभ्यत्--इ०, कुप्यन्--इ० च पा० । २ पुनः--इ०पा० । ३ तदादहत्--इ० पा० । ४ तनयापर्णाम्--इ० पा० ।

संख्यातुमुत्सहे ॥ २० ॥ अध्रुवेण शरीरेण यद्यभीष्टं न साध्यते ॥ पश्चात्स शोच्यते मंदः पतितेऽस्मिञ्छरीरके ॥ २१ ॥ यस्य देहस्य धर्मोऽयं क्वचिज्जायेत्क्वचिन्म्रियेत् ॥ क्वचिद्गर्भगतं नश्येज्जातमात्रं क्वचित्तथा ॥ २२ ॥ बाल्ये च यौवने चापि वार्धक्येपि विनश्यति ॥ तेन चंचलदेहेन कोऽर्थः स्वार्थो न चेद्भवेत् ॥ २३ ॥ इत्युक्त्वा स्वसखीयुक्ता पितृभ्यां साश्रु वीक्षिता ॥ शृंगं हिमवतः पुण्यं नानाश्चर्यं जगाम सा ॥ २४ ॥ तत्रां बराणि संत्यज्य भूषणानि च शैलजा ॥ संवीता वल्कलैर्दिव्यैस्तपोऽतप्यत संयता ॥२५॥ ईश्वरं हृदि संस्थाप्य प्रणवाभ्यसनादृता ॥ मुनीनामप्य भून्मान्या तदानीं पार्थ पार्वती ॥२६॥ त्रिस्नाता पाटलापत्रभक्षकाभूच्छतं समाः ॥ शतं च बिल्वपत्रेण शीर्णेन कृतभोजना ॥२७॥ जलभक्षा शतं चाभूच्छतं वै वायुभोजना ॥ ततो नियममादाय पादांगुष्ठस्थिताभवत् ॥ २८ ॥ निराहारा ततस्तापं प्रापुस्तत्तपसो जनाः ॥ ततो जगत्समालोक्य तदीयतपसोर्जितम् ॥२९॥ हरस्तत्राययौ साक्षाद्ब्रह्मचारिवपुर्द्धरः ॥ वसानो वल्कलं दिव्यं रौरवाजिनसंवृतः ॥३०॥ सुलक्षणाषाढधरः सद्वृत्तः प्रति भानवान् ॥ ततस्तं पूजयामासुस्तत्सख्यो बहुमानतः ॥३१॥वक्तुमिच्छुः शैलपुत्रीं सखीभिरिति चोदितः ॥ ब्रह्मन्नियं महाभागा गृहीतनियमा शुभा ॥३२॥ मुहूर्तपंचमात्रेण नियमोऽस्याः समाप्यते ॥ तत्प्रतीक्षस्व तं कालं पश्चादस्मत्सखीसमम् ॥३३॥ नानाविधा धर्मवार्ताः प्रकरिष्यसि ब्राह्मण ॥ इत्युक्ता विजयाद्यास्ता देवीचरितवर्णनैः ॥३४॥ अश्रुमुख्यो द्विजस्याग्रे निन्युः कालं च तं तदा ॥ ततः काले किंचिदूने ब्रह्मचारी महामतिः ॥३५॥ विलोकनमिषेणागादाश्रमोपस्थितं ह्रदम् ॥ निपपात च तत्रासौ चुक्रोशातितरां ततः ॥ ३६ ॥ अहमत्र निमज्जामि कोऽपि मासुद्धरेत भोः ॥ इति तारेण क्रोशंतं श्रुत्वा तं विजयादिकाः ॥ ३७ ॥ आजग्मुस्त्वरया युक्ता ददुस्तस्मै करं च ताः ॥ स चुक्रोश ततो गाढं दूरेदूरे पुनःपुनः ॥ ॥ ३८ ॥ नाहं स्पृशाम्यसंसिद्धां म्रिये वा नानृतं त्विदम् ॥ ततः समाप्तनियमा पार्वती स्वयमाययौ ॥ ३९ ॥ सव्यं करं ददावस्य तं चासौ नाभ्यनन्दत ॥ भद्रे यच्छुचि नैव स्याद्यच्चैवावज्ञया कृतम् ॥ ४० ॥ सदोषेण कृतं यच्च तदादद्यान्न कर्हिचित् ॥ सव्यं चाशुचि ते हस्तं नावलं बामि कर्हिचित् ॥ ४१ ॥ इत्युक्ता पार्वती प्राह नाहं दत्तं च दक्षिणम् ॥ ददामि कस्यचिद्विप्र देवदेवाय कल्पितम् ॥ ४२ ॥ दक्षिणं मे करं देवो ग्रहीता भव एव च ॥ शीर्यते चोग्रतपसा सत्यमेतन्मयोदितम् ॥ ४३ ॥ ॥ विप्र उवाच ॥ ॥ यद्येवमवलेपस्ते गमनं केन वार्यते ॥ यथा तव

१ संज्ञातुम्--इ० पा० । २ सतीनाम्--इ० पा० । ३ निम्बपत्रेण--इ० पा० । ४ आस्थाय--इ० पा० । ५ आषाढः--दण्डः--इत्यर्थः । ६ च उदितः--इति पदच्छेदः । ७ कापि--इ० पा० । ८ गगनम्--इ० पा० ।

प्रतिज्ञेयं ममापीयं तथाचला ॥ ४४ ॥ रुद्रस्यापि वयं मान्याः कीदृशं ते तपो वद ॥ विषमस्थं यत्र विप्रं म्रियमाणमुपेक्षसि ॥ ४५ ॥ अवज्ञा नासि विप्रांस्त्वं तच्छीघ्रं व्रज दर्शनात् ॥ यदि वा मन्यसे पूज्यांस्ततोऽभ्युद्धर नान्यथा ॥ ४६ ॥ ततो विचार्य बहुधा इति चेति च सा शुभा ॥ विप्रस्योद्धरणं सर्वधर्मेभ्योऽमन्यताधिकम् ॥ ४७ ॥ ततः सा दक्षिणं दत्त्वा करं तं प्रोज्जहार च ॥ नरं नारी प्रोद्धरति सज्जन्तं भववारिधौ ॥ एतत्सन्दर्शनार्थाय तथा चक्रे भवोद्भवः ॥ ४८ ॥ प्रोद्धृत्य च ततः स्नात्वा बद्ध्वा योगासनं स्थिता ॥ ४९ ॥ ब्रह्मचारी ततः प्राह प्रहसन्किमिदं शुभे ॥ कर्तुकामासि तन्वंगि दृढयोगासनस्थिता ॥ ५० ॥ देवी प्राह ज्वालयिष्ये शरीरं योगवह्निना ॥ महादेवकृतमतिरु च्छिष्टाहं यतोऽभवम् ॥ ५१ ॥ ब्रह्मचारी ततः प्राह काश्चिद्ब्राह्मणकाम्यया ॥ कृत्वा वार्तास्ततः स्वीयमभीष्टं कुरु पार्वति ॥ ५२ ॥ नोपहन्या[2] कदाचिद्धि साधुभिर्विप्रकामना ॥ धर्ममेनं मन्यसे चेन्मुहूर्तं ब्रूहि पार्वति ॥ ५३ ॥ देवी प्राह ब्रूहि विप्र मुहूर्तं संस्थिता त्वहम् ॥ ततः स्वयं व्रती प्राह देवीं तां स्वसखीयुताम् ॥ ५४ ॥ किमर्थमिति रम्भोरु नवे वयसि दुश्चरम् ॥ तपस्त्वया समारब्धं नानुरूपं विभाति मे ॥५५॥ दुर्लभं प्राप्य मानुष्यं गिरिराजगृहेऽधुना ॥ भोगांश्च दुर्लभान्देवि त्यक्त्वा किं क्लिश्यते वपुः ॥ ५६ ॥ अतीव दूये वीक्ष्य त्वां सुकुमारतराकृतिम् ॥ अत्युग्रतपसा क्लिष्टा पद्मिनीव हिमार्दिता ॥ ५७ ॥ इदं चान्यत्तव शुभे शिरसो रोगदं मम ॥ यद्देहं त्यक्तुकामा त्वं प्रबुद्धा नासि बालिके ॥ ५८ ॥ वामः कामो मनुष्येषु सत्यमेतद्वचो यतः ॥ स्पृहणीयासि सर्वेषामेवं पीडयसे वपुः ॥ ५९ ॥ अविज्ञातान्वयो नग्नः शूली भूतगणाधिपः ॥ श्मशाननिलयो भस्मोद्धूलनो वृषवाहनः ॥ ६० ॥ गजाजिनो द्विजिह्वाद्यलंकृतांगो जटाधरः ॥ विरूपाक्षः कथंकारं निर्गुणः स्यात्तवोचितः ॥ ६१ ॥ गुणा ये कुलशीलाद्या वराणामुदिता बुधैः ॥ तेषामेकोऽपि नैवास्ति तस्मिंस्तत्रो[3]चितः स ते ॥ ६२ ॥ शोचनीयतमा पूर्वमासीत्पार्वति कौमुदी ॥ त्वं संवृत्ता द्वितीयासि तस्यास्तत्संगमाशया ॥ ६३ ॥ तपोधनाः सर्वसमा वयं यद्यपि पार्वति ॥ दुनोत्येव तवारंभः शूलायां यूपसत्क्रिया ॥ ॥६४॥ वृषभारोहणं वासः श्मशाने पाणिसंग्रहः ॥ सव्यालपाणिना क्षौमगजत्वग्बंधनः कथम् ॥ ६५ ॥ जनहास्यकरं सर्वं त्वयारब्धमसांप्रतम् ॥ स्त्रीभावाद्भूतिसंपर्कः कथं चाभिमतस्तव ॥ ६६ ॥ निवर्तय मनस्तस्मादस्मात्सर्वविरोधिनः ॥ मृगाक्षि मदनारातेर्मर्कटाक्षस्य प्रार्थनात् ॥ ६७ ॥ [1]इत्वादिनं चै[4]वं ब्रह्मचारिणमीश्वरम् ॥ निशम्य कुपिता देवी प्राह वाचा सगद्गदम् ॥ ६८ ॥ मा मा ब्राह्मण भाषिष्ठा विरुद्धमिति शंकरे ॥

१ पुनः—इ० पा०। २ नोपहन्या—न उपहन्तव्या—इत्यर्थः। ३ तस्मादस्मात्कारणादित्येव योजना समीचीना। ४ चैनम्—इ०पा०।

महत्तमो याति पुमान्देवदेवस्य निंदया ॥ ६९ ॥ न सम्यगभिजानासि तस्य देवस्य चेष्टितम् ॥ शृणु ब्राह्मण त्वं पापाद्यथास्मात्परिमुच्यसे ॥७०॥ स आदिः सर्वजगतां कोस्य वेदान्वयं ततः ॥ सर्वं जगद्यस्य रूपं दिग्वासाः कीर्त्यते ततः ॥ ७१ ॥ गुणत्रयमयं शूलं शूली यस्माद्बिभर्ति सः ॥ अबद्धाः सर्वतो मुक्ता भूता एव च तत्पतिः ॥७२॥ श्मशानं चापि संसारस्तद्वासी कृपयार्थिनाम् ॥ भूतयः कथिता भूतिस्तां बिभर्ति स भूतिभृत् ॥ ॥ ७३ ॥ वृषो धर्म इति प्रोक्तस्तमारूढस्ततो वृषी ॥ सर्पाश्च दोषाः क्रोधाद्यास्तान्बिभर्ति जगन्मयः ॥ ७४ ॥ नानाविधाः कर्मयोगा जटारूपा बिभर्ति सः ॥ वेदत्रयी त्रिनेत्राणि त्रिपुरं त्रिगुणं वपुः ॥ ७५ ॥ भस्मीकरोति तद्देवस्त्रिपुरघ्नस्ततः स्मृतः ॥ एवंविधं महादेवं विदुर्ये सूक्ष्मदर्शिनः ॥ ॥ ७६ ॥ कथंकारं हि ते नाम भजंते नैव तं हरम् ॥ अथ वा भीतसंसाराः सर्वे विप्र यतो जनाः ॥ ७७ ॥ विमृश्य कुर्वते सर्वं विमृश्यैतन्मया कृतम् ॥ शुभं वाप्यशुभं वास्तु त्वमप्येनं प्रपूजय ॥ ७८ ॥ इति ब्रुवंत्यां तस्यां तु किंचित्प्रस्फुरिताधरम् ॥ विज्ञाय तां सखीमाह किमप्येष विवक्षुकः ॥ ७९ ॥ वार्यतामिति विप्रोऽयं महद्दूषणभाषकः ॥ न केवलं पापभागी श्रोता वै स्यान्न संशयः ॥ ८० ॥ अथ वा किं च नः कार्यं वादेन सह ब्राह्मणैः ॥ कर्णौ पिधाय यास्यामो यथा यः स्यात्तथास्तु सः ॥ ८१ ॥ इत्युक्त्वोत्थाय गच्छंत्यां पिधाय श्रवणावुभौ ॥ स्वरूपं समुपाश्रित्य जगृहे वसनं हरः ॥ ८२ ॥ ततो निरीक्ष्य तं देवं संभ्रांता परमेश्वरी ॥ प्रणिपत्य महेशानं तुष्टावावनता उमा ॥ ८३ ॥ प्राह तां च महादेवो दासोऽस्मि तव शोभने ॥ तपोद्रव्येण क्रीतश्च समादिश यथेप्सितम् ॥ ८४ ॥ ॥ देव्युवाच ॥ ॥ मनसस्त्वं प्रभुः शंभो दत्तं तच्च मया तव ॥ वपुषः पितरावीशौ तौ सम्मानयितुमर्हसि ॥ ८५ ॥ ॥ महादेव उवाच ॥ ॥ पित्रा हि ते परिज्ञातं दृष्ट्वा त्वां रूपशालिनीम् ॥ बालां स्वयंवरं पुत्रीमहं दास्यामि नान्यथा ॥ ८६ ॥ तत्तस्य सर्वमेवास्तु वचनं त्वं हिमाचलम् ॥ स्वयंवरार्थं सुश्रोणि प्रेरय त्वां वृणे ततः ॥ ८७ ॥ इत्युक्त्वा तां महादेवः शुचिः शुचिपदो विभुः ॥ जगामेष्टं तदा देशं स्वपुरं प्रययौ च सा ॥ ८८ ॥ दृष्ट्वा देवीं तदा हृष्टो मेनया सहितोऽचलः ॥ ८९ ॥ आलिंग्याघ्राय पप्रच्छ सर्वं सा च न्यवेदयत् ॥ दुहितुर्देवदेवेन आज्ञप्तं तु हिमाचलः ॥ ९० ॥ स्वयंवरं प्रमुदितः सर्वलोकेष्वघोषयत् ॥ अश्विनौ द्वादशादित्या गन्धर्वगरुडोरगाः ॥ ९१ ॥ यक्षाः सिद्धास्तथा साध्या दैत्याः किंपुरुषा नगाः ॥ समुद्राद्याश्च ये केचित्त्रैलोक्यप्रवराश्च ये ॥ ९२ ॥ त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ॥ त्रयस्त्रिंशच्च ये देवास्त्रयस्त्रिंशच्च कोटयः ॥ ९३ ॥ जग्मुर्गिरी

१ अवजानासि–इ० पा० । २ अन्वयं–वंशाभिप्रायः । ३ द्दग–इ० पा० ।

न्द्रपुत्र्यास्तु स्वयंवरमनुत्तमम् ॥ आमंत्रितस्तथा विष्णुर्मेरुमाह हसन्निव ॥ ९४ ॥ तातास्माकं च सा देवी मेरो गच्छ नमामि ताम् ॥
अथ शैलसुता देवी हैममारुह्य शोभनम् ॥ ९५ ॥ विमानं सर्वतोभद्रं सर्वरत्नैरलंकृतम् ॥ अप्सरोभिः प्रनृत्यद्भिः सर्वाभरणभूषिता ॥ ९६ ॥
गंधर्वसंघैर्विविधैः किंनरैश्च सुशोभनैः ॥ बंदिभिः स्तूयमाना च वीरकांस्यधरा स्थिता ॥ ९७ ॥ सितातपत्ररत्नांशुमिश्रितं चावहत्तदा ॥ शालिनी
नाम पार्वत्याः संध्यापूर्णेंदुमंडला ॥ ९८ ॥ चामरासक्तहस्ताभिर्दिव्यस्त्रीभिश्च संवृता ॥ मालां प्रगृह्य सा तस्थौ सुरद्रुमसमुद्भवाम् ॥ ९९ ॥ एवं
तस्यां स्थितायां तु स्थिते लोकत्रये तदा॥ शिशुर्भूत्वा महादेवः क्रीडार्थं वृषभध्वजः ॥१००॥ उत्संगतलसंगुप्तो बभूव भगवान्भवः ॥ जयेति यत्पदं
ख्यातं तस्य सत्यार्थमीश्वरम् ॥ १०१ ॥ अथ दृष्ट्वा शिशुं देवास्तस्य उत्संगवर्तिनः ॥ कोयमत्रेति संमंत्र्य चुक्रुशुर्भृशरोषिताः ॥ १०२ ॥ वज्रमा
हारयत्तस्य बाहुमुद्यम्य वृत्रहा ॥ स बाहुरुद्यतस्तस्य तथैव समतिष्ठत ॥ १०३ ॥ स्तंभितः शिशुरूपेण देवदेवेन लीलया ॥ वज्रं क्षेप्तुं न शक्नोति
बाहुं चालयितुं तदा ॥ १०४ ॥ वह्निः शक्तिं तदा क्षेप्तुं न शशाक तथोत्थितः ॥ यमोऽपि दंडं खड्गं च निर्ऋतिस्तं शिशुं प्रति ॥ १०५ ॥
पाशं च वरुणो राजा ध्वजयष्टिं समीरणः ॥ सोमो गुडं धनेशश्च गदां सुमहतीं दृढाम् ॥ १०६ ॥ नानायुधानि चादित्या मुसलं वसवस्तथा ॥
महाघोराणि शस्त्राणि तारकाद्याश्च दानवाः ॥ १०७॥ स्तंभिता देवदेवेन तथान्ये भुवनेषु ये ॥ पूषा दंतान्दशन्दंतैर्बालमैक्षत मोहितः ॥ १०८ ॥
तस्यापि दशनाः पेतुर्दृष्टमात्रस्य शंभुना ॥ भगश्च नेत्रे विकृते चकार स्फुटिते च ते ॥ १०९ ॥ बलं तेजश्च योगांश्च सर्वेषां जगृहे प्रभुः ॥ अथ
तेषु स्थितेष्वेव मन्युमत्सु सुरेष्वपि ॥ ११० ॥ ब्रह्मा ध्यानमुपाश्रित्य बुबोध हरचेष्टितम् ॥ सोऽभिगम्य महादेवं तुष्टाव प्रयतो विधिः ॥ १११ ॥
पौराणैः सामसंगीतैर्वैदिकैर्गुह्यनामभिः ॥ नमस्तुभ्यं महादेव महादेव्यै नमोनमः ॥ ११२ ॥ प्रसादात्तव बुद्ध्यादिजगदेतत्प्रवर्तते ॥ मूढाश्च देवताः
सर्वा नैनं बुध्यत शंकरम् ॥ ११३ ॥ महादेवमिहायातं सर्वदेवनमस्कृतम् ॥ गच्छध्वं शरणं शीघ्रं यदि जीवितुमिच्छत ॥ ११४ ॥ ततः संभ्रम
संपन्नास्तुष्टुवुः प्रणताः सुराः ॥ नमोनमो महादेव पाहिपाहि जगत्पते ॥ ११५ ॥ दुराचारान्भवानस्माना त्मद्रोहपरायणान् ॥ अहो पश्यत नो मौ
ढ्यं जानंतस्तव भाविनीम् ॥ ११६ ॥ भार्यामुमां महादेवीं तथाप्यत्र समागताः ॥ युक्तमेतद्यदस्माकं राज्यं गृह्येत चासुरैः ॥ ११७ ॥ येषामेवंविधा
बुद्धिरस्माभिः किं कृतं त्विदम् ॥ अथ वा नो न दोषोऽस्ति पशवो हि वयं यतः ॥ ११८ ॥ त्वयैव पतिना सर्वे प्रेरिताः कुर्महे विभो ॥ ईश्वरः सर्व

१ हि-इ०पा० । २ अस्य सार्धश्लोकस्याथा यथार्थतस्तत्त्वता नावगम्यते । ३ गुडं तस्य शस्त्रविशेषम् । ४ किमिति प्रश्ने—अध्याहर्तव्यम् । ५ आर्षे द्वित्वं समासाभावेऽपि ।

भूतानां पतिस्त्वं परमेश्वरः ॥ ११९ ॥ भ्रामयस्यखिलं विश्वं यन्त्रारूढं स्वमायया ।्य। येन विभ्रांमिता मूढाः समायाताः स्वयंवरम् ॥ १२० ॥
तस्मै पशूनां पतये नमस्तुभ्यं प्रसीद नः ॥ अथ तेषां प्रसन्नोऽभूद्देवदेवस्त्रियंबकः ॥ १२१ ॥ यथापूर्वं चकारैतान्संस्तवाद्ब्रह्मणः प्रभुः ॥ तारकप्र
मुखा दैत्याः संक्रुद्धास्तत्र प्रोचिरे ॥ १२२ ॥ कोयमंग महादेवो न मन्यामो वयं च तम् ॥ ततः प्रहस्य बालोऽसौ हुंकारं लीलया व्यधात् ॥
॥ १२३ ॥ हुंकारेणैव ते दैत्याः स्वमेव नगरं गताः ॥ विस्मृतं सकलं तेषां स्वयंवरकृतमुखं च तत् ॥ १२४ ॥ महादेवप्रभावेन दैत्यानां घोरकर्मणाम् ॥
एवं यस्य प्रभावो हि देवदैत्येषु फाल्गुन ॥ १२५ ॥ कथमीश्वरवाक्यार्थस्तस्मादन्यत्र मुच्यते ॥ असंशयं विमूढास्ते पश्चात्तापः पुरा महान् ॥
॥१२६॥ ईश्वरं भुवनस्यास्य ये भजंते न त्र्यंबकम् ॥ ततः संस्तूयमानः स सुरैः पद्मभुवादिभिः ॥१२७॥ वपुश्चकार देवेशस्त्र्यंबकः परमाद्भुतम् ॥
तेजसा तस्य देवास्ते सेंद्रचंद्रदिवाकराः ॥१२८॥ सब्रह्मकाः ससाध्याश्च वसुविश्वे च देवताः ॥ सयमाश्च सरुद्राश्च चक्षुरप्रार्थयन्प्रभुम् ॥ १२९ ॥
तेभ्यः परतमं चक्षुः स्ववपुर्द्रष्टुमुत्तमम् ॥ ददावम्बापतिः शर्वो भवान्याश्चाचलरीय च ॥ १३० ॥ लब्ध्वा रुद्रप्रसादेन दिव्यं चक्षुरनुत्तमम् ॥ सब्र
ह्मकास्तदा देवास्तमपश्यन्महेश्वरम् ॥ १३१ ॥ ततो जगुश्च मुनयः पुष्पवृष्टिं च खेचराः ॥ मुमुचुश्च तदा नेदुर्देवदुंदुभयो भृशम् ॥ १३२ ॥ जगु
गंधर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ मुमुदुर्गणपाः सर्वे मुमोदांबा च पार्वती ॥ १३३ ॥ ब्रह्माद्या मेनिरे पूर्णां भवानीं च गिरीश्वरम् ॥ तस्य देवी
ततो दृष्ट्वा समक्षं त्रिदिवौकसाम् ॥ १३४ ॥ पादयोः स्थापयामास मालां दिव्यां सुगंधिनीम् ॥ साधुसाध्विति संप्रोच्य तया तं तत्र चर्चितम् ॥
॥ १३५ ॥ सह देव्या नमश्चक्रुः शिरोभिर्भूतलाश्रितैः ॥ सर्वे सब्रह्मका देवा जयेति च मुदा जगुः ॥ १३६ ॥ ॥ इति श्रीस्कांदे महापुराण एका
शीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये श्रीमहादेववैवाहिकोत्साहवर्णनंनाम पञ्चविंशोऽ
ध्यायः ॥ २५ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ अथ ब्रह्मा महादेवमभिवाद्य कृतांजलिः ॥ उद्वाहः क्रियतां देव इत्युवाच महेश्वरम् ॥ १ ॥
तस्य तद्वचनं श्रुत्वा प्राहेदं भगवान्हरः ॥ पराधीना वयं ब्रह्मन्हिमाद्रेस्तव चार्थित ॥ २ ॥ यद्युक्तं क्रियतां तद्धि वयं युष्मद्वशेऽधुना ॥ ततो
ब्रह्मा स्वयं दिव्यं पुरं रत्नमयं शुभम् ॥ ३ ॥ उद्वाहार्थं महेशस्य तत्क्षणात्समकल्पयत् ॥ शतयोजनविस्तीर्णं प्रासादशतशोभितम् ॥ ४ ॥ पुरे
तस्मिन्महादेवः स्वयमेव व्यतिष्ठत ॥ ततः सप्तमुनीन्देवश्चिंतिताभ्यागतान्पुरः ॥ ५ ॥ प्राहिणोदंबिकायाश्च स्थिरपत्रार्थमीश्वरः ॥ सारुंधतीकास्ते

१ विभ्रंशिताः—इ० पा० । २ मुदिताः—इ० पा० । ३ स्थिरपत्रार्थम्—इ० पा० ।

तत्र ह्रादयंतो हिमाचलम् ॥ ६ ॥ सभार्यमीश्वरगुणैः स्थिरपत्राणि चादधुः ॥ ततः संपूजितास्तेन पुनरागम्य तेऽचलात् ॥ ७ ॥ न्यवेदयंस्तथैव काय स च तानभ्यनंदत ॥ उद्वाहार्थं ततो देवो विश्वं सर्वं न्यमंत्रयत् ॥ ८ ॥ समागतं च तत्सर्व विना दैत्यैर्दुरात्मभिः ॥ स्थावरं जंगमं यच्च विश्वं विष्णुपुरोगमम् ॥ ९ ॥ सब्रह्मकं पुरारातेर्महिमानमवर्धयत् ॥ ततस्तं विधिराहेदं गन्धमादनपर्वते ॥ १० ॥ पुरे स्थितं विवाहस्य देव कालः प्रवर्तते ॥ ततस्तस्य जटाजूटे चंद्रखंडं पितामहः ॥ ११ ॥ बबंध प्रणयोदारविस्फारितविलोचनः ॥ कपर्दं शोभनं विष्णुः स्वय चक्रेऽस्य हर्षतः ॥ १२ ॥ कपालमालां विपुलां चामुण्डा मूर्ध्न्यबंधत ॥ उवाच चापि गिरिशं पुत्रं जनय शंकर ॥ १३ ॥ यो दैत्येंद्रकुलं हत्वा मां रक्तै स्तर्पयिष्यति ॥ सूर्यो ज्वलच्छिखारत्नं भाभासितजगत्त्रयम् ॥ १४ ॥ बबंध देवदेवस्य स्वयमेव प्रमोदतः ॥ शेषवासुकिमुख्याश्च ज्वलंतस्तेजसा शुभाः ॥ १५ ॥ आत्मानं भूषणस्थाने स्वयं ते चक्रुरीश्वरे ॥ वायवश्च ततस्तीक्ष्णशृंगं हिमगिरिप्रभम् ॥ १६ ॥ वृषं विभूषयामासुर्नानारत्नोपपत्तिभिः ॥ शक्रो गजाजिनं गृह्य स्वयमग्रे व्यवस्थितः ॥ १७ ॥ विना भस्म समाधाय कपाले रजतप्रभम् ॥ मनुजास्थिमयीं मालां प्रेतनाथश्च वन्दनम् ॥ १८ ॥ वह्निस्तेजोमयं दिव्यमजिनं प्रददौ स्थितः ॥ एवं विभूषितः सर्वैर्भृत्यैरीशो बभौ भृशम् ॥ १९ ॥ ततो हिमाद्रेः पुरुषा वीरकं प्रोचिरे वचः ॥ मा भूत्कालात्ययः शीघ्रं भवस्यैतन्निवेद्यताम् ॥ २० ॥ ततो देवं प्रणम्याह वीरकः करसंपुटी ॥ त्वरयंति महेशानं हिमाद्रेः पुरुषास्त्वमी ॥ २१ ॥ इति श्रुत्वा वचो देवः शीघ्रमित्येव चाब्रवीत् ॥ सप्त वारिधयस्तस्य चक्रुर्दर्पणदर्शनम् ॥ २२ ॥ तत्रैक्षत महादेवः स्वरूपं स जगन्मयम् ॥ ततो बद्धांजलिर्धीमान्स्थाणुं प्रोवाच केशवः ॥ २३ ॥ देवदेव महादेव त्रिपुरांतक शंकर ॥ शोभसेऽनेन रूपेण जगदानंददायिना ॥ २४ ॥ महेश्वर यथा साक्षादपरस्त्वं महेश्वरः ॥ ततः स्मयन्महादेवो जयेति भुवने श्रुतः ॥ २५ ॥ करमालंब्य विष्णोश्च वृषभं रुरुहे शनैः ॥ ततश्च वसवो देवाः शूलं तस्य न्यवेदयन् ॥ २६ ॥ धनदो निधिभिर्युक्तः समीपस्थस्ततोऽभवत् ॥ स शूलपाणिर्विश्वात्मा संचचाल ततो हरः ॥ २७ ॥ देवदुंदुभिनादैश्च पुष्पासारैश्च गीतकैः ॥ नृत्यद्भिरप्सरोभिश्च जयेति च महास्वनैः ॥ २८ ॥ सव्यदक्षिणसंस्थानौ ब्रह्मविष्णू तु जग्मतुः ॥ हंसं च गरुडं चैव समारुह्य महाप्रभो ॥ २९ ॥ अथादितिर्दितिः सा च दनुः कद्रूः सुपर्णजा ॥ पौलोमी सुरसा चैव सिंहिका

१ ते च तत्--इ० पा० । २ निश्चं सर्वं विश्वं जगत्--इत्यर्थः । ३ प्रवोधतः--इ०, प्रबोधितः--इ० च पा० । ४ नृत्यद्भिः अन्यैः देवैः च चपरम्--अप्सरोभिः---इति योजनात्र युक्ता । अप्सरसां विशेषणत्वे स्त्रीलिङ्गप्रयोगस्य युक्तत्वात्-"उगितश्च" इति ङीब्विधानात् ।

मही भृतां नाथो होता देवश्चतुर्मुखः ॥ वरः पशुपतिः साक्षात्कन्या विश्वारणिस्तथा ॥ ८० ॥ ततः स्तुवत्सु मुनिषु पुष्पवर्षे महत्यपि ॥ नदत्सु
देवतूर्येषु करं जग्राह त्र्यम्बकः ॥ ८१ ॥ देवो देवीं समालोक्य सलज्जां हिमशैलजाम् ॥ न तृप्यति न चाह्लादत्सा च देवं वृषध्वजम् ॥ ८२ ॥ तत्र
ब्रह्मादिमुनयो देवीमद्भुतरूपिणीम् ॥ पश्यंतः शरणं जग्मुर्मनसा परमेश्वरम् ॥ ८३ ॥ मा मुह्याम पार्वतीं च यथा नारदपर्वतौ ॥ ततस्तथैव तच्चक्रे
सर्वेषामीप्सितं वचः ॥ ८४ ॥ ततो देवैश्च मुनिभिः संस्तुतः परमेश्वरः ॥ प्रविवेश शुभां वेदिं मूर्तिमज्ज्वलनाश्रिताम् ॥ ८५ ॥ वेधाः श्रुतीरितैर्मं
त्रैर्मूर्तिमद्भिरुपस्थितैः ॥ मूर्तमग्निं जुहाव त्रिः परिक्रम्य च तं हरः ॥ ८६ ॥ लाजाहोम उमाभ्राता प्राह तं सस्मितं हरिः ॥ बहवो मिलिताः संति
लोकाः संमर्द ईश्वर ॥ ८७ ॥ सावधानेन रक्ष्याणि भूषणानि त्वया हर ॥ ततो हरश्च तं प्राह स्वजने माऽतिगोपय ॥ ८८ ॥ किंचित्प्रार्थय
दास्यामि प्राह विष्णुस्ततो वरम् ॥ त्वयि भक्तिर्दृढा मेऽस्तु स च तद्दुर्लभं ददौ ॥ ८९ ॥ ददतुः सृष्टिसंरक्षां ब्रह्मणे दक्षिणामुभौ ॥ अग्नये
यज्ञभागांश्च प्रीतौ हरजनार्दनौ ॥ ९० ॥ भृग्वादीनां ततो दत्त्वा श्रुतिरक्षणदक्षिणाम् ॥ ततो गीतैश्च नृत्यैश्च भोजनैश्च यथेप्सितैः ॥ ९१ ॥
महोत्सवैरनेकैश्च विस्मयं समपद्यत ॥ विसृज्य लोकं तं सर्वं किमिच्छादानकैर्भवः ॥ ९२ ॥ सरस्वत्या च पितरौ देव्याश्चाऽऽश्वास्य दुःखितौ ॥
आमंत्र्य हिमशैलेंद्रं ब्रह्माणं च सकेशवम् ॥ ९३ ॥ जगाम मंदरगिरिं गिरिणा सानुगोर्चितः ॥ ९४ ॥ ततो गते भगवति नीललोहिते सहोमया
गिरिमचलं हि भूधरः ॥ सबांधवो रुदिति हि कस्य नो मनो विसंष्ठुलं जगति हि कन्यकापितुः ॥ ९५ ॥ इमं विवाहं गिरिराजपुत्र्याः शृणोति
चाध्येति च यो नरः शुचिः ॥ विशेषतश्चापि विवाहमंगले स मंगलं वृद्धिमवाप्नुते चिरम् ॥ ९६ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां
संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशमाहात्म्ये हरगौरीविवाहवर्णनंनाम षड्विंशोऽध्यायः ॥ २६ ॥ ॥ छ ॥ ॥ नारद
उवाच ॥ ॥ ततो निरुपमं दिव्यं सर्वरत्नमयं शुभम् ॥ ईशाननिर्मितं साक्षात्सह देव्याविशद्गृहम् ॥ १ ॥ तत्रासौ मंदरगिरौ सह देव्या भगाक्षहा ॥
प्रासादे तत्र चोद्याने रेमे संहृष्टमानसः ॥ २ ॥ एतस्मिन्नंतरे देवास्तारकेणातिपीडिताः ॥ प्रोत्साहितेन चात्यर्थं मया कलिचिकीर्षुणा ॥ ३ ॥

१ श्रीमतीं च--इ० पा० । २ नर्मोक्तिरियम्--स्वजने तव स्वकीयजने पार्वतीरूपे माम् अति गोपय--अत्यंतं किंचिदाभूषणादिकमपहृत्य गुप्तं मा कुरु । इदानीं पार्वतीभ्रातृत्वं त्वया स्वीकृतं, तर्हि किमपि अलंकारादिकं मा अपहर । यदि तव किंचिदिच्छा स्यात् तर्हि प्रार्थय अहं तवाभिलषितं दास्यामि इति शंकरस्य विष्णुं प्रति नर्मवचनम् । ३ अवरत्--इ०पा० । ४ किमिच्छादानकैः--यस्ययस्यया यच्छा तत्तदिच्छानुसारेण तस्मैतस्मै दानैः--इत्यर्थः । ५ सरस्वत्या मंजुलमधुरया वाण्या--इत्यर्थः । ६ आर्षः प्रयोगः । ७ विसंष्ठुलं--विह्वलमित्यर्थः ।

आसाद्य ते भवं देवं तुष्टुवुर्बहुधा स्तवैः ॥ एतस्मिन्नंतरे देवी प्रोद्वर्तयत गात्रकम् ॥ ४ ॥ उद्वर्तनमलेनाथ नरं चक्रे गजाननम् ॥ देवानां संस्तवैः पुण्यैः कृपयाभिपरिप्लुता ॥ ५ ॥ पुत्रेत्युवाच तं देवी ततः संहृष्टमानसा ॥ एतस्मिन्नंतरे शर्वस्तत्रागत्य वचोऽब्रवीत् ॥ ६ ॥ पुत्रस्तवायं गिरिजे शृणु यादृग्भविष्यति ॥ विक्रमेण च वीर्येण कृपया सदृशो मया ॥ ७ ॥ यथाहं तादृशश्चासौ पुत्रस्ते भविता गुणैः ॥ ये च पापा दुराचारा वेदान्धर्मं द्विषंति च ॥ ८ ॥ तेषामामरणांतानि विघ्नान्येष करिष्यति ॥ ये च मां नैव मन्यंते विष्णुं वापि जगद्गुरुम् ॥ ९ ॥ विघ्निता विघ्नराजेन ते यास्यंति महत्तमः ॥ तेषां गृहेषु कलहः सदा नैवोपशाम्यति ॥ १० ॥ पुत्रस्य तव विघ्नेन समूलं तस्य नश्यति ॥ येषां न पूज्याः पूज्यंते क्रोधासत्यपराश्च ये ॥ ११ ॥ रौद्रसाहसिका ये च तेषां विघ्नं करिष्यति ॥ श्रुतिधर्माञ्ज्ञातिधर्मान्पालयंति गुरूंश्च ये ॥ १२ ॥ कृपालवो गतक्रोधास्तेषां विघ्नं हरिष्यति ॥ सर्वे धर्माश्च कर्माणि तथा नानाविधानि च ॥ १३ ॥ सविघ्नानि भविष्यंति पूजयास्य विना शुभे ॥ एवं श्रुत्वा उमा प्राह एवमस्त्विति शंकरम् ॥ १४ ॥ ततो बृहत्तनुः सोऽभूत्तेजसा द्योतयन्दिशः ॥ ततो गणैः समं शर्वः सुराणां प्रददौ च तम् ॥ यावत्तार कहंता वो भवेत्तावदयं प्रभुः ॥ १५ ॥ ततो विघ्नपतिर्देवैः संस्तुतः प्रणतार्तिहा ॥ चकार तेषां कृत्यानि विघ्नानि दितिजन्मनाम् ॥ १६ ॥ पार्वती च पुनर्देवी पुत्रत्वे परिकल्प्य च ॥ अशोकस्यांकुरं[1] वार्भिरवर्द्धयत स्वाहृतैः ॥ १७ ॥ सप्तर्षीनथ चाहूय संस्कारमंगलं तरोः[2] ॥ का[illegible]या मास तन्वंगी ततस्तां मुनयोऽब्रुवन् ॥ १८ ॥ त्वयैव दर्शिते मार्गे मर्यादां कर्तुमर्हसि ॥ किं फलं भविता देवि कल्पितैस्तरुपुत्रकैः ॥ १९ ॥ ॥ देव्युवाच ॥ ॥ यो वै निरुदके ग्रामे कूपं कारयते बुधः ॥ यावत्तोयं भवेत्कूपे तावत्स्वर्गे स मोदते ॥ २० ॥ दशकूपसमा वापी दशवापी समं सरः ॥ दशसरःसमा कन्या दशकन्यासमः क्रतुः ॥ २१ ॥ दशक्रतुसमः पुत्रो दशपुत्रसमो द्रुमः[3] ॥ २२ ॥ एषैव मम मर्यादा नियता लोकभाविनी ॥ जीर्णोद्धारे कृते वापि फलं तद्द्विगुणं मतम् ॥ २३ ॥ ॥ इति गणेशोत्पत्तिः ॥ ॥ ततः कदाचिद्भगवानुमया सह मंदरे ॥ मंदिरे हर्षजनने कलधौतमये शुभे ॥ २४ ॥ प्रकीर्णकुसुमामोदमहालिकुलकूजिते ॥ किंनरोद्गीतसंगीत प्रतिशब्दितमध्यके ॥ २५ ॥ क्रीडामयूरैर्हंसैश्च श्रुतैश्चैवाभिनादिते ॥ मौक्तिकैर्विविधै रत्नैर्विनिर्मितगवाक्षके ॥ २६ ॥ तत्र पुण्यकथाभिश्च क्रीडतो रुभयोस्तयोः ॥ प्रादुरभून्महाञ्छब्दः पूरितांबरगोचरः ॥ २७ ॥ तं श्रुत्वा कौतुकाद्देवी किमेतदिति शंकरम् ॥ पर्यपृच्छच्छुभतनुर्हरं विस्मयपूर्व

१ अशोकस्य--अशोकवृक्षस्य--इत्यर्थः । पुत्रप्राप्तयेऽशोकव्रतमिदम् ।   २ तरुः--इ० पा० ।   ३ तथा--इ० पा० ।

कम् ॥ २८ ॥ तामाह देवीं गिरिशो दृष्टपूर्वास्तु ते त्वया ॥ एते गणा मे क्रीडंति शैलेऽस्मिंस्त्वत्प्रियाः शुभे ॥ २९ ॥ तपसा ब्रह्मचर्येण क्लेशेन क्षेत्रसाधनैः ॥ यैरहं तोषितः पृथ्व्यां त एते मनुजोत्तमाः ॥ ३० ॥ मत्समीपमनुप्राप्ता मम लोकं वरानने ॥ चराचरस्य जगतः सृष्टिसंहारणक्षमाः ॥ ३१ ॥ विनैतान्नैव मे प्रीतिर्नैभिर्विरहितो रमे ॥ एते अहमहं चैते तानेतान्पश्य पार्वति ॥ ३२ ॥ इत्युक्ता विस्मिता देवी ददृशे तान्गवाक्षके ॥ स्थिता पद्मपलाशाक्षी महादेवेन भाषिता ॥ ३३ ॥ केचित्कृशा ह्रस्वदीर्घाः केचित्स्थूलमहोदराः ॥ व्याघ्रेभमेषाजमुखा नानाप्राणिमहामुखाः ॥ ३४ ॥ व्याघ्रचर्मपरीधाना नग्ना ज्वालामुखाः परे ॥ गोकर्णा गजकर्णाश्च बहुपादमुखेक्षणाः ॥ ३५ ॥ विचित्रवाहनाश्चैव नानायुधधरास्तथा ॥ गीतवादित्रतत्त्वज्ञाः सत्त्वगीतरसप्रियाः ॥ ३६ ॥ तान्दृष्ट्वा पार्वती प्राह कतिसंख्याभिधास्त्वमी ॥ ३७ ॥ ॥ श्रीशंकर उवाच ॥ ॥ असंख्येयास्त्वमी देवि असंख्येयाभिधास्तथा ॥ जगदापूरितं सर्वमेतैर्भीमैर्महाबलैः ॥ ३८ ॥ सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु ॥ दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥ ३९ ॥ एते विशंति मुदिता नानाहारविहारिणः ॥ ऊष्मपाः फेनपाश्चैव धूम्रपा मधुपायिनः ॥ मदाहाराः सर्वभक्ष्यास्तथान्ये चाप्यभोजनाः ॥ ४० ॥ गीतनृत्योपहाराश्च नानावाद्यरवप्रियाः ॥ अनंतत्वादमीषां च वक्तुं शक्या न वै गुणाः ॥ ४१ ॥ ॥ श्रीदेव्युवाच ॥ ॥ मनःशिलेन कल्केन य एष च्छुरिताननः ॥ तेजसा भास्कराकारो रूपेण सदृशस्तव ॥ ४२ ॥ आकर्ण्याकर्ण्य ते देव गणैर्गीतान्महागुणान् ॥ मुहुर्नृत्यति हास्यं च विदधाति मुहुर्मुहुः ॥ ४३ ॥ सदाशिवशिवेत्येवं विह्वलो वक्ति यो मुहुः ॥ धन्योऽयमीदृशी यस्य भक्तिस्त्वयि महेश्वरे ॥ ४४ ॥ एनं विज्ञातुमिच्छामि किंनामासौ गणस्तव ॥ ॥ श्रीशंकर उवाच ॥ ॥ स एष वीरको देवि सदा मेऽद्रिसुते प्रियः ॥ ४५ ॥ नानाश्चर्यगुणाधारः प्रतीहारो मतोऽम्बिके ॥ ॥ देव्युवाच ॥ ॥ ईदृशस्य सुतस्यापि ममोत्कंठा पुरांतक ॥ ४६ ॥ कदाहमीदृशं पुत्रं लप्स्याम्यानंददायकम् ॥ ॥ शर्व उवाच ॥ ॥ एष एव सुतस्तेस्तु यावदीहकपरो भवेत् ॥ ४७ ॥ इत्युक्ता विजयां प्राह शीघ्रमानय वीरकम् ॥ विजया च ततो गत्वा वीरकं वाक्यमब्रवीत् ॥ ४८ ॥ एहि वीरक ते देवी गिरिजा तोषिता शुभा ॥ त्वामाह्वयति सा देवी भवस्यानुमते स्वयम् ॥ ४९ ॥ इत्युक्तः संभ्रमयुतो मुखं संमार्ज्य पाणिना ॥ देव्याः समीपमागच्छज्जयायाऽनुगतः शनैः ॥ ५० ॥ तं दृष्ट्वा गिरिजा प्राह गिरा मधुरवर्णया ॥ एह्येहि पुत्र दत्तस्त्वं भवेन मम पुत्रकः ॥ ५१ ॥ इत्युक्तो दंडवद्देवीं प्रणम्यावस्थितः पुरः ॥ माता ततस्तमालिंग्य कृत्वोत्संगे च वीर

१ पृथ्व्याः—इ० पा० । २ परसंपदमार्पण । ३ नरः—इ० पा० ।

कम् ॥५२॥ चुचुंब च कपोले तं गात्राणि च प्रमार्जयत् ॥ भूषयामास दिव्यैस्तं स्वयं नानाविभूषणैः ॥५३॥ एवं संकल्प्य तं पुत्रं लालयित्वा उमा
चिरम् ॥ उवाच पुत्र क्रीडेति गच्छ सार्धं गणैरिति॥५४॥ततश्चिक्रीड मध्ये स गणानां पार्वतीसुतः ॥ मुहुर्मुहुः स्वमनसि स्तुवन्भक्तिं स शांकरीम्॥५५॥
प्रणम्य सर्वभूतानि प्रार्थयाम्यस्मिं दुष्करम् ॥ भक्त्या भजध्वमीशानं यस्या भक्तेरिदं फलम् ॥ ५६ ॥ क्रीडितुं वीरके याते ततो देवी च पार्वती ॥
नानाकथाभिश्चिक्रीड पुनरेव जटाभृता ॥ ५७ ॥ ततो गिरिसुताकण्ठे क्षिप्तबाहुर्महेश्वरः ॥ तपसस्तु विशेषार्थं नर्म देवीं किलाब्रवीत् ॥ ५८ ॥
स हि गौरतनुः शर्वो विशेषाच्छशिशोभितः ॥ रंजिता च विभावर्या देवी नीलोत्पलच्छविः ॥ ५९ ॥ ॥ शर्व उवाच ॥ ॥ शरीरे मम तन्वंगी सिते
भास्यसितद्युतिः ॥ भुजंगीवासिता शुभ्रे संश्लिष्टा चन्दने तरौ ॥ ६० ॥ चंद्रज्योत्स्नाभिसंपृक्ता तामसी रजनी यथा ॥ रजनी वा सिते पक्षे दृष्टिदोषं
ददासि मे ॥ ६१ ॥ इत्युक्ता गिरिजा तेन कण्ठं शर्वाद्विमुच्य सा ॥ उवाच कोपरक्ताक्षी भृकुटीविकृतानना ॥ ६२ ॥ स्वकृतेन जनः सर्वो जनेन
परिभूयते ॥ अवश्यमर्थी प्राप्नोति खण्डनां शशिखंडभृत् ॥६३॥ तपोभिर्दीर्घचरितैर्यत्त्वां प्रार्थितवत्यहम् ॥ तस्य मे नियमस्यैवमवमानः पदेपदे ॥
॥ ६४ ॥ नैवाहं कुटिला शर्व विषमा न च धूर्जटे ॥ स्वदोषैस्त्वं गतः क्षांतिं तथा दोषाकरश्रियः ॥ ६५ ॥ नाहं मुष्णामि नयने नेत्रहंता भवा
न्भव ॥ भगस्तत्ते विजानाति तथैवेदं जगत्रयम् ॥ ६६ ॥ मूर्ध्नि शूलं जनयसे स्वैर्दोषैर्मामधिक्षिपन् ॥ यत्त्वं मामाह कृष्णेति महाकालोऽसि
विश्रुतः ॥ ६७ ॥ यास्याम्यहं परित्यक्तुमात्मानं तपसा गिरिम् ॥ जीवंत्या नास्ति मे कृत्यं धूर्तेन परिभूतया ॥ ६८ ॥ निशम्य तस्या वचनं
कोपतीक्ष्णाक्षरं भवः ॥ उवाचाथ च संभ्रांतो दुर्ज्ञेयचरितो हरः ॥ ६९ ॥ न तत्त्वज्ञासि गिरिजे नाहं निंदापरस्तव ॥ चाटूक्तिबुद्ध्या कृतवांस्त
वाहं नर्मकीर्तनम् ॥ ७० ॥ विकल्पः स्वच्छचित्तेति गिरिजैषा मम प्रिया ॥ प्रायेण भूतिलिप्तानामन्यथा चिंतिता हृदि ॥ ७१ ॥ अस्मादृशानां
कृष्णांगि प्रवर्ततेऽन्यथा गिरः ॥ यद्येवं कुपिता भीरु न ते वक्ष्याम्यहं पुनः ॥ ७२ ॥ नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते ॥ शिरसा
प्रणतस्तेऽहं रचितस्ते मयाञ्जलिः ॥ ७३ ॥ दीनेनाप्यपमानेन निंदिता नमि विक्रियाम् ॥ वरमस्मि विनम्रोऽपि न त्वं देवि गुणान्विता ॥ ७४ ॥
इत्यनेकैश्चाटुवाक्यैः सूक्तैर्देवेन बोधिता ॥ कोपं तीव्रं न तत्याज सती मर्मणि घट्टिता ॥ ७५ ॥ अवष्टभ्यावथ क्षिप्त्वा पादौ शंकरपाणिना ॥
विपर्यस्तालका वेगाद्गन्तुमैच्छत शैलजा ॥ ७६ ॥ तस्यां व्रजन्त्यां कोपेन पुनराह पुरांतकः ॥ सत्यं सर्वैरवयवैः सुतेति सदृशी पितुः ॥ ७७ ॥

१ अस्मि—इति अहमर्थकं विभक्तिप्रतिरूपकमव्ययम्। २ क्षिप्य बाहुम्—इ० पा०। ३ त्वं तवाहं न ते पुनः—इ० पा०। ४ तवायं रचितोऽञ्जलिः—इ० पा०।

हिमाचलस्य शृंगैस्तैर्मेघमालाकुलैर्मनः ॥ तथा दुरवगाह्योऽसौ हृदयेभ्यस्तवाशयः ॥ ७८ ॥ काठिन्यं कष्टमस्मिंस्ते वनेभ्यो बहुधा गतम् ॥ कुटिलत्वं नदीभ्यस्ते दुःसेव्यत्वं हिमादपि ॥ ७९ ॥ संक्रांतं सर्वमेवैतत्तव देवि हिमाचलात् ॥ इत्युक्ता सा पुनः प्राह गिरिशं शैलजा तदा ॥ ॥ ८० ॥ कोपकंपितधूम्रास्या प्रस्फुरद्दशनच्छदा ॥ मा शर्वात्मोपमानेन निंद त्वं गुणिनो जनान् ॥ ८१ ॥ तवापि दुष्टसंपर्कात्संक्रांतं सर्वमेव हि ॥ व्यालेभ्योऽनेकजिह्वत्वं भस्मनः स्नेहवन्ध्यता ॥ ८२ ॥ हृत्कालुष्यं शशांकात्ते दुर्बोधत्वं वृषादपि ॥ अथवा बहुनोक्तेन अलं वाचा श्रमेण मे ॥ ८३ ॥ श्मशानवास आसीस्त्वं नग्नत्वान्न तव त्रपा ॥ निर्घृणत्वं कपालित्वादेवं कः शक्नुयात्त्वं ॥ ८४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये पार्वतीप्रकोपवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥ ॥ छ ॥

॥ ॥ नारद उवाच ॥ ॥ इत्युक्त्वा मंदिरात्तस्मान्निर्जगाम हिमाद्रिजा ॥ तस्यां व्रजंत्यां चक्रुश्च गणाः किलकिलध्वनिम् ॥ १ ॥ क्व मातर्गच्छसीत्युक्त्वा रुदन्तो धाविताः पुरः ॥ विष्टभ्य चरणौ देव्या वीरको बाष्पगद्गदम् ॥ २ ॥ प्रोवाच मातः किं न्वेतत्क्व यासि कुपिता त्वरा॥अहं त्वामनुयास्यामि मातरं स्नेहवत्सलाम् ॥ ३ ॥ नाहं सहिष्ये परुषं गिरीशस्य त्वयोज्झितः ॥ पुत्रः पारुष्यपात्रं हि भवेन्मात्रा विना पितुः ॥ ४ ॥ उन्नाम्य वदनं पश्चाद्दक्षिणेन तु पाणिना ॥ उवाच वीरकं माता मा शोकं पुत्र भावय ॥ ५ ॥ शैलाग्रात्पतितुं नैव न्याय्यं गंतुं मया सह ॥ वक्ष्यामि पुत्र ते योग्यं तत्तु कार्यं त्वया शृणु ॥ ६ ॥ कृष्णेत्युक्ता हरेणाहं निंदिता च तृणायिता ॥ साहं तपः करिष्यामि यथा गौरीत्वमाप्नुयाम् ॥ ७ ॥ गौरांगीलंपटो ह्येष यातायां मय्यनंतरम् ॥ द्वाररक्षा त्वया कार्या नित्यं रंध्रान्यवेक्षिणा ॥ ८ ॥ यथा न काचित्प्रविशेद्योषिदत्र हरांतिके ॥ दृष्ट्वा परां स्त्रियं चात्र वदेथा मम पुत्रक ॥ ९ ॥ शीघ्रमेव करिष्यामि ततो युक्तमनंतरम् ॥ एवमस्त्विति तां देवीं वीरकः प्राह सांप्रतम् ॥ १० ॥ मातुराज्ञा सुतो ह्लादप्लावितांगो गतज्वरः ॥ जगाम त्र्यक्षं संद्रष्टुं प्रणिपत्य च मातरम् ॥ ११ ॥ गजवक्त्रं ततः प्राह प्रणम्य समवस्थितम् ॥ साश्रुकंठं प्रयाचंतं नय मामपि पार्वति ॥ १२ ॥ गजवक्त्रं हि त्वां बाल मामिवोपहसिष्यति ॥ तदागच्छ मया सार्धं या गतिर्मे तवापि सा ॥ १३ ॥ पराभवाद्धि धूर्तानां मरणं

१ गिरिजा--इ० पा० । २ दोषान्वक्तुम्--इति शेषः । ३ त्वरा--त्वरयेत्यर्थः । ४ मात्रर्थे शोकं कृत्वा--शैलाग्रात् पतितुं त्वया मया सह गन्तुं न न्याय्यम् । इत्यर्थो लापनीयः । अयमेव चार्थो युज्यते--मातुः पुत्रसमाधाने । ५ तृणायिता--तृणवत्तुच्छा कृता । ६ मातुराज्ञा--सांप्रतम्--इति वीरकः प्राह--मातुराज्ञा सांप्रतं--योग्येत्यर्थः--तथैव करिष्यामि यथा भवत्याज्ञापयतीति । ७ सुतो ह्लादप्लाविताङ्गः--इत्युत्तरान्वयि । ८ उपहसिष्यति--इ०पा० ।

साधु पुत्रक ॥ एवमुक्त्वा समादाय हिमाद्रिं प्रति सा ययौ ॥ १४ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वर खण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये पार्वत्यास्तपोर्थं गमनवर्णनंनामाष्टाविंशोऽध्यायः ॥ २८ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ व्रजंती गिरिजाऽपश्यत्सखीं मातुर्महाप्रभाम् ॥ कुसुमामोदिनींनाम तस्य शैलस्य देवताम् ॥ १ ॥ सापि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा ॥ क्वपुनर्गच्छसीत्युच्चैरालिंग्योवाच देवता ॥ २ ॥ सा चास्यै सर्वमाचख्यौ शंकरात्कोपकारणम् ॥ पुनश्चोवाच गिरिजा देवतां मातृसंमताम् ॥ ३ ॥ नित्यं शैलाधिराजस्य देवता त्वमनिंदिते ॥ सर्वं च सन्निधानं च मयि चातीव वत्सला ॥ ४ ॥ तदहं संप्रवक्ष्यामि यद्विधेयं तवाधुना ॥ अथान्य स्त्रीप्रवेशे तु समीपे तु पिनाकिनः ॥ ५ ॥ त्वयाख्येयं मम शुभे युक्तं पश्चात्करोम्यहम् ॥ तथेत्युक्ते तया देव्या ययौ देवी गिरिं प्रति ॥ ६ ॥ रम्ये तत्र महाशृंगे नानाश्चर्योपशोभिते ॥ विभूषणादि संन्यस्य वृक्षवल्कलधारिणी ॥ ७ ॥ तपस्तेपे गिरिसुता पुत्रेण परिपालिता ॥ ग्रीष्मे पंचाग्निसं तप्ता वर्षासु च जलोषिता ॥ ८ ॥ स्थंडिलस्था च हेमंते निराहारा तताप सा ॥ एतस्मिन्नंतरे दैत्यो ह्यंधकस्य सुतो बली ॥ ९ ॥ ज्ञात्वा गतां गिरिसुतां पितुर्वैरमनुस्मरन् ॥ आडिर्नाम बकभ्राता रहस्यांतरप्रेक्षकः ॥ १० ॥ जिते किलांधके दैत्ये गिरिशेनामरद्विषि ॥ आडिश्चकार विपुलं तपो हरजिगीषया ॥ ११ ॥ तमागत्याब्रवीद्ब्रह्मा तपसा परितोषितः ॥ ब्रूहि किं वासुरश्रेष्ठ तपसा प्राप्तुमिच्छसि ॥ १२ ॥ ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे ॥ ॥ ब्रह्मोवाच ॥ ॥ न कश्चिच्च विना मृत्युं जंतुरासुर विद्यते ॥ १३ ॥ यतस्ततोऽपि दैत्येंद्र मृत्युः प्राप्यः शरीरिणा ॥ इत्युक्तो दैत्यसिंहस्तु प्रोवाचांबुजसंभवम् ॥ १४ ॥ रूपस्य परिवर्तो मे यदा स्यात्पद्मसंभव ॥ तदा मृत्युर्मम भवेदन्यथा त्वमरो ह्यहम् ॥ १५ ॥ इत्युक्तस्तं तथेत्याह तुष्टः कमलसंभवः ॥ इत्युक्तोऽमरतां मेने दैत्यराज्यस्थितोऽसुरः ॥ १६ ॥ आजगाम स च स्थानं तदा त्रिपुरघातिनः ॥ आगतो ददृशे तं च वीरकं द्वार्यवस्थितम् ॥ १७ ॥ तं चासौ वंचयित्वा च आडिः सर्पशरीरभृत् ॥ अवारितो वीरकेण प्रविवेश हरांतिकम् ॥ १८ ॥ भुजंगरूपं संत्यज्य बभूवाथ महासुरः ॥ उमारूपी छलयितुं गिरिशं मूढचेतनः ॥ १९ ॥ कृत्वोमायास्ततो रूपमप्रतर्क्यमनोहरम् ॥ सर्वावयवसंपूर्णं सर्वाभिज्ञानसंवृतम् ॥ २० ॥ चक्रे भगांतरे दैत्यो दंतान्वज्रोपमान्दृढान् ॥ तीक्ष्णाग्रान्बुद्धिमोहेन गिरिशं हंतुमुद्यतः ॥ २१ ॥ कृत्वोमारूपमेवं स स्थितो दैत्यो हरांतिके ॥ तां दृष्ट्वा गिरिशस्तुष्टः समालिंग्य महासुरम् ॥ २२ ॥ मन्यमानो गिरिसुतां सर्वै

१ आडिर्नाम--इ०पा० । २ आडिः--इ०पा० ।

रवयवांतरैः ॥ अपृच्छत्साधु ते भावो गिरिपुत्री ह्यकृत्रिमा ॥ २३ ॥ या त्वं मदाशयं ज्ञात्वा प्राप्तेह वरवर्णिनि ॥ त्वया विरहितः शून्यं मन्येऽस्मिन्भुवनत्रये ॥ २४ ॥ प्राप्ता प्रसन्ना या त्वं मां युक्तमेवंविधं त्वयि ॥ इत्युक्ते गूहयंश्चेष्टामुमारूप्यसुरोऽब्रवीत् ॥ २५ ॥ यातास्मि तपसश्चंडु कालीवाक्यात्तवातुलम् ॥ रतिश्च तत्र मे नाभूत्ततः प्राप्ता तवांतिकम् ॥ २६ ॥ इत्युक्तः शंकरः शंकां किंचित्प्राप्यावधारयत् ॥ कुपिता मयि तन्वंगी प्रत्यक्षा च दृढव्रता ॥ २७ ॥ अप्राप्तकामा संप्राप्ता किमेतत्संशयो मम ॥ रहसीति विचिंत्याथ अभिज्ञानाद्विचारयन् ॥ २८ ॥ नापश्यद्वामपार्श्वे तु तस्यांकं पद्मलक्षणम् ॥ लोम्नामावर्तंच रितं ततो देवः पिनाकधृक् ॥ २९ ॥ बुद्ध्वा तां दानवीं मायां किंचित्प्रहसिताननः ॥ मेढ्रे रौद्रास्त्रमाधाय चक्रे दैत्यमनोरथम् ॥ ३० ॥ स रुदन्भैरवान्नावानवसादं गतोऽसुरः ॥ अबुध्यद्वीरको नैतदसुरेंद्रनिषूदनम् ॥ ३१ ॥ हते च मारुतेनाशुगामिना नगदेवता ॥ अपरिच्छिन्नतत्त्वार्था शैलपुत्र्यां न्यवेदयत् ॥ ३२ ॥ श्रुत्वा वायुमुखाद्देवी क्रोधरक्तातिलोचना ॥ अपश्यद्वीरकं पुत्रं हृदयेन विदूयता ॥ ॥ ३३ ॥ मातरं मां परित्यज्य यस्मात्त्वं स्नेहविह्वलाम् ॥ विहितावसरः स्त्रीणां शंकरस्य रहोविधौ ॥ ३४ ॥ तस्मात्ते परुषा रूक्षा जडा हृदयवर्जिता ॥ गणेशाक्षरसदृशा शिला माता भविष्यति ॥ ३५ ॥ एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनंतरम् ॥ निर्जगाम मुखात्क्रोधः सिंहरूपी महाबलः ॥ ३६ ॥ पश्चात्तापं समाश्रित्य तया देव्या विसर्जितः ॥ स तु सिंहः करालास्यो महाकेसरकंधरः ॥ ३७ ॥ प्रोद्भूतबललांगूलदंष्ट्रोत्कटगुहामुखः ॥ व्यावृतास्यो ललज्जिह्वः क्षामकुक्षिश्चिखादिषुः ॥ ३८ ॥ तस्यास्ये वर्तितुं देवी व्यवस्यत सती तदा ॥ ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः ॥ ३९ ॥ आजगामाश्रमपदं संपदामाश्रयं ततः ॥ आगम्योवाच तां ब्रह्मा गिरिजां मृष्टया गिरा ॥ ४० ॥ किं देवि प्राप्तुकामासि किमलभ्यं ददामि ते ॥ तच्छ्रुत्वोवाच गिरिजा गुरुगौरवगर्भितम् ॥ ४१ ॥ तपसा दुष्करेणाप्तः पतित्वे शंकरो मया ॥ स मां श्यामलवर्णेति बहुशः प्रोक्तवान्भवः ॥ ४२ ॥ स्यामहं कांचनाकारा वाल्लभ्येन च संयुता ॥ भर्तुर्भूतपतेरंगे ह्येकतो निर्विशंकिता ॥ ४३ ॥ तस्यास्तद्भाषितं श्रुत्वा प्रोवाच जलजासनः ॥ एवं भवतु भूयस्त्वं भर्तुर्देहार्धधारिणी ॥ ४४ ॥ ततस्तस्याः शरीरात्तु स्त्री सुनीलांबुजत्विषा ॥ निर्गता साभवद्भीमा घंटाहस्ता त्रिलोचना ॥ ४५ ॥ नानाभरणपूर्णांगी पीतकौशेयवासिनी ॥ तामब्रवीत्ततो ब्रह्मा देवीं नीलांबुजत्विषम् ॥ ४६ ॥ अस्माद्भूधरजा देहसंपर्कात्त्वं ममाज्ञया ॥ संप्राप्ता कृतकृत्यत्वमेकानंशा पुराकृतिः ॥ ४७ ॥ य एष सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरानने ॥ स तेऽस्तु वाहनो देवि

१ भागुरिमतेन टावन्तमिदम् । सुनीलांबुजत्वचा—इ० पा० ।

केतौ चास्तु महाबलः ॥४८॥ गच्छ विंध्याचले तत्र सुरकार्यं करिष्यति ॥ अत्र शुंभनिशुंभौ च हत्वा तारकसैन्यपौ ॥४९॥ पांचालोनाम यक्षोऽयं यक्षलक्षपदानुगः ॥ दत्तस्ते किंकरो देवि महामायाशतैर्युतः ॥ ५० ॥ इत्युक्ता कौशिकी देवी तथेत्याह पितामहम् ॥ निर्गतायां च कौशिक्यां जाता स्वैराश्रिता गुणैः ॥ ५१ ॥ सर्वैः पूर्वभवोपात्तैस्तदा स्वयमुपस्थितैः ॥ उमापि प्राप्तसंकल्पा पश्चात्तापपरायणा ॥ ५२ ॥ मुहुः स्वं परिनिंदंती जगाम गिरिशांतिकम् ॥ संप्रयांतीं च तां द्वारि अपवार्य समाहितः ॥५३॥ रुरोध वीरको देवीं हेमवेत्रलताधरः ॥ तामुवाच च कोपेन तिष्ठ तिष्ठ क्व यासि च ॥५४॥ प्रयोजनं न तेऽस्तीह गच्छ यावन्न भर्त्स्यसे ॥ देव्या रूपधरो दैत्यो देवं वंचयितुं त्विह ॥ ५५ ॥ प्रविष्टो न च दृष्टोऽसौ स च देवेन घातितः॥घातिते चाहमाक्षिप्तो नीलकण्ठेन धीमता॥५६॥कापि स्त्री नापि मोक्तव्या त्वया पुत्रेति सादरम् ॥ तस्मात्त्वमत्र द्वारिस्था वर्षपूगान्यनेकशः ॥५७॥भविष्यसि न चाप्यत्र प्रवेशं लप्स्यसे व्रज ॥ एका मे प्रविशेदत्र माता या स्नेहवत्सला॥५८॥नगाधिराजतनया पार्वती रुद्रवल्लभा ॥ इत्युक्ता तु ततो देवी चिंतयामास चेतसा ॥ ५९ ॥ न सा नारी तु दैत्योऽसौ वायोर्नैवावभासत ॥ वृथैव वीरकः शप्तो मया क्रोधपरीतया ॥६०॥ अकार्यं क्रियते मूढैः प्रायः क्रोधसमन्वितैः ॥ क्रोधेन नश्यते कीर्तिः क्रोधो हंति स्थिरां श्रियम् ॥ ६१ ॥ अपरिच्छिन्नसर्वार्था पुत्रं शापितवत्यहम् ॥ विपरीतार्थबोद्धृणां सुलभा विपदो यतः ॥६२॥ संचिंत्यैवमुवाचेदं वीरकं प्रति शैलजा ॥ अधो लज्जाविकारेण वदनेनांबुजत्विषा ॥ ६३ ॥ अहं वीरक ते माता मा तेऽस्तु मनसो भ्रमः ॥ शंकरस्यास्मि दयिता सुता तु हिमभूभृतः॥६४॥मम गात्रस्थितिभ्रांत्या मा शंकां पुत्र भावय ॥ तुष्टेन गौरता दत्ता ममेयं पद्मयोनिना ॥ ६५ ॥ मया शप्तोऽस्यविदिते वृत्तांते दैत्यनिर्मिते ॥ ज्ञात्वा नारीप्रवेशं तु शंकरे रहसि स्थिते ॥ ६६ ॥ न निवर्तयितुं शक्यः शापः किं तु ब्रवीमि ते ॥ मानुष्यां तु शिलायां त्वं शिलादात्संभविष्यसि ॥ ६७ ॥ पुण्ये चाप्यर्बुदारण्ये स्वर्गमोक्षप्रदे नृणाम् ॥ अचलेश्वरलिंगं तु वर्तते यत्र वीरक ॥ ६८ ॥ वाराणस्यां विश्वनाथसमं तत्फलदं नृणाम् ॥ प्रभासस्य च यात्राभिर्दशभिर्यत्फलं नृणाम् ॥ ६९ ॥ तदेकयात्रया प्रोक्तमर्बुदस्य महागिरेः ॥ यत्र तप्त्वा तपो मर्त्या देहधातून्विहाय च ॥ ७० ॥ संसारी न पुनर्भूयान्महेश्वरवचो यथा ॥ अर्बुदो यदि लभ्येत सेवितुं जन्मदुःखितैः ॥ ७१ ॥ वाराणसीं च केदारं किं स्मरंति वृथैव ते ॥ तत्राराध्य भवं देवं भवान्नन्दीति नामभृत् ॥ ७२ ॥ शीघ्रमेष्यसि चात्रैव प्रतीहारत्वमाप्स्यसि ॥ एवमुक्ते हृष्टरोमा वीरकः प्रणिपत्य ताम् ॥ ७३ ॥ संस्तूय विविधैर्वाक्यैर्मातरं समभाषत ॥ धन्योऽहं देवि यो लप्स्ये

मानुष्यमतिदुर्लभम् ॥ ७४ ॥ शापोऽनुग्रहरूपोऽयं विशेषादर्बुदाचले ॥ समीपे यस्य पुण्योऽस्ति महीसागरसंगमः ॥ ७५ ॥ ऊधः पृथिव्या देशोऽयं यो गिरेश्चार्णवांतरे ॥ तत्र गत्वा महत्पुण्यमवाप्य भवभक्तितः ॥ ७६ ॥ पुनरेष्यामि भो मातरित्युक्त्वाभूच्छिलासुतः ॥ देवी च प्रविवेशाथ भवनं शशिमौलिनः ॥ ७७ ॥ ॥ इत्यार्बुदाख्यानम् ॥ ॥ ततो दृष्ट्वा च तां प्राह धिग्नार्य इति त्र्यंबकः ॥ ७८ ॥ सा च प्रणम्य तं प्राह सत्यमेतन्न मिथ्यया ॥ जडः प्रकृतिभागोयं नार्यश्चार्हंति निन्दनाम् ॥ ७९ ॥ पुरुषाणां प्रसादेन मुच्यंते भवसागरात् ॥ ततः प्रहृष्टस्तामाह हरो योग्याऽधुना शुभे ॥८०॥ पुत्रं दास्यामि येन त्वं ख्यातिमाप्स्यसि शोभने ॥ ततो रेमे हि देव्या स नानाश्चर्यालयो हरः ॥८१॥ ततो वर्षसहस्रेषु देवास्त्वरितमानसाः ॥ ज्वलनं नोदयामासुर्ज्ञातुं शंकरचेष्टितम् ॥८२॥ द्वारि स्थितं प्रतीहारं वंचयित्वा च पावकः ॥ पारावतस्य रूपेण प्रविवेश हरांतिकम् ॥ ८३ ॥ ददृशे तं च देवेशो विनतां प्रेक्ष्य पार्वतीम् ॥ ततस्तं ज्वलनं प्राह नैतद्योग्यं त्वया कृतम् ॥८४॥ यदिदं क्षुभितं स्थानान्मम तेजो ह्यनुत्तमम् ॥ गृहाण त्वं सुदुर्बुद्धे नो वा धक्ष्यामि त्वां रुषा ॥ ८५ ॥ भीतस्ततोऽसौ जग्राह सर्वदेवमुखं च सः ॥ तेन ते वह्निसहिता विह्वलाश्च सुराः कृताः ॥ ८६ ॥ विपाट्य जठराण्येषां वीर्यं माहेश्वरं ततः ॥ निष्क्रांतं तत्सरो जातं पारदं शतयोजनम् ॥ ८७ ॥ वह्निश्च व्याकुलीभूतो गंगायां मुमुचे सकृत् ॥ दह्यमाना च सा देवी तरंगैर्बहिरुत्सृजत् ॥ ८८ ॥ जातस्त्रिभुवनख्यातस्तेन च श्वेतपर्वतः ॥ एतस्मिन्नंतरे वह्निराहूतश्च हिमालये ॥ ८९ ॥ सप्तर्षिभिर्वह्निहोमं कुर्वद्भिर्मंत्रवीर्यतः ॥ आगत्य तत्र जग्राह वह्निर्भागं च तं हुतम् ॥ ९० ॥ गतेऽह्नचत्वस्मिंश्च तत्रस्थः पत्नी स्तेषामपश्यत ॥ सुवर्णकदलीस्तंभनिभास्ताश्चंद्रलेखया ॥ ९१ ॥ पश्यमानः प्रफुल्लाक्षो वह्निः कामवशं गतः ॥ स भूयश्चिंतयामास न न्याय्यं क्षुभितोऽस्मि यत् ॥ ९२ ॥ साध्वीः पत्नीर्द्विजेंद्राणामकामाः कामयाम्यहम् ॥ पापमेतत्कर्म चोग्रं नश्यामि तृणवत्स्फुटम् ॥ ९३ ॥ कृत्वैतन्नश्यते कीर्तिर्यावदाचंद्रतारकम् ॥ एवं संचिंत्य बहुधा गत्वा चैव वनांतरम् ॥ ९४ ॥ संयन्तुं नाभवच्छक्त उपायैर्बहुभिर्मनः ॥ ततः स कामसंतप्तो मूर्छितः समपद्यत ॥ ९५ ॥ ततः स्वाहा च भार्यास्य बुबुधे तद्विचेष्टितम् ॥ ज्ञात्वा च चिंतयामास प्रहृष्टा मनसि स्वयम् ॥ ९६ ॥ स्वां भार्यामथ मां त्यक्त्वा बहुवासादवज्ञया ॥ भार्याः कामयते नूनं सप्तर्षीणां महात्मनाम् ॥ ९७ ॥ तदासां रूपमाश्रित्य रमिष्ये तेन चाप्यहम् ॥ ततस्त्वंगिरसो भार्या शिवानामेति शोभना ॥ ९८ ॥ तस्या रूपं समाधाय पावकं प्राप्य साब्रवीत् ॥ मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि ॥ ९९ ॥ न

१ गोरूपधारिण्याः पृथिव्याः ऊधःस्थानीयोऽयमर्बुदाचलप्रदेशः । २ मिथ्यया मिथ्या--इत्यर्थः । आर्षोऽयं प्रयोगः । ३ पारापतस्य--इ० पा० ।

चेत्करिष्यसे देव मृतां मामुपधारय ॥ अहमंगिरसो भार्या शिवानाम हुताशन ॥ १०० ॥ सर्वाभिः सहिता प्राप्ता ताश्च यास्यंत्यनुक्रमात् ॥ अस्माकं त्वं प्रियो नित्यं त्वच्चित्ताश्च वयं तथा ॥१०१॥ ततः स कामसंततः संबभूव तया सह ॥ प्रीते प्रीता च सा देवी निर्जगाम वनांतरात् ॥ ॥१०२॥ चिंतयंती ममेदं चेद्रूपं द्रक्ष्यंति कानने ॥ ते ब्राह्मणीनामनृतं दोषं वक्ष्यंति पावकात् ॥१०३॥ तस्मादेतद्रक्षमाणा गरुडी संभवाम्यहम् ॥ सुपर्णा सा ततो भूत्वा ददृशे श्वेतपर्वतम् ॥ १०४ ॥ शरस्तंबैः सुसंपृक्तं रक्षोभिश्च पिशाचकैः ॥ सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ॥ १०५ ॥ प्राक्षिपत्कांचने कुंडे शुक्रं तद्धारणेऽक्षमा ॥ शिष्टानामपि देवीनां सप्तर्षीणां महात्मनाम् ॥ १०६ ॥ पत्नीसरूपतां कृत्वा कामयामास पावकम् ॥ दिव्यं रूपमरुंधत्याः कर्तुं न शकितं तया ॥ १०७ ॥ तस्यास्तपःप्रभावेण भर्तुः शुश्रूषणेन च ॥ षट्कृत्वस्तत्तु निक्षिप्तमग्निरेतः कुरूद्वह ॥ ॥ १०८ ॥ कुंडेऽस्मिंश्चैत्रबहुले प्रतिपद्येव स्वाहया ॥ ततश्च पावको दुःखाच्छुशोच च मुमोह च ॥ १०९ ॥ आः पापं कृतमित्येव देहन्यासेऽ करोन्मतिम् ॥ ततस्तं खेचरी वाणी प्राह मा मरणं कुरु ॥ ११० ॥ भाव्यमेतच्च भाव्यर्थात्को हि पावक मुच्यते ॥ भाव्यर्थेनापि यत्ते च परदारोप सेवनम् ॥ १११ ॥ कृतं तच्चेतसा तेन त्वामजीर्णं प्रवेक्ष्यति ॥ श्वेतकेतोर्महायज्ञे घृतधाराभितर्पितम् ॥ ११२ ॥ शोकं च त्यज नैतास्ताः स्वाहे वेयं तव प्रिया ॥ श्वेतपर्वतकुंडस्थं पुत्रं त्वं द्रष्टुमर्हसि ॥ ततो वह्निस्तत्र गत्वा ददृशे तनयं प्रभुम् ॥ ११३ ॥ ॥ अर्जुन उवाच ॥ ॥ कस्मात्स्वाहा करोद्रूपं षण्णां तासां महामुने ॥ ११४ ॥ यत्ता भर्तृपराः साध्व्यस्तपस्विन्योग्निसंनिभाः ॥ न बिभेति च किं ताभ्यः षड्भ्यः स्वाहाऽपराधिनी ॥ भर्तृभक्त्या जगदग्धुं यतः शक्ताश्च ता मुने ॥११५॥ ॥ नारद उवाच ॥ ॥ सत्यमेतत्कुरुश्रेष्ठ शृणु तच्चापि कारणम् ॥ येन तासां कृतं रूपं न वा शापं ददुश्च ताः ॥११६॥ यत्र तद्वह्निना क्षिप्तं रुद्रतेजः सकृत्पुरा ॥ गंगायां तत्र सस्नुस्ताः षट्पत्न्योऽज्ञानभावतः ॥ ११७ ॥ ततस्ता विह्वलीभूतास्तेजसा तेन मोहिताः ॥ लज्जया च स्वभर्तॄणां गंगातीरस्थिता रहः ॥ ११८ ॥ एतदंतरमालोक्य चिकीर्षंती मनीषितम् ॥ स्वाहा शरीरमाविश्यतासां तेजो जहार तत् ॥ ११९ ॥ चिक्रीड वह्निजायापि यथा ते कथितं मया ॥ १२० ॥ उपकारमिमं ताभिः स्मरंतीभिश्च भारत ॥ न शप्ता सा यतः शापो न देयश्चोपकारिणि ॥ १२१ ॥ ततः सप्तर्षयो ज्ञात्वा ज्ञानेनाशुचितां गताः ॥ तत्यजुः षट् तदा पत्नीर्विना देवीमरुंधतीम् ॥ १२२ ॥ विश्वामित्रस्तु भगवान्कुमारं शरणं गतः ॥ स्तवं दिव्यं संप्रचक्रे महासेनस्य चापि सः ॥ १२३ ॥ अष्टोत्तरशतं नाम्नां शृणु त्वं तानि फाल्गुन ॥ जपेन

१ त्वयि ताश्चैतदाचरा—इ०, त्वच्चित्ताश्चैतदाचरः—इ० च पा० । २ केऽपि जनाः—इत्यध्याहारः ।

षेपां पापानि यांति ज्ञानमवाप्नुयात् ॥ १२४ ॥ त्वं ब्रह्मवादी त्वं ब्रह्मा ब्रह्म ब्राह्मणवत्सलः ॥ ब्रह्मण्यो ब्रह्मदेवश्च ब्रह्मदो ब्रह्मसंग्रहः ॥ १२५ ॥ त्वं
परं परमं तेजो मंगलानां च मंगलम् ॥ अप्रमेयगुणश्चैव मंत्राणां मंत्रगो भवान् ॥ १२६ ॥ त्वं सावित्रीमयो देव सर्वत्रैवापराजितः ॥ मंत्रः शर्वा
त्मको देवः पडक्षरवतां वरः ॥ १२७ ॥ माली मौली पताकी च जटी मुंडी शिखंड्यपि ॥ कुण्डली लांगली बालः कुमारः प्रवरो वरः ॥ १२८ ॥
गवांपुत्रः सुरारिघ्नः संभवो भवभावनः ॥ पिनाकी शत्रुहा श्वेतो गूढः स्कन्दः कराग्रणीः ॥ १२९ ॥ द्वादशो भूर्भुवो भावी भुवः पुत्रो नमस्कृतः ॥
नागराजः सुधर्मात्मा नाकपृष्ठः सनातनः ॥ १३० ॥ त्वं भर्ता सर्वभूतात्मा त्वं त्राता त्वं सुखावहः ॥ शरदक्षः शिखी जेता पड्वक्त्रो भयना
शनः ॥ १३१ ॥ हेमगर्भो महागर्भो जयश्च विजयेश्वरः ॥ त्वं कर्ता त्वं विधाता च नित्यो नित्यारिमर्दनः ॥ १३२ ॥ महासेनो महातेजा वीरसे
नश्च भूपतिः ॥ सिद्धासनः सुराध्यक्षो भीमसेनो निरामयः ॥ १३३ ॥ शौरिर्यदुर्महातेजा वीर्यवान्सत्यविक्रमः ॥ तेजोगर्भोऽसुररिपुः सुरमूर्तिः
सुरोर्जितः ॥ १३४ ॥ कृतज्ञो वरदः सत्यः शरण्यः साधुवत्सलः ॥ सुव्रतः सूर्यसंकाशो वह्निगर्भः कणो भुवः ॥ १३५ ॥ पिप्पली शीघ्रगो रौद्री
गांगेयो रिपुदारणः ॥ कार्त्तिकेयः प्रभुः क्षंता नीलदंष्ट्रो महामनाः ॥ १३६ ॥ निग्रहो निग्रहाणां च नेता त्वं सुरनंदनः ॥ प्रग्रहः परमानंदः क्रोध
घ्नस्तार उच्छ्रितः ॥ १३७ ॥ कुक्कुटी बहुली दिव्यः कामदो भूरिवर्धनः ॥ अमोघोऽमृतदो ह्यग्निः शत्रुघ्नः सर्वमोदनः ॥ १३८ ॥ अव्ययो ह्यमरः
श्रीमानुन्नतो ह्यग्निसंभवः ॥ पिशाचराजः सूर्याभः शिवात्मा शिवनंदनः ॥ १३९ ॥ अपारपारो दुर्ज्ञेयः सर्वभूतहिते रतः ॥ अग्राह्यः कारणं कर्ता
परमेष्ठी परं पदम् ॥ १४० ॥ अचिंत्यः सर्वभूतात्मा सर्वात्मा त्वं सनातनः ॥ एवं स सर्वभूतानां संस्तुतः परमेश्वरः ॥ १४१ ॥ नाम्नामष्टशतेनायं
विश्वामित्रमहर्पिणा ॥ प्रसन्नमूर्तिराहेदं मुनींद्रं व्रियतामिति ॥ १४२ ॥ मम त्वया द्विजश्रेष्ठ स्तुतिरेषा निरूपिता ॥ भविष्यति मनोऽभीष्टप्राप्तये
प्राणिनां भुवि ॥ १४३ ॥ विवर्धते कुले लक्ष्मीस्तस्य यः प्रपठेदिमम् ॥ न राक्षसाः पिशाचा वा न भूतानि न चापदः ॥ १४४ ॥ विघ्नकारीणि
तद्गेहे यत्रैव संस्तुवंति माम् ॥ दुःस्वप्नं च न पश्येत्स बद्धो मुच्येत बंधनात् ॥ १४५ ॥ स्तवस्यास्य प्रभावेण दिव्यभावः पुमान्भवेत् ॥ त्वं च मां
श्रुतिसंस्कारैः सर्वैः संस्कर्तुमर्हसि ॥१४६॥ संस्काररहितं जन्म यतश्च पशुवत्स्मृतम् ॥ त्वं च मद्वरदानेन ब्रह्मर्षिश्च भविष्यसि ॥१४७॥ ततो मुनिस्तस्य

१ सर्वात्मकः--इ० पा० । २ वृन्दी--इ० पा० । ३ पटुः--इ० पा० । ४ अरुणो भुवः--इ०, कणोऽब्जकः--इ० च पा० । ५ सिद्धगः--इ० पा० । ६ सर्वबोधनः--इ० पा० । ७ विघ्नकारीणि--इत्यत्र पुंनपुंसकयोर्मध्ये नपुंसकैकशेषः परनिपातान्नपुंसकस्य ।

चक्रे जातकर्मादिकाः क्रियाः॥पौरोहित्यं तथा भेजे स्कंदस्यैवाज्ञया प्रभुः॥ १४८॥ततस्तं वह्निरभ्यागाद्ददर्श च सुतं गुहम् ॥ षट्छीर्षं द्विगुणश्रोत्रं द्वादशाक्षिभुजक्रमम्॥ १४९॥ एकग्रीवं चैककायं कुमारं स व्यलोकयत् ॥ कलिलं प्रथमे चाह्नि द्वितीये व्यक्तितां गतम् ॥ १५०॥ तृतीयायां शिशुर्जातश्चतुर्थ्यां पूर्ण एवच ॥ पंचम्यां संस्कृतः सोऽभूत्पावकं चाप्यपश्यत ॥ १५१॥ ततस्तं पावकः पार्थ आलिलिंग चुचुंब च ॥ पुत्रेति चोक्त्वा तस्मै स शक्त्यस्त्रम ददात्स्वयम् ॥ १५२॥ स च शक्तिं समादाय नमस्कृत्य च पावकम् ॥ श्वेतशृंगं समारूढो मुखैः पश्यन्दिशो दश ॥ १५३॥ व्यनदद्भैरवं नादं त्रासयन्सासुरं जगत् ॥ ततः श्वेतगिरेः शृंगं रक्षःपद्मदशावृतम् ॥ १५४ ॥ बिभेद तरसा शक्त्या शतयोजनविस्तृतम् ॥ तदेकेन प्रहारेण खंडशः पतितं भुवि ॥ १५५ ॥ चूर्णीकृता राक्षसास्ते सततं धर्मशत्रवः ॥ ततः प्रव्यथिता भूमिर्व्यशीर्यत समंततः ॥ १५६ ॥ भीताश्च पर्वताः सर्वे चुक्रुशुः प्रलया यथा ॥ भूतानि तत्र सुभृशं त्राहित्राहीति चोज्जगुः ॥ १५७ ॥ एवं श्रुत्वा ततो देवा वासवं सह तेऽब्रुवन् ॥ येनैकेन प्रहारेण त्रैलोक्यं व्याकुलीकृतम् ॥ १५८ ॥ स संक्रुद्धः क्षणाद्विश्वं संहरिष्यति वासव ॥ वयं च पालनार्थाय सृष्टा देवेन वेधसा ॥ १५९ ॥ तच्च त्राणं सदा कार्यं प्राणैः कंठगतैरपि ॥ अस्माकं पश्यतामेवं यदि संक्षोभ्यते जगत् ॥ १६० ॥ धिक्ततो जन्म वीराणां श्लाघ्यं हि मरणं क्षणात् ॥ तदस्माभिः सहैनं त्वं क्षंतुमर्हसि वासव ॥ १६१ ॥ एवमुक्तस्तथेत्युक्त्वा देवैः सार्धं तमभ्ययात् ॥ विधित्सुस्तस्य वीर्यं स शक्रस्तूर्णतरं तदा ॥ १६२ ॥ उग्रं तच्च महावेगं देवानीकं दुरासदम् ॥ नर्दमानं गुहः प्रेक्ष्य ननाद जलधिर्यथा ॥ १६३ ॥ तस्य नादेन महता समुद्भूतोदधिप्रभम् ॥ बभ्राम तत्रतत्रैव देवसैन्यमचेतनम् ॥ १६४ ॥ जिघांसूनुपसंप्राप्तान्देवान्दृष्ट्वा स पावकिः ॥ विससर्ज मुखात्तत्र प्रवृद्धाः पावकार्चिषः ॥ १६५॥ अदहद्देवसैन्यानि चेष्टमानानि भूतले ॥ ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः॥ १६६॥ प्रच्युताः सहसा भांति दिवस्तारागणा इव ॥ दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ॥ १६७ ॥ देवा वज्रधरं प्रोचुस्त्यज वज्रं शतक्रतो ॥ उक्तो देवैस्तदा शक्रः स्कंदे वज्रमवासृजत् ॥ १६८॥ तद्विसृष्टं जघानाशु पार्श्वं स्कंदस्य दक्षिणम् ॥ बिभेद च कुरुश्रेष्ठ तदा तस्य महात्मनः ॥ १६९ ॥ वज्रप्रहारात्स्कंदस्य संजातः पुरुषोऽपरः ॥ युवा कांचनसन्नाहः शक्तिधृग्दिव्यकुंडलः ॥ १७०॥ शाख इत्यभिविख्यातः सोपि व्यनदद्भुतम् ॥ ततश्चेंद्रः पुनः क्रुद्धो हृदि स्कंदं व्यदारयत् ॥ १७१ ॥ तत्रापि तादृशो जज्ञे नैगमेय इति श्रुतः ॥ ततो विनद्य स्कंदाद्याश्चत्वारस्तं तदाभ्ययुः ॥ १७२ ॥ तदेंद्रो वज्रमुत्सृज्य प्रांजलिः शरणं ययौ ॥ तस्याभयं ददौ स्कंदः

१ तृतीये दिने--इत्यर्थः । एवमेव चतुर्थ्यां, पंचम्यामित्यनयोः चतुर्थपंचमदिनयोरित्यर्थो बोध्यः । २ देवा वज्रधरं त्यक्त्वा ततः शान्तिमुपागताः--इ० पाठान्तरम् । परं त्वेतेन सम्यग्वक्तव्यार्थबोधो न भवति ।

ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ वज्रप्रहारात्कन्याश्च जज्ञिरेऽस्य महाबलाः ॥ १७४ ॥ या हरंति
सद्धसैन्यस्य सत्तमः ॥ १७३ ॥ ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ १७५॥ आया पलाला मित्रा च सप्तैताः शिशुमातरः ॥ एतासां
शिशूञ्जातान्गर्भस्थांश्चैव दारुणाः ॥ काकी च हिलिमा चैव रुद्रा च वृषभा तथा ॥ १७६॥ आया पलाला मित्रा च सप्तैताः शिशुमातरः ॥ १७७ ॥
वीर्यसंपन्नः शिशुश्चाभूत्सुदारुणः ॥ १७६ ॥ स्कंदप्रसादजः पुत्रो लोहिताक्षो भयंकरः ॥ एष वीराष्टकः प्रोक्तः स्कंदमातृगणोऽद्भुतः ॥ १७७ ॥
पूजनीयः सदा भक्त्या सर्वापस्मारशांतिदः ॥ उपातिष्ठत्ततः स्कंदं हिरण्यकवचस्रजम् ॥ १७८ ॥ लोहितांबरसंवीतं त्रैलोक्यस्यापि सुप्रभम् ॥
युवानं श्रीः स्वयं भेजे तं प्रणम्य शरीरिणी ॥१७९॥ श्रिया जुष्टं च तं प्राहुः सर्वे देवाः प्रणम्य वै ॥ हिरण्यवर्ण्ण भद्रं ते लोकानां शंकरो भव ॥१८०॥
भवानिंद्रोऽस्तु नो नाथ त्रैलोक्यस्य हिताय वै॥१८१॥ ॥ स्कंद उवाच ॥ ॥ किमिंद्रः सर्वलोकानां करोतीह सुरोत्तमाः॥कथं देवगणांश्चैव पाति नित्यं
सुरेश्वरः ॥१८२॥ ॥ देवा ऊचुः ॥ ॥ इंद्रो दिशति भूतानां बलं तेजः प्रजाः सुखम् ॥ प्रज्ञां प्रयच्छति तथा सर्वान्दायान्सुरेश्वरः ॥१८३॥ दुर्वृत्तानां स
हरति वृत्तस्थानां प्रयच्छति ॥ अनुशास्ति च भूतानि कार्येषु बलवत्तरः॥१८४॥ असूर्ये च भवेत्सूर्यस्तथाऽचंद्रे च चंद्रमाः ॥ भवत्यग्निश्च वायुश्च पृथि
व्यां जीवकारणम् ॥ १८५ ॥ एतदिंद्रेण कर्तव्यमिंद्रो हि विपुलं बलम् ॥ त्वं चेंद्रो भव नो वीर तारकं जहि ते नमः ॥ १८६ ॥ ॥ इंद्र उवाच ॥ ॥
त्वं भवेंद्रो महाबाहो सर्वेषां नः सुखावहः ॥ प्रणम्य प्रार्थये स्कंद तारकं जहि रक्ष नः ॥ १८७ ॥ ॥ स्कंद उवाच ॥ ॥ शाधि त्वमेव त्रैलोक्यं
भवानिंद्रोस्तु सर्वदा ॥ करिष्ये चेंद्रकर्माणि न ममेंद्रत्वमीप्सितम् ॥ १८८ ॥ त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ॥ करोमि किं च ते शक्र
शासनं ब्रूहि तन्मम ॥ १८९ ॥ ॥ इंद्र उवाच ॥ ॥ यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया ॥ अभिषिच्यस्व देवानां सैनापत्ये महाबल ॥
अहमिंद्रो भविष्यामि तव वाक्याद्यशोऽस्तु ते ॥ १९० ॥ ॥ स्कंद उवाच ॥ ॥ दानवानां विनाशाय देवानामर्थसिद्धये ॥ गोब्राह्मणस्य
चार्थाय एवमस्तु वचस्तव ॥ १९१ ॥ इत्युक्ते सुमहानादः सुराणामभ्यजायत ॥ भूतानां चापि सर्वेषां त्रैलोक्याकंपकारकः ॥ १९२ ॥ जयेति
तुष्टुवुश्चैनं वादित्राण्यभ्यवादयन् ॥ ननृतुस्तुष्टुवुश्चैनं कराघातांश्च चक्रिरे ॥ १९३ ॥ तेन शब्देन महता विस्मिता नगनंदिनी ॥ शंकरं प्राह को
देव नादोऽयमतिवर्तते ॥ १९४ ॥ ॥ रुद्र उवाच ॥ ॥ अद्य नूनं प्रहृष्टानां सुराणां विविधा गिरः ॥ श्रूयंते च तथा देवि यथा जातः सुतस्तव
॥ १९५ ॥ गवां च ब्राह्मणानां च साध्वीनां च दिवौकसाम् ॥ मार्जयिष्यति चाश्रूणि पुत्रस्ते पुण्यवत्यपि ॥ १९६ ॥ एवं वदति सा देवी द्रष्टुं

१ ललिमा–इ० पा० । २ नः–अस्माकम्–इत्यर्थः ।

तेमुत्सुकाऽभवत् ॥ शंकरश्च महातेजाः पुत्रस्नेहाधिको यतः ॥ १९७ ॥ वृषभं तत आरुह्य देव्या सह समुत्सुकः ॥ सगणो भव आगच्छत्पुत्रदर्शनलालसः ॥ १९८ ॥ ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् ॥ अभिगच्छ महादेवं पितरं मातरं प्रभो ॥ १९९ ॥ अनयोर्वीर्यसंयोगात्तवोत्पत्तिस्तु प्राथमी ॥ एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ॥ २०० ॥ अपूजयदमेयात्मा पितरं मातरं च ताम् ॥ ततस्तमालिंग्य सुतं चिरं संयोज्य चाशिषः ॥ २०१ ॥ चिरं जहृषतुश्चोभौ पार्वतीपरमेश्वरौ ॥ सिद्धसारस्य तत्त्वं च ददौ तुष्टोऽस्य शंकरः ॥ २०२ ॥ देवी प्रकृतिमोक्षं च तुष्टा हर्षपरिप्लुता ॥ एतस्मिन्नेव काले तु षड्देव्यस्तं समागमन् ॥ २०३ ॥ ऋषिभिस्ताः परित्यक्तास्तं पुत्रेति जगुस्तदा ॥ पार्वती च ततः प्राह मम पुत्रो न वस्त्वयम् ॥ २०४ ॥ स्वाहा ममेति च प्राह पावकश्च ममेति च ॥ रुद्रो ममेति च प्राह मम देवनदीति च ॥ २०५ ॥ चक्रुस्ते कलहं घोरं विवदंतः परस्परम् ॥ पुत्रस्नेहो हि बलवान्पार्थ किंकिं न कारयेत् ॥ २०६ ॥ ततस्तान्प्रहसन्प्राह विवादो युज्यते न च ॥ सर्वेषां वो गुहः पुत्रो मत्तो वै व्रियतां वरः ॥ २०७ ॥ ततः प्राहुश्च षड्देव्यः स्वर्गो नो ह्यक्षयो भवेत् ॥ तथेति ता गुहः प्राह शक्रस्तत्रांतरेऽब्रवीत् ॥ २०८ ॥ रोहिण्याश्चानुजा स्कंद स्पर्धमानाभिजित्खला ॥ इच्छंती ज्येष्ठतां देवी पृथक्त्वं च तपोरता ॥ २०९ ॥ ततः प्रभृति मूढोऽस्मि तत्स्थाने स्थापय प्रभो ॥ ततस्तथेति च प्रोक्ते कृत्तिकास्ता दिवं गताः ॥ २१० ॥ नक्षत्रं सप्तशीर्षाभं भाति तद्वह्निदैवतम् ॥ अथैनमब्रवीत्स्वाहा प्रिया नाहं महाचिषः ॥ तदग्नेः प्रियतां देहि सहवासं सदैव च ॥ २११ ॥ ॥ स्कंद उवाच ॥ ॥ हव्यं कव्यं च यत्किंचिद्विजा होष्यंति पावके ॥ २१२ ॥ तत्ते नाम्ना प्रदास्यंति वासः सार्धं भवेत्तव ॥ पावकः प्रार्थयामास यज्ञभागान्पुनः सुतान् ॥ २१३ ॥ स चाप्याहाद्यप्रभृति यज्ञभागानवाप्नुहि ॥ इतरे प्रार्थयामासुः ख्यातो नस्त्वं सुतो भव ॥ २१४ ॥ एवमेवेति तानाह स्कंदस्तद्धि सुदुर्लभम् ॥ ततस्तं योगिनः सर्वे संभूय सनकादयः ॥ अभ्यषिंचन्गिरौ तस्मिन्योगिनामाधिपत्यके ॥ २१५ ॥ योगीश्वरमिति प्राहुस्ततस्तं योगिनस्तथा ॥ जहृषुर्देवताश्चैव नानावाद्यान्यवादयन् ॥ ॥ २१६ ॥ अभिषिक्तेन तेनासौ शुशुभे श्वेतपर्वतः ॥ आदित्येनेवांशुमता सुरम्य उदयाचलः ॥२१७॥ ततो देवाः सगन्धर्वा नृत्यंत्यप्सरसस्तथा ॥ हृष्टानां सर्वभूतानां श्रूयते निनदो महान् ॥ २१८ ॥ एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम् ॥ प्रहृष्टं प्रेक्ष्य तं स्कन्दं न च तृप्यति दर्शनात् ॥ २१९ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये स्कन्दकुमारस्य सर्वदेवसैनाधिपत्याभिषेकोत्सववर्णनंनामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततः स्कन्दः सुरैः सार्धं श्वेतपर्वत

१ द्रष्टुमत्युत्सुकाभवत्—इ० पा० । २ प्रपञ्चमोक्षं च—इ० पा० ।

मस्तकात् ॥ उत्तीर्य तारकं हन्तुं दक्षिणां स दिशं ययौ ॥ १ ॥ ततः सरस्वतीतीरे यानि भूतानि नारद ॥ ग्रहाश्चोपग्रहाश्चैव वेतालाः शाकिनी गणाः ॥ २ ॥ उन्मादा ये ह्यपस्माराः पलादाश्च पिशाचकाः ॥ देवैस्तेषामाधिपत्ये सोऽभ्यपिच्यत पावकिः ॥ ३ ॥ यथा ते नैव मर्यादां संत्यजंति दुराशयाः ॥ एतैस्तस्मात्समाक्रांतः शरण्यं पावकिं व्रजेत् ॥ ४ ॥ अप्रकीर्णेन्द्रियं दांतं शुचिं नित्यमतंद्रितम् ॥ आस्तिकं स्कन्दभक्तं च वर्जयंति ग्रहादिकाः ॥ ५ ॥ महेश्वरं च ये भक्ता भक्ता नारायणं च ये ॥ तेषां दर्शनमात्रेण नश्यंते ते विदूरतः[1] ॥ ६ ॥ ततः सर्वैः सुरैः सार्धं महीतीरं ययौ गुहः ॥ तत्र देवैः प्रकथितं महीमाहात्म्यमुत्तमम् ॥ ७ ॥ शृण्वन्विसिष्मिये स्कन्दः प्रणनाम च तां नदीम्[2] ॥ ततो महीदक्षिणतस्तीरमाश्रित्य धिष्ठितम् ॥८॥ प्रणम्य शक्रप्रमुखा गुहं वचनमब्रुवन् ॥ अभिषिक्तं विना स्कन्द सेनापतिमकल्मषम् ॥९॥ न शर्म लभते सेना तस्मात्त्वमभिषेचय ॥ महीसागरसंभूतैः पुण्यैश्चापि शिवैर्जलैः ॥१०॥ अभिषेक्ष्यामहे त्वां च तत्र नो द्रष्टुमर्हसि ॥ यथा हस्तिपदे सर्वपदांतर्भाव इष्यते ॥ ११ ॥ सर्वतीर्थान्तरस्थानं तथार्णवमहीजले ॥ सर्वभूतमयो यद्वत्त्र्यंबकः परिकीर्त्यते ॥ १२ ॥ सर्वतीर्थमयस्तद्वन्महीसागरसंगमः ॥ अर्धनारीश्वरं रूपं यथा रुद्रस्य सर्वदम् ॥१३॥ तथा महीसमुद्रस्य स्नानं सर्वफलप्रदम् ॥ येनात्र पितरः स्कन्द तर्पिता भक्तिभावतः ॥१४॥ तेन सर्वेषु तीर्थेषु तर्पिता नात्र संशयः ॥ न चैतद्धृदि मंतव्यं क्षारमेतज्जलं हि यत् ॥ १५ ॥ यथा हि कटुतिक्तादि गवा ग्रस्तं हि क्षीरदम् ॥ एवमेतत्त्विदं तोयं पितॄणां तृप्तिदायकम् ॥ १६ ॥ एवं ब्रुवत्सु देवेषु कपिलोऽपि मुनिर्जगौ ॥ सत्यमेतदुमापुत्र सर्वतीर्थमयी मही ॥ १७ ॥ कर्दमो यस्त्वहमपि[3] ज्ञात्वा तीर्थमहागुणान् ॥ सर्वां भुवं परित्यज्य कृत्वा ह्याश्रममास्थितः ॥ १८ ॥ ततो महेश्वरः प्राह सत्यमेतत्सुरोदितम् ॥ ब्रह्माद्यास्तं तथा प्राहुरत्र भूयोऽप्यथो गुरुः ॥ १९ ॥ अत्राभिषेकं ते वीर करिष्यामः समादिश ॥ ततः सुविस्मितस्तत्र स्नात्वा स्कन्दो महामनाः ॥ २० ॥ अभिषिञ्चन्तु मां देवा इति तानब्रवीद्वचः ॥ ततोऽभिषेकसंभारान्सर्वान्संभृत्य शास्त्रतः ॥ २१ ॥ जुहुवुर्मंत्रपूतेऽग्नौ चत्वारो मुख्यऋत्विजः ॥ ब्रह्मा च कपिलो जीवो विश्वामित्रश्चतुर्थकः ॥ २२ ॥ अन्ये च शतशस्तत्र मुनयो वेदपारगाः ॥ तत्राद्भुतं महादेवो दर्शयामास भारत ॥ २३ ॥ यदग्निकुण्डमध्यस्थो लिंगमूर्तिर्व्यदृश्यत ॥ अहमेवाग्निमध्यस्थो हविर्गृह्णामि नित्यशः ॥ २४ ॥ एतत्संदर्शनार्थाय लिंगमूर्तिरभूद्विभुः ॥ तल्लिंगमतुलं देवा नमश्चक्रुर्मुदान्विताः ॥ २५ ॥ सर्वपापापहं पार्थ सर्वकामफलप्रदम् ॥ तत्र होमावसाने च दत्ते हिमवता शुभे ॥ २६ ॥ दिव्यरत्नान्विते स्कन्दो निषण्णः परमा

१ तेऽतिदूरतः—इ० पा० । २ नदी—इ० पा० । ३ यः कर्दमः गत्पिता, तथा चाहमपि—इति योजना ।

सने ॥ सर्वमंगलसंभारैर्विधिमंत्रपुरस्कृतम् ॥ २७ ॥ अभ्यषिंचंस्ततो देवाः कुमारं शंकरात्मजम् ॥ इंद्रो विष्णुर्महावीर्यो ब्रह्मरुद्रौ च फाल्गुन ॥२८॥
आदित्याद्या ग्रहाः सर्वे तथोभावनिलानलौ ॥ आदित्या वसवो रुद्राः साध्याश्चैवाश्विनावुभौ ॥ २९ ॥ विश्वेदेवाश्च मरुतो गंधर्वाप्सरसस्तथा ॥
देवब्रह्मर्षयश्चैव वालखिल्या मरीचिपाः ॥ ३० ॥ विद्याधरा योगसिद्धाः पुलस्त्यपुलहादयः ॥ पितरः कश्यपोऽत्रिश्च मरीचिर्भृगुरंगिराः ॥ ३१ ॥
दक्षोऽथ मनवो ये च ज्योतींषि ऋतवस्तथा ॥ मूर्तिमत्यश्च सरितो महीप्रभृतिकास्तथा ॥ ३२ ॥ लवणाद्याः समुद्राश्च प्रभासाद्याश्च तीर्थकाः ॥
पृथिवी द्यौर्दिशश्चैव पादपाः पार्वतास्तथा ॥ ३३ ॥ आदित्याद्या मातरश्च कुर्वंत्यो गुहमंगलम् ॥ वासुकिप्रमुखा नागास्तथोभौ गरुडारुणौ ॥
॥ ३४ ॥ वरुणो धनदश्चैव यमः सानुचरस्तथा ॥ राक्षसो निर्ऋतिश्चैव भूतानि च पलाशनाः ॥ ३५ ॥ धर्मो बृहस्पतिश्चैव कपिलो गाधिनंदनः ॥
बहुलत्वाच्च ये नोक्ता विविधा देवतागणाः ॥ ३६ ॥ ते च सर्वे महीकूले ह्यभ्यषिंचन्मुदा गुहम् ॥ ततो महास्वनामुग्रां देवदैत्यादिदर्पहाम् ॥ ३७ ॥
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ॥ विष्णुर्ददौ वैजयंतीं मालां बलविवर्धिनीम् ॥ ३८ ॥ उमा ददौ चारजसी वाससी सूर्यसप्रभा ॥ गंगा कमं
डलुं दिव्यममृतोद्भवमुत्तमम् ॥ ३९ ॥ मही महानदी तस्य चाक्षमालां ससागरा[1] ॥ ददौ मुदा कुमाराय दंडं चैव बृहस्पतिः ॥ ४० ॥ गरुडो
दयितं पुत्रं मयूरं चित्रबर्हिणम् ॥ अरुणस्ताम्रचूडं च प्रददौ चरणायुधम्[2] ॥ ४१ ॥ छागं च वरुणो राजा बलवीर्यसमन्वितम् ॥ कृष्णाजिनं तथा
ब्रह्मा ब्रह्मण्याय ददौ जयम् ॥ ४२ ॥ चतुरोऽनुचरांश्चैव महावीर्यान्बलोत्कटान् ॥ नंदिसेनं लोहिताक्षं घण्टाकर्णं च मानसान् ॥ ४३ ॥ चतुर्थं
चाप्यतिबलं ख्यातं कुसुममालिनम् ॥ ततः स्थाणुर्ददौ देवो महापारिषदं क्रतुम् ॥ ४४ ॥ स हि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ॥ जघान
दोर्भ्यां संक्रुद्धः प्रयुतानि चतुर्दश ॥ ४५ ॥ यमः प्रादादनुचरौ यमकालोपमौ[3] तदा ॥ उन्माथं च प्रमाथं च महावीर्यौ महाद्युती ॥ ४६ ॥ सुभ्राजो
भास्करस्यैव यौ सदा चानुयायिनौ ॥ तौ सूर्यः कार्तिकेयाय ददौ पार्थ मुदान्वितः ॥ ४७ ॥ कैलासशृङ्गसंकाशौ श्वेतमाल्यानुलेपनौ ॥ सोमोऽ
प्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ४८ ॥ ज्वालाजिह्वं ज्योतिषं च ददावग्निर्महाबलौ ॥ परिघं च बलं चैव भीमं च सुमहाबलम् ॥ ४९ ॥
स्कंदाय त्रीननुचरान्ददौ विष्णुरुरुक्रमः ॥ उत्क्रोशं पंचजं चैव वज्रदण्डधरावुभौ ॥५०॥ ददौ महेशपुत्राय वासवः परवीरहा ॥ तौ हि शत्रून्महेन्द्रस्य
जघ्नतुः समरे बहून् ॥ ५१ ॥ वर्धनं बंधनं चैव आयुर्वेदविशारदौ ॥ स्कन्दाय ददतुः प्रीतावश्विनौ भरतर्षभ ॥ ५२ ॥ बलं चातिबलं चैव महावक्त्रौ

१ ससागराम्--इ० पा० । २ चरणायुधं--कुक्कुटम्--इत्यर्थः । ३ यमकामोपमौ--इ० पा० ।

महाबलौ ॥प्रददौ कार्तिकेयाय वायुश्चानुचरावुभौ ॥ ५३ ॥ घसं चातिघसं वीरो वरुणश्च ददौ प्रभुः ॥ सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम् ॥ ॥ ५४ ॥ हिमवान्प्रददौ पार्थ साक्षाद्दौहित्रकाय वै ॥ कांचनं च ददौ मेरुर्मेघमालिनमेव च ॥५५॥ उच्छ्रितं चातिशृंगं च महापाषाणयोधिनौ ॥ स्वाहेयाय ददौ प्रीतः स विंध्यः पार्षदौ शुभौ ॥ ५६ ॥ संग्रहं विग्रहं चैव समुद्रोऽपि गदाधरौ ॥ प्रददौ पार्षदौ वीरौ महीनद्या समन्वितः ॥५७॥ उन्मादं पुष्पदंतं च शंकुकर्णं तथैव च ॥ प्रददावग्निपुत्राय पार्वती शुभदर्शना ॥ ५८ ॥ जयं महाजयं चैव नागौ ज्वलनसूनवे ॥ प्रददुर्बलिनां श्रेष्ठौ सुपर्णः पार्षदावुभौ ॥५९॥ एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ॥ सर्वे जगति ये मुख्या ददुः स्कंदाय पार्षदान् ॥ ६० ॥ नानावीर्यान्महावीर्या न्नानायुधविभूषणान् ॥ बहुलत्वान्न शक्यंते संख्यातुं ते च फाल्गुन ॥ ६१ ॥ मातरश्च ददुस्तस्मै तदा मातृगणान्प्रभो ॥ याभिर्व्याप्तास्त्र यो लोकाः कल्याणीभिश्चराचराः ॥ ६२ ॥ प्रभावती विशालाक्षी गोपाला गोनसा तथा ॥ अप्सुजाता बृहद्दंडी कालिका बहुपुत्रका ॥ ६३ ॥ भयंकरी च चक्रांगी तीर्थनेमिश्च माधवी ॥ गीतप्रिया अलाताक्षी चंटुला[1] शलभामुखी ॥ ६४ ॥ विद्युज्जिह्वा रुद्रकाली शतोलूखलमेखला ॥ शत घंटाकिंकिणिका चक्राक्षी चत्वरालया ॥ ६५ ॥ पूतना रोदना त्वांमा कोटरा मेघवाहिनी ॥ ऊर्ध्ववेणीधरा चैव जरायुर्जर्जरानना ॥ ६६ ॥ खं टखेटी[4] दहदहा तथा धमधमा जया ॥ बहुवेणी बहुशिरा बहुपादा बहुस्तनी ॥ ६७ ॥ शतोलूकमुखी कृष्णा कर्णप्रावरणा तथा ॥ शून्यालया धान्यवासा पशुदा धान्यदा सदा ॥ ६८ ॥ एताश्चान्याश्च बह्व्यश्च मातरो भरतर्षभ ॥ बहुलत्वादहं तासां न संख्यातुमिहोत्सहे ॥ ६९ ॥ वृक्षचत्व रवासिन्यश्चतुष्पथनिवेशनाः ॥ गुहास्मशानवासिन्यः शैलप्रस्रवणालयाः ॥ ७० ॥ नानाभरणवेषांस्ता[5] नानामूर्तिधरास्तथा ॥ नानाभाषायुधधराः परिवव्रुस्तदा गुहम् ॥ ७१ ॥ ततः स शुशुभे श्रीमान्गुहो गुहं[6] इवापरः ॥ सैनापत्ये चाभिषिक्तो देवैर्नानामुनीश्वरैः ॥ ७२ ॥ ततः प्रणम्य सर्वांस्ता नेकैकत्वेन पावकिः ॥ व्रियतां वर इत्याह भवब्रह्मपुरोगमान् ॥ ७३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कार्तिकेयस्य सेनानीत्वेऽभिषेकवर्णनंनाम त्रिंशोऽध्यायः ॥ ३० ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ते चैनं योज्य चाशीर्भिर्याचंत वरं गुहम् ॥ एष एव वरोऽस्माकं यत्पापं तारकं जहि ॥ १ ॥ एवमस्त्विति तानुक्त्वा योगोयोग इति ब्रुवन् ॥ तारकारिर्महातेजा मयूरं चाध्यरोहत ॥ २ ॥ शक्तिहस्तो विनद्याथ गुहो देवांस्तदाब्रवीत् ॥ यद्यद्य तारकं पापं नाहं हन्मि सुरोत्तमाः ॥ ३ ॥

१ चैंच–इ०पा० । २ बहुला–इ० पा० । ३ वासा–इ०पा० । ४ वेटखेटी–इ०पा० । ५ नानाभरणलेखाः–इ०पा० । ६ गुहो गुंह इव–अन्योपमाभावादत्रानन्वयालङ्कारः ।

गोब्राह्मणावमन्तॄणां ततो यामि गतिं स्फुटम् ॥ एवं तेन प्रतिज्ञाते शब्दोऽतिसुमहानभूत् ॥ ४ ॥ योगोयोग इति प्राहुराज्ञया शरजन्मनः ॥ अरजो वाससी रक्ते वसानः पार्वतीसुतः ॥ ५ ॥ अथाग्रे सर्वदेवानां स्थितो वीरो ययौ मुदा ॥ तस्य केतुरलं भाति चरणायुधशोभितः ॥ ६ ॥ चरणाभ्यां गिरीन्छक्तो यो विदारयितुं रणे ॥ या चेष्टा सर्वभूतानां प्रभा शांतिर्बलं यथा ॥ ७ ॥ तन्मया गुहशक्तिः सा भृशं हस्ते व्यरोचत ॥ यद्दार्ढ्यं सर्वलोकेषु तन्मयं कवचं तथा ॥ ८ ॥ योत्स्यमानस्य वीरस्य देहेप्रादुरभूत्स्वयम् ॥ धर्मः सत्यमसंमोहस्तेजः कांतत्वमक्षतिः ॥ ९ ॥ बलमोजः कृपा चैव बद्ध्वा करयुगं तथा ॥ आदेशकारिण्यग्रेऽस्य स्वयं तस्थुर्महात्मनः ॥ १० ॥ तमग्रे चापि गच्छंतं पृष्ठतोनुययौ हरः ॥ रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ॥ ११ ॥ निर्मितेन हरेणैव[1] स्वयमीशेन लीलया ॥ सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे ॥ १२ ॥ अभीषून्पुरुषव्याघ्र ब्रह्मा च जगृहे स्वयम् ॥ ते पिबंत इवाकाशं त्रासयंतश्चराचरम् ॥ १३ ॥ सिंहा रथस्य गच्छंतो नदंतश्चारुकेसराः ॥ तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह ॥ १४ ॥ विद्युता मंडितः सूर्यः सेंद्रचापघनो यथा ॥ अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ॥ १५ ॥ आस्थाय रुचिरं याति पुष्पकं नरवाहनः ॥ ऐरावणं समास्थाय शक्रश्चापि सुरैः सह ॥ १६ ॥ पृष्ठतोनुययौ यांतं वरदं वृषभध्वजम् ॥ तस्य दक्षिणतो देवा मरुतश्चि त्रयोधिनः ॥ १७ ॥ गच्छंति वसुभिः सार्धं रुद्रैश्च सह संगताः ॥ यमश्च मृत्युना सार्धं सर्वतः परिवारितः ॥ १८ ॥ घोरैर्व्याधिशतै श्चापि सव्यतो याति कोपितः ॥ यमस्य पृष्ठतश्चापि घोरस्त्रिशिखरः सितः ॥ १९ ॥ विजयोनाम रुद्रस्य याति शूलः स्वयं कृतः ॥ तमुग्रपाशो भगवान्वरुणः सलिलेश्वरः ॥ २० ॥ परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ पृष्ठतो विजयस्यापि याति रुद्रस्य पट्टिशः ॥ २१ ॥ गदामुशलशक्त्याद्यैर्वरप्रहरणैर्वृतः ॥ पट्टिशं चान्वगात्पार्थ अस्त्रं पाशुपतं महत् ॥ २२ ॥ बहुशीर्षं महाघोरमेकपादं बहूदरम् ॥ कमंडलुश्चास्य पश्चान्महर्षिगणसेवितः ॥ २३ ॥ तस्य दक्षिणतो भाति दण्डो गच्छञ्छ्रिया वृतः ॥ भृग्वंगिरोभिः सहितो देवैरप्य भिपूजितः ॥ २४ ॥ राक्षसाश्चान्यदेवाश्च गन्धर्वा भुजगास्तथा ॥ नद्यो नदाः समुद्राश्च मुनयोऽप्सरसां गणाः ॥ २५ ॥ नक्षत्राणि ग्रहाश्चैव जंगमं स्थावरं तथा ॥ मातरश्च महादेवमनुजग्मुः क्षुधान्विताः ॥ २६ ॥ सर्वेषां पृष्ठतश्चासीत्तार्क्ष्यस्थो बुद्धिमान्हरिः ॥ पालयन्पृतनां सर्वां स्वपरीवारसंवृतः ॥ २७ ॥ एवं सैन्यसमोपेत उत्तरं तटमागतः ॥ ताम्रप्राकारमाश्रित्य तस्थौ त्र्यंबकनंदनः ॥ २८ ॥ स तारकपुरस्यापि पश्यन्नृद्धि

१ हरेणाशु-- इ०पा० ।

मनुत्तमाम् ॥ विसिष्मिये महासेनः प्रशशंस तपोऽस्य च ॥ २९ ॥ स्थितः पश्यन्स शुशुभे मयूरस्थो गुहस्तदा ॥ छत्रेण ध्रियमाणेन स्वयं सोमसमस्त्विषा ॥ ३० ॥ वीज्यमानश्चामराभ्यां वाय्वग्निभ्यां महाद्युतिः ॥ मातृभिश्च सुरैर्दत्तैः स्वैर्गणैरपि संवृतः ॥ ३१ ॥ ततः प्रणम्य तं शक्रो देवमध्ये वचोऽब्रवीत् ॥ पश्यपश्य महासेन दैत्यानां बलशालिनाम् ॥ ३२ ॥ ये त्वां कालं न जानंति मर्त्या गृहरता इव ॥ एतेषां च गृहे दूतो यस्त्वां शंसतु तारकम् ॥ ३३ ॥ वीराणामुचितं त्वेतत्कीर्तिदं च महाजने ॥ अनुज्ञया ततः स्कन्दभक्तं शक्रो धनंजय ॥ ३४ ॥ मामादिश्यासुरेन्द्राय प्राहिणोद्दौत्ययोग्यकम् ॥ अहं स्वयं गन्तुकामः शक्रेणापि च प्रेषितः ॥ ३५ ॥ प्रासादे स्त्रीसहस्राणां प्रावोचं मध्यतोऽप्यहम् ॥ असुराधम दुर्बुद्धे शक्रस्त्वामाह तच्छृणु ॥ ३६ ॥ यज्जगद्दलनादात्तं किल्बिषं दानव त्वया ॥ तस्याहं नाशकस्तेऽद्य पुरुषश्चेद्भविष्यसि ॥ ३७ ॥ शीघ्रं निःसर पापिष्ठ निःसरिष्यसि चेन्न हि ॥ क्षणात्तव पुरं क्षेप्स्ये पावित्र्यायैव सागरे ॥ ३८ ॥ इति श्रुत्वा रूक्षवाचं क्रुद्धः स्त्रीगणसंवृतः ॥ मुष्टिमुद्यम्य मोऽधावद्भीतश्चाहं पलायितः ॥ ३९ ॥ व्याकुलस्तत्र वृत्तांतं कुमाराय न्यवेदयम् ॥ मयि चाप्यागते दैत्यश्चिंतयामास चेतसि ॥ ४० ॥ नालब्धसंश्रयः शक्रो वस्तुमेतदिहार्हति ॥ निमित्तानि च घोराणि संत्रासं जनयंति मे ॥ ४१ ॥ एवं विचिंत्य चोत्थाय गवाक्षं सोध्यरोहत ॥ सहस्रभौमिकावासशृङ्गवातायनस्थितः ॥ ४२ ॥ अपश्यद्देवसैन्यं स दिवं भूमिं च संवृतम् ॥ रथैर्गजैर्हयैश्चापि नादिताश्च दिशो दश ॥ ४३ ॥ विमानैश्चाद्भुताकारैः किंनरोद्गीतनादितैः ॥ दुन्दुभिभिर्गोविषाणैस्तालैः शंखैश्च नादितैः ॥ ४४ ॥ अक्षोभ्यामिव तां सेनां दृष्ट्वा सोऽचिंतयत्तदा ॥ एते मया जिताः पूर्वं कस्माद्भूयः समागताः ॥ ४५ ॥ इति चिंतापरो दैत्यः शुश्राव कटुकाक्षरम् ॥ देवबंदिभिरुद्धुष्टं घोरं हृदयदारणम् ॥४६॥ जयातुलशक्तिदीधितिपिंजररुचारुणमंडलभुजोद्भासितदेवसैन्य पुरवदनकुमुदकाननविकासनेंदो कुमारनाथ जय दितिकुलमहोदधिवडवानल मधुररवमयूररवासुरमुकुटकूटकुट्टितचरणनखांकुर महासेन तारकवंशशुष्कतृणदावानल योगीश्वर योगिजनहृदयगगनविततचिंतासंतानसंतमसनोदनखरकिरणकल्पनखनिकरविराजितचरणकमल स्कन्द जय बाल सप्तवासर भुवनावलिशोकसंदहन ॥ ४७ ॥ नमो नमस्तेस्तु मनोरमाय नमोस्तु ते साधुभयापहाय ॥ नमोस्तु ते बालकृताचलाय नमोनमो नाशय देवशत्रून् ॥ ४८ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कुमारस्य तारकासुरनगरं प्रति गमनवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ छ ॥

१ प्रेष्यः–इति शेषः । २ शंसति–इ० पा० । ३ मा–माम्–नारदम् । ४ देवदुन्दुभिनिर्घोषम्–इ० पा० ।

॥ ॥ नारद उवाच ॥ ॥ श्रुत्वैतं संस्तवं दैत्यः संघुष्टं देवबंदिभिः ॥ सस्मार ब्रह्मणो वाक्यं वधं बालादुपस्थितम् ॥ १ ॥ श्रुत्वा
स क्लिन्नसर्वांगो द्वाःस्थं राजा वचोऽब्रवीत् ॥ अमात्यान्द्रष्टुमिच्छामि शीघ्रमानय मा चिरम् ॥ २ ॥ ततस्ते राजवचनात्कालनेमि
मुखागताः ॥ प्राह तांस्तारको दैत्यः किमिदं वो विचेष्टितम् ॥ ३ ॥ यैः शत्रुसंभवा वार्ता कापि न श्रावितस्त्वहम् ॥ मदिराकामम
त्तानां मंत्रित्वं वो न युज्यते ॥ हितं मन्त्रयते राज्ञस्तेन मंत्री निगद्यते ॥ ४ ॥ ॥ अमात्या ऊचुः ॥ ॥ को जानाति सुरान्दीना
न्दैत्यानामिति नो मतिः ॥ ५ ॥ मा विषीद महाराज वयं जेष्यामहे सुरान् ॥ बालादपि भयं किं वा लज्जायै चिंतितं त्विदम् ॥ ६ ॥
सर्वमेतत्सुसाध्यं च भेरी संताड्यतां दृढम् ॥ ततो दैत्येन्द्रवचनात्संनाहजननी तदा ॥ ७ ॥ भृशं संताडिता भेरी कंपयामास सा जगत् ॥
स्मरणाद्दैत्यराजस्य पर्वतेभ्यो महासुराः ॥ ८ ॥ निम्नगाभ्यः समुद्रेभ्यः पातालेभ्योंऽबरादपि ॥ सहसा समनुप्राप्ता युगांतानलसप्रभाः ॥
॥ ९ ॥ कोटिकोटिसहस्रैस्तु परार्धैर्दशभिः शतैः ॥ सेनापतिः कालनेमिः शीघ्रं देवानुपाययौ ॥ १० ॥ चतुर्योजनविस्तीर्णे नानाश्चर्यसमन्विते ॥
रथे स्थितो मनाग्दीनस्तारकः समदृश्यत ॥ ११ ॥ एतस्मिन्नंतरे पार्थ क्रुद्धैः स्कन्दस्य पार्षदैः ॥ प्राकारः पातितः सर्वो भग्नान्युपवनानि च ॥
॥ १२ ॥ ततश्चचाल वसुधा देवी सवनकानना ॥ जज्वाल खं सनक्षत्रं प्रमूढं भुवनं भृशम् ॥ १३ ॥ तमोभूतं जगच्चासीद्व्रश्चैर्व्याप्तं नभोऽभ
वत् ॥ ततो नानाप्रहरणं प्रलयांबुदसन्निभम् ॥ १४ ॥ कालनेमिमुखं पार्थ अदृश्यत महद्बलम् ॥ तद्धि घोरमसंख्येयं जगर्ज विविधा गिरः ॥
॥ १५ ॥ अभ्यद्रवद्रणे देवान्भगवंतं च शंकरम् ॥ विनदद्भिस्ततो दैत्यैर्देवानीकं महायुधैः ॥ १६ ॥ पर्वतैश्च शतघ्नीभिरायसैः परिघैरपि ॥ क्षणेन
द्रावितं सर्वं विमुखं चाप्यदृश्यत ॥ १७ ॥ असुरैर्वध्यमाने तु पावकैरिव काननम् ॥ अपतद्दावभूमिष्ठं महाद्रुमवनं यथा ॥ १८ ॥ ते भिन्नास्थिशि
रोदेहाः प्राद्रवंत दिवौकसः ॥ न नाथमध्यगच्छंत वध्यमाना महासुरैः ॥ १९ ॥ अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः ॥ आश्वासयन्नुवाचेदं बलव
द्दानवार्दितम् ॥ २० ॥ भयं त्यजत भद्रं वः शूराः शस्त्राणि गृह्णत ॥ कुरुध्वं विक्रमे बुद्धिं मा च काचिद्व्यथास्तु वः ॥ २१ ॥ एष कालानलप्रख्यो
मयूरं समुपस्थितः ॥ रक्षिता वो महासेनः कथं भीतिस्तथापि वः ॥२२॥ शक्रस्य वचनं श्रुत्वा समाश्वस्ता दिवौकसः ॥ दानवान्प्रत्ययुध्यंत शक्रं
कृत्वा व्यपाश्रयम् ॥ २३ ॥ कालनेमिर्महेन्द्रेण संयुगे समयुज्यत ॥ सहस्राक्षौहिणीयुक्तो जंभकः शंकरेण च ॥ २४ ॥ कुजंभो विष्णुना चैव तावत्य

१ कालनेमिपुरोगमाः—इ०पा० । २ 'दवदावौ वनारण्यवह्नी—'इत्यमरः । दावभूमिष्ठम्—अरण्यानीस्थम्—इत्यर्थः ।

क्षौहिणीवृतः ॥ अन्ये च त्रिदशाः सर्वे मरुतश्च महाबलाः॥२५॥प्रत्ययुध्यंत दैत्येंद्रैः साध्याश्च वसुभिः सह ॥ ततो बहुविधं युद्धं कालनेमिर्विधाय च ॥२६॥ उत्सृज्य सहसा पार्थं ऐरावणशिरःस्थितः ॥ स तु पादप्रहारेण मुष्टिना चैव तं गजम् ॥ २७ ॥ शक्रं च जघ्ने विनदन्पेततुस्तावुभौ भुवि ॥ ततः शक्रं समादाय कालनेमिर्विचेतसम् ॥२८॥ रथमाश्रित्य भूयोपि तारकाभिमुखो ययौ ॥ अथ क्रुद्धं तदा देवैः सहसा चांतकादिभिः ॥ २९ ॥ ह्रियते ह्रियते राजा त्राता कोऽपि न विद्यते ॥ एतस्मिन्नंतरे शर्वः पिनाकधनुपश्च्युतैः ॥ ३० ॥ बाणैः ससैन्यं कृत्वा च जंभकं गृध्रमोदनम्[1] ॥ कालनेमिं समागम्य रथस्थो वाक्यमब्रवीत् ॥ ३१ ॥ किमेतेन महेन्द्रेण मया युध्यस्व दानव[2] ॥ वीरंमन्य सुदुर्बुद्धे ततो ज्ञास्यसि वीरताम् ॥ ३२ ॥ ॥ ॥ कालनेमिरुवाच ॥ ॥ नग्नेन सह को युध्येद्धतेनापि च येन वा॥शंसत्सु दैत्यवीराणामुपहासः प्रजायते॥३३॥आत्मनस्तु समं किंचिद्विलोकय सुदुर्मते॥तदाकर्ण्य च सावज्ञं वचः शर्वो विसिष्मिये॥३४॥ततः कुमारः सहसा मयूरस्थोऽभ्यधावत ॥ कुजंभं सानुगं हत्वा वासुदेवोप्यधावत ॥३५॥ ततो हरिः स्कंदमाह किमेतेन तव प्रभो ॥ दैत्याधमेन पापेन मुहूर्तं पश्य मे बलम् ॥ ३६ ॥ एवमुक्त्वा निवार्यैनं केशवो गरुडस्थितः ॥ शार्ङ्गको दंडनिर्मुक्तैर्बाणैर्दैत्यमवाकिरत् ॥ ३७ ॥ स तैर्बाणैस्ताड्यमानो वज्रैरिव महासुरः ॥ विमुच्य वासवं क्रुद्धो बाणांस्तान्व्यधमच्छरैः ॥ ३८ ॥ यान्यान्बाणान्हरिर्दिव्यानस्त्राणि च मुमोच[3] ह ॥ निवारयति दैत्यस्तान्प्रहसँल्लीलयैव च ॥ ३९ ॥ ततः कौमोदकीं गृह्य क्षिप्रकारी जनार्दनः ॥ मुमोच सैन्यनाथाय सारथिं च व्यचूर्णयत् ॥ ४० ॥ ततो रथादवप्लुत्य विवृत्य वदनं महत् ॥ गरुडं चंचुनादाय स विष्णुं क्षिप्तवान्मुखे ॥ ४१ ॥ ततोऽभूत्सर्वदेवानां विमोहो जगतामपि ॥ चचाल वसुधा चेलुः पर्वताः सप्त चार्णवाः ॥ ४२ ॥ कालनेमिर्ननर्दश्चैव प्रानृत्यत महारणे ॥ असंमूढस्ततो विष्णुस्त्वराकाल उपस्थिते ॥ ४३ ॥ कुक्षिं विदार्य चक्रेण भास्करोऽभादिवोदितः ॥ बहिर्भूतो हरिश्चैनं मोहयित्वा स्वनिन्दया ॥ ४४ ॥ पातालस्य तलं निन्ये तत्र शिश्ये स काष्ठवत् ॥ ततश्चक्रेण दैत्यानां निहता दशकोटयः ॥ ४५ ॥ प्रमोदितास्तथा देवा विमोहास्तत्क्षणाद्बभुः ॥ ततः शर्वस्तमालिंग्य साधुसाधु जनार्दन ॥ ४६ ॥ त्वया यद्विहितं कर्म तत्कर्तान्यो न विद्यते ॥ महिषाद्याः सुदुर्जेया देव्या ये विनिपतिताः ॥ ४७ ॥ तेषामतिबलो ह्येष त्वया विष्णो विनिर्जितः ॥ तारकामयसंग्रामे वध्यस्तेसौ जनार्दन ॥ ४८ ॥ कंसरूपः पुनस्तेऽयं हंतव्योऽष्टमजन्मनि ॥ एवं प्रशंसमानास्ते वासुदेवं जगद्गुरुम् ॥ ४९ ॥ शस्त्रजालैर्लब्धसंज्ञान्दैत्यसैन्याननाशयत् ॥ तानि दैत्यशरीराणि जर्जराणि महायुधैः ॥ ५० ॥

१ गृध्राणां मोदनमानन्ददायकम्—हतमित्यभिप्रायः । हत एव वीरे रणे तन्मांसभक्षणेन गृध्राणामानन्दोदयो भवतीति । २ वृथा युध्यासि दानव—इ० पा० । ३ प्रमुंचति—इ० पा० ।

अपतन्भूतले पार्थ च्छिन्नाभ्राणीव सर्वशः ॥ ततस्तद्दानवं सैन्यं हतनाथमभूत्तदा ॥ ५१ ॥ देवैः स्कंदानुगैश्चैव कृतं शस्त्रैः पराङ्मुखम् ॥ अथो त्क्रुष्टं तदा हृष्टैः सर्वैर्देवैर्मुदायुतैः ॥ ५२ ॥ संहतानि च सर्वाणि तदा तूर्याण्यवादयन् ॥ अथ भग्नं बलं प्रेक्ष्य हतवीरं महारणे ॥ ५३ ॥ देवानां च महामोदं तारकः प्राह सारथिम् ॥ सारथे पश्य सैन्यानि द्राव्यमाणानि मे सुरैः ॥ ५४ ॥ येऽस्माभिस्तृणवद्दृष्टाः पश्य कालस्य चित्रताम् ॥ तन्मे वाहय शीघ्रं त्वं रथमेनं सुरान्प्रति ॥ ५५ ॥ पश्यंतु मे बलं बाह्वोर्द्रवंतु च सुराधमाः ॥ ब्रुवन्नेवं सारथिं स विधुन्वन्सुमहद्धनुः ॥ ५६ ॥ क्रोध रक्तेक्षणो राजा देवसैन्यं समाविशत् ॥ आगच्छमानं तं दृष्ट्वा हरिः स्कंदमथाब्रवीत् ॥ ५७ ॥ कुमार पश्य दैत्येंद्रं कालं यद्वद्युगात्यये ॥ अयं स येन तपसा घोरेणाराधितः शिवः ॥ ५८ ॥ अयं स येन शक्राद्याः कृता मर्काः समार्बुदम् ॥ अयं स सर्वशस्त्रौघैर्योऽस्माभिर्न जितो रणे ॥ ॥ ५९ ॥ नावज्ञया प्रद्रष्टव्यस्तारकोऽयं महासुरः ॥ सप्तमं हि दिनं तेऽद्य मध्याह्नोऽयं च वर्तते ॥ ६० ॥ अर्वागस्तमनादेनं जहि वध्योऽन्यथा न हि ॥ एवमुक्त्वा स शक्रादींस्त्वरितः केशवोऽब्रवीत् ॥ ६१ ॥ आयासयत दैत्येंद्रं सुखवध्यो यथा भवेत् ॥ ततस्ते विष्णुवचनाद्विनदन्तो दिवौ कसः ॥ ६२ ॥ तमासाद्य शरव्रातैर्मुदिताः समवाकिरन् ॥ प्रहसन्निव देवांस्तान्द्रावयामास तारकः ॥ ६३ ॥ यथा नास्तिकदुर्वृत्तो नानाशास्त्रोपदे शकान् ॥ सोढुं शक्ता न ते वीरं महति स्यंदने स्थितम् ॥ ६४ ॥ महापस्मारसंक्रांतं यथैवाप्रियवादिनम् ॥ विधूय सकलान्देवान्क्षणमात्रेण तारकः ॥ ६५ ॥ आजगाम कुमाराय विधुवन्स महाधनुः ॥ आगच्छमानं तं दृष्ट्वा स्कंदः प्रत्युद्ययौ ततः ॥ ६६ ॥ तस्यारक्षद्भवः पार्श्वं दक्षिणं चैव तं हरिः ॥ पृष्ठे च पार्षदास्तस्य कोटिशोऽर्बुदशस्तथा ॥ ६७ ॥ ततस्तौ सुमहायुद्धे संसक्तौ देवदैत्ययोः ॥ धर्माधर्माविवोदग्रौ जगदाश्चर्यकारकौ ॥ ६८ ॥ ततः कुमारमासाद्य लीलया तारकोऽब्रवीत् ॥ अहो बालातिबालस्त्वं यत्त्वं गीर्वाणवाक्यतः ॥ ६९ ॥ आसादयसि मां युद्धे पतंग इव पावकम् ॥ वधेन तव को लाभो मम मुक्तोऽसि बालक ॥ ७० ॥ पिब क्षीरं गृहाणेमं कंदुकं क्रीड लीलया ॥ एवमुक्तः प्रहस्याह तारकं योगिनां गुरुः ॥ ७१ ॥ शिशुत्वं मावमंस्था मे शिशुः कष्टो भुजंगमः ॥ दुष्प्रेक्ष्यो भास्करो बालो दुःस्पर्शोऽल्पोऽपि पावकः ॥ ७२ ॥ अल्पाक्षरो न मंत्रः किं सस्फुरो[2] दैत्य दृश्यते ॥ एवमुक्त्वा दैत्यमुक्तं गृहीत्वा कंदुकं च तम् ॥ ७३ ॥ तस्मिञ्छत्त्यस्त्रमादाय दैत्याय प्रमुमोच ह ॥ तस्यै[3] तेन प्रहारेण रथश्चूर्णीकृतोऽभवत् ॥ ७४ ॥ चतुर्योजनमात्रो यो नानाश्चर्यसमन्वितः ॥ गरुडस्य सुता ये च शीर्यमाणे रथोत्तमे ॥ ७५ ॥

१ हतनाथम्—हतसेनापति—इत्यर्थः । २ सस्फुरः—स्फुरणेन सहितः—फलदायकः—इत्यर्थः । ३ ततस्तेन—इ०पा० ।

मुक्ताः कथंचिदुत्पत्य सागरांतरमाविशन् ॥ ततः क्रुद्धस्तारकश्च मुद्गरं क्षिप्तवान्गुहे ॥ ७६ ॥ विंध्याद्रिमिव तं स्कंदो गृहीत्वा तं व्यताडयत् ॥
स्थिरे तस्योरसि व्यूढे मुद्गरः शतधाऽगमत् ॥ ७७ ॥ मेने च दुर्जयं दैत्यस्तदा षड्वदनं रणे ॥ चिंतयामास बुद्ध्या च प्राप्तं तद्ब्रह्मणो वचः ॥ ७८ ॥
तं भीतमिव चालक्ष्य दैत्यवीराश्च कोटिशः ॥ नदंतोऽतिमहासेनं नानाशस्त्रैरवाकिरन् ॥ ७९ ॥ क्रुद्धस्तेषु ततः स्कंदः शक्तिं घोरामथाददे ॥
अभ्यस्यमाने शक्त्यस्त्रे स्कंदनामिततेजसा ॥ ८० ॥ उल्काजालं महाघोरं पपात वसुधातले ॥ चाल्यमाना तथा शक्तिः सुघोरा भवसूनुना ॥
॥ ८१ ॥ ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ ॥ स शक्त्यस्त्रेण बलवान्करस्थेनाहनत्प्रभुः ॥ ८२ ॥ अष्टौ पद्मानि दैत्यानां दशकोटि
शतानि च ॥ तथा नियुतसाहस्रं वाहनं कोटिरेव च ॥ ८३ ॥ ह्रदोदरं च दैत्येंद्रं निखर्वैर्दशभिर्वृतम् ॥ तत्राकुर्वन्सुतुमुलं नादं वध्येषु शत्रुषु ॥ ८४ ॥
कुमारानुचराः पार्थ पूरयंतो दिशो दश ॥ शक्त्यस्त्रस्यार्चिःसंभूतशक्तिभिः केऽपि सूदिताः ॥ ८५ ॥ पताकयावधूताश्च हताः केचित्सहस्रशः ॥
केचिद्घंटारवत्रस्ताश्छिन्नभिन्नहृदोऽपतन् ॥ ८६ ॥ केचिन्मयूरपक्षाभ्यां चरणाभ्यां च सूदिताः ॥ कोटिशस्ताम्रचूडेन विदार्यैव च भक्षिताः ॥ ८७ ॥
पार्षदैर्मातृभिः सार्धं पद्मशो निहताः परे ॥ एवं निहन्यमानेषु दानवेषु गुहादिभिः ॥ ८८ ॥ अभाग्यैरिव लोकेषु तारकः स्कंदमाययौ ॥ जग्राह
च गदां दिव्यां लक्षघंटादुरासदाम् ॥ ८९ ॥ तया मयूरमाजघ्ने मयूरो विमुखोऽभवत् ॥ दृष्ट्वा पराङ्मुखं स्कंदं वासुदेवोऽब्रवीत्त्वरन् ॥ ९० ॥
देवसेनापते शीघ्रं शक्तिं मुंच महासुरे ॥ प्रतिज्ञामात्मनः पाहि लंबते रविमंडलम् ॥ ९१ ॥ ॥ स्कंद उवाच ॥ ॥ त्वयैव रुद्रभक्तोऽयं
जनार्दन ममेरितम् ॥ वधार्थं रुद्रभक्तस्य बाहुः शक्तिं मुंचति ॥ ९२ ॥ नारुद्रः पूजयेद्रुद्रं भक्तरूपस्य यो हरः ॥ रुद्ररूपममुं हत्वा कीदृशं जन्म
नो भवेत् ॥ ९३ ॥ तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ताः प्रपीडिताः ॥ रुद्रभक्ताः कुलं सर्वं निर्दहंति हताः किमु ॥ ९४ ॥ एष चेद्धंति तद्रुद्रं
हन्यतामेष मां रणे ॥ रुद्रभक्ते पुनर्विष्णो नाहं शस्त्रमुपाददे ॥ ९५ ॥ ॥ श्रीभगवानुवाच ॥ ॥ नैतत्तवोचितं स्कंद रुद्रभक्तो यथा शृणु ॥ द्वे तनू
गिरिजाभर्तुर्वेदज्ञा मुनयो विदुः ॥ ९६ ॥ एका जीवात्मिका तत्र प्रत्यक्षा च तथापरा ॥ द्रोग्धा भूतेषु भक्तश्च रुद्रभक्तो न स स्मृतः ॥ ९७ ॥ भक्तो
रुद्रे कृपावांश्च जंतुष्वेव हरव्रतः ॥तदेनं भूतमर्त्येषु द्रोग्धारं त्वं पिनाकिनः ॥ ९८ ॥ जहि नैवात्र पश्यामि दोषं कंचन ते प्रभो ॥ श्रुत्वेति वाचं
गोविंदात्सत्यार्थामपि भारत ॥ ९९ ॥ हंतुं न कुरुते बुद्धिं रुद्रभक्त इति स्मरन् ॥ तारकस्तु ततः क्रुद्धो ययौ वेगेन केशवम् ॥ १०० ॥

१ अभ्यस्यमाने—जप्यमाने—इत्यर्थः । २ ह्रदोदरम्—ह्रदवत्—अति निम्नम् उदरं यस्य तम् । ३ विभिन्नहृदयाः पतन्—इति पाठेऽडभाव आर्षः । ४ पादाभ्यां के च सूदिताः—इ० पा० ।

प्राह चैवं सुदुर्बुद्धे हन्मि त्वां पश्य मे बलम् ॥ देवानां चापि धर्माणां मूलं मतिमतां तथा ॥ हत्वा त्वामद्य सर्वांस्तांश्छेत्स्ये पश्याद्य मे बलम् ॥
॥ १०१ ॥ ॥ विष्णुरुवाच ॥ ॥ दैत्येंद्र तव चास्माभिः किमहो शृणु सत्यताम् ॥ १०२ ॥ रथे य एष शर्वोऽयं हतेऽस्मिन्सकलं हतम् ॥
श्रुत्वेति तारकः क्रुद्धस्तूर्णं रुद्ररथं ययौ ॥ १०३ ॥ अभिसृत्य स जग्राह रुद्रस्य रथकूबरम् ॥ यदा स कूबरं क्रुद्धस्तारकः सहसाऽग्रहीत् ॥ १०४ ॥
रेसतू रोदसी तूर्णं मुमुहुश्च महर्षयः ॥ व्यनदंश्च महाकाया दैत्या जलधरोपमाः ॥ १०५ ॥ आसीच्च निश्चितं तेषां जितमस्माभिरित्युत ॥ तार
कस्याप्यभिप्रायं भगवान्वीक्ष्य शंकरः ॥ १०६ ॥ उमया सह संत्यक्त्वा रथं वृषभमावहत् ॥ ओमित्यथ जपन्ब्रह्मा आकाशं सहसाश्रितः ॥
॥ १०७ ॥ ततस्तं शतसिंहं च रथं रुद्रेण निर्मितम् ॥ उत्क्षिप्य पृथ्व्यामास्फोट्य चूर्णयामास तारकः ॥ १०८ ॥ शूलपाशुपतादीनि सहसोपस्थि
तानि च ॥ वारयामास गिरिशो भवः साध्य इति ब्रुवन् ॥ १०९ ॥ ततः स्ववंचितं ज्ञात्वा रुद्रेणात्मानमीर्ष्यया ॥ विनदन्सहसाऽधावद्वृषभस्थं
महेश्वरम् ॥ ११० ॥ ततो जनार्दनोऽधावच्चक्रमुद्यम्य वेगतः ॥ वज्रमिंद्रस्तथोद्यम्य दंडं चापि यमो नदन् ॥ १११ ॥ गदां धनेश्वरः क्रुद्धः पाशं
च वरुणो नदन् ॥ वायुर्महांकुशं घोरं शक्तिं वह्निर्महाप्रभाम् ॥ ११२ ॥ निर्ऋतिर्निशितं खड्गं रुद्राः शूलानि कोपिताः ॥ धनूंषि साध्या देवाश्च
परिघान्वसवस्तथा ॥ ११३ ॥ विश्वेदेवाश्च मुसलं चंद्रार्कौ स्वप्रभामपि ॥ ओषधीश्चाश्विनौ देवौ नागाश्च ज्वलितं विषम् ॥ ११४ ॥ हिमाद्रि
प्रमुखाश्चापि समुद्यम्य महीधरान् ॥ भृशमुन्नदतो देवान्धावतो वीक्ष्य तारकः ॥ ११५ ॥ निवृत्तः सहसा पार्थ महागज इवोन्नदन् ॥ स वज्रमुष्टि
नाहत्य भुजे शक्रमपातयत ॥ ११६ ॥ दंडं यमादुपादाय मूर्ध्न्याहत्य न्यपातयत् ॥ उरसाहत्य सगदं धनदं भुव्यपातयत् ॥ ११७ ॥ वरुणा
त्पाशमादाय तेन बद्ध्वा न्यपातयत् ॥ महांकुशेन वायुं च चिरं मूर्ध्नि जघान सः ॥ ११८ ॥ फूत्कारैरुद्धतं वह्निं शमयामास तारकः ॥ निर्ऋतिं[1]
खड्गमादाय हत्वा तेन न्यपातयत् ॥ ११९ ॥ शूलैरेव तथा रुद्राः साध्याश्च धनुषार्दिताः ॥ परिघैरेव वसवो मुशलैरेव विश्वकाः ॥ १२० ॥
रेणुनाच्छाद्य चंद्रार्कौ वल्मीकस्थाविवेक्षितौ ॥ महोग्राश्चौषधीस्तालैरश्विभ्यां सोऽभ्यवर्तयत् ॥ १२१ ॥ सविषाश्च कृता नागा निर्विषाः पादकु
ट्टनैः ॥ पर्वताः पर्वतैरेव निरुच्छ्वासा भृशं कृताः ॥ १२२ ॥ एवं तद्देवसैन्यं च हाहाभूतमचेतनम् ॥ कृत्वा मुहूर्तादाधावच्चक्रपाणिं तमुन्नदन् ॥
॥ १२३ ॥ ततश्चांतर्दधे सद्यः प्रहसन्निव केशवः ॥ कुयोगिन इव स्वामी सदा बुद्धिमतां वरः ॥ १२४ ॥ अपश्यंस्तारको विष्णुं पुनर्वृषभवा

१ निर्ऋतेः--इत्ययमपि पाठः साधुः ।

हनम् ॥ अधावत्कुपितो दैत्यो मुष्टिमुद्यम्य वेगतः ॥ १२५ ॥ अचिरांशुरिवालक्ष्यो लक्ष्योथ भगवान्हरिः ॥ आबभाषे ततो देवान्बाहुमुद्यम्य चोच्चकैः ॥ १२६ ॥ पलायध्वमहो देवाः शक्तिश्चेद्वः पलायितुम् ॥ विमूढा हि वयं सर्वे ये बालवचसागताः ॥ १२७ ॥ किं न श्रुतः पुरा गीतः श्लोकः स्वायंभुवेन यः ॥ यथा बालेषु निक्षिप्ताः स्त्रीषु पंडितकेषु च ॥ अपस्मारिषु चैवापि सर्वे ते संशयं गताः ॥१२८॥ प्रत्यक्षं तदिदं सर्वमधुना चात्र दृश्यते ॥१२९॥ अज्ञासिष्म पुरैवैतद्रुद्रभक्तं न हंत्यसौ ॥ यत्प्रतिज्ञां नाकरिष्यन्न स्यान्नः कदनं महत् ॥१३०॥ अथैष यदि दैत्येंद्रं न निहंति कुबुद्धिमान्॥मा भयं वो महाभागा निहनिष्यामि वो रिपून्॥१३१॥अद्य मे विपुलं बाह्वोर्बलं पश्यत देवताः॥ दैत्याधमं नाशयामि मुष्टिनैकेन पश्यत ॥१३२॥ मया हि दक्षिणो बाहुर्दत्तश्च भवतां सदा ॥ रिपून्वा निहनिष्यामि सत्यं तत्परिपालये॥१३३॥ येंऽबरे ये च पाताले भुवि ये च महासुराः॥ क्षणात्तान्नाशयिष्यामि महावातो घनानिव ॥१३४॥ एवमुक्त्वा जगन्नाथो मुष्टिमुद्यम्य दक्षिणम् ॥ निरायुधस्ताक्ष्यंपृष्ठादवप्लुत्याभ्यधावत ॥१३५॥ तस्मिन्धावति गोविंदे चचाल भुवनत्रयम् ॥ विमूर्छितमभूद्विश्वं देवा भीतिं परां ययुः ॥१३६॥ धावतश्चापि कल्पांतं रुद्रकल्पस्य तस्य[1] याः ॥ मुखात्समुद्ययुर्ज्वालास्ताभिः खर्वशतं हतम् ॥ १३७ ॥ ततोऽतरिक्षे वाचश्च प्रोचुः सिद्धाः स्वयं तदा ॥ जहि कोपं वासुदेव त्वयि क्रुद्धे क्व वै जगत् ॥ ॥ १३८ ॥ अनादृत्येव तद्वाक्यं श्रुवन्नान्यत्करोम्यहम् ॥ आह्वयंश्च महादैत्यं क्रुद्धो हरिरधावत ॥ १३९ ॥ उवाच वाचं साधूंश्च यत्नात्पालयतां फलम् ॥ दुष्टान्विनिघ्नतां चैव तत्फलं मम जायताम् ॥ १४० ॥ अथापश्यन्महासेनो रुद्रं यांतं च तारकम् ॥ तारकं चान्वधावन्तं पुराणपुरुषं हरिम् ॥ १४१ ॥ जगच्च क्षुब्धमत्यर्थं स्वां प्रतिज्ञां[2]पुरा कृताम् ॥ पश्चिमां प्रतिलंबंतं भास्करं चापि लोहितम् ॥ १४२ ॥ आकाशवाणीं शृण्वंश्च किं स्कन्द त्वं विषीदसि ॥ पश्चात्तापो यदि भवेत्कृत्वा ब्रह्मवधं त्वयि ॥ १४३ ॥ स्थापयेल्लिंगमीशस्य मोक्षो हत्याशतैरपि ॥ आविवेश[3] महाक्रोधं दिधक्षुरिव मेदिनीम् ॥ १४४ ॥ अथोत्प्लुत्य मयूरात्स प्रहसन्निव केशवम् ॥ बाहुभ्यामप्युपादाय प्रोवाच भवनंदनः ॥ १४५ ॥ जानामि त्वामहं विष्णो महाबुद्धिपराक्रमम् ॥ भूतभव्यभविष्यांश्च दैत्यान्हंस्यपि हूंकृतैः ॥ १४६ ॥ त्वमेव हंता दैत्यानां देवानां परिपालकः ॥ धर्मसंस्थापकश्च त्वमेष ते रचितोंऽजलिः ॥ १४७ ॥ क्षणार्धं पश्य मे वीर्यं भास्करो लोहितायते ॥ एवं प्रणम्य स्कन्देन वासुदेवः प्रसादितः ॥१४८॥ विरोपोऽभूत्तमालिंग्य वचनं केशवोऽब्रवीत् ॥ सनाथस्त्वद्य धर्मोऽयं सुराश्चैव त्वया गुह ॥ १४९ ॥ स्मरात्मानं यदर्थं त्वमुत्पन्नोऽसि महेश्व

[1] विष्णोः । [2] पुरा तारकहनने कृतां स्वां प्रतिज्ञां प्रति ( अपालनात् ) अत्यर्थं क्षुब्धम्—जगत्—अपश्यत्—इति योजना । [3] इति आकाशवाणीं शृण्वन् सन् महाक्रोधमाविवेश स्कन्दः—इति योजना ।

रात् ॥ साधूनां पालनार्थाय दुष्टसंहरणाय च ॥ सुरविप्रकृते जन्म जीवितं च महात्मनाम् ॥ १५० ॥ रुद्रस्य देव्या गंगायाः कृत्तिकानां च
तेजसा ॥ स्वाहावह्नेश्च जातस्त्वं तत्तेजः सफलीकुरु ॥ साधूनां च कृते यस्य धनं वीर्यं च संपदः ॥ १५१ ॥ सफलं तस्य तत्सर्वं नान्यथा
रुद्रनंदन ॥ १५२ ॥ अद्य धर्मश्च देवाश्च गावः साध्याश्च ब्राह्मणाः ॥ नंदंतु तव वीर्येण प्रदर्शय निजं बलम् ॥ १५३ ॥ ॥ स्कन्द उवाच ॥ ॥ या
गतिः शिवत्यागेन त्वत्त्यागेन च केशव ॥ तां गतिं प्राप्नुयां क्षिप्रं हन्मि चेन्न हि तारकम् ॥ १५४ ॥ या गतिः श्रुतित्यागेन साध्वी
भार्यातिपीडनात् ॥ साधूनां च परित्यागाद्वृथा जीवितसाधनात् ॥ निष्ठुरस्य गतिर्या च तां गतिं यामि केशव ॥ १५५ ॥ इत्युक्ते सुमहान्नादः संप्र
जज्ञे दिवौकसाम् ॥ प्रशशंसुर्गुहं केचित्केचिन्नारायणं प्रभुम् ॥ १५६ ॥ ततस्तार्क्ष्यं समारुह्य हरिस्तस्मिन्महारणे ॥ ताम्रचूडं महासेन
स्तारकं चाप्यधावताम् ॥ १५७ ॥ लोहितांबरसंवीतो लोहितस्रग्विभूषणः ॥ लोहिताक्षो महाबाहुर्हिरण्यकवचः प्रभुः ॥ १५८ ॥ भुजेन तोल
यञ्छक्तिं सर्वभूतानि कम्पयन् ॥ प्राप्य तं तारकं प्राह महासेनो हसन्निव ॥ १५९ ॥ तिष्ठतिष्ठ सुदुर्बुद्धे जीवितं ते मयि स्थितम् ॥ सुदृष्टः
क्रियतां लोको दुर्लभः सर्वसिद्धिदः ॥ १६० ॥ यत्ते सुनिष्ठुरत्वं च धर्मे देवेषु गोषु च ॥ तस्य ते प्रहराम्यद्य स्मर शस्त्रं सुशिक्षितम् ॥ १६१ ॥
एवमुक्ते गुहेनाथ निवृत्तस्यास्य भारत ॥ तारकस्य शिरोदेशात्कापि नारी विनिर्ययौ ॥ १६२ ॥ तेजसा भासयंती तमध ऊर्ध्वं दिशो दश ॥
दृष्ट्वा नारीं गुहः प्राह कासि कस्माच्च निर्गता ॥ १६३ ॥ ॥ नार्युवाच ॥ ॥ अहं शक्तिर्गुहाख्याता भूतलेषु सदा स्थिता ॥ अनेन दैत्यराजेन
महता तपसार्ज्जिता ॥ १६४ ॥ सुरेषु सर्वेषु वसामि चाहं विप्रेषु शास्त्रार्थरतेषु चाहम् ॥ साध्वीषु नारीषु तथा वसामि विना गुणान्नास्मि वसामि कुत्र
चित् ॥१६५॥ तदस्य पुण्यसंघस्य संप्राप्तोद्यावधिर्गुह ॥ तदेनं त्यज्य यास्यामि जह्येनं विश्वहेतवे ॥११६॥ तस्यां ततो निर्गतायां दैत्यशीर्षं व्यक
म्पयत् ॥ कंपितं चास्य तद्देहं गतवीर्योऽभवत्क्षणात् ॥ १६७ ॥ एतस्मिन्नंतरे शक्तिं सोऽक्षिपद्गिरिजात्मजः ॥ उल्काज्वाला विमुञ्चंतीमतिसूर्या
ग्निसप्रभाम् ॥ १६८ ॥ कल्पांभोधिसमुन्नादां दिधक्षंतीं जगद्यथा ॥ तारकस्यांतकालाय अभाग्यस्य दशामिव ॥ १६९ ॥ दारणीं पर्वतानां च सर्व
सत्त्वबलाधिकाम् ॥ उत्क्षिप्य तां विनद्योच्चैरमुञ्चत्कुपितो गुहः ॥ १७० ॥ धर्मश्चेद्बलवाँल्लोके धर्मो जयति चेत्सदा ॥ तेन सत्येन दैत्योयं प्रलयं
यात्वितीरयन् ॥ १७१ ॥ सा कुमारभुजोत्सृष्टा दुर्निवार्या दुरासदा ॥ बिभेद हृदयं चास्य भित्त्वा च धरणीं गता ॥ १७२ ॥ निःसृत्य जलकल्लो

१ स्वाहावह्नेः स्वाहासहिताद्वह्नेः । २ वहन्तु--इ०पा० । ३ अस्मि--अहम्--इत्यर्थः । ४ आक्षिप्य--इ०पा० ।

लपूर्विका स्कंदमाययौ ॥ स च संताडितः शक्त्या विभिन्नहृदयोसुरः ॥ नादयन्वसुधां सर्वां पपाताथोमुखो मृतः ॥ १७३ ॥ एवं प्रताप्य त्रैलोक्यं निर्जित्य बहुशः सुरान् ॥ महारणे कुमारेण निहतः पार्थ तारकः ॥ १७४ ॥ एतस्मिन्निहते दैत्ये प्रहर्षं विश्वमाययौ ॥ १७५ ॥ ववुर्वातास्तथा पुण्याः सुप्रभोभूद्दिवाकरः ॥ जज्वलुश्चाग्नयः शांताः शांता दिग्जनितस्वनाः ॥ १७६ ॥ ततः पुनः स्कंदमाह प्रहृष्टः केशवोऽरिहा ॥ स्कंदस्कंद महाबाहो बाणोनाम बलात्मजः ॥ १७७ ॥ क्रौंचपर्वतमादाय देवसंघान्प्रबाधते ॥ सोऽधुना ते भयाद्वीर पलायित्वा नगं गतः ॥ जहि तं पापसंकल्पं क्रौंचस्थं शक्तिवेगतः ॥ १७८ ॥ ततः क्रौंचं महातेजा नानाव्यालविनादितम् ॥ शक्त्या बिभेद बहुभिर्वृक्षैर्जीवैश्च संकुलम् ॥ १७९ ॥ तत्र व्यालसहस्राणि दैत्यकोट्ययुतं तथा ॥ ददाह बाणं च गिरिं भित्त्वा शक्तिर्महारवा ॥ १८० ॥ अद्यापि छिद्रं तत्पार्थ क्रौंचस्य परिवर्तते ॥ ॥ १८१ ॥ येन हंसाश्च क्रौंचाश्च मानसाय प्रयांति च ॥ हत्वा बाणं महाशक्तिः पुनः स्कंदं समागता ॥ प्रत्यायाति मनः साधोराहृतं प्रहितं तथा ॥ १८२ ॥ ततो हरींद्रप्रमुखाः प्रतुष्टुवुर्ननृतुश्च रंभाप्रमुखा वरांगनाः ॥ वाद्यानि सर्वाणि च वादयंतस्तं साधुसाध्वित्यमरा जगुर्भृशम् ॥१८३॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेश्वरमाहात्म्ये कुमारकृततारकवधवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततस्तं गिरिवर्ष्माणं पतितं वसुधोपरि ॥ आलिंगितमिव पृथ्व्या गुणिन्या गुणिनं यथा ॥ १ ॥ दृष्ट्वा देवा विस्मितास्ते जयं जगुस्तथा मुहुः ॥ केचित्समीपमागंतुं बिभ्यति त्रिदिवौकसः ॥ २ ॥ उत्थाय तारको दैत्यः कदाचिन्नो निहंति चेत् ॥ तं तथा पतितं दृष्ट्वा वसुधामण्डले गुहः ॥ ३ ॥ आसीद्दीनमनाः पार्थ शुशोच च महामतिः ॥ स्तवनं चापि देवानां वारयित्वा वचोऽब्रवीत् ॥ ४ ॥ शोच्यं पातकिनं मां च संस्तुवध्वं कथं सुराः ॥ पंचानामपि यो भर्ता प्राकृतोऽसौ न कीर्त्यते ॥ ५ ॥ स तु रुद्रांशजः प्रोक्तस्तस्य द्रुह्यन्न रुद्रवत् ॥ स्वायंभुवेन गीतश्च श्लोकः संश्रूयते तथा ॥ ६ ॥ वीरं हि पुरुषं हत्वा गोसहस्रेण मुच्यते ॥ यथाकथंचित्पुरुषो न हंतव्यस्ततो बुधैः ॥ ७ ॥ पापशीलस्य हनने दोषो यद्यपि नास्ति च ॥ तथापि रुद्रभक्तोऽयं संस्मरन्निति शोचिमि ॥ ८ ॥ तदहं श्रोतुमिच्छामि प्रायश्चित्तं च किंचन ॥ प्रायश्चित्तैरपैत्येनो यतोपि महदर्जितम् ॥ ९ ॥ इति संशोचतस्तस्य शिवपुत्रस्य धीमतः ॥ वासु

१ गम्याः--पु०पा० । २ बाणोनाम--पु०पा० । ३ दृष्ट्वा देवा विस्मितशरीराः संतो जगुस्तदा मुहुः--पु०पाठान्तरम् । ४ वसुधामण्डलम्--पु०पा० । ५ वाचयित्वा--पु०पा० । ६ न सा प्रकृतिर्गानर्धा--इति पाठः । किं तु देवांशज एवेत्यर्थः । ७ तस्य--रुद्रांशजस्य द्रुह्यन्--तेन सह द्वेषं कुर्वन्--रुद्रवत्--रुद्रभक्तस्य रुद्रांशजत्वस्य वर्णितत्वाद्रुद्रतुल्यः--न भवतीत्यर्थः । ८ आर्षोऽयं प्रयोगः ।

देवो गुरुः पुंसां देवमध्ये वचोऽब्रवीत् ॥ १० ॥ श्रुतिः स्मृतिश्चेतिहासाः पुराणं च शिवात्मज ॥ प्रमाणं चेत्ततो दुष्टवधे दोषो न विद्यते ॥ ११ ॥ स्वप्राणान्यः परप्राणैः प्रपुष्णात्यघृणः पुमान् ॥ तद्वधस्तस्य हि श्रेयो यद्दोषाद्यात्यधः पुमान् ॥ १२ ॥ अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्यापचारिणी ॥ गुरौ शिष्यश्च याज्यश्च स्तेनो राजनि किल्बिषम् ॥ १३ ॥ पापिनं पुरुषं यो हि समर्थो न निहंति च ॥ तस्य तावंति पापानि तदर्धं सोऽप्यवाश्नुते ॥ १४ ॥ पापिनो यदि वध्यंते नैव पालनसंस्थितैः ॥ ततोऽयमक्षमो लोकः कं याति शरणं गुह ॥ १५ ॥ कथं यज्ञाश्च वेदाश्च वर्तंते विश्वधारकाः ॥ तस्मात्त्वया पुण्यमाप्तं न च पापं कथंचन ॥ १६ ॥ अथ चेद्रुद्रभक्तेषु बहुमानस्तव प्रभो ॥ तत्र ते कीर्तयिष्यामि प्रायश्चित्तं महोत्तमम् ॥ १७ ॥ आजन्मसंभवैः पापैः पुमान्येन विमुच्यते ॥ आकल्पांतं च वा येन रुद्रलोके प्रमोदते ॥ १८ ॥ कृते पापेऽनुतापो वै यस्य स्कन्द प्रजायते ॥ रुद्राराधनतोऽन्यच्च प्रायश्चित्तं परं न हि ॥ १९ ॥ न यस्यालमपि ब्रह्मा महिमानं विवर्णितुम् ॥ श्रुतिश्च भीता यं वक्ति किं तस्मात्परमं भवेत् ॥ २० ॥ अकांडे यच्च ब्रह्मांडक्षयोद्युक्तं हलाहलम् ॥ कण्ठे दधार श्रीकण्ठः कस्तस्मात्परमो भवेत् ॥ २१ ॥ दुःखतांडवदीनोऽभूदण्डसंकीर्णमानसः ॥ मारमारश्च यो देवः कस्तस्मात्परमो भवेत् ॥ २२ ॥ वियद्व्यापी सुरसरित्प्रवाहो विप्रुषाकृतिः ॥ बभूव यस्य शिरसि कस्तस्मात्परमो भवेत् ॥ २३ ॥ यज्ञादिकाश्च ये धर्मा विना यस्यार्चनं वृथा ॥ दक्षोऽत्र सत्यदृष्टांतः कस्तस्मात्परमो भवेत् ॥ २४ ॥ क्षोणी रथो विधिर्यंता शरोऽहं मन्दरो धनुः ॥ रथांगे चापि चंद्रार्कौ युद्धे यस्य च त्रैपुरे ॥ २५ ॥ आराधनं तस्य केचिद्योगमार्गेण कुर्वते ॥ दुःखसाध्यं हि तत्तेषां नित्यं शून्यमुपासताम् ॥ २६ ॥ तस्मात्तस्यार्चयेल्लिंगं भुक्तिमुक्ती य इच्छति ॥ सृष्ट्यादौ लिंगरूपी स विवादो मम ब्रह्मणः ॥ २७ ॥ अभूद्यस्य परिच्छेदे नालमावां बभूविव ॥ चराचरं जगत्सर्वं यतो लीनं सदात्र च ॥ २८ ॥ तस्माल्लिंगमिति प्रोक्तं देवै रुद्रस्य धीमतः ॥ तोयेन स्नापयेल्लिंगं श्रद्धया शुचिना च यः ॥ २९ ॥ ब्रह्मादितृणपर्यंतं तेनेदं तर्पितं जगत् ॥ पंचामृतेन तल्लिंगं स्नापयेद्यश्च बुद्धिमान् ॥ ३० ॥ तर्पितं तेन विश्वं स्यात्सुधया पितृभिः समम् ॥ पुष्पैरभ्यर्चयेल्लिंगं यथाकालोद्भवैश्च यः ॥ ३१ ॥ तेन संपूजितं विश्वं सकलं नात्र संशयः ॥ नैवेद्यं तत्र यो दद्याल्लिंगस्याग्रे विचक्षणः ॥ ३२ ॥ भोजितं तेन विश्वं स्याल्लिंगस्यैवं फलं महत् ॥ किमत्र बहुनोक्तेन स्वल्पं वा यदि वा बहु ॥ ३३ ॥ लिंगस्य क्रियते यच्च तत्सर्वं विश्वप्रीतिदम् ॥ तच्च लिंगं स्थापयेद्यः

१ एतदारम्य—शिवमहिमस्तोत्रस्थस्यार्थस्य प्रतिपादकाः कतिपयेऽत्र श्लोकाः संवर्णिताः संतीति सुधीभिरवधेयम्। २ अभवत्—इ० पा०। ३ शुचिमानसः—इ० पा०।

शुचौ देशे सुभक्तितः[1] ॥ ३४ ॥ स सर्वपापनिर्मुक्तो रुद्रलोके प्रमोदते ॥ यन्नित्यं यजतो यज्ञैः फलमाहुर्मनीषिणः ॥ ३५ ॥ तच्च स्थापयतो लिंगं शिवस्य शुभलक्षणम् ॥ यथाग्निः सर्वदेवानां मुखं स्कन्द प्रकीर्त्यते ॥ ३६ ॥ तथैव सर्वजगतां मुखं लिंगं न संशयः ॥ प्रारंभान्मुच्यते पापैः सर्वजन्मकृतैरपि ॥ ३७ ॥ अतीतं च तथागामि कुलानां तारयेच्छतम् ॥ मृन्मयं काष्ठनिष्पन्नं पक्वेष्टं शैलमेव च ॥ ३८ ॥ कृतमायतनं दद्यात्क्रमाच्छतगुणं फलम् ॥ कलशं तत्र चारोप्य एकविंशत्कुलैर्युतः ॥ ३९ ॥ आकल्पांतं रुद्रलोके मोदते रुद्रवत्सुखी ॥ एवंविधफलं लिंगमतो[2] भूयो[3]ऽप्यधो न हि ॥ ४० ॥ तस्मादत्र महासेन लिंगं स्थापितुमर्हसि ॥ यदुक्तमेतदश्लीलं यदि किंचन चात्र चेत् ॥ ४१ ॥ तद्ब्रवीतु महासेन स्वयं साक्षी महेश्वरः ॥ एवं वदति गोविंदे साधुवादो महानभूत् ॥ ४२ ॥ महादेवो ह्यथालिंग्य स्कन्दं वचनमब्रवीत् ॥ यद्भवान्मम भक्तेषु प्रकरोति कृपां पराम् ॥ ४३ ॥ तेनापि परमा प्रीतिर्मम जाता तवोपरि ॥ किं तु यद्भगवानाह वासुदेवो जगद्गुरुः ॥ ४४ ॥ तत्तथा नान्यथा किंचिदत्र प्रोक्तं हि विष्णुना ॥ यो ह्यहं स हरिर्ज्ञेयो यो हरिः सोऽहमित्युत ॥ ४५ ॥ नावयोरंतरं किंचिद्दीपयोरिव सुव्रत ॥ एनं द्वेष्टि स मां द्वेष्टि योन्वेत्येनं स मांऽनुगः[4] ॥ ४६ ॥ इति स्कन्द विजानाति स मद्भक्तोन्यथा न हि ॥ ४७ ॥ ॥ स्कन्द उवाच ॥ ॥ एवमेवास्मि जानामि त्वां च विष्णुं च शंकर ॥ ४८ ॥ यच्च लिंगकृते प्राह हरिर्मां धर्मवत्सलः ॥ खे वाणी तारकवधे एवमेव पुराह माम् ॥ ४९ ॥ लिंगं संस्थापयिष्यामि[5] सर्वपापापहं ततः ॥ एकं यत्र प्रतिज्ञा मे गृहीतास्य वधाय च ॥ ५० ॥ द्वितीयं यत्र निःसत्त्वस्त्यक्तः शक्त्याऽसुरोऽभवत् ॥ तृतीयं यत्र निहतो हत्यापापोपशांतिदम् ॥ ५१ ॥ इत्युक्त्वा विश्वकर्माणमाहूय प्राह पावकिः ॥ त्रीणि लिंगानि शुद्धानि शीघ्रं त्वं कर्तुमर्हसि ॥ ५२ ॥ वचनाद्बाहुलेयस्य निर्ममे देववर्द्धकिः ॥ त्रीणि लिंगानि शुद्धानि न्यवेदयत तानि च ॥ ५३ ॥ ततो ब्रह्मादिभिः सार्धं विष्णुना शंकरेण च ॥ पूर्वं संस्थापयामास पश्चिमायामदूरतः ॥ ५४ ॥ प्रतिज्ञेश्वरमित्येव लिंगं परमशोभनम् ॥ अष्टम्यां बहुले चात्र चैत्रे स्नात्वा उपोष्य च ॥ ५५ ॥ पूजां च जागरं कृत्वा मुच्येत्पारुष्यपापतः ॥ इत्याह स्कंदप्रीत्यर्थं स्वयं तत्र महेश्वरः ॥ ५६ ॥ ततो द्वितीयं लिंगं तु वह्निकोणाश्रितं तथा ॥ स्थापयामास सरसो यत्र शक्तिर्विनिर्ययौ ॥ ५७ ॥ कपालेश्वरमित्येव लिंगं पापापहं शुभम् ॥ शक्तिं च तामभिष्टूय स्थापयामास तत्र च ॥ ५८ ॥ कपालेश्वरसांनिध्यं

१ स्वभक्तितः—इ० पा० । २ एवंविधं फलं लिंगे—इ० पा० । ३ भूयोऽपि अधिकमेव, अधः न हि न्यूनं न हीत्यर्थः । ४ मानुगः—मा मां प्रति अनुगः अनुयायी । ५ लिंगं स्थापयिष्यामि—इति पूर्वेण संबन्धः । एवं स्थानत्रयेऽपि त्रीणि लिंगानि स्थापयिष्यामि—इत्यर्थः ।

देवीं कापालिकेश्वरीम् ॥ तत्र चोत्तरदिग्भागे शक्तिच्छिद्रं प्रचक्षते ॥ ५९ ॥ पातालगंगा यत्रास्ति सर्वपापहरा शिवा ॥ तत्र स्नात्वा ददौ स्कंदः कृपयाभिपरिप्लुतः ॥ ६० ॥ तदा तोयं तारकाय सहितः सर्वदैवतैः ॥ ६१ ॥ काश्यपेयाय वज्रांगतनयाय महात्मने ॥ रुद्रभक्ताय सतिलमक्षय्योदकमस्त्विति ॥ ६२ ॥ ततो महेश्वरः प्रीतः प्राह स्कंदस्य शृण्वतः ॥ चतुर्दश्यां कृष्णपक्षे मधौ चैवात्र यो नरः ॥ स्नात्वोपोष्य समभ्यर्च्य कपालेश्वरमीश्वरीम् ॥ ६३ ॥ तेजोवधसमुद्भूतपातकेन स मुच्यते ॥ ६४ ॥ अस्यामेव तिथौ सोमः शिवयोगश्च तैतिलम् ॥ षड्योगः शक्तिच्छिद्रे यो दिनं रुद्रं जपन्निशि ॥ स्नात्वात्र सशरीरो वै रुद्रलोकं व्रजिष्यति ॥ ६५ ॥ कपालेशस्य सांनिध्ये शक्तिच्छिद्रं हि कीर्त्यते ॥ तस्य तुल्यं परं तीर्थं पृथिव्यां नैव विद्यते ॥ ६६ ॥ इति श्रुत्वा रुद्रवाक्यं स्कंदः प्रीतोऽभवद्भृशम् ॥ देवाश्च मुदिताः सर्वे साधुसाध्विति ते जगुः ॥ ६७ ॥

॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारस्थापितप्रतिज्ञेश्वरशक्तिच्छिद्रेश्वरमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ छ ॥

॥ नारद उवाच ॥ ॥ ततस्तृतीयलिंगस्य चिकीर्षुं स्थापनं गुहम् ॥ ब्रह्मा प्राहास्य प्रीत्यर्थं स्वयमन्यं प्रकुर्महे ॥ १ ॥ यद्यप्येतच्छुभं लिंगं सर्वदोषविवर्जितम् ॥ तथाप्यन्यत्करिष्येऽहं सर्वश्रेष्ठतमं हि यत् ॥ २ ॥ ततो ब्रह्मा सर्वदोषविमुक्तं निर्ममे स्वयम् ॥ दृष्टिकांतं मनःकांतं फलकांतं सुलिंगकम् ॥ ३ ॥ तत्र स्कंदस्य प्रीत्यर्थं सर्वदेवैर्विनिर्मितम् ॥ सरः सुरम्यं तीर्थानि तत्र ते निदधुस्तथा ॥ ४ ॥ गंगादिकानि तीर्थानि यानि प्रोचुर्दिवौकसः ॥ इदं यावत्सरस्तावत्सर्वैरत्र समुष्यताम् ॥ ५ ॥ एवमस्त्विति तान्यूचुः प्रीत्यर्थं शरजन्मनः ॥ ततो ब्रह्मा स्वयं तत्र रौद्रैर्मंत्रैर्हुताशनम् ॥ गाधिपुत्रादिभिर्विप्रैस्तर्पयामास संयुतः ॥ ६ ॥ ततो वैशाखमासस्य चतुर्दश्यां शुभे दिने ॥ प्रतिष्ठां चक्रिरे लिंगे चिरं विप्रमुखा द्विजाः ॥७॥ जगुर्गंधर्वपतयो ननृतुश्चाप्सरोगणाः॥ ततः स्कंदः प्रीतियुक्तः स्नात्वा सरसि शोभने॥ ॥८॥ सर्वतीर्थोदकैः स्नाप्य तल्लिंगं भक्तिसंयुतः ॥ विविधैः पूजयामास पुष्पैर्मंत्रैश्च पंचभिः ॥९॥ पूजाकाले स्वयं तत्र लिंगमध्ये स्थितो हरः ॥ जंगमाजंगमैः सार्धं स्वयं जग्राह पूजनम् ॥ १० ॥ ततस्तं पूजयन्प्राह स्कंदो भक्तिपरिप्लुतः ॥ केन केनोपहारेण त्वयि दत्तेन किं फलम् ॥ ११ ॥

॥ ॥ श्रीमहादेव उवाच ॥ ॥ मम यः स्थापयेल्लिंगं शुभं सद्म च कारयेत् ॥ मल्लोके वसतेऽसौ च यावच्चंद्रदिवाकरौ ॥ १२ ॥ मम सद्म सुधाशुभ्रं यावत्संख्यं करोति यः ॥ तावंत्येव च जन्मानि यशसासौ विराजते ॥१३॥ ध्वजभूतो ध्वजं दत्त्वा विपापः स्यात्पताकया ॥ विधाय चित्र

१ तानि-इ० पा० ।

विन्यास गंधर्वैः सह मोदते ॥ १४ ॥ रजःसंशोधनं कृत्वा नरो रोगैः प्रमुच्यते ॥ प्राप्नोति देहं हार्दं च सुरसद्मानुलेपनात् ॥ १५ ॥ पुष्पक्षीरादिभिर्दत्तैस्तिलांभोऽक्षतदर्भकैः ॥ शंभोः शिरसि दत्त्वार्घ्यं दिवि वर्षायुतं वसेत् ॥ १६ ॥ घृतेन हतपापः स्यान्मधुना सुभगो भवेत् ॥ विरोगो दधिदुग्धाभ्यां लिंगं संस्नाप्य जायते ॥ १७ ॥ पानीयदधिदुग्धाद्यैः क्रमाद्दशगुणं फलम् ॥ मांसं संस्नाप्य वै भक्त्या पिष्टाद्यैश्च विरूक्षयेत् ॥ १८ ॥ कपिलापंचगव्येन सुरसिंधुजलेन वा ॥ मां च संस्नाप्य चाभ्यर्च्य मल्लोकमधिगच्छति ॥ १९ ॥ कुशोदकाद्गंधजलं तस्मात्तीर्थोदकं वरम् ॥ तीर्थेभ्यश्च जलं दर्शे महीसागरसंभवम् ॥ २० ॥ कपिलां दत्त्वा यदाप्नोति तत्फलं कलशे पृथक् ॥ मृत्ताम्ररौप्यसौवर्णैः क्रमाच्छतगुणं फलम् ॥ २१ ॥ श्रीखंडागरुकाश्मीरशशिनः क्रमशोऽधिकाः ॥ मां च तैश्च समालभ्य स्याच्छ्रीमान्सुभगः सुखी ॥ २२ ॥ प्रशस्तो गुग्गुलो धूपस्तस्माच्चंद्रोऽगरुर्वरः ॥ धूपानेतान्नरो दत्त्वा सुखं स्वर्गमवाप्नुयात् ॥ २३ ॥ दीपदः कीर्तिमाप्नोति चक्षुरुत्तममेव च ॥ नैवेद्यस्य प्रदानेन नरो मृष्टाशनो भवेत् ॥ २४ ॥ पुष्पेण हेमकर्णस्य प्रबद्धेन द्विसंगुणम् ॥ फलमाप्नोति पुरुषः सत्यसंधश्च जायते ॥ २५ ॥ अखंडैर्बिल्वपत्रैश्च पुष्पैर्वा विविधैरपि ॥ लिंगं प्रपूरणं कृत्वा लक्षमेकं वसेद्दिवि ॥ २६ ॥ यस्तु पुष्पगृहं कुर्यान्नरः शुद्धाशयो भवेत् ॥ पुष्पकेण विमानेन दिवि संक्रीडते चिरम् ॥२७॥ भूषणांवरदानेन नरो भवति भोगभाक् ॥ सच्चामरप्रदानेन जायते पार्थिवो नरः ॥ २८ ॥ रम्यं वितानं यो दद्याच्छत्रुभिर्नाभिभूयते ॥ गीतं वाद्यं प्रनृत्यं च कृत्वा शुद्धो व्रजेत्स माम् ॥ २९ ॥ शंखघंटाप्रदानेन विद्वान्भवति शब्दवान् ॥ विधाय रथयात्रां च चिरं शोकैः प्रमुच्यते ॥ ३० ॥ नमस्कारं प्रणामं च कृत्वा जायेन्महाकुले ॥ वाचयंश्चाग्रतः शास्त्रं मम ज्ञानी प्रजायते ॥ ३१ ॥ विमुच्यते मनोमोहैर्भक्त्या स्तुत्वा च मां नरः ॥ गोदानफलमाप्नोति निर्माल्यस्फेटनान्मम ॥ ३२ ॥ आरार्तिकं भ्रामयित्वा आर्तिहीनः प्रजायते ॥ कृत्वा शीतलिकां तापैर्मुच्यते दोषसंभवैः ॥ ३३ ॥ नत्वा दत्त्वाथ शक्त्या च दानं लिंगस्य संनिधौ ॥ फलं शतगुणं प्राप्य इह चामुत्र मोदते ॥ ३४ ॥ प्रणामात्पंचदश च स्नानाद्विंशतिं पूजया ॥ शतं यथाप्रोक्तविधेरपराधानहं क्षमे ॥ ३५ ॥ एतत्सर्वं यथोद्दिष्टं कुमारात्र भविष्यति ॥ ये मां प्रपूजयिष्यंति कुमारेश्वर

---

१ रजःसंमार्जनम्—इ०पा०। २ सोऽप्यपापः—इ०पा०। ३ मां च संस्थाप्य—इ०पा०। ४ भवेत्—इ०पा०। ५ परस्मैपदमार्षम्—जायते—इति बोध्यम्। ६ निर्माल्यस्फेटनात्—निर्माल्यस्य स्नेहेन (आदरेण) धारणात्, पवित्रस्थाने प्रक्षेपणाद्वा—इत्यर्थो बोध्यः। भ्वादौ 'ष्णिह ९१ स्नेहने' 'स्फिट ९२ इत्येके' इत्युक्तः स्फिटधातुः स्नेहनेऽर्थे दृश्यते। ७ दुःखसंभवैः—इ०पा०। तदा दुःखस्य संभवो येभ्यस्तैः—इत्यर्थो बोध्यः। ८ तथा—इ०पा०।

संस्थितम् ॥ ३६ ॥ वाराणस्यां यथा वत्स विश्वनाथोऽस्मि संस्थितः ॥ ३७ ॥ गुप्तक्षेत्रे तथा स्थास्ये कुमारेश्वरमध्यतः ॥ ३८ ॥ श्रुत्वेति वचनं रुद्राद्देवानां शृण्वतां गुहः ॥ विस्मितः प्रणिपत्यैनं तुष्टाव गिरिजापतिम् ॥ ३९ ॥ नमः शिवायास्तु निरामयाय नमः शिवायास्तु मनोमयाय ॥ नमः शिवायास्तु सुरार्चिताय तुभ्यं सदा भक्तकृपापराय ॥ ४० ॥ नमो भवायास्तु भवोद्भवाय नमोस्तु ते ध्वस्तमनोभवाय ॥ नमोऽस्तु ते गूढमहाव्रताय नमोऽस्तु मायागहनाश्रयाय ॥ ४१ ॥ नमोस्तु शर्वाय नमः शिवाय नमोस्तु सिद्धाय पुरातनाय ॥ नमोस्तु कालाय नमः[1] कलाय नमोऽस्तु ते कालकलातिगाय ॥ ४२ ॥ नमो निसर्गात्मकभूतिकाय नमोऽस्त्वमेयोक्षमहर्द्धिकाय ॥ नमः शरण्याय नमोऽगुणाय नमोऽस्तु ते भीमगुणानुगाय ॥ ४३ ॥ नमोऽस्तु नानाभुवनाधिकर्त्रे नमोऽस्तु भक्ताभिमतप्रदात्रे ॥ नमोऽस्तु कर्मप्रसवाय धात्रे नमः सदा ते भगवन्सुकर्त्रे ॥ ४४ ॥ अनंतरूपाय सदैव तुभ्यमसह्यकोपाय सदैव तुभ्यम् ॥ अमेयमानाय नमोस्तु तुभ्यं वृषेंद्रयानाय नमोऽस्तु तुभ्यम् ॥ ४५ ॥ नमः प्रसिद्धाय महौषधाय नमोऽस्तु ते व्याधिगणापहाय ॥ चराचराय[2]थ विचारदाय कुमारनाथाय नमः शिवाय ॥ ४६ ॥ ममेश भूतेश महेश्वरोसि कामेश वागीश बलेश धीश ॥ क्रोधेश मोहेश परापरेश नमोस्तु मोक्षेश गुहाशयेश ॥ ४७ ॥ इति संस्तूय वरदं शूलपाणिमुमापतिम् ॥ प्रणिपत्य उमापुत्रो नमोनम उवाच ह ॥ ४८ ॥ एवं भक्तिपराक्रांतमात्मयोग्यं स्तवं शिवः ॥ अभिनन्द्य चिरं कालमिदं वचनमब्रवीत् ॥ ४९ ॥ त्वया दुःखं न संचिंत्यं मम भक्तवधात्मकम् ॥ कर्मणानेन श्लाघ्योऽसि मुनीनामपि पुत्रक[3] ॥ ५० ॥ ये च सायं तथा प्रातस्त्वत्कृतेन स्तवेन माम् ॥ स्तोष्यंति परया भक्त्या शृणु तेषां च यत्फलम् ॥ ५१ ॥ न व्याधिर्न च दारिद्र्यं न चैवेष्टवियोजनम् ॥ भुक्त्वा भोगान्दुर्लभांश्च मम यास्यंति सद्म ते ॥ ५२ ॥ तथान्यानपि दास्यामि वरान्परमदुर्लभान् ॥ भक्त्या तवातितुष्टोऽहं प्रीत्यर्थं तव पुत्रक ॥ ५३ ॥ महीसागरकूले[4] तु ये मां स्तोष्यंति पूजया ॥ तेषां तदक्षयं सर्वं वैशाख्यां दानपूजनम् ॥ ५४ ॥ सरस्यत्र च ये स्नानं प्रकरिष्यंति मानवाः ॥ सर्वतीर्थफलावाप्तिर्वैशाख्यां प्रभविष्यति[5] ॥ ५५ ॥ कुमारेशं तु[6] मां भक्त्या महीसागरसंगमे ॥ स्नात्वा संपूजयेन्नित्यं तस्य जातिस्मृतिर्भवेत् ॥ ५६ ॥ जातिस्मृतिरियं पुत्र यस्यां जातौ प्रजायते ॥ स्मरतेऽस्याः प्रकर्तव्यं श्रेयोरूपं सुदुर्लभम् ॥ ५७ ॥ यस्मिन्काले ह्यनावृष्टिर्जायते कृत्तिकासुत ॥ स्नापयेद्विधिवन्मां च कलशैर्विविधैः शुभैः ॥ ५८ ॥ एकरात्रं त्रिरात्रं वा पञ्चरात्रं च सप्त वा ॥ स्नापयेद्गंधतोयेन कुंकुमेन विलेपयेत् ॥ ५९ ॥ करवीरै[7] रक्त

[1] नमः कपर्दिने—इ० पा० । [2] चराचरं चारविचारदाय—इ०पा० । [3] सुतम्—इ०पा० । [4] महीसागरकूलेषु—इ०पा० । [5] संभविष्यति—इ०पा० । [6] च—इ०पा० । [7] कर्णिकारैः—इ०पा० ।

पुष्पैर्जपापुष्पैस्तथैव च ॥ अर्चयेत्पुष्पमालाभिः परिधायारुणवाससी ॥ ६० ॥ भोजयेद्ब्राह्मणांश्चैव तापसाञ्छंसितव्रतान् ॥ लक्षहोमं प्रकुर्वीत शिवहोमं ग्रहादिकम् ॥ ६१ ॥ भूमिदानं ततः कुर्यात्ततो दद्याद्गवाह्निकम् ॥ आचोपयेच्छिवां शांतिं रुद्रजाप्यं हि[3] कारयेत् ॥ ६२ ॥ अनेनैव विधानेन कृतेन तु द्विजोत्तमैः ॥ अगर्भितास्तदा मेघा वर्षंते नात्र संशयः ॥ ६३ ॥ विविधैः पूर्यते धान्यैः शाद्वलैश्च वसुन्धरा ॥ आरोग्यं हि भवेच्चैव जने गोपकुले तथा ॥ ६४ ॥ धर्मयुक्तो भवेद्राजा परचक्रैर्न पीड्यते ॥ घृतेन स्नापयेन्मां च अर्कक्रांतौ नरोऽत्र यः ॥ ६५ ॥ कन्यादान फलं तस्य नात्र कार्या विचारणा ॥ क्षीरेण स्नापयेद्देवं तथा पंचामृतेन यः ॥ ६६ ॥ अग्निष्टोमस्य यज्ञस्य फलं तस्योपजायते ॥ कुमारेश्वरतीर्थे यः प्राणत्यागं करोति हि ॥ ६७ ॥ रुद्रलोके वसेत्तावद्यावदाभूतसंप्लवम् ॥ अयने विषुवे चैव ग्रहणे चंद्रसूर्ययोः ॥ ६८ ॥ पौर्णमास्याममावास्यां संक्रांतौ वैधृते तथा ॥ कुमारेशं नरः स्नात्वा महीसागरसंगमे ॥ ६९ ॥ भक्त्या योऽभ्यर्चयेन्मां च तस्य पुण्यफलं शृणु ॥ यन्महीतलतीर्थेषु स्नाने स्यात्तु महत्फलम् ॥ ७० ॥ यच्चार्चितेषु लिंगेषु सर्वेषु स्यात्फलं च तत् ॥ आरोग्यं पुत्रलाभं च धनलाभं सुखं सुतम् ॥ ७१ ॥ निश्चितं लभते मर्त्यः कुमारेश्वरसेवया ॥ ब्रह्मचारी शुचिर्भूत्वा यस्तिष्ठेदत्र तापसः ॥७२॥ परं पाशुपतं योगं प्राप्य याति लयं मयि ॥ पापात्मनां च मर्त्यानां सद्योऽस्मि फलदर्शकः ॥७३॥ दिव्येनाष्टविधेनात्र कोशः साधारणोऽत्र च ॥ अघोराद्यैः पंचमंत्रैः स्नाप्य लिंगं महोज्ज्वलम् ॥ ७४ ॥ अघोरेणैव तत्तोयं दद्याद्दिव्यस्य कारणे ॥ पिबेदेतदुदीर्या ै प्रसृतित्रयमेव च ॥ ७५ ॥ यदि धर्मस्तथा सत्यमीश्वरोऽत्र जगत्त्रये ॥ कोशपानात्फलं सद्यो द्रक्ष्याम्यस्मिं शुभाशुभम् ॥ ७६ ॥ यास्ये चेति कुलं हन्याद्गमने च कुटुम्बकम् ॥ दर्शने च शुभं पाने हन्याद्देहं च मिथ्यया ॥ ७७ ॥ त्रिभिर्दिनैस्त्रिभिः पक्षैस्त्रिभिर्मासैस्त्रिभिः समैः ॥ अत्युग्रपुण्यपापानां मानेन फलमश्नुते ॥ ७८ ॥ एते वरा मया लिंगे दत्तास्त्रै स्थापिते त्वया ॥ तव प्रीत्यभिवृद्ध्यर्थं ब्रूहि भूयोऽप्युमात्मज ॥ ७९ ॥ ॥ स्कन्द उवाच ॥ ॥ कृतकृत्यो वरैर्दत्तैस्त्वया चैतैर्महेश्वर ॥ नमोनमो नमस्तेस्तु नात्र त्याज्यं त्वया विभो ॥ ८० ॥ एवं प्रणम्य देवं स मातरं प्रणतोऽब्रवीत् ॥ त्वयापि मातर्नैवात्र त्याज्यं मम प्रियेप्सया ॥ ८१ ॥ त्वामप्यत्र स्थापयिष्ये वरदा भव पार्वति ॥ ८२ ॥

---

१ परीध्यारुणवाससी--इ०पा० । २ गवादिकम्--इ०पा० । ३ च--इ०पा० । ४ अन्नाद्यैः--इ०पा० । ५ अर्कक्रांतौ--सूर्यसंक्रांतौ--इत्यर्थः । इषक्रांतौ--इ०पा० । तदा आश्विनमासे या सूर्यसंक्रांतिस्तस्यामित्यर्थो बोध्यः । ६ काचित्--इ० पा० । ७ यावदाहूतसंप्लवम्--इ० पा० । ८ वः--इ०पा० । ९ पंचमुख्यैः--इ०पा० । १० दिव्यस्य कारणे दिव्यपरीक्षार्थमित्यर्थः । ११ अस्मि--इत्यहमर्थकमव्ययम् । १२ गमनेन--इ०पा० । १३ पुंस्त्वमार्षम् । १४ पर्यायेण--इ०पा० । १५ दत्ताः अत्र--इति पदच्छेदः । संधिरार्षः ।

॥ ॥ श्रीदेव्युवाच ॥ ॥ यत्र शर्वः स्वभावेन तत्र तिष्ठाम्यहं सुत ॥ ८३ ॥ तव भक्त्या विशेषेण स्थास्ये स्त्रीणां वरप्रदा ॥ युद्धेषु तव
कर्माणि रुद्रभक्तेषु ते[1] कृपाम् ॥ ८४ ॥ पश्यंती पुत्रिणां मुख्या प्रीणिता च भृशं त्वया ॥ गर्भक्लेशः स्त्रियो मन्ये साफल्यं भजते तदा ॥ ८५ ॥
सुतो यदा रुद्रभक्तः सानंदं सद्भिरीर्यते ॥ भव तस्मात्प्रियार्थाय तिष्ठाम्यत्र षडानन ॥ ८६ ॥ स्त्रीभिराराधिता दास्ये सौभाग्यं सुपतिं सुतान् ॥
चैत्रे चापि तृतीयायां स्नात्वा शीतेन वारिणा ॥ ८७ ॥ अर्चयिष्यंति मां याश्च पुष्पैर्धूपैर्विलेपनैः ॥ दास्यामि चाष्टसौभाग्यं या नारी भक्तित
त्परा ॥ ८८ ॥ पितरौ श्वशुरौ पुत्रान्पतिं सौभाग्यसंपदः ॥ कुंकुमं पुष्पश्रीखंडं तांबूलांजनमिक्षवः ॥ ८९ ॥ सप्तमं लवणं प्रोक्तमष्टमं च सुजीर
कम् ॥ तोलयेत्तुलया वापि सांश्रिश्च तुलिता भवेत् ॥ ९० ॥ सुवर्णेनाथ सौगन्ध्यद्रव्यैः शुभफलैरपि ॥ भुंक्ते वा लवणं पश्चान्नासौ वै विधवा भवेत्॥
॥ ९१ ॥ माघे वा कार्तिके वापि चैत्रे स्नात्वार्चयेत माम् ॥ दौर्भाग्यदुःखदारिद्र्यैर्न सा संयोगमाप्नुयात् ॥ ९२ ॥ श्रुत्वेति गिरिजावाचं सानंदः
पार्वतीसुतः ॥ स्थापयित्वा गिरिसुतां कपर्दिनमथाब्रवीत् ॥ ९३ ॥ पुष्पैर्धूपैर्मोदकैश्च पूर्वमभ्यर्च्य त्वां प्रभो ॥ पूजयंति कुमारेशं तेषां विघ्नहरो भव
॥ ९४ ॥ ॥ कपर्द्युवाच ॥ ॥ भ्रातस्त्वया स्थापितेऽस्मिँल्लिंगे भक्ताश्च ये नराः ॥ न तेषां मम विघ्नानि मम वागनुगामिनी ॥ ९५ ॥ एवमुक्ते विघ्न
राज्ञा प्रतीतेऽस्थापयच्च तम् ॥ तस्मादसौ सदाभ्यर्च्यश्चतुर्थ्यां च विशेषतः ॥ ९६ ॥ एवं स्थाप्य कुमारेशं लब्ध्वा चैतान्वराञ्छिवात् ॥ मनसा
कृतकृत्यं चात्मानं मेने षडाननः ॥ ९७ ॥ तस्थावंशेन तत्रैव कुमारेश्वरसंनिधौ ॥ अत्र स्थितं कुमारं ये पश्यन्ति स्वामियात्रिणः ॥ ९८॥ सफला
स्वामियात्रा च तेषां भवति भारत ॥ कार्तिक्यां च विशेषेण कार्तिकेयं समर्चयेत् ॥ ९९ ॥ यत्फलं स्वामियात्रायां तत्फलं समवाप्नुयात् ॥ एवंवि
धमिदं पार्थ महीसागरसंगमम् ॥ १०० ॥ निमित्तीकृत्य चात्मानं साध्वर्थे लिंगमर्चितम् ॥ रोगाभिभूतो रोगैर्वा नाम्नामष्टोत्तरं शतम् ॥ १०१ ॥
जप्त्वा शुचिर्ब्रह्मचारी मासं मुच्येत पातकात् ॥ एतदाराध्य संजाता रजिरामादयः पुरा ॥ १०२ ॥ शतसंख्याबलं राज्यं रुद्रलोकं च भेजिरे ॥
जामदग्न्यस्त्विदं लिंगमाराध्य च समाधुतम् ॥१०३॥ लेभे कुठारमुज्जह्रे येनार्जुनभुजान्युधि ॥ अग्रतो देवदेवस्य ज्ञात्वा तीर्थे महागुणान्॥१०४॥
रामेश्वरमिति ख्यातं स्थापितं लिंगमुत्तमम् ॥ तच्च योऽभ्यर्चयेद्भक्त्या रुद्रलोकं स गच्छति ॥ १०५ ॥ प्रीतः स्यात्तस्य रामश्च कुमारेशश्च

---

१ च–इ०पा० । २ अष्टमं कर्पटकम्–इ०पा० । ३ कपर्दी अत्र गणपतिर्बोध्यः । मोदकैरित्याद्युक्तेः,–अग्रे च–भ्रातः–इत्याद्युक्तेश्च । ४ तात–इ०पा० । ५ सुदिनम्–इ० पा० । ६ अर्चितम्–इ०पा० । ७ तीर्थमहागुणान्–इत्यपि पाठः ।

फाल्गुन ॥ इति संक्षेपतः प्रोक्तं कुमारेशस्य वर्णनम् ॥ १०६ ॥ कुमारेशस्य माहात्म्यं कीर्तयेद्यस्तदग्रतः ॥ ये च शृण्वंत्यनुदिनं रुद्रलोके वसंति ते ॥१०७॥ अस्य लिंगस्य माहात्म्यं श्राद्धकाले तु यः पठेत् ॥ पितॄणामक्षयं श्राद्धं जायते नात्र संशयः ॥१०८॥ अस्य लिंगस्य माहात्म्यं गुर्विणीं श्राव येद्यदि ॥ गुणवाञ्जायते पुत्रः कन्या चापि पतिव्रता ॥ १०९ ॥ एतत्पुण्यं पापहरं धर्म्यं चाह्लादकारकम् ॥ पठतां शृण्वतां चापि सर्वाभीष्टफल प्रदम् ॥ ११० ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारेशस्थापनपूर्वकमाहात्म्य वर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ कुमारेण स्थापितोऽत्र कुमारेशस्ततः सुराः ॥ प्रणम्य गुहमूचुश्च प्रबद्धकरसं पुटाः ॥ १ ॥ किंचिद्विज्ञापयिष्यामो वयं त्वां शृणु तत्त्वतः ॥ पूर्वप्रसिद्ध आचारः प्रोच्यते जयिनामयम् ॥ २ ॥ जयंति ये रणे शत्रूंस्तैः कार्यः स्तंभचिह्नकः[1] ॥ तस्मात्तव जयोद्द्योतनिमित्तं स्तंभमुत्तमम् ॥ ३ ॥ निक्षिपाम वयं यावत्त्वमनुज्ञातुमर्हसि ॥ विश्वकर्मकृतं यच्च तृतीयं लिंगमुत्त मम् ॥ ४ ॥ तस्य स्तंभाग्रतस्तं च संस्थापय शिवात्मज ॥ एवमुक्ते सुरैः स्कन्दस्तथेत्याह महामनाः ॥ ५ ॥ ततो हृष्टाः सुरगणाः शक्राद्याः स्तंभ मुत्तमम् ॥ जांबूनदमयं शुभ्रं रणभूमौ विनिक्षिपुः[2] ॥ ६ ॥ परितः स्थंडिलं दिक्षु सर्वरत्नमयं तु ते ॥ तत्र हृष्टाश्चाप्सरसो ननृतुर्दशधा शुभाः ॥ ७ ॥ मातरो मंगलान्यस्य जगुः स्कन्दस्य नंदिताः ॥ इंद्राद्या ननृतुस्तत्र स्वयं विष्णुश्च वादकः ॥ ८ ॥ पेतुः खात्पुष्पवर्षाणि देववाद्यानि सस्वनुः ॥ एवं स्तंभं समारोप्य जयाख्यं विश्वनंदकः[3] ॥ ९ ॥ स्तम्भेश्वरस्ततो देवः स्थापितस्त्र्यक्षसूनुना ॥ विरिंचिप्रमुखैर्देवैर्जातानन्दैः समं तदा[4] ॥ १० ॥ हरिहरादित्यथुक्तैस्तैः सेन्द्रैर्मुनिगणैरपि ॥ तस्यैव पश्चिमे भागे शक्त्यग्रेण महात्मना ॥११॥ गुहेन निर्मितः कूपो गंगा तत्र तलोद्भवा ॥ माघस्य च चतुर्दश्यां कृष्णायां पितृतर्पणम् ॥१२॥ कूपे स्नानं नरः कृत्वा भक्त्या यः पांडुनंदन ॥ गयाश्राद्धेन यत्पुण्यं तत्फलं लभते स्फुटम् ॥१३॥ स्तंभेश्वरं ततो देवं गन्धपुष्पैः प्रपूजयेत् ॥ वाजपेयफलं प्राप्य मोदते रुद्रसद्मनि ॥ १४ ॥ पौर्णमास्याममावास्यां महीसागरसंगमे ॥ श्राद्धं कृत्वा च योऽभ्य र्चेत्स्तंभेश्वरमकल्मपः ॥ १५ ॥ पितरस्तस्य तृप्यंति तृप्ता यच्छंति चाशिपः ॥ स भित्त्वा सर्वपापानि रुद्रलोके महीयते ॥ १६ ॥ इत्याह भग वान्रुद्रः स्कन्दस्य प्रीतये पुरा ॥ एवमेव चतुर्थं च स्थापितं लिंगमुत्तमम् ॥१७॥ प्रणेमुर्देवताः सर्वे साधुसाध्विति ते जगुः ॥ १८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे स्तंभेश्वरमाहात्म्यवर्णनंनाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥ छ ॥

१ तत्र चिह्नकः—इ० पा० । २ आर्षः प्रयोगः । विनिचिक्षिपुः—इत्यपेक्षितम् । ३ विश्वनंदनः—इ० पा० । ४ समंततः—इ० पा० ।

॥ ॥ नारद उवाच ॥ ॥ एवं दृष्ट्वा क्षितौ तानि लिंगानि हरसूनुना ॥ हरिब्रह्मेंद्रप्रमुखा देवाः प्रोचुः परस्परम् ॥ १ ॥ अहो धन्यः कुमारोऽयं महीसागरसंगमे ॥ येन चत्वारि लिंगानि स्थापितानि सुदुर्लभे ॥ २ ॥ वयमप्यत्र शुद्धयर्थं तोषार्थं स्कन्दरुद्रयोः ॥ साध्वर्थे चात्मलाभाय कुर्मो लिंगपरंपराम् ॥ ३ ॥ अथवा कोटिशो देवा मुनयो नैव संख्यया ॥ सर्वे चेत्स्थापयिष्यंति लिंगान्यत्र महीतटे ॥ ४ ॥ पूजा तेषां कथं भावि बहुत्वाच्चात्र पच्यते ॥ यस्य राष्ट्रे रुद्रलिंगं पूज्यते नैव शक्तितः ॥ ५ ॥ तस्य सीदति तद्राष्ट्रं दुर्भिक्षव्याधितस्करैः ॥ संभूय स्थापयिष्यामो लिंगमेकं ततः शुभम् ॥ ६ ॥ इति कृत्वा मतिं सर्वे प्राप्यानुज्ञां महेश्वरात् ॥ प्रहर्षिता गुहश्चैव हरिब्रह्ममुखाः सुराः ॥ ७ ॥ भूमिभागं शुभं वीक्ष्य विजने लिंगमुत्तमम् ॥ स्थापयामासुरथ ते स्वयं ब्रह्मविनिर्मितम् ॥ ८ ॥ सिद्धार्थैः स्थापितं यस्मा देवैर्ब्रह्मादिभिः स्वयम् ॥ सिद्धेश्वरमिति प्राह नाम लिंगस्य वै गुहः ॥ ९ ॥ सर्वैर्देवैस्तत्र लिंगे खानितं सर उत्तमम् ॥ सर्वतीर्थोदकैः शुभ्रैः पूरितं च महात्मभिः ॥ १० ॥ एतस्मिन्नंतरे पार्थ पातालाच्छेषनंदनः ॥ कुमुदोनाम आगत्य प्राह शेषाहिपन्नगान् ॥ ११ ॥ अस्मिंस्तारकयुद्धे तु प्रलंबोनाम दानवः ॥ पलायित्वा स्कंदभीत्या पापः पातालमाविशत् ॥ १२ ॥ स वो वसूनि पुत्रांश्च भार्याः कन्या गृहाणि च ॥ विध्वंसयति नागेंद्राः शीघ्रं धावतधावत ॥ १३ ॥ शेषात्मजस्य तद्वाक्यं कुमदस्य निशम्य ते ॥ औत्सुक्यमापुर्नागेंद्रा यामयामेति वादिनः ॥ १४ ॥ तान्निवार्य ततः स्कंदः क्रुद्धः शक्तिमथाददे ॥ पातालाय मुमोचाथ प्रोच्य दैत्यो निहन्यताम् ॥ १५ ॥ ततः स्कंदभुजोत्सृष्टा भुवं निर्भिद्य वेगतः ॥ प्रविष्टा सहसा शक्तिर्यथा दैवं नरं प्रति ॥ १६ ॥ सा तं हत्वा प्रलंबं च कोटिभिर्दशभिर्वृतम् ॥ नंदयित्वा गता नागाञ्जलकल्लोलपूर्विका ॥ १७ ॥ यांत्या शक्त्या तया पार्थ यत्कृतं विवरं भुवि ॥ पातालगंगातोयेन पूरितं पापहारिणा ॥ १८ ॥ तस्य नाम ददौ स्कंदः सिद्धकूप इति स्मृतः ॥ कृष्णाष्टम्यां चतुर्दश्यामुपवासी नरः स्वयम् ॥ १९ ॥ स्नात्वा कूपेऽर्चयेदीशं सिद्धेश्वरमनन्यधीः ॥ प्रभूतभवसंभूतपापं तस्य विलीयते ॥ २० ॥ सिद्धकुंडे च यः स्नात्वा श्राद्धं कुर्याद्विचक्षणः ॥ सर्वकल्मषनिर्मुक्तो भक्तियोग्यो भवेभवे[2] ॥ २१ ॥ वटश्चाप्यक्षयस्तस्य तुष्टो रुद्रो वरं ददौ ॥ प्रयागवटतुल्योऽयमेतत्सत्यं न संशयः ॥ २२ ॥ अत्रागत्य महाभागः श्राद्धं कुर्यात्सुभक्तितः ॥ पितृणामक्षयं तच्च सर्वेषां पिंडपातनम् ॥ २३ ॥ ततो ब्रह्मादयो देवाः स्कंदेन सहितास्तदा ॥ सिद्धांबिकां महाशक्तिं प्रार्थयामासुरीश्वरीम् ॥ २४ ॥ त्वयाविष्टो हि भगवान्मत्स्यरूपी जनार्दनः ॥

१ प्रष्ट्वा–इ०, दृष्ट्वा० इ० च पा० । २ भवेत्–इ० पा० ।

जगदुद्धारणार्थाय चक्रे कर्माण्यनेकशः ॥ २५ ॥ इति तां प्रार्थयामासुरत्र त्याज्यं न ते शुभे ॥ अत्र स्थिताः सर्व इमे क्षेत्रपाला महाबलाः ॥२६ ॥ अष्टम्यां वा चतुर्दश्यां बलिपुष्पैश्च त्वां शुभे ॥ ये पूजयंति ते पाल्याः सर्वापत्सु च या सदा ॥ २७ ॥ एवमुक्ता सिद्धमाता तथेति प्रत्यपद्यत ॥ स्थापयामासुरथ तां लिंगादुत्तरभागतः ॥ २८ ॥ ततः क्षेत्रपतीन्देवाश्चतुःपार्ष्टिं महेश्वरम् ॥ सिद्धेयं नाम क्षेत्रस्य रक्षार्थं निदधुः स्वयम् ॥ २९ ॥ त्वां च ये पूजयिष्यंति कार्यारंभेषु सर्वदा ॥ वर्षे वर्षे राजमापबलिना च विशेषतः ॥३०॥ तानसौ पालयेत्तुष्टः पिता लोकानिव स्वकान् ॥ सिद्धिकृतो देवास्तत्र सिद्धिविनायकम् ॥ ३१ ॥ कपर्दितनयं प्राथ्यं स्थापयांचक्रिरे मुदा ॥ तं च ये पूजयंत्यत्र कार्यारंभेषु सर्वदा ॥ ३२ ॥ तेषां सिद्धिं ददात्येष प्रबलो विघ्नराड्वः ॥ यद्यत्र पूजयेद्यस्तु सततं सिद्धसप्तकम् ॥ ३३ ॥ पश्येद्वा स्मरते वापि सर्वदोषैर्विमुच्यते ॥ सिद्धेश्वरः सिद्धवटश्च साक्षात्सिद्धांबिका सिद्धविनायकश्च ॥ सिद्धेयक्षेत्राधिपतिश्च सिद्धसरस्तथा सिद्धकूपश्च सप्त ॥ ३५ ॥ अत्र तुष्टो ददौ रुद्रः सुराणां दुर्लभान्वरान् ॥ वैशाखमासस्याष्टम्यां कृष्णायां सिद्धकूपके ॥ ३६ ॥ स्नात्वा पिंडान्वटे कृत्वा पूजयन्मां च सिद्धभाक् ॥ सदा योऽभ्यर्चयेन्मां च ब्रह्मचारी जितेंद्रियः ॥ ३७ ॥ अष्टाविष्टकरा नित्यं भवेयुस्तस्य सिद्धयः ॥ मंत्रजाप्यं बलिं होममत्र यः कुरुते नरः ॥ ३८ ॥ एकचित्तः शुचिर्भूत्वा सोऽभीष्टां सिद्धिमाप्नुयात् ॥ समाहितमनाश्चाथ सिद्धेशं यस्तु पश्यति ॥ ३९ ॥ तस्य सिद्धिर्भवत्येव विघ्नैर्यदि न हन्यते ॥ सिद्धांबिका महादेवी ह्यत्र संनिहितास्ति या ॥ ४० ॥ सिद्धिदा साधकेंद्राणां महाविद्यां जपंति ये ॥ धीरेभ्यो ब्रह्मचारिभ्यः सत्यचित्तेभ्य एव च ॥ ४१ ॥ मंत्रजाप्याद्ददात्येषा सर्वसिद्धीर्यथेप्सिताः ॥ पातालस्य बिलं चैतद्गुहशक्त्या कृतं महत् ॥ ४२ ॥ सिद्धांबिकाप्रसादेन विघ्नक्षेत्रपयोर्मम ॥ प्रत्यक्षं भविता यत्र नानाश्चर्याणि भूरिशः ॥ ४३ ॥ अत्र सिद्धिं प्रयास्यंति कोटिशः पुरुषाः सुराः ॥ विद्याधरत्वं देवत्वं गंधर्वत्वं च नागता ॥ ४४ ॥ यक्षत्वं चामरत्वं च प्राप्स्यंत्यत्र च साधकाः ॥ अत्र वै विजयोनाम स्थंडिलस्य प्रभावतः ॥ ४५ ॥ सिद्धांबिकां समाराध्य सिद्धिमाप्स्यति दुर्लभाम् ॥ यो मां द्रक्ष्यति चात्रस्थं यश्च मां पूजयिष्यति ॥ वादप्रचारतो वापि पुण्यावाप्तिर्भविष्यति ॥ ४६ ॥ ॥ ॥ नारद उवाच ॥ ॥ त्र्यंबकेण वरेष्वेवं दत्तेष्वपि सुरोत्तमाः ॥ ४७ ॥ प्रहृष्टाः समपद्यंत गाथां चेमां जगुस्तदा ॥ तेन यज्ञैर्जपैः स्तोत्रैस्तपो

१ सिद्धेयं नाम–सिद्धायाः इदं सिद्धेयम् । अपत्यार्थकोऽप्यत्रार्पत्वात्सामान्यतश्चातुरर्थिकः–"स्त्रीभ्यो ढक्" इति ढक्प्रत्ययः । २ तदा–इ० पा० । ३ पूजयिष्यन्ति–इ० पा० । ४ वाथ–इ० पा० । ५ नागता–नागत्वमित्यर्थः ।

भिस्तोषिता वंयम् ॥ ४८ ॥ सर्वे देवाः सिद्धिर्लिंगं यो नरः पूजयिष्यति ॥ सर्वकामफलावाप्तिरित्येवं शंकरोऽब्रवीत् ॥ ४९ ॥ इत्युक्त्वा ते जयं प्राप्ताः स्कंदेन सहिताः सुराः ॥ काराय्यं रम्यप्रासादान्रम्यैस्तारकसंभवैः ॥ ५० ॥ चतुर्वर्गफलावाप्तिं दत्त्वा क्षेत्रस्य संययुः ॥ केचित्स्कंदं प्रशंसंतस्तीर्थमन्ये हरिं परे ॥ ५१ ॥ केचिल्लिंगानि पंचापि युद्धं केचिद्दिवं ययुः ॥ ततोंऽतरिक्षे चालिंग्य महासेनं हरोऽब्रवीत् ॥ ५२ ॥ सप्तमे मारुतस्कंधे वस नित्यं प्रियात्मज ॥ कार्येष्वहं त्वया पुत्र संप्रष्टव्यः सदैव हि ॥ ५३ ॥ दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ स्तंभतीर्थे चं वत्स्येऽहं न विमोक्ष्यामि कर्हिचित् ॥ ५४ ॥ इत्युक्त्वा विससर्जैनं परिष्वज्य महेश्वरः ॥ ब्रह्मविष्णुमुखांश्चैव भक्त्या तैरभिनंदितः ॥ ५५ ॥ विसर्जिताः सुरा जग्मुः स्वानिस्वान्यालयांनि च ॥ शर्वो जगाम कैलासं स्कंधं वै सप्तमं गुहः ॥ ५६ ॥ इत्येतत्कथितं पार्थ लिंगपंचकसंभवम् ॥ यः पठेत्स्कंदंसंबद्धां कथां मर्त्यो महामतिः ॥ ५७ ॥ शृणुयाच्छ्रावयेद्वांपि स भवेत्कीर्तिमान्नरः ॥ बह्वायुः सुभगः श्रीमान्कांतिमाञ्छुभदर्शनः ॥ ५८ ॥ भूतेभ्यो निर्भयश्चापि सर्वदुःखविवर्जितः ॥ शुचिर्भूत्वा पुमान्यश्च कुमारेश्वरसन्निधौ॥ ५९ ॥ शृणुयात्स्कंदचरितं महाधनपतिर्भवेत् ॥ बालानां व्याधिदुष्टानां राजद्वारोपसेविनाम् ॥ ६० ॥ इदं तत्परमं धन्यं सर्वदोषहरं सदा ॥ तनुक्षये च सायुज्यं षण्मुखस्य व्रजेन्नरः ॥ ६१ ॥ वरमेनं ददुर्देवाः स्कंदस्याथ गता दिवम् ॥ ६२ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे पंचलिंगोपाख्यानसमाप्तिवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ श्रीनारद उवाच ॥ ॥ बर्बरीतीर्थमाहात्म्यमथो वक्ष्यामि तेऽर्जुन ॥ यथा बर्बरिका जाता शतशृंगा नृपात्मजा ॥ १ ॥ कुमारिकेति विख्याता तस्या नाम्ना प्रकथ्यते ॥ इदं कौमारिकाखंडं चतुर्वर्गफलप्रदम् ॥ २ ॥ यया कृता पृथिव्यां च नानाग्रामादिकल्पना ॥ इदं भरतखंडं च यया सम्यक्प्रकल्पितम् ॥ ३ ॥ ॥ धनंजय उवाच ॥ ॥ महदेतन्ममाश्चर्यं श्रोतव्यं परमं मुने ॥ कुमारीचरितं सर्वं ब्रूहि मह्यं सविस्तरम् ॥ ४ ॥ कथं विश्वमिदं जातं कर्मजातिप्रकल्पितम् ॥ कथं वा भारतं खंडं शुश्रूषेयं सदा मम ॥ ५ ॥ ॥ नारद उवाच ॥ ॥ अव्यक्तेऽस्मिन्निरालोके प्रधानपुरुषावुभौ ॥ अजौ समागतावेकौ केवलं शृणुमो वयम् ॥ ६ ॥ ततः स्वभावकालाभ्यां स्वरूपाभ्यां समीरितम् ॥ ईक्षणेनैव प्रकृतेर्महत्तत्त्वमजायत ॥ ७ ॥ महत्तत्त्वाद्विकुर्वाणादहंतत्त्वं व्यजायत ॥ त्रिधा तन्मुनिभिः

---

१ च ये–इ०पा० । २ काराय्य–कारयित्वा–इत्यर्थः । ३ प्रपालकौ–इत्यशुद्धः पाठः । ४ तु–इ०पा० । ५ तैः–महेश्वरब्रह्मविष्णुभिः–इत्यर्थो बोध्यः । ६ ततः–इ०पा० । ७ आर्षं नपुंसकत्वम् । ८ सप्तमं स्कन्धं–मारुतस्कन्धाख्यम् । ९ रहस्यं परमं शुभम्–इ०पा० । १० यः पठेत्पाठयेच्चैव–इ०पा० । ११ चापि–इ०पा० । १२ अर्जुन उवाच–इ०पा० । १३ कर्म चास्ति प्रकल्पितम्–इ०पा० । १४ श्रुतौ–इ०पा० ।

प्रोक्तं सत्त्वराजसतामसम् ॥ ८ ॥ तामसात्पंच जातानि तन्मात्राणि विदुर्बुधाः ॥ तन्मात्रेभ्यश्च भूतानि विशेषाः पंच तद्भवाः ॥ ९ ॥ सात्त्विका चाप्यहंकाराद्बिद्धि कर्मेंद्रियाणि च ॥ एकादशं मनश्चैव राजसं च द्वयोर्विदुः ॥ १० ॥ चतुर्विंशतितत्त्वानि जातानीति पुरा विदुः ॥ सदाशिवेन वै पुंसा तानि दृष्टानि भारत ॥ ११ ॥ बुद्बुदाकारतां जग्मुरंडं जातं ततः शुभम् ॥ शतकोटिप्रमाणं च ब्रह्मांडमिदमुच्यते ॥ १२ ॥ आत्मास्य कथितो ब्रह्मा व्यभजत्स त्रिधा त्विदम् ॥ ऊर्ध्वं तत्र स्थिता देवा मध्ये चैव च मानवाः ॥ १३ ॥ नागा दैत्याश्च पाताले त्रिधैतत्परिकल्पितम् ॥ एकैकं सप्तधाभूय ततस्तेन प्रकल्पितम् ॥ १४ ॥ पातालानि च द्वीपानि स्वर्लोकाः सप्तसप्त च ॥ सप्त द्वीपानि वक्ष्यामि शृणु तेषां प्रकल्पनाम् ॥ १५ ॥ लक्षयोजनविस्तारं जंबूद्वीपं प्रकीर्त्यंते[1] ॥ सूर्यबिंबसमाकारं तावत्क्षारार्णवावृतम् ॥ १६ ॥ शाकद्वीपं द्विगुणतो जंबूद्वीपात्ततः परम् ॥ तावता क्षीरतोयेन समुद्रेण परीवृतम् ॥ १७ ॥ सुरातोयेन दैत्यानां मोहकार्यर्णवेन हि ॥ पुष्करं तु ततो द्वीपं द्विगुणं तावता वृतम् ॥ १८ ॥ कुशद्वीपं द्विगुणतस्ततस्तत्परतः स्मृतम् ॥ दधितोयेन परितस्तावदर्णवसंवृतम् ॥ १९ ॥ ततः परं क्रौञ्चसंज्ञं द्विगुणं हि घृताब्धिना ॥ ततः शाल्मलिद्वीपं च द्विगुणं तावतैव च ॥ २० ॥ इक्षुसारस्वरूपेण समुद्रेण परीवृतम् ॥ गोमेदं तस्य परितो द्विगुणं तावता वृतम् ॥ २१ ॥ स्वादुतोयेन रम्येण समुद्रेण समंततः ॥ एवं कोटिद्वयं पार्थ लक्षपंचाशतत्रयम् ॥ २२ ॥ पंचाशच्च सहस्राणि सप्तद्वीपाः ससागराः ॥ दशोत्तराणि पंचैव अंगुलानां शतानि च ॥ २३ ॥ अपां वृद्धिक्षयो दृष्टः पक्षयोः शुक्लकृष्णयोः ॥ ततो हेममयी भूमिर्दशकोट्यः[3] कुरूद्वह ॥ २४ ॥ देवानां क्रीडनस्थानं लोकालोकस्ततः परम् ॥ पर्वतो वलयाकारो योजनायुतविस्तृतः ॥ २५ ॥ अस्य बाह्ये तमो घोरं दुष्प्रेक्ष्यं जीववर्जितम् ॥ पंचत्रिंशत्स्मृताः कोट्यो लक्षाण्येकोनविंशतिः ॥ २६ ॥ चत्वारिंशत्सहस्राणि योजनानां च फाल्गुन ॥ सप्तसागरमानस्तु गर्भोदस्तदनंतरम् ॥ २७ ॥ कोटियोजनविस्तारः कटाहः संव्यवस्थितः ॥ ब्रह्मणोऽडं कटाहेन संयुक्तं मेरुमध्यतः ॥ २८ ॥ पंचाशत्कोट्यो ज्ञेया दशदिक्षु समंततः ॥ जंबुद्वीपस्य मध्ये तु मेरुनामास्ति पर्वतः ॥ २९ ॥ स लक्षयोजनो ज्ञेयो ह्यधश्चोर्ध्वं प्रमाणतः ॥ षोडशैव सहस्राणि योजनानामधः स्थितः ॥ ३० ॥ उच्छ्रयश्चतुराशीतिर्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ त्रिभिः शृंगैः समायुक्तः शरावाकृतिमस्तकः ॥ ३१ ॥ मध्यशृंगे ब्रह्मवास ऐशान्यां त्र्यंबकस्य च ॥ नैर्ऋत्ये वासुदेवस्य हेमशृंगं च ब्रह्मणः ॥३२॥ रत्नजं शंकरस्यापि राजतं केशवस्य च ॥ मेरुदिक्षु चतसृषु विष्कंभा गिरयः स्मृताः ॥ ३३ ॥ पूर्वेण मंदरो नाम

१ प्रकल्प्यते—इ० पा० । २ तत्परितः—इ० पा० । ३ दशकोट्यः दशकोटियोजनपरिमाणत्तदशकोटिः कुरूद्वह—इ० पा० । ४ ततः परम्—इ० पा० ।

दक्षिणे गंधमादनः ॥ विपुलः पश्चिमो[1] ज्ञेयः सुपार्श्वस्तु तथोत्तरे ॥३४॥ कदंबो मंदरे ज्ञेयो जंबुर्वै गंधमादने ॥ अश्वत्थो विपुले चैव सुपार्श्वे च वटो मतः ॥३५॥ एकादशशतायामाश्चत्वारो गिरिकेतवः ॥ एतेषां संति चत्वारि वनानि जयमूर्धसु ॥३६॥ पूर्वं चैत्ररथं नाम दक्षिणे गंधमादनम् ॥ वैभ्राजं पश्चिमे ज्ञेयमुदक्चित्ररथं वनम् ॥ ३७ ॥ सरांसि चापि चत्वारि चतुर्दिक्षु निबोध मे ॥ प्राच्येऽरुणोदसंज्ञं तु मानसं दक्षिणे सरः ॥३८॥ प्रत्यक्छीतोदकंनाम उत्तरे च महाह्रदः ॥ विष्कंभगिरयो ह्येत उच्छ्रिताः पंचविंशतिः ॥३९॥ योजनानां सहस्राणि सहस्रं पिंडतः[2] स्मृतम्॥ अन्ये च संति बहुशस्तत्र वै केसराचलाः ॥४०॥ मेरोर्दक्षिणतश्चैव त्रयो मर्यादपर्वताः ॥ निषधो हेमकूटश्च हिमवानिति ते त्रयः॥४१॥लक्षयोजनदीर्घाश्च विस्तीर्णा द्विसहस्रकम् ॥ त्रयश्चोत्तरतो मेरोर्नीलः श्वेतोऽथ शृंगवान् ॥ ४२ ॥ माल्यवान्पूर्वतो मेरोर्गंधाख्यः पश्चिमे तथा ॥ इत्येते गिरयः प्रोक्ता जंबुद्वीपे समंततः ॥ ४३ ॥ गंधमादनसंस्थाया महागजप्रमाणतः ॥ फलानि जंब्वास्तन्नाम्ना जंबूद्वीपमिति स्मृतम् ॥ ४४ ॥ आसीत्स्वायंभुवोनाम मनुराद्यः प्रजापतिः ॥ आसीत्स्त्री शतरूपा तामुदुवोढ प्रजापतिः ॥ प्रियव्रतोत्तानपादौ तस्याऽऽस्तां तनयावुभौ ॥ ४५ ॥ ध्रुवश्चोत्तानपादस्य पुत्रः परमधार्मिकः ॥ भक्त्या स विष्णुमाराध्य स्थानं चैवाक्षयं गतः ॥ ४६ ॥ प्रियव्रतस्य राजर्षेरुत्पन्ना दश सूनवः ॥ त्रयः प्रव्रजितास्तत्र परंब्रह्म समाश्रिताः ॥ ४७ ॥ सप्त सप्तसु द्वीपेषु तेन पुत्राः प्रतिष्ठिताः ॥ जंबूद्वीपाधिपो ज्येष्ठ आग्नीध्र इति विश्रुतः ॥ ४८ ॥ तस्यासन्नव सुताः पार्थ नववर्षेश्वराः स्मृताः ॥ तेषां नाम्ना च ते वर्षास्तिष्ठंत्यद्यापि चांकिताः ॥ ४९ ॥ योजनानां सहस्राणि नव प्रत्येकशः स्मृताः ॥ मेरोश्चतुर्दशं खंडं गंधमाल्यवतोर्द्वयोः ॥ ५० ॥ अंतरे हेमभूमिष्ठमिलावृतमिहोच्यते ॥ माल्यवत्सागरांतस्य भद्राश्वमिति प्रोच्यते ॥ ५१ ॥ गंधवत्सागरांतस्य केतुमालमिति स्मृतम् ॥ ५२ ॥ शृंगवज्जलधेरंतः कुरुखंडमिति स्मृतम् ॥ शृंगवच्छ्वेतमध्ये च खण्डं प्रोक्तं हिरण्मयम् ॥ ५३ ॥ सुनीलश्वेतयोर्मध्ये खंडमाहुश्च रम्यकम् ॥ निषधो हेमकूटश्च हरिखंडं तदंतरा ॥ ५४ ॥ हिमवद्धिमकूटांतः खण्डं किंपुरुषं स्मृतम् ॥ हिमाद्रिजलधेरन्तर्नाभिखण्डमिति स्मृतम् ॥ ५५ ॥ नाभिखण्डं च कुरवो द्वे वर्षे धनुषाकृती ॥ हिमवांश्च गिरिश्शृंगी ज्यास्थाने परिकीर्तितौ ॥ ५६ ॥ नाभेः पुत्रश्च ऋषभ ऋषभाद्भरतोऽभवत् ॥ तस्य नाम्ना त्विदं वर्षं भारतं चेति कीर्त्यते ॥ ५७ ॥ अत्र धर्मार्थकामानां मोक्षस्य च उपार्जनम् ॥ अन्यत्र भोगभूमिश्च सर्वत्र कुरुनंदन ॥ ५८ ॥ शाकद्वीपे च शाकोऽस्ति योजनानां सहस्रकः ॥ तस्य नाम्ना च तद्वर्षं शाकद्वीपमिति स्मृतम् ॥ ५९ ॥ तस्य च प्रिय

१ पश्चिमे भागे--इ०पा० । २ परितः--इत्यपि पा० ।

व्रत एवाधिपतिर्नाम्ना मेधातिथिरिति ॥ ६० ॥ तस्य पुरोजवमनोजववेपमानधूम्रानीकचित्ररेफबहुरूपविश्वचारसंज्ञानि पुत्रनामानि सप्त वर्षाणि ॥ ॥ ६१ ॥ शाकद्वीपे च वर्णं ऋतव्रतसत्यव्रतानुव्रतनामानो वाय्वात्मकं भगवंतं जपंति ॥ ६२ ॥ अंतः प्रविश्य भूतानि यो विभज्यात्मकेतुभिः ॥ अंतर्यामीश्वरः साक्षात्पातु नो यद्वशे जगत् ॥ ६३ ॥ इति जपः ॥ कुशद्वीपे कुशस्तंबो योजनानां सहस्रकः ॥ तच्चिह्नचिह्नितं तस्मात्कुशद्वीपं ततः स्मृतम् ॥ ६४ ॥ तद्वीपपतिश्च प्रैयव्रतो हिरण्यरोमा तत्पुत्रवसुवसुदानदृढकविनाभिगुप्तसत्यव्रतवामदेवनामांकितानि सप्त वर्षाणि ॥ वर्णाश्च कुलिशकोविदाभियुक्तकुलकसंज्ञा जातवेदसं भगवंतं स्तुवंति ॥ ६५ ॥ परस्य ब्रह्मणः साक्षाज्जातवेदासि हव्यवाट् ॥ देवानां पुरुषांगानां यज्ञेन पुरुषं यजः ॥ ६६ ॥ इति स्तुतिः ॥ क्रौंचद्वीपे क्रौंचनामा पर्वतो योजनायुतः ॥ योऽसौ गुहेन निर्भिन्नस्तच्चिह्नं क्रौंचद्वीपकम् ॥ ६७ ॥ तत्र च प्रैयव्रतो घृतपृष्ठिनामा तत्पुत्राममधुरुहमेघपृष्ठस्वधामऋताश्वलोहितार्णववनस्पतिइतिसप्तपुत्रनामांकितानि सप्त वर्षाणि ॥ ६८ ॥ वर्णाश्च गुरुऋषभद्रविणदेवकसंज्ञाः ॥ ६९ ॥ आपोमयं भगवंतं स्तुवंति ॥ ७० ॥ आपः पुरुषवीर्याश्च पुनंतीर्भूर्भुवःस्वश्च ॥ तैः पुनरमीवघ्नाः संस्पृशेतात्मना भुवः ॥७१॥ इति जपः ॥ शाल्मलेर्नाम वृक्षस्य तत्रवासः सहस्रं योजनानां तच्चिह्नं शाल्मलिद्वीपमुच्यते ॥ ७२ ॥ तस्याधिपतिः प्रैयव्रतो यज्ञबाहुस्तत्पुत्रसुरोचनसौमनस्यरमणकदेवबर्हिपारिभद्राप्यायनाभिज्ञाननामानि सप्तवर्षाणि ॥७३॥ वर्णाश्च श्रुतधरवीर्यवसुंधरइषंधरसंज्ञा भगवंतं सोमं यजंति ॥७४॥ स्वयोनिः पितृदेवेभ्यो विभजञ्छुक्लकृष्णयोः ॥ अधः प्रजानां सर्वासां राजा नः सोमोस्तु ॥ ७५ ॥ इति जपः गोमेदनामा प्लक्षोस्ति सुरम्यो यस्य च्छायया ॥ मेदोवृद्धिं गतं लौल्याद्गोमेदं द्वीपमुच्यते ॥ ७६ ॥ तत्र प्रैयव्रत इध्मजिह्वः पतिस्तत्पुत्रशिवसुरम्यसुभद्रशांत्यशँप्तामृताभयनामांकितानि सप्त वर्षाणि ॥७७॥ वर्णाश्च हंसपतंगोर्ध्वांचनसत्यांगसंज्ञाश्चत्वारो भगवंतं सूर्यं यजंते ॥ ७८ ॥ प्रभ्रस्य विष्णुरूपं यत्तत्रोत्थस्य ब्रह्मणोऽमृतस्य च ॥ मृत्योश्च सूर्यमात्मानं धीमहि ॥ ७९ ॥ इति जपः ॥ स्वर्णपत्राणि नियुतं योजनानां सहस्रकम् ॥ पुष्करं ज्वलदा भाति तच्चिह्नं द्वीपपुष्करम् ॥८० ॥ तस्याधिपतिः प्रैयव्रतो वीतहोत्रनामा तत्पुत्रौ रमणकघातकौ ॥८१॥ तन्नामचिह्नितं खंडद्वयम् ॥८२॥ तयोरंतरालेमानसाचलो नाम वलयाकारः पर्वतो यस्मिन्भ्रमति भगवान्भास्कर इति ॥८३॥ तत्र वर्णाश्च न संति केवलं समानास्ते ब्रह्म ध्यायंति ॥८४॥

१ ब्रह्मात्मकम्--इ०पा० । २ वर्पाश्च--इ० पा० । परंतु मूलस्थ एव पाठः समीचीनः । ३ संधिरार्षः--मंत्रत्वात् । ४ यज्ञेति--इ०पा० । ५ इति श्रुतिः--इ० पा० । ६ घृतपुष्टिनामा--इ०पा० । ७ अक्षितः--इ० पा० ।

यद्यत्कर्ममयं लिंगं ब्रह्मलिंगं जनोर्चयन् ॥ भेदेनैकांतमद्वैतं तस्मै भगवते नमः ॥ ८५ ॥ ॥ इति जपः ॥ ॥ नैषु क्रोधो न मात्सर्यं पुण्यपापार्जनेन च ॥ अयुतं द्विगुणं चापि क्रमादायुः प्रकीर्तितम् ॥ ८६ ॥ जपंतः कामिनीयुक्ता विहरंत्यमरा इव ॥ अथ ते संप्रवक्ष्यामि ऊर्ध्वलोकस्य संस्थितिम् ॥ ८७ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारिकाख्याने भूसंस्थितिवर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ भूमेर्योजनलक्षे च कौरव्य रविमंडलम् ॥ योजनानां सहस्राणि भास्करस्य रथो नव ॥ १ ॥ ईषादंडस्तथैवास्य द्विगुणः परिकीर्तितः ॥ सार्धकोटिस्तथा सप्त नियुतानि विवस्वतः ॥ २ ॥ योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ त्रिनाभि तच्च पंचारं षण्नेमि परिकीर्तितम् ॥ ३ ॥ चत्वारिंशत्सहस्राणि द्वितीयोऽक्षोऽपि विस्तृतः ॥ पंच चान्यानि सार्द्धानि स्यन्दनस्य तु पांडव ॥ ४ ॥ अक्षप्रमाणमुभयोः प्रमाणं तद्युगार्द्धयोः ॥ ह्रस्वोऽक्षस्तद्युगार्द्धं च ध्रुवाधारं रथस्य वै ॥ ५ ॥ द्वितीयोऽक्षस्तथा सव्ये चक्रं तन्मानसे स्थितम् ॥ हयाश्च सप्त च्छंदांसि तेषां नामानि मे शृणु ॥ ६ ॥ गायत्री च बृहत्युष्णिग्जगती त्रिष्टुवेव च ॥ अनुष्टुप्पंक्तिरित्युक्ताश्छंदांसि हरयो रवेः ॥ ७ ॥ नैवास्तमनमर्कस्य नोदयः सर्वदा सतः ॥ उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः ॥ ८ ॥ शक्रादीनां पुरे तिष्ठन्स्पृशत्येष पुरत्रयम् ॥ विकीर्णोऽतो विकर्णस्थस्त्रिकोणार्धपुरे तथा ॥ ९ ॥ अयनस्योत्तरस्यादौ मकरं याति भास्करः ॥ ततः कुम्भं च मीनं च राशे राश्यंतरं तथा ॥ १० ॥ त्रिष्वेतेष्वथ भुक्तेषु ततो वैषुवतीं गतिम् ॥ प्रयाति सविता कुर्वन्नहोरात्रं च तत्समम् ॥ ॥ ११ ॥ ततो रात्रिः क्षयं याति वर्धते तु दिनं दिनम् ॥ ततश्च मिथुनस्यांते परां काष्ठामुपागतः ॥ १२ ॥ राशिं कर्कटकं प्राप्य कुरुते दक्षिणायांनम् ॥ कुलालचक्रपर्यंतो यथा शीघ्रं निवर्तते ॥ १३ ॥ दक्षिणायक्रमे सूर्यस्तथा शीघ्रं निवर्तते ॥ अतिवेगितया कालं वायुमार्गबलाच्चरन् ॥ १४ ॥ तस्मात्प्रकृष्टां भूमिं स कालेनाल्पेन गच्छति ॥ कुलालचक्रमध्यस्थो यथा मंदं प्रसर्पति ॥ १५ ॥ तथोदगयने सूर्यः सर्पते मंदविक्रमः ॥ तस्माद्दीर्घेण कालेन भूमिमल्पं निगच्छति ॥ १६ ॥ संध्याकाले च मंदेहाः सूर्यमिच्छंति खादितुम् ॥ प्रजापतिकृतः शापस्तेषां फाल्गुन रक्षसाम् ॥ ॥ १७ ॥ अक्षयत्वं शरीराणां मरणं च दिनेदिने ॥ ततः सूर्यस्य तैर्युद्धं भवत्यत्यंतदारुणम् ॥ १८ ॥ ततो गायत्रिपूतं यद्द्विजास्तोयं क्षिपंति च ॥ तेन दह्यंति ते पापाः संध्योपासनतः सदा ॥ १९ ॥ ये संध्यां नाप्युपासंते कृतघ्ना यांति रौरवम् ॥ प्रतिमासं पृथक्सूर्यं ऋषिगन्धर्वराक्षसैः ॥२०॥

१ सहस्रे द्वे--इ० पा० । २ च सव्यतः--इ० पा० । ३ विकीर्णौ द्वौ विकीर्णस्थः--इ०पा० । ४ त्रिकोणात्स्वपुरे ततः--इ०पा० । ५ विद्रु:--इ० पा० ।

अप्सरोग्रामणीसर्पैरथो याति च सप्तभिः ॥ धातार्यमा मित्रवरुणौ विवस्वानिन्द्र एव च ॥ २१ ॥ पूषा च सविता सोऽथ भगस्त्वष्टा च कीर्तितः ॥ विष्णुश्चैत्रादिमासेषु आदित्या द्वादश स्मृताः ॥ २२ ॥ ततो दिवाकरस्थानान्मंडलं शशिनः स्थितम् ॥ लक्षमात्रेण तस्यापि त्रिचक्रो रथ उच्यते ॥ २३ ॥ कुंदाभा दश चैवाश्वा वामदक्षिणतो युताः ॥ पूर्णे शतसहस्रे च योजनानां निशाकरात् ॥ २४ ॥ नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ॥ चतुर्दश चार्बुदान्यप्यशीतिः सरितांपतिः[1] ॥ २५ ॥ विंशतिश्च तथा कोट्यो नक्षत्राणां प्रकीर्तिताः ॥ द्वे लक्षे चोत्तरे तस्माद्बुधो नक्षत्रमण्डलात् ॥ २६ ॥ वाय्वग्निद्रव्यसंभूतो रथश्चंद्रसुतस्य च ॥ पिशंगैस्तुरगैर्युक्तः सोष्टाभिर्वायुवेगिभिः ॥ २७ ॥ द्विलक्षश्चोत्तरे तस्माद्बुधाच्चाप्युशना स्मृतः ॥ शुक्रस्यापि रथोष्टाभिर्युक्तोऽभूत्संभवैर्हयैः ॥ २८ ॥ लक्षद्वयेन भौमस्य स्मृतो देवपुरोहितः ॥ अष्टाभिः पांडुरैरश्वैर्युक्तोऽस्य कांचनो रथः ॥ २९ ॥ सौरिर्बृहस्पतेश्चोर्ध्वं द्विलक्षे समुपस्थितः ॥ आकाशसंभवैरश्वैरष्टाभिः शबलै रथः ॥ ३० ॥ स्वर्भानोस्तुरगाश्चाष्टौ भृंगाभा धूसरा रथम् ॥ वहंति च सकृद्युक्ता आदित्याधःस्थितास्तथा ॥ ३१ ॥ सौरेर्लक्षं स्मृतं चोर्ध्वं ततः सप्तर्षिमण्डलम् ॥ ऋषिभ्यश्चापि लक्षेण ध्रुवश्चोर्ध्वं व्यवस्थितः ॥ ३२ ॥ मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः ॥ ध्रुवोऽपि शिंशुमारस्य पुच्छाधारे व्यवस्थितः ॥ ३३ ॥ यमाहुर्वासुदेवस्य रूपमात्मानमव्ययम् ॥ वायुपाशैर्ध्रुवे बद्धं सर्वमेतच्च फाल्गुन ॥ ३४ ॥ नवयोजनसाहस्रं मण्डलं सवितुः स्मृतम् ॥ द्विगुणं सूर्यविस्तारान्मण्डलं शशिनः स्मृतम्[2] ॥ ३५ ॥ तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात्प्रसर्पति ॥ उद्धृत्य पृथिवीच्छायां निर्मलां मण्डलाकृतिः ॥ ३६ ॥ चन्द्रस्य षोडशो भागो भार्गवश्च विधीयते ॥ भार्गवात्पादहीनस्तु विज्ञेयोऽथ बृहस्पतिः ॥ ३७ ॥ बृहस्पतेः पादहीनौ वक्रसौरी बुधस्तथा ॥ शतानि पंच चत्वारि त्रीणि द्वे चैकयोजनम् ॥ ३८ ॥ योजनार्धप्रमाणानि भानि ह्रस्वं न विद्यते ॥ भूमिलोकश्च भूर्लोकः पादगम्यः प्रकीर्तितः ॥ ३९ ॥ भूमिसूर्यांतरं तच्च भुवर्लोकः प्रकीर्तितः ॥ ध्रुवसूर्यांतरं तच्च नियुतानि चतुर्दश ॥ ४० ॥ स्वर्लोकः सोऽपि गदितो लोकसंस्थानचिंतकैः ॥ ध्रुवादूर्ध्वं तथा

---

१ अत्र–सरितांपतिः–इत्यनेन–"एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं खर्वनिखर्वमहापद्मशंकवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः ॥ १ ॥ संख्यायाः स्थानानां व्यवहारार्थं कृताः पूर्वैः ।" इति लीलावत्युक्तसंख्यासंज्ञान्तर्गत–'जलधि' नामकसंख्या बोध्या । २ विस्तारः शशिनः स्मृतः–इ० पा० । ३ अन्यत्र च ज्योतिःशास्त्रे भूर्भुवःस्वरादिकसंस्थितिरित्थं वर्णितास्ति–"भूर्लोकाख्यो दक्षिणे व्यक्षदेशात्तस्मात्सौम्योऽयं भुवः स्वश्च मेरुः । लभ्यः पुण्यैः खे महः स्याज्जनोऽतोऽनल्पानल्पैः स्वैस्तपःसत्यमन्त्यः ॥" एवं सप्तलोककल्पना कृतास्ति । अत्र व्यक्षदेशः लंकाप्रभृतिः । तस्माद्देशाद्दक्षिणे यः प्रदेशः स भूर्लोकः, तस्मादुत्तरे भुवर्लोकः यत्रास्मिँल्लोके वयं तिष्ठामः । मेरुः स्वर्लोकः, ततः खे आकाशे महर्लोकः, ततो जनलोकः, ततस्तपोलोकः, ततः सत्यलोकः, इति सिद्धान्तशिरोमणौ लोकसंस्थानकल्पनोक्ता बोद्धव्या ।

कोटिर्महर्लोकः प्रकीर्तितः ॥ ४१ ॥ द्वे कोट्यौ च जनो यत्र निवसंति चतुःसनाः[1] ॥ चतुर्भिश्चापि कोटीभिस्तपोलोकस्ततः स्मृतः ॥ ४२ ॥ वैराजा यत्र ते देवाः स्थिता दाहविवर्जिताः ॥ षड्गुणेन तपोलोकात्सत्यलोको विराजते ॥ ४३ ॥ अपुनर्मरका यत्र ब्रह्मलोको हि स स्मृतः ॥ अष्टा दश तथा कोट्यो लक्षाण्यशीतिपंच च ॥ ४४ ॥ शुभं निरुपमं स्थानं तदूर्ध्वं संप्रकाशते ॥ भूर्भुवःस्वरिति प्रोक्तं त्रैलोक्यं कृतकं त्विदम् ॥ ४५ ॥ जनस्तपस्तथा सत्यमिति चाकृतकं त्रयम् ॥ कृतकाकृतयोर्मध्ये महर्लोक इति स्मृतः ॥ ४६ ॥ शून्यो भवति कल्पांते योत्यंतं न विनश्यति ॥ एते सप्त समाख्याता लोकाः पुण्यैरुपार्जिताः ॥ ४७ ॥ यज्ञैर्दानैर्जपैर्होमैस्तीर्थैर्व्रतसमुच्चयैः ॥ वेदादिप्रोक्तैरन्यैश्च साध्याँल्लोकानिमान्विदुः ॥ ४८ ॥ ततश्चांडस्य शिरसो धारा नीरमयी शिवा ॥ सर्वलोकान्समाप्लाव्य गंगा मेरावुपागता ॥ ४९ ॥ ततो महीतलं सर्वं पातालं प्रविवेश सा[2] ॥ अंड मूर्ध्नि स्थिता देवी सततं द्वारवासिनी ॥ ५० ॥ देवीनां कोटिकोटीभिः संवृता पिंगलेन च ॥ तत्र स्थिता सदा रक्षां कुरुतेऽण्डस्य सा शुभा ॥ ५१ ॥ निहंति दुष्टसंघातान्महाबलपराक्रमा ॥ वायुस्कंधानि सप्तापि शृणु यद्वत्स्थितान्यपि ॥ ५२ ॥ पृथिवीं समभिक्रम्य संस्थितो मेघमंडले ॥ प्रवहोनाम[4] यो मेघान्प्रवहत्यतिशक्तिमान् ॥ ५३ ॥ धूमजाश्चोष्मजा मेघाः सामुद्रैर्येन पूरिताः ॥ तोयैर्भवंति नीलांगा वर्षिष्ठाश्चैव भारत ॥ ५४ ॥ द्वितीयश्चावहो नाम निबद्धः सूर्यमंडले ॥ तेन बद्धं ध्रुवेणेदं भ्राम्यते सूर्यमंडलम् ॥ ५५ ॥ तृतीयश्चोद्वहो नाम चंद्रस्कंधे प्रतिष्ठितः ॥ बद्धं ध्रुवेण येनेदं भ्राम्यते चंद्रमंडलम् ॥ ५६ ॥ चतुर्थः संवहो नाम स्थितो नक्षत्रमण्डले ॥ वातरश्मिभिराबद्धं ध्रुवेण सह भ्राम्यते ॥ ५७ ॥ ग्रहेषु पंचमः सोऽपि विवहो नाम मारुतः ॥ ग्रहचक्रमिदं येन भ्राम्यते ध्रुवसंधितम् ॥ ५८ ॥ षष्ठः परिवहो नाम स्थितः सप्तर्षिमंडले ॥ भ्रमंति ध्रुवसंबद्धा येन सप्तर्षयो दिवि ॥ ५९ ॥ सप्तमश्च ध्रुवे बद्धो वायुर्नाम्ना परावहः ॥ येन संस्थापितं ध्रौव्यं चक्रं चान्यानि भारत ॥ ६० ॥ यं समासाद्य वेगेन दिशामंतं प्रपेदिरे[5] ॥ दक्षस्य दश पुत्राणां सहस्राणि प्रजापतेः ॥ ६१ ॥ एवमेते दितेः पुत्राः सप्तसप्त व्यवस्थिताः ॥ अनारमंतः संयांति सर्वगाः सर्वधारिणः ॥ ६२ ॥

---

१ चतुःसनाः—सनक—सनंदन—सनातन—सनत्कुमाराः । २ संमतः—इ० पा० । ३ या—इ० पा० । ४ ज्योतिःशास्त्रे तु—"भूवायुरावह इह प्रवहस्तदूर्ध्वः स्यादुद्वहस्तदनु संवहसंज्ञकश्च । अन्यस्ततोऽपि सुवहः परिपूर्व कोऽस्माद्बाह्यः परावह इमे पवनाः प्रसिद्धाः ॥" इति सिद्धांतशिरोमण्युक्तरीत्या किंचिद्विलक्षणो दृश्यते । अत्र मूले प्रथमं प्रवह उक्तः—अत्र ज्योतिःशास्त्रे च पूर्वमावह उच्यते । अत्र मतभेदः प्रतिभाति । प्रमाणान्तरेण तस्य गतिः स्यात् । ५ एते—मरुतः—इत्यर्थः । दितिगर्भे शक्रेण सप्तसप्तधा कृतपरिच्छेदा ज्ञेयाः । तेषां कथा पूर्वमत्रैव खण्ड उक्ता ।

ध्रुवादूर्ध्वमसूर्यं चाप्यनक्षत्रमतारकम् ॥ स्वतेजसा स्वशक्त्या चाधिष्ठितास्ते हि नित्यदा ॥ ६३ ॥ इत्यूर्ध्वं ते समाख्यातं पातालान्यथ मे शृणु ॥ ६४ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे कुमारिकाख्याने लोकव्यवस्थितिवर्णनंनामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ सहस्रसप्तत्युच्छ्राये पातालानि परस्परम् ॥ अतलं वितलं चैव नितलं च रसातलम् ॥ १ ॥ तलातलं च सुतलं पातालं चापि सप्तमम् ॥ कृष्णशुक्लारुणाः पीताः शर्कराशैलकांचनाः ॥ २ ॥ भूमयो यत्र कौरव्य वरप्रासादशोभिताः ॥ तेषु दानवदैतेयनागाश्चैव सहस्रशः ॥ ३ ॥ स्वर्लोकादपि रम्याणि दृष्टानि बहुशो मया ॥ आह्लादकारिणो नानामणयो यत्र पन्नगाः ॥ ४ ॥ दैत्यदानवकन्याभिर्महारूपाभिरन्विते ॥ पाताले कस्य न प्रीतिर्विमुक्तस्यापि जायते ॥ ५ ॥ यत्र नोष्णं न वा शीतं न वर्षं दुःखमेव च ॥ भक्ष्यभोज्यमहाभोगकालो यत्रापि जायते ॥ ६ पाताले सप्तमे चास्ति लिंगं श्रीहाटकेश्वरम् ॥ ब्रह्मणा स्थापितं पार्थ सहस्रयोजनोच्छ्रितम् ॥ ७ ॥ हाटकस्य तु लिंगस्य प्रासादो योजनायुतः ॥ सर्वरत्नमयो दिव्यो नानाश्चर्यविभूषितः ॥ ८ ॥ तच्चार्चयंति तल्लिंगं नानानागेन्द्रसत्तमाः ॥ तदधस्ताज्जलं भूरि तस्याधो नरकाः स्मृताः ॥ ९ ॥ पापिनो येषु पात्यंते ताञ्छृणुष्व महामते ॥ कोटयः पंचपंचाशद्राजानश्चैकविंशति ॥ १० ॥ रौरवः शूकरो रोधस्तालो विशसनस्तथा ॥ महाज्वालस्तप्तकुम्भो लवणोथ विमोहकः ॥ ११ ॥ रुधिरांधो वैतरणी कृमिशः कृमिभोजनः ॥ असिपत्रवनं कृष्णो लालाभक्ष्यश्च दारुणः ॥ १२ ॥ तथा पूयवहः पापो वह्निज्वालोऽप्यधःशिराः ॥ संदंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥ १३ ॥ श्वभोजनो विसूचिश्चाप्यवीचिश्च तथाऽपरः ॥ कूटसाक्षी रौरवं च रोधं गोविप्ररोधकः ॥ १४ ॥ सुरापः सूकरं याति तालं मिथ्यामनुष्यहा ॥ गुरुतल्पी तप्तकुम्भं तप्तलोहं च भक्तहा ॥ १५ ॥ गुरूणामवमंता यो महाज्वाले निपात्यते ॥ लवणं शास्त्रहंता च निर्मर्यादो विमोहके ॥ ॥ १६ ॥ कृमिभक्ष्ये देवद्वेष्टा कृमिशे तु दुरिष्टकृत् ॥ पितृदेवात्पूर्वमश्नँल्लालाभक्ष्ये प्रयाति च ॥ १७ ॥ मिथ्याजीवविरोधी विशसने कूटशास्त्रकृत् ॥ अधोमुखे ह्यसद्ग्राही एकाशी पूयवाहके ॥१८॥ मार्जारकुक्कुटश्वानपक्षिपोष्टा प्रयाति च ॥ बधिरांधगृहक्षेत्रतृणधान्यादिज्वालकः ॥ १९ ॥ नक्षत्रंगजीवी च याति वैतरणीं नरः ॥ धनयौवनमत्तो यो धनहा कृष्णमेति सः॥२०॥असिपत्रवनं याति वृक्षच्छेदी वृथैव यत्॥कुहकाजीविनः सर्वे वह्निज्वाले पतंति ते॥२१॥परस्त्रीं च परान्नं च गच्छन्संदंशमेति च॥ दिवास्वप्नपरा ये च व्रतलोपपराश्च ये॥२२॥शरीरमदमत्ताश्च यांति चैते श्वभोजनम्॥

१ अथ संशृणु–इ० पा० । २ च–इ०पा० । ३ स च–इ० पा० । ४ वह्निजालः–इ० पा० ।

शिवं हरिं न मन्यंते यांत्यवीचिनमेव च ॥ २३ ॥ इत्येवमादिभिः पापैरशास्त्रौघस्य सेवनैः ॥ पतंत्येव महाघोरनरकेषु सहस्रशः ॥ २४ तस्माद्य इच्छेदेतेभ्यो विमोक्षं बुद्धिमान्नरः ॥ श्रुतिमार्गेण तेनार्च्यौ देवौ हरिहरावुभौ ॥ २५ ॥ नरकाणामधोभागे स्थितः कालाग्निसंज्ञकः ॥ तदधो हट्टकश्चैव अनंतस्तदधः स्मृतः ॥ २६ ॥ यस्यैतत्सकलं विश्वं मूर्धाग्रे सर्षपायते ॥ इत्यनंतप्रभावात्स ह्यनंत इति कीर्त्यते ॥ २७ ॥ दिशां गजास्तत्र पद्मकुमुदांजनवामनाः ॥ तदधोऽडकटाहश्च एकवीरास्ति तत्र च ॥ २८ ॥ चतुर्लक्षसहस्राणि नवतिश्च शतानि च ॥ एतेनैव प्रमाणेन उदकं च ततः स्मृतम् ॥ २९ ॥ तदधो नरकाः कोट्यो द्विकोट्योऽग्निस्ततो महान् ॥ चत्वारिंशत्सहस्रैश्च तदधस्तम उच्यते ॥ ३० ॥ चत्वारिंशच्च कोट्यस्तु चतस्रश्च ततः पराः ॥ एकोननवतिर्लक्षाः सहस्राशीतिरेव च ॥ ३१ ॥ तदधोऽडकटाहोथ कोटिमात्रस्तथापरः ॥ देवी युक्ता कपालीशा दंडहस्तेन चापि सा ॥ ३२ ॥ देवीनां कोटिकोटीभिः संवृता तत्र पालिनी ॥ संकर्षणस्य निःश्वासप्रेरितो दाहकोऽनलः ॥ ३३ ॥ कालाग्निं प्रेरयत्येव कल्पांते दह्यते जगत् ॥ एवंविधमधःसूत्रं निर्मितं चात्र भारत ॥ ३४ ॥ मध्यसूत्रे कटाहे च पालकांस्ताञ्छृणुष्व मे ॥ वसुधामा स्थितः पूर्वे शंखपालश्च दक्षिणे ॥ ३५ ॥ तक्षकेशः स्थितः पश्चादुत्तरे केतुमानिति ॥ हरसिद्धिः सुपर्णाक्षी भास्करा योगनंदिनी ॥ ३६ ॥ कोटिकोटीयुता देवी देवीनां पालयत्यदः ॥ एवमेतन्महाश्चर्यं ब्रह्मांडं स्थापितं च यैः ॥ ३७ ॥ नमामि तानहं नित्यं ब्रह्मविष्णुमहेश्वरान् ॥ विष्णुलोको रुद्रलोको बहिश्चास्मात्प्रकीर्त्यते ॥ ३८ ॥ तं च वर्णयितुं ब्रह्मा शक्तो नैवास्मदादयः ॥ विमुक्ता यत्र संयांति नित्यं हरिहरव्रताः ॥ ३९ ॥ ब्रह्मांडं संवृतं ह्येतत्कटाहेन समंततः ॥ कपित्थस्य यथा बीजं कटाहेन सुसंवृतम् ॥ ४० ॥ दशोत्तरेण पयसा वृतं तच्चापि तेजसा ॥ तेजश्च वायुना वायुर्नभसाहंतया च तत् ॥४१॥ अहंकारश्च महता तं चापि प्रकृतिः परा ॥ दशोत्तराणि सर्वाणि षडाहुः सतमं च तत् ॥४२॥ प्राकृतं चरणं पार्थ तदनंतं प्रकीर्तितम् ॥ अंडानां तु सहस्राणां सहस्राण्ययुतानि च ॥ ४३ ॥ ईदृशानां तथा चात्र कोटिकोटिशतानि च ॥ सर्वाण्येवंविधान्येव यादृशं कीर्तितं त्विदम् ॥ ४४ ॥ यस्यैवं वैभवं पार्थ तं नमामि सदाशिवम् ॥ अहो मंदः स पापात्मा को वा तस्मादचेतनः ॥ ४५ ॥ य एवंविधसंमोहतारकं न शिवं भजेत् ॥ अथ ते कीर्तयिष्यामि कालमानं निबोध तत् ॥ ४६ ॥ काष्ठा निमेषा दश पंच चाहुस्त्रिंशच्च काष्ठा गणयेत्कला हि ॥ त्रिंशत्कला

१ कालाग्निसंस्थितः--इ०, कालाख्यसंस्थितः--इ०च पा० । २ तलानि च--इ०पा० । ३ एवं च विविधं सूत्रम्--इ०पा० । ४ हरिसिद्धिः सुवर्णाक्षी--इ० पा० । ५ प्रकीर्तितः--इ० पा० । ६ तत्र--इ०पा० । ७ मे--इ० पा० ।

श्चापि भवेन्मुहूर्तं तत्त्रिंशता रात्र्यहनी उभे च ॥ ४७ ॥ दिवसे पंच कालाः स्युस्त्रिमुहूर्ताः शृणुष्व तान् ॥ प्रातस्ततः संगवश्च मध्याह्नश्चापराह्णकः ॥ ४८ ॥ सायाह्नः पंचमश्चापि मुहूर्ता दश पंच च ॥ अहोरात्राः पंचदश पक्ष इत्यभिधीयते ॥ ४९ ॥ मासः पक्षद्वयेनोक्तो द्वौ मासौ चार्कजावृतुः ॥ ऋतुत्रयं चाप्ययनं द्वयेने वर्षमुच्यते ॥ ५० ॥ चतुर्भेदं मासमाहुः पंचभेदं च वत्सरम् ॥ संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः ॥ ५१ ॥ इद्वत्सरस्तृतीयोऽसौ चतुर्थश्चानुवत्सरः ॥ पंचमश्च युगोनाम गणनानिश्चयो हि सः ॥ ५२ ॥ मासेन च मनुष्याणामहोरात्रं च पैतृकम् ॥ कृष्णपक्षस्त्वहः प्रोक्तः शुक्लपक्षश्च शर्वरी ॥ ५३ ॥ मानुषेण च वर्षेण दैविको दिवसः स्मृतः ॥ अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ५४ ॥ वर्षेण चैव देवानां मतः सप्तर्षिवासरः ॥ सप्तर्षीणां च वर्षेण ध्रौवश्च दिवसः स्मृतः ॥ ॥ ५५ ॥ मनुष्याणां च वर्षाणि लक्षसप्तदशैव तु ॥ अष्टाविंशतिसहस्राणि कृतं त्रेतायुगं ततः ॥ ५६ ॥ लक्षद्वादशसाहस्रपण्णवत्यधिकाः पराः ॥ अष्टौ लक्षाश्चतुःषष्टिसहस्राणि च द्वापरः ॥ ५७ ॥ चतुर्लक्षं तु द्वात्रिंशत्सहस्राणि कलिः स्मृतः ॥ चतुर्भिरेतैर्देवानां युगमित्यभिधीयते ॥ ५८ ॥ आयुर्मनोर्युगानां च साधिका ह्येकसप्ततिः ॥ चतुर्दशमनूनां च कालेन ब्रह्मणो दिनम् ॥ ५९ ॥ युगानां च सहस्रेण स च कल्पः शृणुष्व तान् ॥ भवोद्भवस्तपोभव्य ऋतुर्वह्निर्वराहकः ॥ ६० ॥ सावित्र आसिकश्चापि गांधारः कुशिकस्तथा ॥ ऋषभश्च तथा खड्गो गांधारीयश्च मध्यमः ॥ ६१ ॥ वैराजश्च निषादश्च मेघवाहनपंचमौ ॥ चित्रको ज्ञान आकूतिर्मीनो दंशश्च बृंहकः ॥ ६२ ॥ श्वेतो लोहितरक्तौ च पीतवासाः शिवः प्रभुः ॥ सर्वरूपश्च मासोऽयमेवं वर्षशतावधिः ॥ ६३ ॥ पूर्वार्धमपरार्धं च ब्रह्ममानमिदं स्मृतम् ॥ विष्णोश्च शंकरस्यापि नाहं शक्तश्च वर्णने ॥ ६४ ॥ क्वाहमल्पमतिः पार्थ क्वापरौ हरित्र्यंबकौ ॥ दैविकेनैव मानेन पातालेष्वपि गण्यते ॥ ६५ ॥ इति ते सूचितं बुद्ध्या शृणु तत्प्राकृतं पुनः ॥ ६६ ॥ इति वैधात्रव्यवस्थितिः ॥ ॥ श्रीनारद उवाच ॥ ॥ ऋषभोनाम यन्नाम्ना नानापापंडकल्पनाः ॥ कलौ पार्थ भविष्यंति लोकानां मोहनात्मिकाः ॥ ६७ ॥ तस्य पुत्रस्तु भरतः शतशृंगस्तु तत्सुतः ॥ तस्य पुत्राष्टकं जातं तथैका च कुमारिका ॥ ६८ ॥ इंद्रद्वीपः कसेरुश्च ताम्रद्वीपो गभस्तिमान् ॥ नागः सौम्यश्च गांधर्वो वरुणश्च कुमारिका ॥ ६९ ॥ वदनं चापि कन्यायाः पार्थ बर्करिकाकृति ॥ शृणु तत्कारणं सर्वं महाश्चर्यसमन्वितम् ॥ ७० ॥ महीसागरपर्यंतं वृक्षराजिविराजिते ॥ जालीगुल्मलताकीर्णे

१ संधिरात्रिः । २ गुणोनाम--इ० पा० । ३ मध्यतः--इ० पा० । ४ मनोर्दशैव--इ० पा० । ५ सितः--इ० पा० । ६ शृणुष्व प्राकृतं नर--इ० पा० । ७ चात्र--इ० पा० ।

स्तंभतीर्थस्य संनिधौ ॥ ७१ ॥ अजासमंजतो मध्यात्काचिदेका च बर्करी ॥ श्रांता सती समायाता प्रदेशे तत्र दुश्चरे ॥ ७२ ॥ इतस्ततो भ्रमंती सा जालिमध्ये समंततः ॥ निर्गंतुं नैव शक्नोति क्षुत्पिपासार्दिता शुभा ॥ ७३ ॥ विलग्ना जालिमध्ये तु ततः पंचत्वमागता ॥ कालेन कियता तस्य त्रुटित्वा शिरसो ह्यधः ॥ ७४ ॥ पपात शनिदर्शे च महीसागरसंगमे ॥ सर्वतीर्थमये तत्र सर्वपापप्रमोचने ॥ ७५ ॥ शिरस्तु तदवस्थं हि समग्रं तत्र संस्थितम् ॥ जालिगुल्मावलग्नं च तस्या नैवापतज्जले ॥ ७६ ॥ शेषकायप्रपातेन महीसागरसंगमे ॥ तत्तीर्थस्य प्रभावेन बर्करी सा कुरूद्वह ॥ ७७ ॥ शतशृंगस्य वै राज्ञः सिंहलेष्वभवत्सुता ॥ मुखं बर्करिकातुल्यं व्यक्तं तस्या व्यजायत ॥ ७८ ॥ दिव्यनारी शुभाकारा शेषकाये बभौ शुभा ॥ पूर्वं तस्याप्यपुत्रस्य राज्ञः पुत्रशतोपमा ॥ ७९ ॥ पुत्री जाता प्रमोदेन स्वजनानंदवर्धिनी ॥ ततस्तस्या विलोक्याथ मुखं बर्करिकाकृति ॥ ८० ॥ विस्मयं समनुप्राप्ताः सर्वे ते राजपूरुषाः ॥ विषादं परमापन्नो राजा सांतःपुरस्तदा ॥ ८१ ॥ खिन्नाः प्रकृतयः सर्वास्ताहृग्रूपविलोकनात् ॥ तत्किमित्येतदाश्चर्यमूचुः पौराः सुविस्मिताः ॥ ८२ ॥ ततः सा यौवनं प्राप्ता साक्षाद्देवसुतोपमा ॥ स्वमुखं दर्पणे वीक्ष्य स्मृतः पूर्वो भवस्तया ॥ ८३ ॥ तत्तीर्थस्य प्रभावेण मातृपित्रोर्निवेदितम् ॥ विषादो नैव कर्तव्यो मदर्थे तात निश्चितम् ॥ ८४ ॥ मा शोकं कुरु मे मातः पूर्वजन्मार्जितं फलम् ॥ ततः पूर्वं स्ववृत्तांतमुक्त्वा सा च कुमारिका ॥ ८५ ॥ पूर्वजन्मोद्भवः कायस्तस्या यत्रापतत्तथा ॥ गमनाय तमुद्देशं विज्ञप्तौ पितरौ तया[१] ॥ ८६ ॥ अहं तात गमिष्यामि महीसागरसंगमम् ॥ भवामि तत्र संप्राप्ता यथा कुरु तथा नृप ॥ ८७ ॥ ततः पित्रा प्रतिज्ञातं शतशृंगेण तत्तथा ॥ तस्याः संवाहनं चक्रे राजा पोतैः सरक्षकैः ॥ ८८ ॥ स्तंभतीर्थं ततः साऽपि प्राप्य पोतार्थसंयुता ॥ भूरि[५]दानं ततश्चक्रे दानं सर्वस्वलक्षणम् ॥ ८९ ॥ जालिगुल्मांतरेऽन्विष्य ततो दृष्टं निजं शिरः ॥ अस्थिचर्मावशेषं च तदादाय प्रयत्नतः ॥ ९० ॥ दग्ध्वा संगमसांनिध्ये क्षिप्तान्यस्थीनि संगमे ॥ ततस्तीर्थप्रभावेण मुखं जातं शशिप्रभम् ॥ ॥ ९१ ॥ न तादृग्देवकन्यानां न तादृङ्नागयोषिताम् ॥ न तादृङ्मर्त्यनारीणां तस्या यादृङ्मुखं सुखम् ॥ ९२ ॥ सुरासुरनराः सर्वे तस्या रूपेण मोहिताः ॥ बहुधा प्रार्थयंत्येनां न सा वरमभीप्सति ॥ ९३ ॥ कष्टं तया मुदा तत्र प्रारब्धं दुश्चरं तपः ॥ ततः संवत्सरे पूर्णे देवदेवो महे

१ अत्र 'अजासमजतः' इत्येवापेक्षितम् ''पशूनां समजोऽन्येषां समाजस्तु सधर्मिणाम्'' इति काशादिति ध्येयं सुधीभिः। २ शनिदर्शे—शनिवारयुक्तामावास्यायामित्यर्थः। ३ तथा—इ० पा०। ४ तत्र—इ० पा०। ५ भूमिदानम्—इ० पा०।

श्वरः ॥ ९४ ॥ प्रत्यक्षतां गतस्तस्यै वरदोऽस्मीति चाब्रवीत् ॥ ततस्तं पूजयित्वा च कुमारी वाक्यमब्रवीत् ॥ ९५ ॥ यदि तुष्टोऽसि देवेश यदि देयो वरो मम ॥ सांनिध्यं क्रियतामत्र सर्वकालं हि शंकर ॥ ९६ ॥ एवमस्त्विति शर्वेण प्रोक्ते हृष्टा कुमारिका ॥ यत्र दग्धं शिरस्तस्या बर्कर्याः कुरुसत्तम ॥ ९७ ॥ बर्करेशः शिवस्तत्र तया संस्थापितस्तदा ॥ मन्मुखान्महदाश्चर्यं श्रुत्वेदं च तलातलात् ॥ ९८ ॥ स्वस्तिकोनाम नागेंद्रः कुमारीं द्रष्टुमागतः ॥ शिरसा गच्छता तेन यत्रोत्क्षिप्ता च भूरभूत् ॥ ९९ ॥ ईशाने बर्करेशस्य कूपोऽभूत्स्वस्तिकाभिधः ॥ पूरितो गंगया पार्थ सर्वतीर्थफलप्रदः ॥ १०० ॥ दृष्ट्वा च स्थापितं लिंगं शिवस्तुष्टो वरं ददौ ॥ येषां मृतशरीराणामत्र दाहः प्रजायते ॥ १०१ ॥ क्षिप्यंतेऽब्धौ तथा स्थीनि तेषां स्यादक्षया गतिः ॥ ते स्वर्गे सुचिरं कालं वसित्वात्र समागताः ॥ १०२ ॥ राजानः सर्वसंपूर्णाः सप्रतापा भवंति ते ॥ बर्करेशं च यो भक्त्या संपूजयति मानवः ॥ १०३ ॥ स्नात्वार्णवमहीतोये तस्य स्यान्मनसेप्सितम् ॥ कार्तिके च चतुर्दश्यां कृष्णायां श्रद्धयान्वितः ॥१०४॥ कूपे स्नानं नरः कृत्वा संतर्प्य च पितॄन्निजान् ॥ पूजयेद्बर्करेशं यः सर्वपापैः स मुच्यते ॥ १०५ ॥ एवं लब्ध्वा वरान्सर्वान्सा पुनः सिंहलं ययौ ॥ शतशृङ्गाय पित्रे च वृत्तांतं स्वं न्यवेदयत् ॥ १०६ ॥ तच्छ्रुत्वा विस्मितो राजा लोकाः सर्वे च फाल्गुन ॥ प्रशशंसुर्महीतीर्थमाजग्मुश्च कृतादराः ॥ ॥ १०७ ॥ स्नात्वा दत्त्वा च दानानि विविधानि च ते ततः ॥ सिंहलं च ययुर्भूयस्तीर्थमाहात्म्यहर्षिताः ॥ १०८ ॥ अनिच्छंत्यां कुमार्यां च वरं द्रव्यं च पार्थिवः ॥ तथान्यदपि प्रीत्यासौ यद्ददौ नृपतिः शृणु ॥ १०९ ॥ इदं भारतखंडं च नवधैव विभज्य सः ॥ ददावष्टौ स्वपुत्राणां कुमार्यै नवमं तथा ॥ ११० ॥ तेषां विभेदान्वक्ष्यामि पर्वतैरुपशोभितान् ॥ पुत्रनामानि वर्षाणि पर्वतांश्च शृणुष्व मे ॥ १११ ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ विंध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥ ११२ ॥ महेन्द्रपरतश्चैव इन्द्रद्वीपो निगद्यते ॥ पारियात्रस्य चैवार्वाक्खण्डं कौमारिकं स्मृतम् ॥ ११३ ॥ सहस्रमेकमेकं च सर्वखण्डान्यमूनि च ॥ नदीनां संभवं चापि संक्षेपाच्छृणु फाल्गुन ॥ ११४ ॥ वेदस्मृतिमुखा नद्यः पारियात्रोद्भवा मताः ॥ नर्मदासरसाद्याश्च नद्यो विंध्याद्रिनिर्गताः ॥ ११५ ॥ शतद्रूचन्द्रभागाद्या ऋक्षपर्वतसंभवाः ॥ ऋषिकुल्याकुमार्याद्याः शुक्तिमत्पादसंभवाः ॥ ११६ ॥ तापी पयोष्णी निर्विंध्या कावेरी च महीनदी ॥ कृष्णा वेणी भीमरथी सह्यपादोद्भवाः स्मृताः ॥ ११७ ॥ कृतमालाताम्रपर्णीप्रमुखा मलयोद्भवाः ॥ त्रिसामऋष्यकुल्याद्या महेन्द्रप्रभवाः स्मृताः ॥ ११८ ॥ एवं विभज्य पुत्रेभ्यः कुमार्यै च मही

---

१ आयर्यौ—इ०पा० । २ स्मृताः—इ०पा० ।

पतिः ॥ शतशृंगो गिरिं गत्वा उदीच्यां तप्तवांस्तपः ॥ ११९ ॥ तत्र तप्त्वा तपो घोरं ब्रह्मलोकं जगाम सः ॥ शतशृंगो नृपश्रेष्ठः शतशृंगे नगोत्तमे ॥ १२० ॥ यत्र जातोऽसि कौंतेय पांडोस्त्वं सोदरैः सह ॥ कुमारी च महाभागा स्तंभतीर्थस्थिता सती ॥ १२१ ॥ खंडोद्भवेन द्रव्येण तेपे दानानि यच्छती ॥ ततः केनापि कालेन भ्रातृभ्योऽष्टभ्य एव च ॥ १२२ ॥ महावीर्यबलोत्साहा जाता नव नवात्मजाः ॥ ते समेत्य समागम्य कुमारीं प्रोचिरे ततः ॥ १२३ ॥ कुलदेवी त्वमस्माकं प्रसादं कुरु नः शुभे ॥ अष्टौ खण्डानि चास्माकं विभज्य स्वयमेव च ॥ देहि द्वासप्ततीनां नो विभेदः स्याद्यथा न नः ॥१२४॥ इत्युक्ता सर्वधर्मज्ञा विज्ञाने ब्रह्मणा समा ॥ द्वासप्ततिविभेदैः सा नव खंडान्यचीकरत् ॥ १२५ ॥ तेषां नामानि ग्रामांश्च पत्तनानि च फाल्गुन ॥ वेलाकूलानि संख्यां च वक्ष्यामि तव तत्त्वतः ॥ १२६ ॥ कोटिश्चतस्रो ग्रामाणां नीवृदासीच्च मंडले ॥ सार्धकोटिद्वयग्रामैर्देशो बालाक उच्यते ॥ १२७ ॥ सपादकोटिर्ग्रामाणां पुरसाहणके विदुः ॥ लक्षाश्चत्वार एवापि ग्रामाणामंधले स्मृताः ॥ १२८ ॥ एको लक्षश्च नेपाले ग्रामाणां परिकीर्तितः ॥ षट्त्रिंशल्लक्षमानं तु कान्यकुब्जे प्रकीर्तितम् ॥१२९॥ द्वासप्ततिस्तथा लक्षा ग्रामा गाजणके स्मृताः ॥ अष्टादश तथा लक्षा ग्रामाणां गौडदेशके ॥ १३० ॥ कामरूपे च ग्रामाणां नवलक्षाः प्रकीर्तिताः ॥ डाहले वेदसंज्ञे तु ग्रामाणां नवलक्षकम् ॥ १३१ ॥ नवैव लक्षा ग्रामाणां कांतिपुरे प्रकीर्तिताः ॥ नवलक्षास्तथा चैव माचिपूरे प्रकीर्तिताः ॥ १३२ ॥ ओड्डियाणे तथा देशे नवलक्षाः प्रकीर्तिताः ॥ जालंधरे तथा देशे नवलक्षाः प्रकीर्तिताः ॥ १३३ ॥ लोहपूरे तथा देशे लक्षाः प्रोक्ता नवैव च ॥ ग्रामाणां सप्तलक्षं च पांबीपुरे प्रकीर्तितम् ॥१३४॥ ग्रामाणां सप्तलक्षं च रटराजे प्रकीर्तितम् ॥ हरीआले च ग्रामाणां लक्षपंचकसंमितम् ॥१३५॥ सार्धलक्षत्रयं प्रोक्तं द्रडस्य विषये तथा ॥ सार्धलक्षत्रयं प्रोक्तं तथावंभणवाहके ॥ १३६ ॥ एकविंशतिसाहस्रं ग्रामाणां नीलपूरके ॥ तथामलविषये पार्थ ग्रामाणामेकलक्षकम् ॥ ॥ १३७ ॥ नरेंदुनामदेशे तु लक्षमेकं सपादकम् ॥ अतिलांगलदेशे च लक्षः प्रोक्तः सपादकः ॥ १३८ ॥ लक्षाष्टादशसाहस्रं नवती द्वे च मालवे ॥ सयंभरे तथा देशे लक्षः प्रोक्तः सपादकः ॥ १३९ ॥ मेवाडे च तथा प्रोक्तो लक्षश्चैकःसपादकः ॥ अशीतिश्च सहस्राणि वागुरिः परिकीर्तितः ॥ १४० ॥ ग्रामसप्ततिसाहस्रो गुर्जरात्रः प्रकीर्तितः ॥ तथा सप्ततिसाहस्रः पांडोर्विषय एव च ॥ १४१ ॥ जहाहुतिसहस्राणि द्वाचत्वारिंशदेव च ॥

१ उदीच्यां गिरिं—गन्धमादनम्—बदरिकाश्रममित्यर्थः । २ एतानि ग्रामादिदेशादिनामान्यपरिचितत्वाद्यथाप्रति पुस्तकादर्शविलोकितानि स्थापितानि सन्ति । तानि सुधीभिस्तत्तद्देशपरिचितैः संशोधनीयानि । ३ अमले—इ० पा० । ४ माजणके—इ० पा० । ५ डालहे—इ० पा० । ६ भवलक्षकम्—इ० पा० । ७ सप्त—इ० पा० । ८ लक्षपंचकसंस्थितम्—इ० पा० ।

अष्टषष्टिसहस्राणि प्रोक्तं काश्मीरमंडलम् ॥ १४२॥ षष्टित्रिंशत्सहस्राणि ग्रामाणां कौंकणे विदुः ॥ चतुर्दशशतं द्वे च विंशतीलघुकौंकणम् ॥१४३॥ सिंधुः सहस्रदशके ग्रामाणां परिकीर्तितः ॥१४४॥ चतुर्दशशते द्वे च विंशतिः कच्छमंडलम् ॥ पंचपंचाशत्सहस्रं ग्रामाः सौराष्ट्रमुच्यते ॥ १४५ ॥ एकविंशतिसाहस्रो लाडदेशः प्रकीर्तितः ॥ अतिसिंधुश्च ग्रामाणां दशसाहस्र उच्यते ॥ तथा चाश्वमुखं पार्थ दशसाहस्रमुच्यते ॥ १४६ ॥ सहस्रदशकं चापि एकपादः प्रकीर्तितः ॥१४७॥ तथैव दशसाहस्रो देशः सूर्यमुखः स्मृतः ॥ एकबाहुस्तथा देशो दशसाहस्रमुच्यते ॥ १४८ ॥ सहस्रदशकं चेव संजायुरिति देशकः ॥ शिवनामा तथा देशः सहस्रदशकः स्मृतः ॥ सहस्राणि दश ख्यातं तथा कालहयंजयः ॥ १४९ ॥ लिंगोद्भवस्तथा देशः सहस्राणि दशैव च ॥ भद्रश्च देवभद्रश्च प्रत्येकं दशकौ स्मृतौ ॥ १५० ॥ षट्त्रिंशच्च सहस्राणि स्मृतौ चटविराटकौ ॥ षट्त्रिंशच्च सहस्राणि यमकोटिः प्रकीर्तिता ॥ १५१ ॥ अष्टादश तथा कोट्यो रामको देश उच्यते ॥ तोमरश्चापि कर्णाटो युगलश्च त्रयस्त्विमे ॥ १५२ ॥ सपादलक्षग्रामाणां प्रत्येकं परिकीर्तितः ॥ पंचलक्षाश्च ग्रामाणां स्त्रीराज्यं परिकीर्तितम् ॥ १५३ ॥ पुलस्त्यविषयश्चापि दशलक्षक उच्यते ॥ प्रत्येकं लक्षदशकौ देशौ कांबोजकोशलौ ॥१५४॥ ग्रामाणां च चतुर्लक्षो बाल्हिकः परिकीर्त्यते ॥ षट्त्रिंशच्च सहस्राणि लंकादेशः प्रकीर्तितः ॥१५५॥ चतुःषष्टिसहस्राणि कुरुदेशः प्रकीर्तितः ॥ सार्धलक्षस्तथा प्रोक्तः किरातविजयो जयः ॥१५६॥ पंच प्राहुस्तथा लक्षान्विदर्भायां च ग्रामकान् ॥ चतुर्दशसहस्राणि वर्धमानं प्रकीर्तितम् ॥ १५७ ॥ सहस्रदशकं चापि सिंहलद्वीपमुच्यते ॥ षट्त्रिंशच्च सहस्राणि ग्रामाणां पांडुदेशकः ॥ १५८ ॥ लक्षैकं च तथा प्रोक्तं ग्रामाणां तु भयाणकम् ॥ षट्षष्टिं च सहस्राणि देशो मागध उच्यते ॥ १५९ ॥ षष्टिसहस्राणि तथा ग्रामाणां पांशुदेशकः ॥ त्रिंशत्साहस्र उक्तश्च ग्रामाणां च वरेंदुकः ॥ १६० ॥ पंचविंशतिसाहस्रं मूलस्थानं प्रकीर्तितम् ॥ चत्वारिंशत्सहस्राणि ग्रामाणां यावनः स्मृतः ॥ १६१ ॥ चत्वार्येव सहस्राणि पंक्षबाहुरुदीर्यते ॥ द्वासप्ततिरमी देशाः ग्रामसंख्याः प्रकीर्तिताः ॥ १६२ ॥ एवं भरतखंडेऽस्मिन्षण्णवत्येव कोटयः ॥ द्वासप्ततिस्तथा लक्षाः पत्तनानां प्रकीर्तिताः ॥ १६३ ॥ षट्त्रिंशच्च सहस्राणि वेलाकूलानि भारत ॥ एवं विभज्य खंडानि भ्रातृव्याणां ददौ नव ॥ १६४ ॥ आत्मीयमपि सा देवी अनिच्छुष्वपि तेषु च ॥ यतो मान्येति भगिनी प्रति क्रुध्यंति भ्रातरः ॥ १६५ ॥ भ्रातृन्प्रति भगिनी च विचार्यैव ददौ शुभा ॥

१ शूर्पनखः--इ० पा० । २ लिंगोद्भवं समाख्यातम्--इ० पा० । ३ सहस्रदशकौ स्मृतौ--इ० पा० । ४ पुंगलश्च--इ-- पा० । ५ मुलस्त्य--इ० पा० । ६ उत्तरकोशलौ--इ० पा० । ७ भयानकम्--इ० पा० । ८ पांडुदेशकः--इ० पा० । ९ निगद्यते--इ० पा० । १० यक्षवाहुः--इ० पा० ।

तत्कृत्वा सानुमान्यैतान्स्तंभतीर्थमुपागता ॥ १६६ ॥ तदा तेषु च देशेषु चतुर्वर्गस्य साधनम् ॥ सर्वेषां प्रवरं प्रोक्तं कुमारीश्वरमेव च ॥ १६७ ॥ तत्रापि गुप्तक्षेत्रं च वेदैतत्सा कुमारिका ॥ गुप्तक्षेत्रे कुमारेशं पूजयंती महाव्रता ॥ १६८ ॥ तस्थौ ह्रदेषु स्नायंती षट्सु चैवापि संगमे ॥ ततः काल प्रकर्षाच्च प्रासादे स्कंदनिर्मिते ॥ १६९ ॥ जीर्णे नव्यं स्वर्णमयं प्रासादं साप्यकारयत् ॥ ततस्तुष्टो महादेवस्तस्या भक्त्यातितोषितः ॥ १७० ॥ कुमारलिंगादुत्थाय प्रत्यक्षस्तामवोचत ॥ भद्रे तवाहं भक्त्या च विज्ञानेन च तोषितः ॥ १७१ ॥ जीर्णः पुनरुद्धतोऽयं प्रासादस्तेन तोषितः ॥ तव नाम्ना च विख्यातो भविष्यामि कुमारिके ॥ १७२ ॥ कर्ता चापि तथोद्धर्ता द्वौ वै समफलौ स्मृतौ ॥ कुमारेशः कुमारीश इति वक्ष्यंति मां ततः ॥ १७३ ॥ बर्करेशे च ये दत्ता वरा दत्ताः सदैव ते ॥ तवापि प्रातः कालश्च समीपे वरवर्णिनि ॥ १७४ ॥ अभर्तृकाया नार्याश्च न स्वर्गो मोक्ष एव च ॥ यथैव वृद्धकन्यायाः सरस्वत्यास्तटे शुभे ॥ १७५ ॥ तस्मात्त्वमत्र तीर्थे च महाकालमिति स्मृतम् ॥ सिद्धिं गतं वृणु भद्रे पतित्वे वरवर्णिनि ॥ १७६ ॥ ततः सा रुद्रवाक्येन वरयामास तं पतिम् ॥ रुद्रलोकं ययौ चापि महाकालसमन्विता ॥ १७७ ॥ तत्र तां पार्वती प्राह समालिंग्य प्रहर्षिता ॥ यस्मात्त्वया चित्रवच्च लिखिता पृथिवी शुभे ॥ १७८ ॥ चित्रलेखेतिनाम्ना त्वं तस्माद्भव सखी मम ॥ ततः सखी सम भवच्चित्रलेखेति सा शुभा ॥ १७९ ॥ ययानिरुद्धः कथित उषायाः पतिरुत्तमः ॥ योगिनीनां वरिष्ठा या महाकालस्य वल्लभा ॥ १८० ॥ अप्सु सा वार्षिकं बिंदुं पूर्णे वर्षशते पपौ ॥ तपश्चरंती तस्मात्सा प्रोच्यते चाप्सरा दिवि ॥ १८१ ॥ एवंविधा कुमारी सा लिंगमेतद्धि फाल्गुन ॥ स्थापयामास शिवदं बर्करेश्वरसंज्ञितम् ॥ १८२ ॥ तस्मादत्र नृणां दाहश्चास्थिक्षेपश्च भारत ॥ प्रयागादधिकौ प्रोक्तौ महेशस्य वचो यथा ॥१८३॥

॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बर्करेश्वरमाहात्म्यवर्णनंनामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ छ ॥

॥ अर्जुन उवाच ॥ ॥ महाकालस्त्वसौ कश्च कथं सिद्धिमुपागतः ॥ अस्मिंस्तीर्थे मुनिश्रेष्ठ महदाश्चर्यं[3] मत्र मे ॥ १ ॥ सर्वमेतत्समाख्याहि श्रद्दधानाय पृच्छते ॥ २ ॥ ॥ नारद उवाच ॥ ॥ नमस्कृत्य महाकालं वरदं स्थाणुमव्ययम् ॥ शक्तितश्चरितं तस्य वक्ष्ये पांडुकुलोद्वह ॥ ३ ॥ वाराणस्यां पुरि पुरा बभूव जपतां वरः ॥ रुद्रजापी महाभागो मांटिर्नाम महायशाः ॥ ॥ ४ ॥ तस्यापुत्रस्य पुत्रार्थे रुद्रान्संजपतः किल ॥ गतं वर्षशतं तुष्टस्ततस्तं प्राह शंकरः ॥ ५ ॥ मांटे तव सुतो धीमान्मत्प्रभावप

१ कुमारीखंडमेव च--इ० पा० । २ शोभना--इ० पा० । ३ महदाश्चर्यं वर्तते--इ० पा० ।

राक्रमः ॥ वंशस्य तव सर्वस्य समुद्धर्ता भविष्यति ॥ ६ ॥ इति श्रुत्वा रुद्रवचो मांटिर्हर्षं परं गतः ॥ ततः काले कियन्मात्रे पत्नी मांटेर्महात्मनः ॥ ७ ॥ दधार गर्भं चटिका तपोमूर्तिधरा यथा ॥ तस्य गर्भस्य वर्षाणि चत्वारि किल संययुः ॥ ८ ॥ न पुनर्मातुरुदरं त्यक्त्वा निर्गच्छते बहिः ॥ ततो मांटिरुपामंत्र्य सामभिस्तमवोचत ॥ ९ ॥ वत्स सामान्यपुत्रोऽपि पित्रोः सुखंकरः सदा ॥ शुद्धायां मातरि भवो मत्तः किं पीडयस्यलम् ॥ १० ॥ वत्स मानुष्यवासस्य स्पृहा तुभ्यं कथं न हि ॥ यत्र धर्मार्थकामानां मोक्षस्यापि च संततिः ॥ ११ ॥ कदा मनुष्या जायेम पूजा यत्र महाफला ॥ पितॄणां देवतानां च नानाधर्माश्च यत्र हि ॥ १२ ॥ इति भूतानि शोचंति नानायोनिगतान्यपि ॥ तत्त्वं मानुष्यमतुलं स्पृहणीयं दिवौकसाम् ॥ अनादृत्य कथं ब्रूहि स्थितश्चोदर एव च ॥ १३ ॥ ॥ गर्भ उवाच ॥ ॥ तात जानाम्यहं सर्वमेतत्परम दुर्लभम् ॥ किं तु बिभेमि चातिमात्रं कालमार्गस्य नित्यशः ॥ १४ ॥ द्वौ मार्गौ किल वेदेषु प्रोक्तौ कालोऽर्चिरेव च ॥ अर्चिषा मोक्षमायांति कालमार्गेण कर्मणि ॥ १५ ॥ स्वर्गे वा नरके वापि कालमार्गगतो ह्ययम् ॥ न शर्म लभते क्वापि व्याधविद्धमृगो यथा ॥ १६ ॥ तस्यैव हेतोः प्रयतेत्कोविदो यन्न दुःखवित् ॥ कालेन घोररूपेण गंभीरेण समाहितः ॥ १७ ॥ तच्चेन्मम मनस्तात नानादोषैर्न मोह्यते ॥ ततोऽहं दुर्लभं जन्म मानुष्यं शीघ्रमाप्नुयाम् ॥ १८ ॥ ततस्तस्य पिता पार्थ कांदिशीको महेश्वरम् ॥ जगाम शरणं देवं त्राहित्राहि महेश्वर ॥ १९ ॥ त्वां विना कोऽपरो देव पुत्रस्याभीष्टदोऽस्ति मे ॥ त्वयैव दत्तस्त्वं चामुं जन्म प्रापय मे सुतम् ॥ २० ॥ ततस्तस्यातिभक्त्यासौ प्राह तुष्टो महेश्वरः ॥ विभूतीः स्वा धर्मज्ञानवैराग्यैश्वर्यमेव च ॥ २१ ॥ विपरीतश्च शीघ्रं भो मांटिपुत्रः प्रबोध्यताम् ॥ ततस्ता द्योतयंत्यश्च विभूत्यो गर्भमूचिरे ॥ २२ ॥ महामते मांटिपुत्र न धार्यं ते भयं हृदि ॥ चत्वारस्त्वां हि धर्माद्या मनस्त्यक्ष्यामहे न ते ॥ २३ ॥ ततोऽपरास्त्वधर्माद्याः प्रोचुर्नैव तथा वयम् ॥ भविष्यामो मनस्तुभ्यमस्मत्तव भयं न हि ॥ २४ ॥ इत्युक्ते स विभूतीभिः शीघ्रमेव कुमारकः ॥ निःससार बहिर्जातश्चकंपेतिरुरोद च ॥ २५ ॥ ततो विभूतयः प्राहुर्मांटे तव सुतस्त्वसौ ॥ अद्यापि कालमार्गस्य भीतः कंपति रोदिति ॥ २६ ॥ कालभीतिरिति ख्यातस्तस्मादेष भविष्यति ॥ इति दत्त्वा वरं ताश्च महादेवांतिकं ययुः ॥ २७ ॥ सोऽपि बालः प्रववृधे शुक्लपक्ष इवोडुपः ॥ संस्कृतः स च संस्कारैर्धीमान्पशुपतिव्रती ॥ २८ ॥ पंचमंत्रा

१ संपूजकः—इ० पा० । २ महेश्वरः—धर्मज्ञानवैराग्यैश्वर्यरूपाः—विपरीताः—अधर्म—अज्ञान—अवैराग्य—अनैश्वर्य—रूपाः—अष्टौ स्वाः विभूतीः प्राह—इति योजना बोध्या । ३ अस्मत्—इति—पंचमीबहुवचनस्य रूपम् । ४ अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्—परस्मैपदमपि । ५ उडुराट्-इ०पा० ।

ञपञ्छुद्धस्तीर्थयात्रापरोऽभवत् ॥ रुद्रक्षेत्रेषु सप्तौ स जपन्मन्त्रांश्च भारत ॥ २९ ॥ कालभीतिर्गुप्तक्षेत्रगुणाञ्छ्रुत्वाभ्युपाययौ ॥ स्नात्वा ततो महीतोये जप्त्वा मन्त्रांश्च कोटिशः ॥ ३० ॥ निवृत्तो नातिदूरेथ बिल्ववृक्षं ददर्श सः ॥ दृष्ट्वा तं तस्य चाधस्ताल्लक्षमेकं जजाप सः ॥ ३१ ॥ जपतस्तस्य विप्रस्य इंद्रियाणि लयं ययुः ॥ केवलं परमानंदस्वरूपोऽसावभूत्क्षणात् ॥३२॥ तस्यानंदस्य नौपम्यं स्वर्गादीनां भवेत्कचित् ॥ गंगोदकस्येव मानं केवलं सोऽप्यसावपि ॥ ३३ ॥ तत्र लीनो मुहूर्तेन पुनश्चाभूद्यथा पुरा ॥ ततो विसिष्मिये पार्थ कालभीतिरुवाच ह ॥ ३४ ॥ नायं मम महानन्दो वाराणस्यां न नमिषे ॥ न प्रभासे न केदारे न चाप्यमरकण्टके ॥३५॥ श्रीपर्वते न चान्यत्र यादृशोद्य प्रवर्त्तते ॥ निर्विकाराणि स्वच्छानि गंगांभांसीवखानि मे ॥ ३६ ॥ भूतेषु परमा प्रीतिस्त्रिजगद्द्योतते स्फुटम् ॥ धर्ममेकं परं मह्यं चेतश्चाप्यवगच्छति ॥ ३७ ॥ अहो स्थानप्रभावोऽयं स्फुटं चाप्यत्र प्रोच्यते ॥ निर्दोषं यच्छुचि स्थान सर्वोपद्रववर्जितम् ॥३८॥ तत्र स्थितस्य धर्मार्थस्तद्वद्भूयात्सहस्रधा ॥ तदस्माच्च प्रभावाद्धि जानामीतः स्वचेतसि ॥ ३९ ॥ विशिष्टं काशिमुख्येभ्यस्तीर्थेभ्यः स्थानकं त्विदम् ॥ तस्मादत्रैव संस्थोहं तपस्तप्स्यामि पुष्कलम् ॥ ४० ॥ इदं चेदं तीर्थमिति सदा यस्तृषितश्चरेत् ॥ न स सिद्धिमवाप्नोति क्लेशेनैव म्रियेत सः ॥ ४१ ॥ इति संचिंत्य बिल्वस्य वृक्षस्याधो व्यवस्थितः ॥ जजाप मन्त्रान्रुद्रस्य अंगुष्ठाग्रेण धिष्ठितः ॥ ४२ ॥ गृहीत्वा नियमं तोयबिंदुं वर्षशतेऽग्निवत् ॥ ततो वर्षशते याते जपतस्तस्य भारत ॥ ४३ ॥ कश्चित्तोयभृतं कुम्भं गृहीत्वा नर आव्रजत् ॥ स तं प्रणम्य प्राहेदं कालभीतिं प्रहर्षतः ॥ ४४ ॥ अद्य ते नियमः पूर्णस्तोयमेतन्महामते ॥ गृहाण सफलं मह्यं श्रमं कर्तुमिहार्हसि ॥ ४५ ॥ ॥ कालभीतिरुवाच ॥ ॥ को भवान्वर्णतो ब्रूहि किमाचारश्च तत्त्वतः ॥ जन्माचारौ विदित्वा ते ग्रहीष्याम्यन्यथा न हि ॥ ४६ ॥ ॥ नर उवाच ॥ ॥ न जाने पितरौ स्वीयौ नष्टौ वा सर्वथा न हि ॥ एवमेवापि पश्यामि सर्वदाऽहं स एव च ॥ ॥ ४७ ॥ आचारैश्चापि धर्मैश्च न कार्यं मम किंचन ॥ तस्माद्वक्ष्यामि नाप्येतन्न चाप्यस्मि समाचरे ॥ ४८ ॥ ॥ कालभीतिरुवाच ॥ ॥ यद्येवं नोदकं तुभ्यं ग्रहीष्याम्यस्मि कर्हिचित् ॥ शृणुष्वात्र वचो यन्मे गुरुराह श्रुतीरितम् ॥४९॥ न ज्ञायते कुलं यस्य बीजशुद्धिं विना ततः ॥ तस्य खादन्पिबन्वापि साधुः सीदति तत्क्षणात् ॥५०॥ यश्च रुद्रं न जानाति रुद्रभक्तश्च यो नहि ॥ अन्नोदकं तस्य भुञ्जन्पातकी स्यान्न संशयः ॥५१॥

१ शुभक्षेत्रगुणान्–इ० पा० । २ गंगोदकस्य यथा मानम् उपमानं नास्ति तथा तस्य आनन्दस्य औपम्यं नास्ति अत एवानन्वयालंकारमाह–सः केवलम्–'असावित्र स इवेवाभूदिति । "उपमानोपमेयत्वं यदेकस्यैव वस्तुनः । इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः ॥" इत्यनन्वयालंकालरक्षणम् । ३ अम्रियत्–इ० पा० । ४ अस्मि–अहम् । ५ श्रुतीरितम्–वेदप्रोक्तम् ।

अज्ञात्वा यः शिवं भुंक्ते कथ्यते सोऽत्र ब्रह्महा ॥ मार्ष्टि च ब्रह्महान्नादे तस्मात्तस्य न भक्षयेत् ॥ ५२ ॥ गंगोदकुम्भः स्याद्यद्वत्तन्मध्ये मद्य बिंदुना ॥ अशिवज्ञस्य यो भुंक्ते शिवज्ञोऽपि तथैव सः ॥ ५३ ॥ हीनवर्णश्च यः स्याद्धि शिवभक्तोऽपि नैव सः ॥ प्रतिगृह्यौ गुणौ तस्माद्विलोक्यौ द्वौ प्रतिग्रहे ॥ ५४ ॥ ॥ नर उवाच ॥ ॥ एतेन तव वाक्येन हास्यं संजायते मम ॥ अहो मुग्धोऽसि मिथ्या त्वमपस्मारी जडोऽपि च ॥ ५५ ॥ सदा सर्वेषु भूतेषु शिवो वसति नित्यशः ॥ साध्वंसाधु[1] ततो वाक्यं नैव निन्दा शिवस्य सा ॥ ५६ ॥ आत्मनश्च परस्यापि यः करोत्यंतरो दरम् ॥ तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥ ५७ ॥ अथवा का हि पानीये भवेदशुचिता वद ॥ मृत्तिकोद्भवकुम्भोऽयं[2] पावकेनापि पाचितः ॥ ५८ ॥ पूर्णश्च पयसा कस्मिन्नेपामशुचिता कुतः ॥ ५९ ॥ अथ चेन्मम संसर्गादशुचित्वं च मीयते ॥ तदस्यां संस्थितः पृथ्व्यामहं त्वं च कुतो वद ॥ ६० ॥ कुतः पृथिव्यां चरसि खे त्वं नैव चरस्युत ॥ एवं विचार्यमाणे ते भाषितं मुग्धवद्भवेत् ॥ ६१ ॥ ॥ कालभीतिरु वाच ॥ ॥ सर्वभूतेषु चेदेवं शिव एवेति चोच्यते ॥ नास्तिकां मृत्तिका कस्माद्भक्षयंति नभस्यके ॥ ६२ ॥ शुद्ध्यर्थं तेन विश्वस्य स्थापिता संस्थितिर्यथा ॥ फलेन पालिता सा च नान्यथा तां शृणुष्व च ॥ ६३ ॥ ससर्जेति पुरा धाता रूपात्मकमिदं[3] जगत् ॥ तच्च नामप्रपञ्चेन बद्धं दाम्ना च गौर्यथा ॥ ६४ ॥ स च नामप्रपञ्चस्तु चतुर्द्धा भिद्यते किल ॥ ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् ॥ ६५ ॥ तत्र ध्वनिनां दमयो वर्णाश्चाकारपूर्वकाः ॥ पदं 'श वमि'[4] ति प्रोक्तं वाक्यं चेति 'शिवं' भजेत् ॥ ६६ ॥ तच्चापि वाक्यं त्रिविधं भवेदिति श्रुतेर्मतम् ॥ प्रभु सम्मतमेकं च सुहृत्संमतमेव च ॥ ६७ ॥ कांतासंमतमेवापि वाक्यं हि त्रिविधं विदुः ॥ प्रभुः स्वामी यथा भृत्यमादिशत्येतदाचर ॥ ६८ ॥ तथा श्रुतिस्मृती चोभे प्राहतुः प्रभुसंमतम् ॥ इतिहासपुराणादि सुहृत्संमतमुच्यते ॥ ६९ ॥ सुहृद्वत्प्रतिबोध्यैनं प्रवर्तयति तत्त्वतः ॥ काव्यालापादिकं यच्च कांतासंमतमुच्यते ॥ ७० ॥ प्रभुवाक्यं स्मृतं यच्च सबाह्याभ्यंतरं शुचि ॥ सुहृद्वाक्यं तथा शौचं पाल येत्स्वर्गकांक्षया ॥ ७१ ॥ तदेतत्पालनीयं स्याद्भूमिजानां श्रुतिर्वदेत् ॥ त्वया नास्तिक्यवाक्येन चेदेतदभिधीयते ॥ ७२ ॥ एतेन श्रुतिशास्त्रा

१ साधुसाधु--इ० । २ मृत्तिकामयकुम्भोऽयम्--इ० पा० । ३ रूपव्यक्तम्--इ० पा० । ४ 'श, व' इति पदम्--'श' कार 'व' कारात्मकं पदमिति प्रोक्तम् । ततः--'वाक्यं पदसमूहः' इति शास्त्रात् 'श--व, अनयोः पदयोः समूहेन 'शिव' इति वाक्यम्--संपन्नम्--इति तात्पर्यम् ।

णि पुराणं च वृथैव किम् ॥ अग्रे सतर्षिपूर्वा ये ब्राह्मणाः क्षत्रिया भवन् ॥ ७३ ॥ मुग्धाः सर्वेऽभवन्दक्षा ये हि वेदं गता ह्यतु ॥ तथा वेदांतवचनं सत्त्वस्था ह्यूर्ध्वगामिनः ॥ ७४ ॥ तिष्ठंति राजसा मध्ये ह्यधो गच्छंति तामसाः ॥ सत्त्वाहारैः सत्त्ववृत्त्या स्वर्गगामी भवेत्ततः ॥ ७५ ॥ न चैतदप्य सूयामो यद्भूतेषु शिवो न हि ॥ अस्त्येव सर्वभूतेषु शृणवत्राप्युपमानकम् ॥ ७६ ॥ यथा सुवर्णजातानि भूषणानि बहूनि च ॥ कानिचिच्छुद्धरूपाणि हीनरूपाणि कानिचित् ॥ ७७ ॥ स्वर्णं सर्वेषु चास्त्येव तथैव स सदाशिवः ॥ हीनरूपं शोधितं सच्छुद्धिमेति न चैकताम् ॥ ७८ ॥ तथेदं शोधितं देहं शुद्धं दिवि व्रजेत्स्फुटम् ॥ तस्मात्सर्वात्मना हीनान्न ग्राह्यं बत धीमता ॥ ७९ ॥ चेदिदं शोधयेद्देहं नैव ग्राह्यं समंततः ॥ सर्वतो यः प्रतिग्राही निहाराहारयोर्न च ॥ ८० ॥ शुचिः स्यादल्पदिवसात्पाषाणोऽसौ भवेत्स्फुटम् ॥ तस्मात्सर्वात्मना नैव ग्रहीष्येहं जलं स्फुटम् ॥ ८१ ॥ साधु वाप्यथवाऽसाधु प्रमाणं नः श्रुतिः परा ॥ एवमुक्ते स च नरः प्रहसन्दक्षिणेन च ॥ ८२ ॥ अंगुष्ठेन लिखन्भूमिं चक्रे गर्तं महोत्तमम् ॥ तत्र चिक्षेप तत्तोयं तेन गर्तः स्म पूरितः ॥ ८३ ॥ अत्यरिच्यत तोयं च चक्रे पादेन संलिखन् ॥ चक्रे सरः पूरितं चाप्यतिरिक्तजलेन तत् ॥ ८४ ॥ तदद्भुतं महद्दृष्ट्वा नैव विप्रो विसिष्मिये ॥ यतो बहुविधं चित्रं भवेद्भूताद्युपासिषु ॥ ८५ ॥ तच्चित्रेण न जह्याच्च श्रुतिमार्गं सनातनम् ॥ ८६ ॥

॥ ॥ नर उवाच ॥ ॥ अतिमूर्खोसि विप्र त्वं प्रज्ञावादांश्च भाषसे ॥ किं न श्रुतस्त्वया श्लोकः पुराविद्भिरुदीरितः ॥ कूपोन्यस्य घटोऽन्यस्य रज्जुरन्यस्य भारत ॥ ८७ ॥ पायंत्यन्ये पिबंत्यन्ये सर्वे ते समभागिनः ॥ तज्जलं मम कस्मात्त्वं धर्मज्ञो न पिबस्यासि ॥ ८८ ॥

॥ ॥ नारद उवाच ॥ ॥ ततो विममृशे श्लोको बहुधा समभागिनाम् ॥ अनिश्चयाद्विचार्यासौ घटाद्यैः समभागिता ॥ ८९ ॥ बहुपोतद्रव्यक्षेपः सर्वैः सा समभागिता ॥ एवं कर्तुः फलैः सर्वैः समं स्याच्च पुनःपुनः ॥ ९० ॥ यः शुचिश्च शिवं ध्यायन्प्रासादकूपकर्तरि ॥ जलप्रतिग्रहाभावात्पिबतोऽस्य समं फलम् ॥ ९१ ॥ इति निश्चित्य प्रोवाच कालभीतिर्नरं च तम् ॥ सत्यमेतत्किं तु कुंभपयसा गर्तपूरणे ॥ ९२ ॥ दृष्ट्वा प्रत्यक्षतो माद्दक्कथं पिबति भो वद ॥ साधु वाप्यथवाऽसाधु न पिबेयं कथंचन ॥ ९३ ॥ एवं विनिश्चयं दृष्ट्वास्य स्थिरं कुरुनंदन ॥ पुरुषोऽसौ प्रहस्यैव क्षणादंतर्दधे ततः ॥ ९४ ॥ कालभीतिश्च परमं विस्मयं समुपागतः ॥ वृत्तांतः कोयमित्येव चिंतयामास भूयसा ॥ ९५ ॥ ततश्चिंतयतस्तस्य बिल्वाध

१ अडभाव आर्षः । २ "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठंति राजसाः ॥ जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥" इति भगवद्गीतासु । ३ ह्यंमः--इ०पा० । ४ असि-- इति त्वामित्यर्थकं विभक्तिप्रतिरूपकमव्ययम् ।

स्तात्सुशोभनम् ॥ उच्छ्रितं सुमहालिंगं पृथिव्या द्योतयद्दिशः ॥ ९६ ॥ प्रादुर्भावे ततस्तस्य महालिंगस्य भारत ॥ ननर्त खेप्सरोवृंदं गंधर्वा ललितं जगुः ॥ ९७ ॥ पारिजातमयीं पुष्पवृष्टिमिंद्रो मुमोच ह ॥ जयेति देवा मुनयस्तुष्टुवुर्विविधैः स्तवैः ॥ ९८ ॥ तस्मिन्महति कौरव्य वर्तमाने महोत्सवे ॥ कालभीतिः प्रमुदितः प्रणम्य स्तोत्रमैरयत् ॥ ९९ ॥ पापस्य कालं भवपंककाष्ठं कलाकलं कालमार्गस्य कालम् ॥ देवं महाकालमहं प्रपद्ये श्रीकालकंठं भवकालरूपम् ॥ १०० ॥ ईशानवक्त्रं प्रणमामि त्वाहं स्तौति श्रुतिः सर्वविद्येश्वरस्त्वम् ॥ भूतेश्वरस्त्वं प्रपिता महस्त्वं तस्मै नमस्तेस्तु महेश्वराय ॥ १०१ ॥ यं स्तौति वेदस्तमहं प्रपद्ये तत्पुरुषसंज्ञं शरणं द्वितीयम् ॥ त्वां विद्महे तच्च नस्त्वं प्रदेहि श्रीरुद्र देवेश नमोनमस्ते ॥१०२॥ अघोरवक्त्रं त्रितंयं प्रपद्ये अथर्वजुष्टं तव रूपकाणि ॥ अघोरघोराणि च घोरघोराण्यहं सदा नौमि भूतानि तुभ्यम् ॥१०३॥ चतुर्थवक्त्रं च सदा प्रपद्ये सद्योभिजाताय नमोनमस्ते ॥ भवेभवेनादिभवो भवस्व भवोद्भवो मां शिव तत्रतत्र ॥१०४॥ नमोस्तु ते वामदेवाय ज्येष्ठरुद्राय कालाय कलाविकारिणे॥बलंकरायापि बलप्रमाथिने भूतानि हंत्रे च मनोन्मनाय ॥१०५॥ त्रियंबकं त्वां च यजामहे वयं सुपुण्यगंधैः शिवपुष्टिवर्धनम्॥उर्वारुकं पक्कमिवोग्रबंधनाद्रक्षस्व मां त्र्यंबक मृत्युमार्गात्॥१०६॥षडक्षरं मंत्रवरं तवेश जपंति ये मुनयो वीतरागाः॥तेषां प्रसन्नोऽसि जपामहे तं त्वोंकारपूर्वं च नमः शिवाय ॥१०७॥ एवं स्तुतो महादेवो लिंगान्निःसृत्य भारत॥त्रिजगद्द्योतयन्भासा प्रत्यक्षः प्राह च द्विजम् ॥१०८॥यत्त्वयात्र महातीर्थे भृशमाराधितो द्विज ॥ तेनाति तुष्टस्ते वत्स नेशः कालः कथंचन ॥ १०९ ॥ अहं च नररूपी यो दृष्ट्वा ते धर्मसंस्थितिम् ॥ धन्यस्तद्धर्म मार्गोऽयं पाल्यते यद्भवद्विधैः ॥ ११० ॥ सर्वतीर्थोदकैर्गर्तः पूरितो मे सरस्तथा ॥ जलमेतन्महापुण्यं त्वदर्थं मे समाहृतम् ॥ १११ ॥ सप्तमंत्ररहस्यं च यत्कृतं स्तवनं मम ॥ अनेन पठ्यमानेन सप्तमंत्रफलं भवेत् ॥ ११२ ॥ अभीष्टं च वरं मत्तो वृणीष्व मनसेप्सितम् ॥ त्वयातितोषितो ह्यस्मि नादेयं विद्यते तव ॥ ११३ ॥ ॥ कालभीतिरुवाच ॥ ॥ धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वं तुष्टोऽसि शंकर ॥ त्वत्तोषात्सफला धर्माः श्रमायैवान्यथा मताः ॥ ११४ ॥ यदि तुष्टोऽसि सांनिध्यं लिंगेऽत्र क्रियतां सदा ॥ अक्षयं तत्कृतं चास्तु यल्लिंगे क्रियतेऽत्र च ॥ ११५ ॥ जपतो यत्फलं देव

---

१ आर्षः प्रयोगः, तृतीयमित्यर्थः । २ अयं क्रमस्त्वत्रैवैतादृशो दृश्यते.–वैदिकपञ्चमन्त्रक्रमस्तु–ईशान–तत्पुरुष–अघोर–वामदेव–सद्योजात–इत्येवंरूपोऽस्ति । अत्र च स्तोतुरिच्छयाऽयं चतुर्थवक्त्रस्तुतिक्रमः न तु मंत्रक्रमतः । मंत्रक्रमतस्तु अत्र–"नमोऽस्तु वामदेवाय–" इत्याद्यग्रिमश्लोकस्यात्र पाठोऽपेक्षितः अस्य च 'चतुर्थवक्त्रं च सदा प्रपद्ये' इत्यत्र 'सुपंचवक्त्रं च–'इत्येवं पाठभेदं विधाय–'नमोऽस्तु ते वामदेवाय–' इत्यस्माच्छ्लोकादग्रे पाठे कृते–मंत्रक्रमेणाऽयं स्तोत्रक्रमः समुचितः स्यात् । वक्तुर्विवक्षाधीनत्वाद्वा यथातथमेवायं पाठक्रमोऽत्र स्थापितो वोद्धव्यः ।

पंचमंत्रायुतेन च ॥ तत्फलं जायतां नृणामस्य लिंगस्य दर्शने ॥ ११६ ॥ कालमार्गादहं यस्मान्मोचितोऽहं महेश्वर ॥ महाकालमिति ख्यातं लिंगं तस्माद्भवत्विदम् ॥ ११७ ॥ अस्मिंश्च कूपे यो मर्त्यः स्नात्वा तर्पयते पितॄन् ॥ सर्वतीर्थफलं चास्तु पितॄणामक्षया गतिः ॥ ११८ ॥ इति तस्य वचः श्रुत्वा प्रीतस्तं शंकरोऽब्रवीत् ॥ स्वायंभुवं यत्र लिंगं तत्र नित्यं वसाम्यहम् ॥ ११९ ॥ स्वयंभुबाणरत्नोत्थधातुपाषाणलोहजम् ॥ लिंगं क्रमेण फलदमंत्यात्पूर्वं दशोत्तरम् ॥ १२० ॥ आकाशे तारकालिंगं पाताले हाटकेश्वरम् ॥ स्वायंभुवं धरापृष्ठे तदेतत्त्रितयं समम् ॥ १२१ ॥ विशेषात्प्रार्थितं यच्च तच्च सर्वं भविष्यति ॥ अत्र पुष्पं फलं पूजा नैवेद्यं स्तवनक्रिया ॥ १२२ ॥ दानं वान्यच्च यत्किंचिदक्षयं तद्भविष्यति ॥ माघासितचतुर्दश्यां शिवयोगे च पुत्रक ॥१२३॥ लिंगाच्च पूर्वतः कूपे स्नात्वा यस्तर्पयेत्पितॄन् ॥ सर्वतीर्थफलावाप्तिः पितॄणां चाक्षया गतिः ॥१२४॥ तस्यां रात्रौ महाकालं यामेयामे प्रपूजयेत् ॥ यः क्षिपेत्सर्वलिंगेषु स जागरफलं लभेत् ॥ १२५ ॥ जितेंद्रियश्च यो नित्यं मां लिंगेत्र प्रपूजयेत् ॥ भुक्तिमुक्ती न दूरस्थे तस्य नित्यं द्विजोत्तम ॥ १२६ ॥ माघे चतुर्दश्यष्टम्यां सोमवारे च पर्वणि ॥ स्नात्वा सरसि योऽभ्यर्च्य लिंगमेतच्छिवं व्रजेत् ॥ ॥ १२७ ॥ दानं तपो रुद्रजापः सर्वमक्षयमेव च ॥ त्वं च नन्दी द्वितीयो मे प्रतीहारो भविष्यसि ॥ १२८ ॥ कालमार्गजयाद्वत्स महाकालाभिधश्चिरम् ॥ करंधमोऽत्र राजर्षिरचिरादागमिष्यति ॥ १२९ ॥ तस्य प्रोच्य भवान्धर्मांस्ततो मल्लोकमाव्रज ॥ इत्युक्त्वा भगवान्रुद्रो लिंगमध्ये न्यलीयत ॥ १३० ॥ महाकालोऽपि मुदितस्तत्र तेपे महत्तपः ॥ १३१ ॥ ॥ इति महाकालप्रादुर्भावः ॥ ॥ नारद उवाच ॥ अथ केनापि कालेन पार्थ राजा करंधमः ॥ विशेषमिच्छुर्धर्मेषु श्रुत्वा तीर्थमहागुणान् ॥ १३२ ॥ महाकालचरित्रं च तत्रैव समुपाययौ ॥ महीसागरतोयेऽसौ स्नात्वा लिंगान्यथार्चयत् ॥ १३३ ॥ महाकालमनुप्राप्य परमां प्रीतिमागतः ॥ स पश्यन्सुमहालिंगं नातृप्यत जनेश्वरः ॥ १३४ ॥ यथा दरिद्रः कृपणो निधिकुम्भमवाप्य च ॥ सफलं जीवितं मेने महाकालं निरीक्ष्य सः ॥ १३५ ॥ पंचमंत्रायुतजपफलं यस्येह दर्शनात् ॥ ततः सपर्ययाभ्यर्च्य महत्यासौ प्रणम्य च ॥ १३६ ॥ श्रुत्वा च लिंगप्रवरं महाकालमुपासदत् ॥ ततो रुद्रवचः स्मृत्वा महाकालः स्मयन्निव ॥ १३७॥ प्रत्युद्गम्य नृपं पूजामर्घं च प्रत्यपादयत् ॥ ततः कुशलप्रश्नादि कृत्वा शांतमुखं नृपः ॥ १३८ ॥ महाकालमुपामंत्र्य कथांते वाक्यमब्रवीत् ॥

१ लिंगे–इ० पा० । २ स्मृतम्–इ० पा० । ३ कस्मिंश्चित्पुस्तके–अत्र–इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महाकालेश्वरप्रादुर्भावोनाम चत्वारिंशोऽध्यायः ॥ ४० ॥ इत्यध्यायसमाप्तिदण्डकं वर्तते । अन्यत्र पुस्तकेषु तु–प्रक्रान्तस्यैवास्याध्यायस्य–चतुर्युगीव्यवस्थावर्णनान्ते समाप्तिदण्डकं दरीदृश्यते ।

भगवन्संशयो मह्यं सदाऽयं परिवर्तते ॥ १३९ ॥ यदिदं तर्पणंनाम पितॄणां क्रियते नृभिः ॥ जलमध्ये जलं याति कथं तृप्यंति पूर्वजाः ॥ १४० ॥ एवं पिंडादिपूजा च सर्वमत्रैव दृश्यते ॥ कथमेवं स्म मन्यामः पित्राद्यैरुपभुज्यते ॥ १४१ ॥ न चैतदस्ति यत्तेषां नोपतिष्ठति किंचन ॥ स्वप्ने यथा क्रम्य नरं दृश्यंते याचकाश्च ते ॥ १४२ ॥ देवानां चापि दृश्यंते प्रत्यक्षाः प्रत्ययाः सदा ॥ तत्कथं प्रतिगृह्णन्ति मनो मेऽत्र प्रमुह्यति ॥ १४३ ॥ ॥ महाकाल उवाच ॥ ॥ योनिरेवंविधा तेषां पितॄणां च दिवौकसाम् ॥ दूरोक्तं दूरपूजा च दूरस्तुतिरथापि यत् ॥ १४४ ॥ भव्यं भूतं भविष्यच्च सर्वं जानंति यांति च ॥ पंचतन्मात्ररूपं च मनोबुद्धिरहंजडाः ॥ १४५ ॥ नवतत्त्वमयं देहं दशमः पुरुषो मतः ॥ तस्माद्गंधेन तृप्यंति रसतत्त्वेन ते तथा ॥ १४६ ॥ शब्दतत्त्वेन तुष्यंति स्पर्शतत्त्वं च गृह्णते ॥ शुचि दृष्ट्वा च तुष्यंति नात्र राजन्भवेन्मृषा ॥१४७॥ यथा तृणं पशूनां च नराणामन्नमुच्यते ॥ एवं दैवतयोनीनामन्नसारस्य भोजनम् ॥ १४८ ॥ शक्तयः सर्वभावानामचिंत्या ज्ञानगोचराः ॥ तस्मात्तत्त्वं प्रगृह्णन्ति शेषमत्रैव दृश्यते ॥ १४९ ॥ ॥ करंधम उवाच ॥ ॥ पितृभ्यो दीयते श्राद्धं स्वकर्मवशगाश्च ते ॥ स्वर्गस्था नरकस्था वा कथं तैरुपभुज्यते ॥ १५० ॥ अथ स्वर्गेऽथ नरके स्थिताः कर्माभियंत्रिताः ॥ शक्नुवंति वरानेतान्दातुं ते चेश्वराः कथम् ॥ १५१ ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ॥ प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः ॥ १५२ ॥ ॥ महाकाल उवाच ॥ ॥ सत्यमेतत्स्वकर्मस्थाः पितरो यन्नृपोत्तम ॥ किं तु देवासुराणां च यक्षादीनाममूर्तकाः ॥ १५३ ॥ मूर्ताश्चतुर्णां वर्णानां पितरः सप्तधा स्मृताः ॥ ते हि सर्वे प्रयच्छंति दातुं सर्वं यथेप्सितम् ॥ १५४ ॥ एकत्रिंशद्गणा येषां पितॄणां प्रबला नृप ॥ कृतं च तदिदं श्राद्धं तर्पयेत्तान्परान्पितॄन् ॥ १५५ ॥ ते तृप्तास्तर्पयन्त्यस्य पूर्वजान्यत्र संस्थितान् ॥ एवं स्वानां चोपतिष्ठेच्छ्राद्धं यच्छंति ते वरान् ॥ १५६ ॥ ॥ राजोवाच ॥ ॥ भूतादिभ्यो यथा विप्र नाम्ना वोद्दिश्य दीयते ॥ सुरादीनां कथं चैव संक्षेपेण न दीयते ॥ १५७ ॥ इदं पितृभ्यो देवेभ्यो द्विजेभ्यः पावकाय च ॥ एवं कस्माद्विस्तराः स्युर्मनःकायादिकष्टदाः ॥ १५८ ॥ ॥ महाकाल उवाच ॥ ॥ उचिता प्रतिपत्तिश्च कार्या सर्वेषु नित्यशः ॥ प्रतिपत्तिं चोचितां ते विना गृह्णन्ति नैव च ॥ १५९ ॥ यथा श्वा गृहद्वारस्थो वलिं गृह्णाति किं तथा ॥ प्रधानपुरुषो राजन्गृह्णाति च शुना समः ॥ १६० ॥ एवं ते भूतवद्देवा न हि गृह्णन्ति कर्हिचित् ॥ शुचि कामं जुषंते न

१ अयं संवादः आधुनिकानां नास्तिक्यतया—नित्यनैमित्तिकादिवेदविहितकर्मसु—अश्रद्दधानानां जनानामास्तिक्यबोधेन, यदि सुकृतं तेषु स्यात्तर्हि श्रद्धामुत्पादयेदिति सत्यं भाति । २ उपलभ्यते—इ० पा० । ३ परिगृह्णन्ति—इ० पा० । ४ येषाम्—इ० पा० । ५ दैत्यादियोनीनाम्—इ० पा० ।

हविरश्रद्दधानतः ॥ १६१ ॥ विना मंत्रैश्च यद्दत्तं न तद्गृह्णन्ति तेऽमलाः ॥ श्रुतिरप्यत्र प्राहेदं मंत्राणां विषये नृप ॥ १६२ ॥ "मंत्रा[1] देवता यद्यद्विद्वान्मन्त्रवत्करोति देवताभिरेव तत्करोति यद्ददाति देवताभिरेव तद्ददाति यत्प्रतिगृह्णाति देवताभिरेव तत्प्रतिगृह्णाति तस्मान्नामन्त्रवत्प्रतिगृह्णीयात् नामन्त्रवत्प्रतिपद्यते" इति ॥ १६३ ॥ तस्मान्मंत्रैः सदा देयं पौराणैर्वैदिकैरपि ॥ अन्यथा ते न गृह्णन्ति भूतानामुपतिष्ठति ॥ १६४ ॥ ॥ राजोवाच ॥ ॥ दर्भांस्तिलानक्षतांश्च तोयं चैतैः सुसंयुतम् ॥ कस्मात्प्रदीयते दानं ज्ञातुमिच्छामि कारणम् ॥ १६५ ॥ ॥ महाकाल उवाच ॥ ॥ पुरा किल प्रदत्तानि भूमेर्दानानि भूरिशः ॥ प्रत्यगृह्णन्त[2] दैत्याश्च प्रविश्याभ्यंतरं बलात् ॥ १६६ ॥ ततो देवाश्च पितरः प्रत्यूचुः पद्मसंभवम् ॥ ॥ १६७ ॥ स्वामिन्नः पश्यतामेव सर्वं दैत्यैः प्रगृह्यते ॥ विधेहि रक्षां तेषां त्वं न नष्टाः स्मो यथा वयम् ॥ १६८ ॥ ततो विमृश्यैव विधी रक्षोपायमचीकरत् ॥ तिलैर्युक्तं पितॄणां च देवानामक्षतैः सह ॥ १६९ ॥ तोयं दर्भांश्च सर्वत्र एवं गृह्णन्ति नासुराः ॥ एतान्विना प्रदत्तं यत्फलं दैत्यैः प्रगृह्यते ॥१७०॥ निःश्वस्य पितरो देवा यांति दातुः फलं न हि ॥ तस्माद्युगेषु[3] सर्वेषु दानमेवं प्रदीयते॥१७१॥ ॥ करंधम उवाच ॥ ॥ चतुर्युगव्यवस्थानं श्रोतुमिच्छामि तत्त्वतः ॥ महतीयं विवित्सा मे सदैव परिवर्तते ॥ १७२ ॥ ॥ महाकाल उवाच ॥ आद्यं कृतयुगं विद्धि ततस्त्रेतायुगं स्मृतम् ॥ द्वापरं च कलिश्चेति चत्वारश्च समासतः ॥ १७३ ॥ सत्त्वं कृतं रजस्त्रेता द्वापरं च रजस्तमः ॥ कलिस्तमस्तु विज्ञेयं युगवृत्तं युगेषु च ॥ १७४ ॥ ध्यानं परं कृतयुगे त्रेतायां यज्ञ उच्यते ॥ वृत्तं च द्वापरे सत्यं दानमेव कलौ युगे ॥ १७५ ॥ कृते तु मानसी सृष्टिर्वृत्तिः साक्षाद्रसोल्लसा ॥ तेजोमय्यः प्रजास्तृप्ताः सदानंदाश्च भोगिनः ॥ १७६ ॥ अधमोत्तमो न तासां ता निर्विशेषाः प्रजाः शुभाः ॥ तुल्यमायुः सुखं रूपं तासां तस्मिन्कृते युगे ॥ १७७ ॥ न चाप्रीतिर्न च द्वंद्वो न द्वेषो नापि च क्लमः ॥ पर्वतोदधिवासिन्यो ह्यनुक्रोशप्रियास्तु ताः ॥ ॥ १७८ ॥ वर्णाश्रमव्यवस्था च तदासीन्न हि संकरः ॥ एकमन्यं न ध्यायंति परमं ते सदा शिवम् ॥ १७९ ॥ चतुर्थे[4] च ततः पादे नष्टा साऽभूद्रसोल्लसा ॥ प्रादुरासंस्ततस्तासां वृक्षाश्चगृहसंज्ञिताः ॥ १८० ॥ वस्त्राणि च प्रसूयंते फलान्याभरणानि च ॥ तेष्वेव जायते तासां गंधवर्णरसान्वितम् ॥ १८१ ॥ सुमाक्षिकं महावीर्यं पुटके पुटके मधु ॥ तेन ता वर्तयंति स्म कृतस्यांते प्रजास्तदा ॥ १८२ ॥ हृष्टपुष्टास्तथा वृद्धाः प्रजा वै विगतज्वराः ॥ ततः कालेन केनापि तासां वृद्धे रसेंद्रिये ॥१८३॥ युगभावात्तथा ध्याने स्वल्पीभूते शिवस्य च ॥ वृक्षांस्तान्पर्यगृह्णंत मधु वा माक्षिकं

१ शतपथब्राह्मणप्रमाणमेतत्। २ असुराः प्रत्यगृह्णन्त—इ० पा०। ३ योगेषु—इ० पा०। ४ परस्य च—इ० पा०।

बलात् ॥ १८४ ॥ तासां तेनोपचारेण लोभदोषकृतेन वै ॥ प्रनष्टा मधुना सार्धं कल्पवृक्षाः क्वचित्क्वचित् ॥ १८५ ॥ तस्यां चाप्यल्पशिष्टायां द्वंद्वान्यभ्युत्थितानि वै ॥ शीतातपैर्मनोदुःखैस्ततस्ता दुःखिता भृशम् ॥ १८६ ॥ चक्रुरावरणार्थं हि केतनानि ततस्ततः ॥ ततः प्रादुर्बभौ तासां सिद्धिस्त्रेतायुगे पुनः ॥ १८७ ॥ वृष्ट्या बभूवुरौषध्यो ग्राम्यारण्याश्चतुर्दश ॥ अकृष्टपच्याश्चानूप्तास्तोयभूमिसमागमात् ॥ १८८ ॥ ऋतु पुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥ तैश्च वृत्तिरभूत्तासां धान्यैः पुष्पैः फलैस्तथा ॥ १८९ ॥ ततः पुनरभूत्तासां रागो लोभश्च सर्वतः ॥ कालवीर्येण वा गृह्य नदीक्षेत्राणि पर्वतान् ॥ १९० ॥ वृक्षगुल्मौषधीश्चैव प्रसह्याशु यथाबलम् ॥ विपर्ययेण चौषध्यः प्रनष्टाश्च चतुर्दश ॥ १९१ ॥ नत्वा धरां प्रविष्टास्ता ओषध्यः पीडिताः प्रजाः ॥ दुदोह गां पृथुर्वैन्यः सर्वभूतहिताय वै ॥ १९२ ॥ तदाप्रभृति चौषध्यः फालकृष्टाः प्रजास्ततः ॥ वार्त्तया वर्तयंति स्म पाल्यमानाश्च क्षत्रियैः ॥१९३॥ वर्णाश्रमप्रतिष्ठा च यज्ञस्त्रेतासु चोच्यते॥सदाशिवध्यानमयं त्यक्त्वा मोक्षमचेतनाः॥१९४॥ पुष्पितां वाचमाश्रित्य रागात्स्वर्गमसाधयन् ॥ द्वापरे च प्रवर्तंते मतिभेदास्ततो नृणाम् ॥ १९५ ॥ मनसा कर्मणा वाचा कृच्छ्राद्वार्ता प्रसिध्यति ॥ लोभोऽधृतिः शिवं त्यक्त्वा धर्माणां संकरस्तथा ॥ १९६ ॥ वर्णाश्रमपरिध्वंसाः प्रवर्तंते च द्वापरे ॥ तदा व्यासैश्चतुर्द्धा च व्यस्यते द्वापरात्ततः ॥ ॥ १९७ ॥ एको वेदश्चतुष्पादैः क्रियते द्विजहेतवे ॥ इतिहासपुराणानि भिद्यंते लोकगौरवात् ॥ १९८ ॥ ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ॥ तथान्यन्नारदीयं च मार्कंडेयं च सप्तमम् ॥ १९९ ॥ आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं स्मृतम् ॥ दशमं ब्रह्मवैवर्तं लैंगमेकादशं तथा ॥ २०० ॥ वाराहं द्वादशं चैव स्कांदं चैव त्रयोदशम् ॥ चतुर्दशं वामनं च कौर्मं पंचदशं स्मृतम् ॥ २०१ ॥ मात्स्यं षोडशकं प्रोक्तं गारुडं च ततः परम् ॥ अतः परं तु ब्रह्मांडमेवञ्चाष्टादशानि हि ॥ २०२ ॥ अस्मिन्वाराहकल्पे च व्यासानाकर्णयस्व च ॥ ऋतुः सत्यो भार्गवश्च अंगिराः सविता तथा ॥ २०३ ॥ मृत्युः शतक्रतुर्धीमान्वसिष्ठो भविताऽधुना ॥ सारस्वतस्त्रिधामा च वेदवित्त्रिवृतो मुनिः ॥ २०४ ॥ शततेजाः स्वयं विष्णुर्नारायण इति स्मृतः ॥ करकश्चारुणिर्धीमांस्तथा देव ऋतंजयः ॥ २०५ ॥ कृतंजयो भरद्वाजो गौतमः कविसत्तमः ॥ वाजश्रवा मुनिश्चैव तथा युष्मायणो मुनिः ॥ २०६ ॥ तृणबिंदुस्तथा ऋक्षः शक्तिः पाराशरस्तथा ॥ जातूकर्ण्योऽथ विष्णुश्च स्वयं द्वैपायनो मुनिः ॥ २०७ ॥ अश्वत्थाममुखाश्चैते भविष्याः सूचितास्तव ॥ धर्मशास्त्राणि लोकार्थं भिद्यंते चापि द्वापरे ॥ २०८ ॥ मन्वत्रिवि

१ तस्यां युगसंधौ–इत्यर्थोऽत्र बोध्यः । २ उप्ताः–कृतवापाः–इत्यर्थः । ३ स्वस्ववीर्येण चौषध्यः–इ० पा० । ४ व्यासानाकर्णय नृप–इ० पा० । ५ तथा शुष्मायणो मुनिः–इ० पा० ।

ष्णुहारीतयाज्ञवल्क्योशनोंगिराः ॥ यमापस्तंबसंवर्ताः कात्यायनबृहस्पती ॥ २०९ ॥ पराशरव्यासशंखलिखिता दक्षगौतमौ ॥ शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥ २१० ॥ ततो द्वापरसंध्यायां प्रवर्तंति कलौ युगे ॥ नश्यमाने शैवयोगे जायंते योगनंदनाः ॥ २११ ॥ आद्ये श्वेतकलौ रुद्रः सुतारस्तारणस्तथा ॥ सुहोत्रः कंकणश्चैव लोकाख्यश्च महामुनिः ॥ २१२ ॥ जैगीषव्यश्च भाव्यो वै भगवान्दधिवाहनः ॥ ऋषभश्च मुनिर्धर्म उग्रश्चात्रिः सबालकः ॥ २१३ ॥ गौतमो वेदशीर्णश्च गोकर्णश्च शिखंडिभृत् ॥ गुहावासी जटामाली अट्टहासश्च दारुणः ॥ २१४ ॥ लांगली संयमी शूली डिंडी जुण्डीश्वरः स्वयम् ॥ सहिष्णुः सोमशर्मा च लकुलीशश्च पार्थिव ॥ २१५ ॥ कायावरोहणो भावीत्याद्या योगेश्वराः क्रमात् ॥ एते संक्षिप्य वक्ष्यंति शिवधर्मं कलौ युगे ॥ २१६ ॥ एवं कलियुगे राजञ्छास्त्रसंक्षेप उच्यते ॥ शृणु तिष्यप्रवृत्तिं च हर्षोद्वेगकरीं किल ॥ २१७ ॥ तिष्ये मायामसूयां च वधं चैव तपस्विनाम् ॥ साधयंति नरास्तत्र तमसा व्याकुलेंद्रियाः ॥ २१८ ॥ कलौ प्रमाथको रागः सततं क्षुद्भयानि च ॥ अनावृष्टिभयं घोरं देशानां च विपर्ययः ॥ २१९ ॥ न प्रमाणं श्रुतेरस्ति नृणां चाधर्मसेवनात् ॥ अधार्मिकास्त्वनाचारा महाकोपाल्पतेजसः ॥ ॥ २२० ॥ अनृतं ब्रुवते लुब्धा नारीप्रायाश्च दुष्प्रजाः ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ २२१ ॥ विप्राणां कर्मदोषैश्च प्रजानां जायते क्षयः ॥ उत्सीदंति क्षत्रविशो वर्धंते शूद्रविप्रकाः ॥ २२२ ॥ शूद्रा विप्रैः सहासंते शयनासनभोजनैः ॥ शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ॥ २२३ ॥ राजवृत्त्यां स्थिताश्चौराश्चौराचाराश्च पार्थिवाः ॥ एकपत्न्यो न शिष्यंति वर्धयंत्यभिसारिकाः ॥ २२४ ॥ तदा ह्यल्पफला भूमिः क्वचिच्चापि महाफला ॥ अरक्षितारो हर्तारो राजानः पापनिर्भयाः ॥ २२५ ॥ अक्षत्रियास्तु राजानो विप्राः शूद्रोपजीविनः ॥ शूद्रा विवादिनः सर्वे ब्राह्मणैरभिनंदिताः[३] ॥ २२६ ॥ आसनस्थान्द्विजान्दृष्ट्वा चलंत्यत्यल्पबुद्धयः[४] ॥ आस्ये निधाय वै हस्तं कर्णे शूद्रस्य च द्विजाः ॥ २२७ ॥ नीचस्यापि तदा वाक्यं वक्ष्यंति विनयेन तम् ॥ उच्चासनस्थाञ्छूद्रांश्च द्विजानां पश्यतामपि ॥ ॥ २२८ ॥ ज्ञात्वा न हिंसते राजा पश्य कालबलं नृप ॥ पुष्पैः शुभसितैश्चैव तथान्यैर्मंडनैर्द्विजाः ॥ २२९ ॥ शूद्रानभ्यर्चयंत्यल्पश्रुतभाग्यबलान्विताः ॥ पापंडिनां च गृह्णंति ब्राह्मणाः कुप्रतिग्रहम् ॥ २३० ॥ येन ते रौरवं यांति सुदुस्तारं द्विजाधमाः ॥ तपोयज्ञफलानां च विक्रेतारो द्विजास्तथा[५] ॥ २३१ ॥ यतयश्च भविष्यंति बहवः कोटिशः[६] कलौ ॥ पुरुषाल्पबहुस्त्रीको नृणां चापत्यसंभवः ॥ २३२ ॥ निंदंति वेदवाक्यानि वेदा

१ सुबालिकः–इ० पा० । २ डुण्डी रुण्डीश्वरः–इ० पा० । ३ अभिवन्दिताः–इ० पा० । ४ न चलंत्यल्पबुद्धयः–इ० पा० । ५ द्विजोत्तमाः–इ० पा० । ६ शतकोटिशः–इ० पा० ।

र्थाश्च कलौ युगे ॥ शूद्रैः स्वयं निर्मितं यत्प्रमाणं शास्त्रमेव तत् ॥ २३३ ॥ श्वापदप्रबलत्वं च गवां चापि परिक्षयः ॥ कस्यचिद्दानप्रभृतिधर्म
स्यास्ति न शुद्धता ॥ २३४ ॥ साधूनां बहवो नाशाः पार्थिवाश्चाप्यरक्षिणः ॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ॥ २३५ ॥ प्रमदाः केशशू
लिन्यो भविष्यंति कलौ युगे ॥ स्त्रीप्रधानानि गेहानि कुचैलास्ताश्च कर्कशाः ॥ २३६ ॥ बहुभक्ष्यावलिप्ताश्च कृत्या इव भवंति च ॥ सर्वे वणिग्ज
नाश्चापि चित्रवर्षी च वासवः ॥ २३७ ॥ कुशीलचर्यापापंडैर्वृथारूपैः समावृतः ॥ बहुयाचनको लोको भविष्यति परस्परी ॥ २३८ ॥ अशंक
श्चैव पापेषु तदा लोको भविष्यति ॥ हर्तारः पररत्नानां परदारप्रधर्षकाः ॥ २३९ ॥ ऊनषोडशवर्षाश्च प्रजायंते युगक्षये ॥ तथा द्वादशवर्षाश्च
प्रसवंति स्त्रियस्तदा ॥ २४० ॥ चौराश्चौरस्य हर्तारो हर्तुर्हर्त्ता तथापरः ॥ ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते ॥ २४१ ॥ कीटमूषकसर्पाश्च
धर्षयिष्यंति मानवान् ॥ वर्णाश्रमाणां ये चान्ये पाषंडाः परिपंथिनः ॥ २४२ ॥ ते तदा प्रोद्भविष्यंति तेषां वृद्धिश्च पार्थिव ॥ दुःखं पुत्रकलत्राद्यं
देहोत्सादः सरोगता ॥ २४३ ॥ अधर्माभिनिवेशत्वात्तमसो जायते कलौ ॥ कलेर्दोषनिधेश्चैव शृणुष्वैवं महागुणम् ॥ २४४ ॥ तदाल्पेनैव काले
न सिद्धिं गच्छंति मानवाः ॥ त्रियुगीना वदंत्येवं धन्या धर्मं चरंति ये ॥ २४५ ॥ श्रुतिस्मृतिपुराणोक्तं कलौ श्रद्धापरायणाः ॥ त्रेतायां वार्षिको
धर्मो द्वापरे मासिकः स्मृतः ॥ २४६ ॥ यथा क्लेशं चरन्प्राज्ञस्तद्वह्ना प्राप्यते कलौ ॥ युगत्रयेण तावंतः सिद्धिं गच्छंति पार्थिवः ॥ २४७ ॥
यावंतः सिद्धिमायांति कलौ हरिहरव्रताः ॥ अष्टाविंशे कलौ यच्च भावि तत्त्वं निबोध मे ॥ २४८ ॥ त्रिषु वर्षसहस्रेषु कलेर्यातेषु पार्थिवः ॥ त्रिश
तेषु दशन्यूनेष्वस्यां भुवि भविष्यति ॥ २४९ ॥ शूद्रकोनाम वीराणामधिपः सिद्धिमत्र सः ॥ चर्चितायां समाराध्य लप्स्यते भूभरापहः ॥ २५० ॥
ततस्त्रिषु सहस्रेषु दशाधिकशतत्रये ॥ भविष्यं नंदराज्यं च चाणक्यो यान्हनिष्यति ॥ २५१ ॥ शुक्रतीर्थे सर्वपापनिर्मुक्तिं योऽभिलप्स्यति ॥
ततस्त्रिषु सहस्रेषु विंशत्या चाधिकेषु च ॥ २५२ ॥ भविष्यं विक्रमादित्यराज्यं सोऽथ प्रलप्स्यते ॥ सिद्धिप्रसादाद्दुर्गाणां दीनान्यो ह्युद्धरिष्यति
॥ २५३ ॥ ततः शतसहस्रेषु शतेनाप्यधिकेषु च ॥ शकोनाम भविष्यश्च योऽतिदारिद्र्यहारकः ॥ २५४ ॥ ततस्त्रिषु सहस्रेषु षट्शतैरधिकेषु च ॥
मागधे हेमसदनादंजन्यां प्रभविष्यति ॥ २५५ ॥ विष्णोरंशो धर्मपाता बुधः साक्षात्स्वयं प्रभुः ॥ तस्य कर्माणि भूरीणि भविष्यंति महात्मनः
॥ २५६ ॥ ज्योतिर्बिंदुमुखान्ग्रान्स हनिष्यति कोटिशः ॥ चतुःषष्टिं स वर्षाणि भुक्त्वा द्वीपानि सप्त च ॥ २५७ ॥ भक्तेभ्यः स्वयशो मुक्त्वा

१ अट्टमन्नं शिवो वेदः केशो भग उदीरितः—इत्यन्यत्रोक्ता अट्टादिसंज्ञाः । शूलश्च विक्रयः ।

दिवं पश्चाद्गमिष्यति ॥ सर्वेषां चावताराणां गुणैः समधिको यतः ॥ २५८ ॥ ततो वक्ष्यंति तं भक्त्या सर्वपापहरं बुधम् ॥ चतुर्षु च सहस्रेषु शतेष्वपि चतुर्षु च ॥ २५९ ॥ साधिकेषु महाराजा प्रमितिः प्रभविष्यति ॥ गोत्रेषु वै चंद्रमसो बहुसेनापतिर्बली ॥ २६० ॥ म्लेच्छान्स कोटिशो हत्वा पाषंडानि च सर्वशः ॥ वैदिकं केवलं शुद्धं सद्धर्मं वर्तयिष्यति ॥ २६१ ॥ गंगायमुनयोर्मध्ये निष्ठां यास्यति पार्थिवः ॥ ततः प्रजाश्च काले न केनापि भृशपीडिताः ॥ २६२ ॥ घोरं वा धर्ममाश्रित्य शाठ्येन च भवंति ताः ॥ अप्रग्रहास्ततस्ता वै लोभाविष्टाश्च वृंदशः ॥२६३॥ उपहिंसंति चान्योन्यं व्याकुलाः श्रमपीडिताः ॥ नष्टे श्रौते तथा स्मार्ते परस्परहतास्तदा ॥ २६४ ॥ निर्मर्यादा निष्करुणा निस्स्नेहा निरपत्रपाः ॥ गृहदाराणि संत्यज्य ह्रस्वकाः पंचविंशतिः ॥ २६५ ॥ हाहाभूताश्चरिष्यंति विषादव्याकुलेंद्रियाः ॥ अनावृष्टिहताश्चैव वार्तामुत्सृज्य दुःखिताः ॥२६६॥ प्रत्यंतांस्ता निषेवंति हित्वा जनपदान्स्वकान् ॥ सरित्सागरकूलांश्च सेवंते पर्वतांस्तथा ॥२६७॥ मांसैर्मूलफलैश्चैव वर्तयंति सुदुःखिताः ॥ चीरपत्राजिनधरा निष्क्रिया निष्परिग्रहाः ॥२६८॥ धर्मस्य वासमात्रं च शाल्वो म्लेच्छो हनिष्यति ॥ उत्तमाधममध्यत्वं सर्वमुच्छिद्य घोरकृत् ॥ २६९ ॥ ततस्तस्य वधार्थाय विष्णुः साक्षाज्जगत्पतिः ॥ शंभले विष्णुयशसो भूत्वा पुत्रो नृपोत्तम ॥ २७० ॥ द्विजोत्तमैः परिवृतः शाल्वं तं संहरिष्यति ॥ कोटिशोऽर्बुदशः पापान्निहत्य च निखर्वशः ॥२७१॥ पालयिष्यति तं धर्मं यो धर्मः श्रुतिपूर्वकः ॥२७२॥ कृत्वा पोतं धर्मरूपं साधूनां परमेश्वरः ॥ गमिष्यति परं लोकं कृत्वा कर्माणि भूरिशः ॥ २७३ ॥ ततः कृतयुगं भूयः प्रवर्तिष्यति पार्थिव ॥ आद्यं कृतयुगं चान्यं तदन्येभ्यो विशिष्यते ॥२७४॥ अष्टाविंशकलिश्चैव शेषः प्रावर्त अन्यतः ॥ ततः कृते सूर्यवंशः सोमवंशः प्रवत्स्यति ॥२७५॥ मरुराजाच्च देवापेः श्रुतदेवाच्च ब्राह्मणाः ॥ इति चातुर्युगी राजन्व्यवस्था परिवर्तते ॥ चतुर्युगे च ते धन्या ये भजंति हराच्युतौ ॥ २७६ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे महाकालकरन्धमसंवादे चतुर्युगव्यवस्थावर्णनंनाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥ ॥ छ ॥

॥ ॥ करंधम उवाच ॥ ॥ केचिच्छिवं समाश्रित्य विष्णुमाश्रित्य वेधसम् ॥ वर्णयंति परे मोक्षं त्वं तु कस्मात्तु मन्यसे ॥ १ ॥ ॥ महाकाल उवाच ॥ ॥ अपारवैभवा देवास्त्रयोऽप्येते नरर्षभ ॥ योगींद्राणामपि त्वत्र चेतो मुह्यति किं मम ॥ २ ॥ पुरा किलैवं मुनयो नैमिषारण्यवा

---

१ प्रमतिः–इ० पा० । २ साल्वः–इ० पा० । ३ साल्वम्–इ० पा० । ४ स हनिष्यति–इ० पा० । ५ परिकीर्त्यते–इ० पा० ।

सिनः ॥ संदिह्यांतः श्रेष्ठतायां ब्रह्मलोकमुपागमन् ॥ ३ ॥ तस्मिन्क्षणे विरिंचोऽपि श्लोकं प्रह्वोऽब्रवीत्किल ॥ अनंताय नमस्तस्मै यस्यांतो नोपलभ्यते ॥ ४ ॥ महेशाय च भक्ते द्वौ कृपायेतां सदा मयि ॥ ततः श्रेष्ठं च तं मत्वा क्षीरोदं मुनयो ययुः ॥ ५ ॥ तत्र योगेश्वरः श्लोकं प्रबुध्यन्नमुमब्रवीत् ॥ ब्रह्माणं सर्वभूतेषु परमं ब्रह्मरूपिणम् ॥ ६ ॥ सदाशिवं च वंदे तौ भवेतां मंगलाय मे ॥ ततस्ते विस्मिता विप्रा अपसृत्य[1] ययुः पुनः ॥ ॥ ७ ॥ कैलासे ददृशुः स्थाणुं वदंतं गिरिजां प्रति ॥ एकादश्यां प्रनृत्यानि जागरे विष्णुसद्मनि ॥ ८ ॥ सदा तपस्यां चरामि प्रीत्यर्थं हरिवेधसोः ॥ श्रुत्वेति चापसृत्यैव खिन्नास्ते मुनयोऽब्रुवन् ॥ ९ ॥ यद्वा देवा न संयांति पारं ये च परस्परम् ॥ तत्सृष्टसृष्टसृष्टेषु गणना काऽस्मदादिषु ॥ १० ॥ उत्तमाधममध्यत्वममीषां वर्णयंति ये ॥ असत्यवादिनः पापास्ते यांति निरयं ध्रुवम् ॥ ११ ॥ एवं ते निश्चयामासुर्नैमिषेयास्तपस्विनः ॥ सत्यमेतच्च राजेंद्र ममापीदं मतं स्फुटम् ॥ १२ ॥ जापकानां सहस्राणि वैष्णवानां तथैव च ॥ शैवानां च विधिं विष्णुं स्थाणुं चाप्यन्वमूमुचन् ॥ १३ ॥ तस्माद्यस्य मनोरागो यस्मिन्देवे भवेत्स्फुटम् ॥ स तं भजेद्विपापः स्यान्ममेदं मतमुत्तमम् ॥ १४ ॥ ॥ करंधम उवाच ॥ ॥ कानि पापानि विप्रेंद्र यैस्तु संमूढचेतसः ॥ न वेदेषु न धर्मेषु रतिमापद्यते मनः ॥ १५ ॥ ॥ महाकाल उवाच ॥ ॥ अधर्मभेदा विज्ञेयाश्चित्तवृत्तिप्रभेदतः[2] ॥ स्थूलाः सूक्ष्मा असूक्ष्माश्च कोटिभेदैरनेकशः ॥ १६ ॥ तत्र ये पापनिचयाः स्थूला नरकहेतवः ॥ ते समासेन कथ्यंते मनोवाक्कायसाधनाः ॥ १७ ॥ परस्त्रीद्रव्यसंकल्पश्चेतसानिष्टचिंतनम् ॥ अकार्याभिनिवेशश्च चतुर्द्धा कर्म मानसम् ॥ १८ ॥ अनिबद्धप्रलापित्वमसत्यं चाप्रियं च यत् ॥ परापवादपैशुन्यं चतुर्धा कर्म वाचिकम् ॥ १९ ॥ अभक्ष्यभक्षणं हिंसा मिथ्या कामस्य सेवनम् ॥ परस्वानामुपादानं चतुर्धा कर्म कायिकम् ॥ २० ॥ इत्येतद्द्वादशविधं कर्म प्रोक्तं त्रिसंभवम् ॥ अस्य भेदान्पुनर्वक्ष्ये येषां फलमनंतकम् ॥ २१ ॥ ये द्विषंति महादेवं संसारार्णवतारकम् ॥ सुमहत्पातकोपेतास्ते यांति नरकाग्निषु ॥ २२ ॥ महांति पातकान्याहुर्निरंतरफलानि षट् ॥ नाभिनंदंति ये दृष्ट्वा शंकरं न स्तुवंति ये ॥ २३ ॥ यथेष्टचेष्टा निःशंकाः संतिष्ठंति रमंति च ॥ उपचारविनिर्मुक्ताः शिवस्य गुरुसंनिधौ ॥ २४ ॥ शिवाचारं न मन्यंते शिवभक्तान्द्विषंति षट्[3] ॥ गुरुमार्त्तमशक्तं वा विदेशप्रस्थितं तथा ॥ २५ ॥ अरिभिः परिभूतं वा यस्त्यजति स पापकृत् ॥ तद्भार्यापुत्रमित्रेषु यश्चावज्ञां करोति वा ॥ २६ ॥ इत्येतत्पातकं ज्ञेयं गुरुनिंदासमं महत् ॥ ब्रह्मघ्नश्च सुरा

१ अपसृत्य--पश्चात्परावृत्य--इत्यर्थः । २ चित्तवृत्तिविभेदतः--इ० पा० । ३ तु--इ० पा० ।

पश्च स्तेयी च गुरुतल्पगः ॥ २७ ॥ महापातकिनस्त्वेते तत्संसर्गी च पंचमः ॥ क्रोधाद्द्वेषाद्भयाल्लोभाद्ब्राह्मणस्य वदंति ये ॥ २८ ॥ मर्मांतिकं महादोषं ब्रह्मघ्नः स प्रकीर्तितः ॥ ब्राह्मणं यः समाहूय याचमानमकिंचनम् ॥ २९ ॥ पश्चान्नास्तीति यो ब्रूयात्स च वै ब्रह्महा स्मृतः ॥ यश्च विद्याभिमानेन निस्तेजयति सद्द्विजम् ॥ ३० ॥ उदासीनः सभामध्ये ब्रह्महा स प्रकीर्तितः ॥ मिथ्यागुणैः स्वमात्मानं नयत्युत्कर्षतां बलात् ॥ ३१ ॥ विरुद्धं गुरुभिः सार्धं ब्रह्मघ्नः स प्रकीर्तितः ॥ क्षुत्तृष्णातप्तदेहानां द्विजानां भोक्तुमिच्छताम् ॥ ३२ ॥ यः समाचरते विघ्नं तमाहुर्ब्रह्मघातकम् ॥ पिशुनः सर्वलोकानां छिद्रान्वेषणतत्परः ॥ ३३ ॥ उद्वेगजननः क्रूरः स च वै ब्रह्महा स्मृतः ॥ गवां तृषाभिभूतानां जलार्थमुपसर्पताम् ॥ ३४ ॥ यः समाचरते विघ्नं तमाहुर्ब्रह्मघातकम् ॥ परदोषं परिज्ञाय नृपकर्णे जपेत यः ॥ ३५ ॥ पापीयान्पिशुनः क्रूरस्तमाहुर्ब्रह्मघातकम् ॥ न्यायेनोपार्जितं विप्रैस्तद्द्रव्यहरणं च यत् ॥३६॥ छद्मना वा बलाद्वापि ब्रह्महत्यासमं मतम् ॥ अधीत्य यश्च शास्त्राणि परित्यजति मूढधीः ॥ ३७ ॥ सुरापानसमं ज्ञेयं जीवनायैव वा पठेत् ॥ अग्निहोत्रपरित्यागः पंचयज्ञोपकर्मणाम् ॥ ३८ ॥ मातृपितृपरित्यागः कूटसाक्षी सुहृद्वधः ॥ अभक्ष्यभक्षणं वन्यजंतूनां काम्यया वधः ॥ ३९ ॥ ग्रामं वनं गवावासं यश्च क्रोधेन दीपयेत् ॥ इति घोराणि पापानि सुरापानसमानि च ॥ ४० ॥ दीनसर्वस्वहरणं नरस्त्रीगजवाजिनाम् ॥ गोभूरत्नसुवर्णानामौषधीनां रसस्य च ॥ ४१ ॥ चंदनागरुकर्पूरकस्तूरीपट्टवाससाम् ॥ हस्तन्यासापहरणं रुक्मस्तेयसमं स्मृतम् ॥ ४२ ॥ कन्यानां वरयोग्यानामदानं सदृशे वरे ॥ पुत्रमित्रकलत्रेषु गमनं भगिनीषु च ॥ ४३ ॥ कुमारीसाहसं घोरमंत्यजस्त्रीनिषेवणम् ॥ सवर्णायाश्च गमनं गुरुतल्पसमं स्मृतम् ॥ ४४ ॥ द्विजायार्थं प्रतिश्रुत्य न प्रयच्छति यः पुनः ॥ न च स्मारयते विप्रं तुल्यं तदुपपातकम् ॥ ४५ ॥ अभिमानोतिकोपश्च दांभिकत्वं कृतघ्नता ॥ अत्यंतविषयासक्तिः कार्पण्यं शाठ्यमत्सरम् ॥ ४६ ॥ भृत्यानां च परित्यागः साधुबंधुतपस्विनाम् ॥ गवां क्षत्रियवैश्यानां स्त्रीशूद्राणां च ताडनम् ॥ ४७ ॥ शिवाश्रमतरूणां च पुष्पारामविनाशनम् ॥ अयाज्यानां याजनं चाप्ययाच्यानां च याचनम् ॥ ४८ ॥ यज्ञारामतडागादिदारापत्यस्य विक्रयः ॥ तीर्थयात्रोपवासानां व्रतायतनकर्मणाम् ॥ ४९ ॥ स्त्रीधनान्युपजीवंति स्त्रीभिरत्यंतनिर्जिताः ॥ अरक्षणं च नारीणां मद्यपस्त्रीनिषेवणम् ॥ ५० ॥ ऋणानामप्रदानं च मिथ्यावृद्ध्युपजीवनम् ॥ निंदितानां धनादानं साध्वीकन्योक्तिदूपणम् ॥ ५१ ॥ विषमारणयंत्राणां प्रयोगो मूलकर्मणाम् ॥ उच्चाटनाभिचाराश्च रागविद्वेषणक्रिया ॥ ५२ ॥ जिह्वाकामोपभो

१ उद्वेजयति--इ०पा० । २ सचैव--इ०पा० । ३ व्रतायतननर्मणाम्--इ०पा० ।

गार्थं यस्यारंभः स्वकर्मसु॥मूल्येनाध्यापयेद्यस्तु मूल्येनाधीयते च ये॥५३॥व्रात्यता व्रतसंत्यागः सर्वाहारनिषेवणम् ॥असच्छास्त्राभिगमनं शुष्कतर्कावलंबनम्॥५४॥देवाग्निगुरुसाधूनां निंदा गोब्राह्मणस्य च॥ प्रत्यक्षं वा परोक्षं वा राज्ञां मंडलिनामपि॥५५॥उत्सन्नपितृदेवेज्याः स्वकर्मत्यागिनश्च ये ॥ दुःशीला नास्तिकाः पापा न सदा सत्यवादिनः ॥ ५६ ॥ पर्वकाले दिवा चाप्सु वियोनौ पशुयोनिषु ॥ रजस्वलास्वयोनौ च मैथुनं यः समाचरेत् ॥ ५७ ॥ स्त्रीपुत्रमित्रसुहृदामाशाच्छेदकराश्च ये ॥ जनस्याप्रियवक्तारः क्रूराः समयभेदिनः ॥ ५८ ॥ भेत्ता तडागकूपानां संक्रमाणां रसस्य च ॥ एकपंक्तिस्थितानां च पाकभेदं करोति यः ॥ ५९ ॥ इत्येतैश्च नराः पापैरुपपातकिनः स्मृताः ॥ युक्तास्तदूनकैः पापैः पापिनस्तान्निबोध मे ॥ ६० ॥ ये गोब्राह्मणकन्यानां स्वामिमित्रतपस्विनाम् ॥ अन्तरं यांति कार्येषु ते स्मृताः पापिनो नराः ॥ ६१ ॥ परश्रियाभितप्यंते हीनां सेवंति ये स्त्रियाम् ॥ पंक्त्यर्थं ये न कुर्वंति दानयज्ञादिकाः क्रियाः ॥ ६२ ॥ गोष्ठाग्निजलरथ्यासु तरुच्छायानगेषु च ॥ त्यजंति ये पुरीषाद्यमारामायतनेषु च ॥ ६३ ॥ गीतवाद्यरता नित्या मत्ताः किलकिलापराः ॥ कूटवेषक्रियाचाराः कूटसंव्यवहारिणः ॥ ६४ ॥ कूटशासनकर्तारः कूटयुद्धकराश्च ये ॥ निर्दयोऽतीव भृत्येषु पशूनां दमनश्च यः ॥ ६५ ॥ मिथ्याप्रसादितो वाक्यमाकर्णयति यः शनैः ॥ चपलश्चापि मायावी शठो मिथ्याविनीतकः ॥ ६६ ॥ यो भार्यापुत्रमित्राणि बालवृद्धकृशातुरान् ॥ भृत्यानतिथिबंधूंश्च त्यक्त्वाश्नाति बुभुक्षितान् ॥ ६७ ॥ यः स्वयं मृष्टमश्नाति विप्रायान्यत्प्रयच्छति ॥ वृथापाकः स विज्ञेयो ब्रह्मवादिविगर्हितः ॥ ६८ ॥ नियमान्स्वयमादाय ये त्यजंत्यजितेंद्रियाः ॥ ये ताडयंति गां नित्यं वाहयंति मुहुर्मुहुः ॥ ६९ ॥ दुर्बलान्नैव पुष्णंति प्रणष्टार्था द्विषंति च ॥ पीडयन्त्यभिचारेण सक्षतान्वाहयंति च ॥ ७० ॥ तेषा मदत्त्वा चाश्नंति चिकित्संति न रोगिणः ॥ अजाविको माहिषिकः समुद्री वृषलीपतिः ॥७१॥ हीनवर्णात्मवृत्तिश्च वैद्यो धर्मध्वजी च यः ॥ यश्च शास्त्रमतिक्रम्य स्वेच्छयैवाहरेत्करम् ॥ ७२ ॥ सदा दण्डरुचिर्यश्च यो वा दण्डरुचिर्न हि ॥ उत्कोचकैरधिकृतैस्तस्करैश्च प्रपीड्यते ॥ ७३ ॥ यस्य राज्ञः प्रजा राष्ट्रे पच्यते नरकेषु सः ॥ अचौरं चौरवत्पश्येच्चौरं वाऽचौररूपिणम् ॥ ७४ ॥ आलस्योपहतो राजा व्यसनी नरकं व्रजेत् ॥ एवमादीनि चान्यानि पापान्याहुः पुराविदः ॥ ७५ ॥ यद्वातद्वा परद्रव्यमपि सर्षपमात्रकम् ॥ अपहृत्य नरः पापो नारकी नात्र संशयः ॥ ७६ ॥ एवमाद्यैर्नरः पापैरुत्क्रान्तैः समनंतरम् ॥ शरीरं यातनार्थाय पूर्वाकारमवाप्नुयात् ॥ ७७ ॥ तस्मात्त्रिविधमप्येतन्नारकीयं विवर्जयेत् ॥ सदाशिवं

१ अवासवान्—इ० पा० ।

च शरणं व्रजेत्सच्छ्रद्धया युतः ॥ ७८ ॥ नमस्कारः स्तुतिः पूजा नामसंकीर्तनं तथा ॥ संपर्कात्कौतुकाल्लोभान्न तस्य विफलं भवेत् ॥ ७९ ॥ ॥ ॥ करंधम उवाच ॥ ॥ संक्षेपाच्छिवपूजाया विधानं वक्तुमर्हसि ॥ कृतेन येन मनुजः शिवपूजाफलं लभेत् ॥ ८० ॥ ॥ महाकाल उवाच ॥ ॥ प्रातर्मध्याह्नसायाह्ने शंकरं सर्वदा भजेत् ॥ दर्शनात्स्पर्शनान्मर्त्यः कृतकृत्यो भवेत्स्फुटम् ॥ ८१ ॥ आदौ स्नानं प्रकुर्वीत भस्मस्नानमथापि वा ॥ आपद्गतः कण्ठस्नानं मन्त्रस्नानमथापि वा ॥ ८२ ॥ आविकं परिदध्याच्च ततो वासः सितं च वा ॥ धातुरक्तमथो नव्यं मलिनं संधितं न च ॥ ८३ ॥ उत्तरीयं च संदध्याद्विना तन्निष्फलार्चनम् ॥ भस्मत्रिपुण्ड्रधारी च ललाटे हृदि चांसयोः ॥ ८४ ॥ पूजयेद्यो महादेवं प्रीतः पश्यति तं मुहुः ॥ सर्वदोषान्बहिः क्षिप्य शिवायतनमाविशेत् ॥ ८५ ॥ प्रविश्य च प्रणम्येशं ततो गर्भगृहं विशेत् ॥ पाणी प्रक्षाल्य तच्चित्तो निर्माल्यमवरोपयेत् ॥ ८६ ॥ येन रुद्रायने भक्त्या कुरुते मार्जनक्रियाम् ॥ तस्मान्मार्जयते त्वेवं स्थाणुनैतत्परस्परम् ॥ ८७ ॥ रुद्रभक्त्या च संतिष्ठेन्मालिन्यं मार्जयेत्ततः ॥ भक्तिर्देवस्य तिष्ठेन्न मालिन्यं मार्जतः सदा ॥ ८८ ॥ गड्डुकान्पूरयेत्पश्चान्निर्मलेन जलेन वै ॥ गड्डुकास्तु समाः सर्वे सर्वे च शुभदर्शनाः ॥ ८९ ॥ निर्व्रणाः सौम्यरूपाश्च सर्वे चोदकपूरिताः ॥ वस्त्रपूतजलैः पूर्णा गन्धधूपैश्च वासिताः ॥९०॥ क्षालिताः पूरिता नीताः षडक्षरजपेन च ॥ गड्डुकाष्टशतं कुर्यादथवाप्यष्टविंशतिः ॥ ९१ ॥ अष्टादशापि चतुरस्ततो न्यूनं न कारयेत् ॥ पयो दधि घृतं चैव क्षौद्रमिक्षुरसं तथा ॥ ९२ ॥ एवं सर्वं च तद्द्रव्यं वामतः संन्यसेद्बुधः ॥ ततो बहिर्विनिष्क्रम्य पूजयेत्प्रतिहारकान् ॥९३॥सर्वेषां वाचका मन्त्राः कथ्यंतेऽतः परं क्रमात् ॥९४॥ ॐगं गणपतये नमः ॥ ॐक्षां क्षेत्रपालाय नमः ॥ ॐगं गुरुभ्यो नमः ॥ इति आकाशे ॥ ॐकौं कुलदेव्यै नमः ॥ ॐ नंदिने नमः॥ ॐमहाकालाय नमः ॥ ॐधात्रे विधात्रे नमः ॥ ततः प्रविश्य लिंगाच्च किञ्चिद्दक्षिणतः शुचिः ॥ उदङ्मुखः क्षणं ध्यायेत्समकायासनस्थितः॥९५॥दर्भादिभिः परिवृतं मध्यपद्मार्कमंडलम्॥ सोममण्डलमध्यस्थं ध्यायेद्वै वह्निमंडलम्॥ ॥९६॥तन्मध्ये विश्वरूपं च वामाद्यष्टादिशक्तिकम्॥पंचवक्त्रं दशभुजं त्रिनेत्रं चंद्रभूषितम्॥९७॥वामांकगिरिजं देवं ध्यायेत्सिद्धैः स्तुतं मुहुः॥ततः पूर्वं प्रदद्याच्च पाद्यार्घं शंभवे नृप ॥९८॥ पानीयमक्षता दर्भा गंधपुष्पं ससर्षपम्॥ क्षीरं दधि मधु पुनर्नवांगोऽर्घः प्रकीर्तितः ॥९९॥ ततः श्रद्धार्द्रचित्तस्य स्नानं लिंगस्य चाचरेत् ॥ गृहीत्वा गड्डुकं पूर्वं मलस्नानं समाचरेत् ॥ १०० ॥ अर्द्धेन स्नापयेत्पूर्वं कुर्याच्च मलघर्षणम् ॥ सर्वेण स्नापयेत्पश्चात्पूजये

१ धौतरक्तम्—इ० पा० । २ उमाद्यष्टादिशक्तिकम्—इ० पा० । ३ गुडकान्—इ०पा० ।

त्स्नापयेत्ततः ॥ १०१ ॥ प्रणम्य च ततो भक्त्या स्नापयेन्मूलमंत्रतः ॥ ॐहूं विश्वमूर्तये शिवाय नम ॥ इति द्वादशाक्षरो मूलमंत्रः ॥ १०२॥ वारि
क्षीरदधिक्षौद्रघृतेनेक्षुरसेन च ॥ स्नापयेन्मूलमन्त्रेण जलधूपार्चनात्पृथक् ॥१०३॥ गड्डुकैः स्नापयेत्सर्वैः स्नातं गन्धैर्विरूक्षयेत् ॥१०४॥ विरूक्षितं ततः
स्नाप्य श्रीखण्डेन विलेपयेत् ॥ पूजयेद्विविधैः पुष्पैर्विधिना येन तच्छृणु ॥१०५॥ आग्नेयपादे ॥ ॐधर्माय नमः ॥ नैर्ऋतके ॥ ॐज्ञानाय नमः ॥
वायव्ये ॥ ॐवैराग्याय नमः ॥ ईशानपादे ॥ ॐऐश्वर्याय नमः ॥ पूर्वपादे ॥ ॐअधर्माय नमः ॥ दक्षिणे ॥ ॐअज्ञानाय नमः ॥ पश्चिमे ॥ ॐअ
वैराग्याय नमः ॥ उत्तरे ॥ ॐअनैश्वर्याय नमः ॥ ॐअनन्ताय नमः ॥ ॐपद्माय नमः ॥ ॐअर्कमण्डलाय नमः ॥ ॐसोममण्डलाय नमः ॥
ॐवह्निमण्डलाय नमः ॥ ॐवामाज्येष्ठादिपंचमन्त्रशक्तिभ्यो नमः ॥ ॐपरमप्रकृत्यै देव्यै नमः ॥ ॐईशानतत्पुरुषाघोरवामदेवसद्योजातपञ्चव
क्त्राय रुद्रसाध्यवस्वादित्यविश्वेदेवादिदेवविश्वरूपाय अण्डजस्वेदजोद्भिज्जजरायुजरूपस्थावरजङ्गममूर्तये परमेश्वराय ॐहूं विश्वमूर्तये शिवाय नमस्त्रि
शूलधनुःखड्गकपालदण्डकुठारेभ्यः ॥ १०६ ॥ ततो जलाधारमुखे चण्डीश्वराय नमः ॥ एवं संपूज्य विधिवत्ततोऽर्घं संनिवेशयेत् ॥ १०७ ॥ पानी
यमक्षताः पुष्पमेतैर्युक्तं फलोत्तमैः ॥ गृहाणार्घ्यं महादेव पूजासंपूर्तिहेतवे ॥ १०८ ॥ अर्घादनंतरं शक्तः पूजयेद्रुसुपूजया ॥ धूपं दीपं च नैवेद्यं क्रमा
त्पश्चान्निवेदयेत् ॥ १०९ ॥ घण्टां च वादयेत्तत्र ततो नीराजनं चरेत् ॥ भ्रामयेद्देवदेवस्य शंखवादित्रनिःस्वनैः ॥ ११० ॥ नीराजनं च यः पश्ये
द्देवदेवस्य शूलिनः ॥ स मुच्येत्पातकैः सर्वैः किं पुनर्यः करिष्यति ॥ १११ ॥ नृत्यं गीतं च वाद्यं च अलीकमपि यश्चरेत् ॥ तस्य तुष्येदनंतं
हि गीतवाद्यफलं यतः ॥ ११२ ॥ स्तोत्रैस्ततश्च संस्तूय दण्डवत्प्रणमेद्भुवि ॥ क्षमापयेच्च देवेशं सुकृतं कुकृतं क्षम ॥ ११३ ॥ य एवं यजते रुद्रम
स्मिँल्लिंगे विशेषतः ॥ पितरं पितामहं चैव तथैव प्रपितामहम् ॥ ११४ ॥ सर्वात्पापात्समुत्तार्य रुद्रलोके वसेच्चिरम् ॥ एवं माहेश्वरो भूत्वा सदाचा
रव्रतस्थितः ॥ ११५ ॥ पशुपाशविमोक्षार्थं पूजयेत्तन्मना यदि ॥ य एवं यजते रुद्रं तेनैतत्तर्पितं जगत् ॥ ११६ ॥ किं त्वेतत्सफलं राजन्नाचार
यो न लंघयेत् ॥ आचारात्फलते धर्मो ह्याचारात्स्वर्गमश्नुते ॥ ११७ ॥ आचाराल्लभते ह्यायुराचारो हंत्यलक्षणम् ॥ यज्ञदानतपांसीह पुरुषस्य न
भूतये ॥ ११८ ॥ भवन्ति यः सदाचारं समुल्लंघ्य प्रवर्तते ॥ तस्य किञ्चित्समुद्देशं वक्ष्ये तं शृणु पार्थिव ॥ ११९ ॥ त्रिवर्गसाधने यत्नः कर्तव्यो
गृहमेधिना ॥ तत्संसिद्धौ गृहस्थस्य सिद्धिरत्र परत्र च ॥ १२० ॥ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चापि चिन्तयेत् ॥ समुत्थाय

१ परमप्रीत्यै—द० पा० ।

तथाचम्य दंतधावनपूर्वकम् ॥ १२१ ॥ सन्ध्यामुपासीत बुधः संशांतः प्रयतः शुचिः ॥ पूर्वां सन्ध्यां सनक्षत्रां पश्चिमां सदिवाकराम् ॥ १२२ ॥ उपासीत यथान्यायं नैनां जह्यादनापदि ॥ वर्जयेदनृतं चासत्प्रलापं परुषं तथा ॥ १२३ ॥ असत्सेवां ह्यसद्वादं ह्यसच्छास्त्रं च पार्थिव ॥ आदर्शदर्शनं दंतधावनं केशसाधनम् ॥ १२४ ॥ देवार्चनं च पूर्वाह्णे कार्याण्याहुर्महर्षयः ॥ पालाशमासनं चैव पादुके दंतधावनम् ॥ वर्जयेदासनं चैव पदा नाकर्षयेद्बुधः ॥ १२५ ॥ जलमग्निं च निनयेद्युगपन्न विचक्षणः ॥ १२६ ॥ पादौ प्रसारयेन्नैव गुरुदेवाग्निसंमुखौ ॥ चतुष्पथं चैत्यतरुं देवागारं तथा यतिम् ॥ १२७ ॥ विद्याधिकं गुरुं वृद्धं कुर्यादेतान्प्रदक्षिणान् ॥ १२८ ॥ आहारनीहारविहारयोगाः सुसंवृता धर्मविदा तु कार्याः ॥ वाग्बुद्धिवीर्याणि तपस्तथैव वार्तायुषी गुप्ततमे च कार्ये ॥१२९॥ उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः ॥ दक्षिणाभिमुखो रात्रौ ह्येवमायुर्न रिष्यते ॥ १३० ॥ प्रत्यग्निं प्रति सूर्यं च प्रति गां व्रतिनं प्रति[1] ॥ प्रति सोमोदकं सन्ध्यां प्रज्ञा नश्यति मेहतः ॥ ॥ १३१ ॥ भोजने शयने स्थाने उत्सर्गे मलमूत्रयोः ॥ रथ्याचंक्रमणे चार्द्रपञ्चकश्चाचमेत्सदा ॥ १३२ ॥ न नद्यां मेहनं कुर्यान्न श्मशाने न भस्मनि ॥ न गोमये न कृष्टे च नैवालूने न शाड्वले ॥ १३३ ॥ उद्धृताभिस्तथाद्भिस्तु शौचं कुर्याद्विचक्षणः ॥ अंतर्जलाद्देवकुलाद्वल्मीकान्मूषकस्थलात् ॥ १३४ ॥ अपविद्धापशौचाश्च वर्जयेत्पंच मृत्तिकाः ॥ गन्धलेपापहरणं शौचं कुर्यात्तथा बुधः ॥ १३५ ॥ नात्मानं ताडयेन्नैव दद्याद्दुःखेभ्य एव च ॥ उभाभ्यामपि पाणिभ्यां कण्डूयेन्नात्मनः शिरः ॥ १३६ ॥ रक्षेद्दारांस्त्यजेदीर्ष्यां तासु निष्कारणं बुधः ॥ सूर्यास्तं न विना काश्चित्क्रिया नैवाचरेत्तथा ॥ १३७ ॥ अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ॥ शिवचित्तोर्जयेद्वित्तं न चातिकृपणो भवेत् ॥ १३८ ॥ नेर्ष्युः स्यान्न कृतघ्नः स्यान्न परद्रोहकर्मधीः ॥ न पाणिपादचपलो न नेत्रचपलोऽनृजुः ॥ १३९ ॥ न च वागङ्गचपलो न चाशिष्टस्य गोचरः ॥ न शुष्कवादं कुर्वीत शुष्कवैरं तथैव च ॥ १४० ॥ उपायैः साधयेदर्थान्दण्डस्त्वगतिका गतिः ॥ भिन्नाशनं भिन्नशय्यां वर्जयेद्भिन्नभाजनम् ॥ १४१ ॥ अंतरेण न गच्छेत द्वयोर्ज्वलनलिंगयोः॥नाग्न्योर्न विप्रयोश्चैव न दंपत्योर्नृपोत्तम ॥ १४२ ॥ न सूर्यव्योमयोर्नैव हरस्य वृषभस्य च ॥ एतेषामंतरं कुर्वन्यतः पापमवाप्नुयात् ॥ १४३ ॥ नैकवस्त्रश्च भुंजीत नाग्नौ होममथाचरेत् ॥ न चार्चयेद्द्विजान्नैव कुर्याद्देवार्चनं बुधः ॥ १४४ ॥ खंडनं पेपणं मार्ष्टिं जलसंशोधनं तथा ॥ रंधनं भोजनं स्वाप उत्थानं गमनं क्षुतम् ॥ १४५ ॥ कार्यारंभं समाप्तिं च वचः प्रोच्य तथा प्रियम् ॥ पिब

[1] पतिम्–इ०पा०।

जिघ्रन्स्पृशञ्छृण्वन्विवक्षुर्मैथुनं तथा ॥ १४६ ॥ शुचित्वं च जपं स्थाणुं यः कुर्याद्विंशतिं तथा ॥ माहेश्वरः स विज्ञेयः शेषोन्यो नामधारकः ॥ ॥ १४७ ॥ स वै रुद्रमयो भूत्वा ततश्चांते शिवं व्रजेत् ॥ परस्त्रियं नाभिभाषेत्तथा संभाषयेद्यदि ॥ १४८ ॥ मातःस्वसरथो पुत्रि आर्येति च वदे द्बुधः ॥ उच्छिष्टो नालभेत्किंचिन्न च सूर्यं विलोकयेत् ॥ १४९ ॥ नेन्दुं न तारकाश्चैव नादयेन्नात्मनः शिरः ॥ स्वस्रा दुहित्रा मात्रा वा नैकांतासन माचरेत् ॥ १५० ॥ दुर्जयो हींद्रियग्रामो मुह्यते पंडितोऽपि सन् ॥ गुरुमभ्यागतं गेहे स्वयमुत्थाय यत्नतः ॥ १५१ ॥ आसनं कल्पयेत्तस्य कुर्या त्पादाभिवंदनम् ॥ नोदक्छिराः स्वपेज्जातु न च प्रत्यक्छिरा बुधः ॥ १५२ ॥ शिरस्यगस्त्यमाधाय तथैव च पुरंदरम् ॥ उदक्यादर्शनं स्पर्शं वर्ज्यं संभाषणं तथा॥१५३॥नाप्सु मूत्रं पुरीषं वा मैथुनं वा समाचरेत्॥कृत्वा विभवतो देवमनुष्यर्षिसमर्चनाम्॥१५४॥पितॄणां च ततः शेषं भोक्तुं माहेश्व रोऽर्हति॥वाग्यतः शुचिराचांतः प्राङ्मुखोदङ्मुखोऽपि वा॥१५५॥अन्तर्जानुश्च तच्चित्तो भुञ्जीतान्नमकुत्सयन् ॥ नोपघातं विना दोषान्न तस्योदाहरेद्बुधः ॥१५६॥ नग्नस्नानं न कुर्वीत न शयीत व्रजेत वा॥दुष्कृतं न गुरोर्ब्रूयात्क्रुद्धं चैनं प्रसादयेत् ॥१५७॥परिवादं न शृणुयादन्येषामपि जल्पताम् ॥ सदा चा कर्णयेद्धर्मांस्त्यक्त्वा कृत्यशतान्यपि ॥ १५८ ॥ नित्यं नित्यं हि संमार्ष्टि गेहदर्पणयोरिव ॥ शुक्लायां च चतुर्दश्यां नक्तभोजी सदा भवेत् ॥ ॥ १५९ ॥ तिस्रो रात्रीर्न शक्तश्चेदेवं माहेश्वरो भवेत् ॥ संयावकृशरामांसं नात्मानमुपसाधयेत् ॥ १६० ॥ सायंप्रातश्च भोक्तव्यं कृत्वा ह्यतिथि भोजनम् ॥ स्वप्नाध्ययनभोज्यानि संध्ययोश्च विवर्जयेत् ॥ १६१ ॥ भुंजानः संध्ययोर्मोहादसुरावसथो भवेत् ॥ स्नातो न धूनयेत्केशान्क्षुते निष्ठी विते ऽध्वनि ॥ १६२ ॥ आलभेद्दक्षिणं कर्णं सर्वभूतानि क्षामयेत् ॥ न चापि नीलीवासाः स्यान्न विपर्यस्तवस्त्रधृक् ॥ १६३ ॥ वर्ज्यं च मलिनं वस्त्रं दशाभिश्च विवर्जितम् ॥ प्रक्षाल्य मुखहस्तौ च पादौ चाप्युपविश्य च ॥ १६४ ॥ अंतर्जानुस्त्रिराचामेद्द्विर्मुखं परिमार्जयेत् ॥ तोयेन स्पर्श येत्खानि स्वमूर्धानं तथैव च ॥ १६५ ॥ आचम्य पुनराचम्य क्रियाः कुर्वीत सर्वशः ॥ क्षुते निष्ठीविते चैव दंतलग्ने तथैव च॥१६६॥ पतितानां च संभाषे कुर्यादाचमनक्रियाम् ॥ अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता ॥ १६७ ॥ धर्मतो धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ हीनेभ्योपि न युंजीत त्वंकारं कर्हिचिद्बुधः ॥ त्वंकारो वा वधो वापि गुरूणामुभयं समम् ॥ १६८ ॥ सत्यं वाच्यं नित्यमैत्रेण भाव्यं कार्यं त्याज्यं

१ अगस्त्यशब्देनात्र दक्षिणदिशा ग्राह्या । एतेन—दक्षिणशिरा वा प्राचीशिरा वा शयीतेति तात्पर्यम् । २ शयीत—इ० पा० । ३ वार्ताम—इ० पा० । ४ विपर्यस्तवस्त्रधृक् न स्यात् । एतेन पूर्वमधोधृतं वस्त्रं तदेव पश्चादुत्तरीयं न कुर्यात्—इत्यर्थो निष्पद्यते ।

नित्यमायासकारि ॥ लोकेऽमुष्मिन्यद्दिनं स्यात्तथास्मिन्नात्मा योगे योजनीयो गभीरैः ॥१६९॥ तीर्थस्नानैः सोपवासैर्व्रतैश्च पात्रे दानैर्होमजप्यैश्च यज्ञैः ॥ भवार्चनैर्देवपूजाविशेषैरात्मा नित्यं शोधनीयो मलाक्तः ॥ १७० ॥ यत्रापि कुर्वतो नात्मा जुगुप्सामेति पार्थिव ॥ तत्कर्तव्यमसंगेन यन्न गोप्यं महाजने ॥ १७१ ॥ इति ते वै समुद्देशः कीर्तितः किंचिदेव च ॥ शेषः स्मृतिपुराणेभ्यस्त्वया श्रोतव्य एव च ॥ १७२ ॥ एवमाचरतो धर्मं महेशस्य गृहे सतः ॥ धर्मार्थकामसंप्राप्तौ परत्रेह च शोभनम् ॥ १७३ ॥ एवं नानाविधान्धर्मान्महाकालस्य फाल्गुन ॥ वदतो ध्वनिराकाशे सुमहानभ्यजायत ॥ १७४ ॥ यावत्पश्यंति ये तत्र समाजग्मुः शृणुष्व तान् ॥ ब्रह्मा विष्णुः स्वयं रुद्रो देवी रुद्रगणास्तथा[1] ॥ १७५ ॥ इंद्रादयस्तथा देवा वसिष्ठाद्या मुनीश्वराः ॥ तुंबरुप्रवराश्चापि गंधर्वाप्सरसां गणाः ॥ १७६ ॥ तान्महेशमुखान्सर्वान्महाकालो महामतिः ॥ अर्चयामास बहुधा भक्त्युद्रेकातिपूरितः ॥ १७७ ॥ ततो ब्रह्मादिभिर्देवैर्वरे रत्नमयासने ॥ उपविष्टोऽभिषिक्तश्च महीसागरसंगमे ॥ १७८ ॥ ततो देव्या समालिंग्य नीत्वोत्संगं स्वकं मुदा ॥ पुत्रत्वे कल्पितः पार्थ महाकालो महामतिः ॥ १७९ ॥ उक्तश्च यावद्ब्रह्माण्डमिदमास्ते शिवव्रत ॥ तावत्तिष्ठ शिवस्थाने शिववच्छिवभक्तितः ॥ १८० ॥ देवेन च वरो दत्तस्त्वल्लिंगं योऽर्चयिष्यति ॥ जितेन्द्रियः शुचिर्भूत्वा ऊर्ध्वं मल्लोकमेष्यति ॥ १८१ ॥ दर्शनं स्तवनं पूजा प्रणामश्च ततो जपः ॥ दानं चात्र कृतं लिंगे ममातितृप्तिकारणम् ॥ १८२ ॥ इत्युक्ते विस्मिता देवाः साधु साध्विति ते जगुः ॥ ब्रह्मविष्णुमुखाश्चैव महाकालं प्रतुष्टुवुः ॥ १८३ ॥ ततः सुरैःस्तूयमानो वंद्यमानश्च चारणैः ॥ नृत्यद्भिरप्सरोभिश्च गीतैर्गंधर्वजैः शुभैः ॥ १८४ ॥ कोटिकोटिगणैश्चैव स्तुवद्भिः सर्वतो वृतः ॥ १८५ ॥ महाकालो रुद्रभवनं गतो भवपुरस्सरः ॥ एवमेतन्महालिंगमुत्पन्नं कुरुनंदन ॥ १८६ ॥ कूपश्चापि सरः पुण्यं महाकालस्य सिद्धिदम् ॥ अत्र ये मनुजाः पार्थ लिंगस्याराधने रताः ॥ १८७ ॥ महाकालः समालिंग्य ताञ्छिवाय निवेदयेत् ॥ एतदत्यद्भुतं लिंगं त्रिषु लोकेषु विश्रुतम् ॥ १८८ ॥ दृष्टं स्पृष्टं पूजितं च गतास्ते भवसद्म तत् ॥ एवमेतानि लिंगानि सप्त जातानि फाल्गुन ॥ १८९ ॥ ये शृण्वंति गृणंत्येतत्तेपि धन्या नरोत्तमाः ॥ १९० ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे श्रीमहाकालमाहात्म्ये महाकालकरंधमसंवादे शिवपूजनविधिनित्यकर्तव्यधर्मनिरूपणपूर्वकमहाकालशिवलोकप्राप्तिवर्णनंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततो मया स्थापिते च

१ वीररुद्रगणास्तथा—इ० पा० ।

स्थाने कालांतरेण ह ॥ चिंतितं हृदये भूयो द्विजानुग्रहकाम्यया ॥ १ ॥ वासुदेवविहीनं हि तीर्थमेतन्न रोचते ॥ असूर्यं हि जगद्यद्वत्स हि भूषण भूषणम् ॥२॥ यत्र नैव हरिः स्वामी तीर्थे गेहेऽथ मानसे ॥ शास्त्रे वा तदसत्सर्वं हांसं तीर्थं न वायसम् ॥ ३॥ तस्मात्प्रसाद्य वरदं तीर्थेऽस्मिन्पुरुषो त्तमम् ॥ आनेष्ये कलया साक्षाद्विश्वानुग्रहकाम्यया ॥ ४ ॥ इति संचिंत्य कौरव्य ततोऽहं चात्र संस्थितः ॥ ज्ञानयोगेन योगींद्रं शतं वर्षाण्यतोपयम् ॥ ५ ॥ अष्टाक्षरं जपन्मंत्रं संनिगृह्येंद्रियाणि च ॥ वासुदेवमयो भूत्वा सर्वभूतकृपापरः ॥ ६॥ एवं मयाराध्यमानो गरुडं हरिरास्थितः ॥ गणकोटिपरिवृतः प्रत्यक्षः समजायत ॥ ७ ॥ तमहं प्रांजलिर्भूत्वा दत्त्वार्घ्यं विधिवद्धरेः ॥ प्रत्यवोचं प्रणम्याथ प्रबद्धकरसं पुटः ॥ ८ ॥ श्वेतद्वीपे पुरा दृष्टं मया रूपं तव प्रभो ॥ अजं सनातनं विष्णो नरनारायणात्मकम् ॥ ९ ॥ तद्रूपस्य कलामेकां स्थापयात्र जनार्दन॥ यदि तुष्टोऽसि मे विष्णो तदिदं क्रियतां त्वया ॥ १० ॥ एवं मया प्रार्थितोऽथ प्रोवाच गरुडध्वजः ॥ एवमस्तु ब्रह्मपुत्र यत्त्वयाभीप्सितं हृदि ॥ ११ ॥ तत्तथा भविता सर्वमप्यत्रस्थं सदैव हि ॥ एवमुक्त्वा गते विष्णौ निवेश्य स्वकलां प्रभो ॥ १२ ॥ मया संस्थापितो विष्णुर्लोकानुग्रहका म्यया ॥ यस्मात्स्वयं श्वेतद्वीपनिवास्यत्र हरिः स्थितः ॥ १३ ॥ वृद्धो विश्वस्य विश्वाख्यो वासुदेवस्ततः स्मृतः ॥ कार्तिके शुक्लपक्षे या भवत्ये कादशी शुभा ॥ १४ ॥ स्नानं कृत्वा विधानेन तोयप्रस्रवणादिषु ॥ योर्चयेदच्युतं भक्त्या पंचोपचारपूजया ॥ १५ ॥ उपोष्य जागरं कुर्याद्गीतवाद्यं हरेः पुरः ॥ कथां वा वैष्णवीं कुर्याद्दंभक्रोधविवर्जितः ॥ १६ ॥ दानं दद्याद्यथाशक्त्या नियतो हृष्टमानसः ॥ अनेकभवसंभूतात्कल्मषादखिलादपि ॥ १७ ॥ मुच्यतेऽसौ न संदेहो यद्यपि ब्रह्मघातकः ॥ गारुडेन विमानेन वैकुंठं पदमाप्नुयात् ॥ १८ ॥ कुलानां तारयेत्पार्थ शतमेकोत्तरं नरः ॥ श्रद्धायुक्तं मुदा युक्तं सोत्साहं सस्पृहं तथा ॥ १९ ॥ अहंकारविहीनं च स्नानं धूपानुलेपनम् ॥ पुष्पनैवेद्यसंयुक्तमर्घदानसमन्वितम् ॥ २० ॥ यामेयामे महाभक्त्या कृतारार्तिकसंयुतम् ॥ चामराह्लादसंयुक्तं भेरीनादपुरस्कृतम् ॥ २१ ॥ पुराणश्रुतिसंपन्नं भक्तिनृत्यसमन्वितम् ॥ विनिद्रं क्षुत्तृपास्वादस्पृहाहीनं च भारत ॥ २२ ॥ तत्पादसौरभघ्राणसंयुतं विष्णुवल्लभम् ॥ सगीतं सार्चनकरं तत्क्षेत्रगमनान्वितम् ॥ २३ ॥ पायुरोधेन संयुक्तं ब्रह्मचर्यसमन्वितम् ॥ स्तुतिपाठेन संयुक्तं पादोदकविभूषितम् ॥ २४ ॥ सत्यान्वितं सत्ययोगसंयुतं पुण्यवार्तया ॥ पंचविंशतिभिर्युक्तं गुणैर्यो जागरं नरः ॥ एकादश्यां प्रकुर्वीत पुनर्न जायते भुवि ॥ २५ ॥ अत्र तीर्थवरे पूर्वमैतरेय इति द्विजः ॥ सिद्धिं प्राप्तो महाभागो वासुदेवप्रसा

२ सत्यं भवति केवलम्-इ० पा० ।

दतः ॥ २६ ॥ ॥ अर्जुन उवाच ॥ ॥ ऐतरेयः कस्य पुत्रो निवासः क्वास्य वा मुने ॥ कथं सिद्धिमगाद्धीमान्वासुदेवप्रसादतः ॥ २७ ॥
॥ ॥ नारद उवाच ॥ ॥ अस्मिन्नेव मम स्थाने हारीतस्यान्वयेऽभवत् ॥ २८ ॥ मांडूकिरिति विप्राग्र्यो वेदवेदांगपारगः ॥ २९ ॥ तस्यासी
दितरा नाम भार्या सांध्वीगुणैर्युता ॥ तस्यामुत्पद्यत सुतस्त्वैतरेय इति स्मृतः ॥ ३० ॥ स च बाल्यात्प्रभृत्येव प्राग्जन्मन्यनुशिक्षितम् ॥ जजाप
मंत्रं त्वनिशं द्वादशाक्षरसंज्ञितम् ॥ ३१ ॥ न शृणोति न वक्त्येव मनसापि च किंचन ॥ एवंप्रभावः सोऽभूच्च बाल्ये विप्रसुतस्तदा ॥ ३२ ॥
ततो मूकोऽयमित्येव नानोपायैः प्रबोधितः ॥ पित्रा यदा न कुरुते व्यवहाराय मानसम् ॥ ३३ ॥ ततो निश्चित्य मनसा जडोयमिति भारत ॥
अन्यां विवाहयामास दारान्पुत्रांस्तथादधे ॥ ३४ ॥ पिंगानाम च सा भार्या तस्याः पुत्राश्च जज्ञिरे ॥ चत्वारः कर्मकुशला वेदवेदांगवादिनः
॥ ३५ ॥ यज्ञेषु शांतिहोमेषु द्विजैः सर्वत्र पूजिताः ॥ ऐतरेयोपि नित्यं च त्रिकालं हरिमंदिरे ॥ ३६ ॥ जजाप परमं जाप्यं नान्यत्र कुरुते
श्रमम् ॥ ततो माता निरीक्ष्यैव सपत्नीतनयांस्तथा ॥ ३७ ॥ दार्यमाणेन मनसा तनयं वाक्यमब्रवीत् ॥ क्लेशायैव च जातोऽसि धिग्मे जन्म च
जीवितम् ॥३८॥ नार्यास्तस्या नृलोकेऽत्र वरैवाजननिः स्फुटम् ॥ विमानिता या भर्त्रा स्यान्न पुत्रः स्याद्गुणैर्युतः ॥ ३९ ॥ पिंगेयं कृतपुण्या वै यस्याः
पुत्रा महागुणाः ॥ वेदवेदांगतत्त्वज्ञाः सर्वत्राभ्यर्चिता गुणैः ॥ ४० ॥ तदहं पुत्र दुर्भाग्या महीसागरसंगमे ॥ निमज्जिष्ये वरं मृत्युर्जीविते किं फलं
मम ॥ त्वमप्येवं महामौनी नन्द भक्तो हरेश्चिरम् ॥ ४१ ॥ ॥ नारद उवाच ॥ ॥ इति मातुर्वचः श्रुत्वा प्रहसन्नैतरेयकः ॥ ४२ ॥ ध्यात्वा
मुहूर्तं धर्मज्ञो मातरं प्रणतोऽब्रवीत् ॥ मातर्मिथ्याभिभूतासि अज्ञाने ज्ञानवत्यसि ॥ ४३ ॥ अशोच्ये शोचसि शुभे शोच्ये नैवाऽपि शोचसि ॥
देहस्यास्य कृते मिथ्यासंसारे किं विमुह्यसि ॥ ४४ ॥ मूर्खाचरितमेतद्धि मन्मातुरुचितं न हि ॥ अन्यत्संसारसारं च सारमन्यच्च मोहि
ताः ॥ ४५ ॥ प्रपश्यंति यथा रात्रौ खद्योतं दीपवत्स्थितम् ॥ यदिदं मन्यसे सारं शृणु तस्याप्यसारताम् ॥ ४६ ॥ एवंविधं हि मानुष्यमा
गर्भादिति कष्टदम् ॥ अस्थिपट्टतुलास्तम्भे स्नायुबन्धेन यंत्रिते ॥ ४७ ॥ रक्तमांसमदालिप्ते विण्मूत्रद्रव्यभाजने ॥ केशरोमतृणच्छन्ने सुवर्ण
त्वक्सुधूतके ॥ ४८ ॥ वदनैकमहाद्वारे षड्गवाक्षविभूषिते ॥ ओष्ठद्वयकपाटे च तथा दंतार्गलान्विते ॥ ४९ ॥ नाडीस्वेदप्रवाहे च कालवक्रानल
स्थिते ॥ एवंविधे गृहे गेही जीवो नामास्ति शोभने ॥ ५० ॥ गुणत्रयमयी भार्या प्रकृतिस्तस्य तत्र च ॥ बोधाहंकारकामाश्च क्रोधलोभादयोऽपि

१ नारी—इ० पा० । २ अडभाव आर्षः । उदपद्यत—इति पठनीयम् । ३ विवाहिता च सा भार्या—इ० पा० । ४ अजननिः—अजननमेव वरम्—इत्यर्थः । ५ मिथ्या विमूढासि—इ०पा० ।

च ॥ ५१ ॥ अपत्यान्यस्य हा कष्टमेवं मूढः प्रवर्तते ॥ तस्य योयो यथा मोहस्तथा तं शृणु तत्त्वतः ॥ ५२ ॥ स्रोतांसि यस्य सततं प्रस्रवंति गिरेरिव ॥ कफमूत्रादिकान्यस्य कृते देहस्य मुह्यति ॥ ५३ ॥ सर्वाशुचिनिधानस्य शरीरस्य न विद्यते ॥ शुचिरेकप्रदेशोऽपि विण्मूत्रस्य दृतेरिव ॥ ॥ ५४ ॥ स्पृष्ट्वा स्वदेहस्रोतांसि मृत्तोयैः शोध्यते करः ॥ तथाप्यशुचिभांडस्य न विरज्यति किं नरः ॥ ५५ ॥ कायः सुगन्धतोयाद्यैर्यत्नेनापि सुसंस्कृतः ॥ न जहाति स्वकं भावं श्वपुच्छमिव नामितम् ॥ ५६ ॥ स्वदेहाशुचिगंधेन न विरज्यति यो नरः ॥ विरागे कारणं तस्य किमन्यदुपदिश्यते ॥ ५७ ॥ गन्धलेपापनोदार्थं शौचं देहस्य कीर्तितम् ॥ द्वयस्यापगमात्पश्चाद्भावशुद्ध्या विशुध्यति ॥ ५८ ॥ गंगातोयेन सर्वेण मृद्भारैः पर्वतोपमैः ॥ आ मृत्योराचरञ्छौचं भावदुष्टो न शुध्यति ॥ ५९ ॥ तीर्थस्नानैस्तपोभिर्वा दुष्टात्मा नैव शुध्यति ॥ श्वोदितः क्षालितस्तीर्थे किं शुद्धिमधिगच्छति ॥ ६० ॥ अंतर्भावप्रदुष्टस्य विशतोऽपि हुताशनम् ॥ न स्वर्गो नापवर्गश्च देहनिर्दहनं परम् ॥ ६१ ॥ भावशुद्धिः परं शौचं प्रमाणं सर्वकर्मसु ॥ अन्यथालिंग्यते कांता भावेन दुहिताऽन्यथा ॥ ६२ ॥ अन्यथैव स्तनं पुत्रश्चिंतयत्यन्यथा पतिः ॥ चित्तं विशोधयेत्तस्मात्किमन्यैर्बाह्यशोधनैः ॥ ६३ ॥ भावतः संविशुद्धात्मा स्वर्गं मोक्षं च विंदति ॥ ज्ञानामलांभसा पुंसः सद्वैराग्यमृदा पुनः ॥ ६४ ॥ अविद्यारागविण्मूत्रलेपगंधविशोधनम् ॥ एवमेतच्छरीरं हि निसर्गादशुचि विदुः ॥ ६५ ॥ त्वङ्मात्रसारनिःसारं कदलीसारसंनिभम् ॥ ज्ञात्वैवं दोषवद्देहं यः प्राज्ञः शिथिलीभवेत् ॥ ६६ ॥ स निष्क्रामति संसारे दृढग्राही स तिष्ठति ॥ एवमेतन्महाकष्टं जन्म दुःखं प्रकीर्तितम् ॥ ॥ ६७ ॥ पुंसामज्ञातदोषेण नानाकर्मवशेन च ॥ यथा गिरिवराक्रांतः कश्चिद्दुःखेन तिष्ठति ॥ ६८ ॥ यथा जरायुणा देही दुःखं तिष्ठति वेष्टितः ॥ पतितः सागरे यद्वद्दुःखमास्ते समाकुलः ॥ ६९ ॥ गर्भोदकेन सिक्तांगस्तथाऽऽस्ते व्याकुलः पुमान् ॥ लोहकुम्भे यथा न्यस्तः पच्यते कश्चिदग्निना ॥ ७० ॥ गर्भकुम्भे तथा क्षिप्तः पच्यते जठराग्निना ॥ सूचीभिरग्निवर्णाभिर्विभिन्नस्य निरन्तरम् ॥ ७१ ॥ यद्दुःखं जायते तस्य तद्गर्भेऽष्टगुणं भवेत् ॥ इत्येतद्गर्भदुःखं हि प्राणिनां परिकीर्तितम् ॥ ७२ ॥ चरस्थिराणां सर्वेषामात्मगर्भानुरूपतः ॥ तत्रस्थस्य च सर्वेषां जन्मनां स्मरणं भवेत् ॥ ७३ ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ॥ नानायोनिसहस्राणि मया दृष्टान्यनेकधा[1] ॥ ७४ ॥ अधुना जातमात्रोऽहं प्राप्तसंस्कार एव च ॥ ततः श्रेयः करिष्यामि येन गर्भो न संभवेत् ॥ ७५ ॥ अध्येष्यामि हरेर्ज्ञानं संसारविनिवर्तनम् ॥ एवं संचिं

१ मया दृष्टानि जायता—इ० पा० ।

तयन्नास्ते मोक्षोपायं विचिन्तयन् ॥ ७६ ॥ गर्भात्कोटिगुणं दुःखं जायमानस्य जायते ॥ गर्भवासे स्मृतिर्यासीत्सा जातस्य प्रणश्यति ॥ ७७ ॥ स्पृष्टमात्रस्य बाह्येन वायुना मूढता भवेत् ॥ संमूढस्य स्मृतिभ्रंशः शीघ्रं संजायते पुनः ॥ ७८ ॥ स्मृतिभ्रंशात्ततस्तस्य पूर्वकर्मवशेन च ॥ रतिः संजायते तूर्णं जंतोस्तत्रैव जन्मनि ॥ ७९ ॥ रक्तो मूढश्च लोकोयमकार्ये संप्रवर्तते ॥ तत्रात्मानं न जानाति न परं न च दैवतम् ॥ ८० ॥ न शृणोति परं श्रेयः सति चक्षुषि नेक्षते ॥ समे पथि समैर्गच्छन्स्खलतीव पदेपदे ॥ ८१ ॥ सत्यां बुद्धौ न जानाति बोध्यमानो बुधैरपि ॥ संसारे क्लिश्यते तेन रागमोहवशानुगः ॥ ८२ ॥ गर्भस्मृतेरभावेन शास्त्रमुक्तं महर्षिभिः ॥ तद्दुःखकथनार्थाय स्वर्गमोक्षप्रसाधकम् ॥ ८३ ॥ ये शास्त्र ज्ञाने सत्यस्मिन्सर्वकर्मार्थसाधके ॥ न कुर्वंत्यात्मनः श्रेयस्तदत्र परमद्भुतम् ॥ ८४ ॥ अव्यक्तेन्द्रियवृत्तित्वाद्बाल्ये दुःखं महत्पुनः ॥ इच्छन्नपि न शक्नोति वक्तुं कर्तुं च किञ्चन ॥ ८५ ॥ दंतोत्थाने महद्दुःखं मौलेन[1] व्याधिना तथा ॥ बालरोगैश्च विविधैः पीडा बालग्रहैरपि ॥ ८६ ॥ तृड्बुभुक्षापरीतांगः क्वचित्तिष्ठति रारटन् ॥ विण्मूत्रभक्षणाद्यं च मोहाद्बालः समाचरेत् ॥ ८७ ॥ कौमारे कर्णवेधेन मातापित्रोर्विताडनैः ॥ अक्षराध्ययनाद्यैश्च दुःखं स्याद्गुरुशासनात् ॥ ८८ ॥ प्रमत्तेंद्रियवृत्तेश्च कामरागप्रपीडनात् ॥ रागोद्धतस्य सततं कुतः सौख्यं हि यौवने ॥ ८९ ॥ ईर्ष्यया सुमहद्दुःखं मोहाद्रक्तस्य[2] जायते ॥ मत्तस्य कुपितस्यैव रागो दोषाय केवलम् ॥ ९० ॥ न रात्रौ विंदते निद्रा कामाग्निपरिखेदितः ॥ दिवापि हि कुतः सौख्यमर्थोपार्जनचिंतया ॥ ९१ ॥ नारीषु त्वनुभूतासु सर्वदोषाश्रयासु च ॥ विण्मूत्रोत्सर्गसदृशं सौख्यं मैथुनजं[3] स्मृतम् ॥ ९२ ॥ सन्मानमपमानेन वियोगेनेष्टसंगमः ॥ यौवनं जरया ग्रस्तं क्व सौख्यमनुपद्रवम् ॥ ९३ ॥ वलीपलितकायेन शिथिलीकृतविग्रहः ॥ सर्वक्रियास्वशक्तश्च जरया जर्ज्जरीकृतः ॥ ९४ ॥ स्त्रीपुंसोर्यौवनं रूपं यदन्योन्याश्रयं पुरा ॥ तदेव जरया ग्रस्तमुभयोरपि न प्रियम् ॥ ९५ ॥ जराभिभूतःपुरुषः पत्नीपुत्रादिबांधवैः ॥ अशक्तत्वाद्दुराचारैर्भृत्यैश्च परिभूयते ॥ ९६ ॥ धर्ममर्थं च कामं च मोक्षं च नातुरो[4] यतः ॥ शक्तः साधयितुं तस्माद्युवा धर्मं समाचरेत् ॥ ॥ ९७ ॥ वातपित्तकफादीनां वैषम्यं व्याधिरुच्यते ॥ वातादीनां समूहश्च देहोऽयं परिकीर्तितः ॥ ९८ ॥ तस्माद्व्याधिमयं ज्ञेयं शरीरमिदमात्मनः ॥ रोगैर्नानाविधैर्याति देहे दुःखान्यनेकशः ॥ ९९ ॥ तानि न स्वात्मवेद्यानि किमन्यत्कथयाम्यहम् ॥ एकोत्तरं मृत्युशतमस्मिन्देहे प्रतिष्ठितम् ॥ १०० ॥ तत्रैकः कालसंयुक्तः शेषास्त्वागंतवः स्मृताः ॥ ये त्विहागंतवः प्रोक्तास्ते प्रशाम्यन्ति भेषजैः ॥ १०१ ॥ जपहोमप्रदानैश्च

१ मौलव्याधिर्हि वैद्यकशास्त्रे प्रसिद्धः । २ रक्तस्य संतापाद्दुःखम् । अथवा—रक्तस्य विषयासक्तस्य—इत्यर्थः । ३ मैथुनजं मतं ततः—इ० पा० । ४ आतुरः—वृद्धः—इत्यर्थः ।

कालमृत्युर्न शाम्यति ॥ विविधा व्याधयः शस्ताः सर्पाद्याः प्राणिनस्तथा ॥ १०२ ॥ विषाणि चाभिचाराश्च मृत्योर्द्वाराणि देहिनाम् ॥ पीडितं सर्परोगाद्यैरपि धन्वंतरिः स्वयम् ॥ १०३ ॥ स्वस्थीकर्तुं न शक्नोति कालप्राप्तं हि देहिनम् ॥ नौषधं न तपो मंत्रा न मित्राणि न बांधवाः ॥ ॥ १०४ ॥ शक्नुवंति परित्रातुं नरं कालेन पीडितम् ॥ रसायनतपोजप्यैर्योगसिद्धैर्महात्मभिः ॥ १०५ ॥ कालमृत्युरपि प्राज्ञैर्नीयते नापि संयुतैः ॥ नास्ति मृत्युसमं दुःखं नास्ति मृत्युसमं भयम् ॥ १०६ ॥ नास्ति मृत्युसमस्त्रासः सर्वेषामपि देहिनाम् ॥ सद्भार्यापुत्रमित्राणि राज्यैश्वर्यसुखानि च ॥ १०७ ॥ आबद्धानि स्नेहपाशैर्मृत्युः सर्वाणि कृंतति ॥ किं न पश्यसि मातस्त्वं सहस्रस्यापि मध्यतः ॥ १०८ ॥ जनाः शतायुषः पंच भवंति न भवन्ति वा ॥ अशीतिका विपद्यन्ते केचित्सप्ततिका नराः ॥ १०९ ॥ परमायुः स्थिता षष्टिस्तदप्यस्ति न निश्चितम् ॥ तस्य यावद्भवे दायुर्देहिनः पूर्वकर्मभिः ॥ ११० ॥ तस्यार्धमायुषो रात्रिर्हरते मृत्युरूपिणी ॥ बालभावेन मोहेन वार्धके जरया तथा ॥ १११ ॥ वर्षाणां विंशति यांति धर्मकामार्थवर्जितः ॥ आगन्तुकैर्भयैः पुंसां व्याधिशोकैरनेकधा ॥ ११२ ॥ ह्रियतेऽर्द्धं हि तत्रापि यच्छेषं तद्धि जीवितम् ॥ जीवितांते च मरणं महाघोरमवाप्नुयात् ॥ ११३ ॥ जायते योनिकोटीषु मृतः कर्मवशात्पुनः ॥ देहभेदेन यः पुंसां वियोगः कर्मसंख्यया ॥ ११४ ॥ मरणं तद्विनिर्दिष्टं न नाशः परमार्थतः ॥ महातमःप्रविष्टस्य च्छिद्यमानेषु मर्मसु ॥ ११५ ॥ यद्दुःखं मरणं जंतोर्न तस्येहोपमा क्वचित् ॥ हा तात मातर्हा कांते क्रंदत्येवं सुदुःखितः ॥ ११६ ॥ मण्डूक इव सर्पेण गीर्यते मृत्युना जनः ॥ बांधवैः संपरित्यक्तः प्रियैश्च परिवारितः ॥ ११७ ॥ निःश्वसन्दीर्घमुष्णं च मुखेन परिशुष्यता ॥ चतुरंतेषु खट्वायाः परिवर्तन्मुहुर्मुहुः ॥ ११८ ॥ संमूढः क्षिपतेत्यर्थं हस्तपादावितस्ततः ॥ खट्वातो वांछते भूमिं भूमेः खट्वां पुनर्महीम् ॥ ११९ ॥ विवस्त्रो मुक्तलज्जश्च विष्ठानुलेपितः ॥ याचमानश्च सलिलं शुष्ककण्ठोष्ठतालुकः ॥ १२० ॥ चिंतयानः स्ववित्तानि कस्यैतानि मृते मयि ॥ पंचावटान्खनमानः कालपाशेन कर्षितः ॥ १२१ ॥ म्रियते पश्यतामेव गले घुर्घुरावकृत् ॥ जीवस्तृणजलूकेव देहाद्देहं विशेत्क्रमात् ॥ १२२ ॥ संप्राप्योत्तरमंशेन देहं त्यजति पूर्वकम् ॥ मरणात्प्रार्थना दुःखमधिकं हि विवेकिनः ॥ १२३ ॥ क्षणिकं मरणे दुःखमनंतं प्रार्थनाकृतम् ॥ ज्ञातं मयैतदधुना मृतो भवति यद्गुरुः ॥ १२४ ॥ न परः प्रार्थयेद्भूयस्तृष्णा लाघवकारणम् ॥ आदौ दुःखं तथा मध्ये ह्यन्त्ये दुःखं च दारुणम् ॥ १२५ ॥ निसर्गात्सर्वभूतानामिति दुःखपरंपरा ॥ क्षुधा च सर्वरोगाणां व्याधिः श्रेष्ठतमः स्मृतः ॥ ॥ १२६ ॥ स चान्नौषधिलेपेन क्षणमात्रं प्रशाम्यति ॥ क्षुद्व्याधेर्वेदना तीव्रा निःशेषबलकृन्तनी ॥ १२७ ॥ तयाभिभूतो म्रियते यथान्यैर्व्याधि

भिन्नरः ॥ राज्ञोऽभिमानमात्रं हि ममैव विद्यते गृहे ॥ १२८ ॥ सर्वमाभरणं भारं सर्वमालेपनं मम ॥ सर्वं प्रलापितं गीतं नित्यमुन्मत्तचेष्टितम् ॥
॥ १२९ ॥ इत्येवं राज्यसंभोगैः कुतः सौख्यं विचारतः ॥ नृपाणां व्यग्रचित्तानामन्योन्यविजिगीषया ॥ १३० ॥ प्रायेण श्रीमदालेपान्नहुषाद्या
महानृपाः ॥ स्वर्गं प्राप्यापि पतिताः कः श्रियो विंदते सुखम् ॥ १३१ ॥ उपर्युपरि देवानामन्योन्यातिशये स्थितम् ॥ नरैः पुण्यफलं स्वर्गे
मूलच्छेदेन भुज्यते ॥ १३२ ॥ न चान्यत्क्रियते कर्म सोऽत्र दोषः सुदारुणः ॥ छिन्नमूलतरुर्यद्वद्वशः पतते क्षितौ ॥ १३३ ॥ पुण्यमूलक्षये
तद्वत्पातयंति दिवौकसः ॥ इति स्वर्गेपि देवानां नास्ति सौख्यं विचारतः ॥ १३४ ॥ तथा नारकिणां दुःखं प्रसिद्धं किं च वर्ण्यते ॥ स्थावरेष्वपि
दुःखानि दावाग्निहिमशोषणम् ॥ १३५ ॥ कुठारैश्छेदनं तीव्रं वल्कलानां च तक्षणम् ॥ पर्णशाखाफलानां च पातनं चंडवायुना ॥ १३६ ॥
अपमर्दश्च सततं गजैर्वन्यैश्च देहिभिः ॥ तृड्बुभुक्षा च सर्पाणां क्रोधो दुःखं च दारुणम् ॥ १३७ ॥ दुष्टानां घातनं लोके पाशेन च निबन्धनम् ॥
एवं सरीसृपाणां च दुःखं मातर्मुहुर्मुहुः ॥ १३८ ॥ अकस्माज्जन्ममरणं कीटादीनां तथाविधम् ॥ वर्षाशीतातपैर्दुःखं सुकष्टं मृगपक्षिणाम् ॥ १३९ ॥
क्षुत्तृट्क्लेशेन महता संत्रस्ताश्च सदा मृगाः ॥ पशुनागनिकायानां शृणु दुःखानि यानि च ॥ १४० ॥ क्षुत्तृट्छीतादिदमनं वधबन्धनताड
नम् ॥ नासाप्रवेधनं त्रासः प्रतोदांकुशताडनम् ॥ १४१ ॥ वेणुकुन्तादिनिगडमुद्गरांऽकुशताडनम् ॥ भारोद्वहनसंक्लेशं शिक्षायुद्धादिपीडनम् ॥
॥ १४२ ॥ आत्मयूथवियोगश्च वने च नयनादिकम् ॥ दुर्भिक्षं दुर्भगत्वं च मूर्खत्वं च दरिद्रता ॥ १४३ ॥ अधरोत्तरभावश्च मरणं राष्ट्रवि
भ्रमः ॥ अन्योन्याभिभवाद्दुःखमन्योन्यातिशयात्पुनः ॥ १४४ ॥ अनित्यता प्रभावाणामुच्छ्र्याणां च पातनम् ॥ इत्येवमादिभिर्दुःखैर्यस्मा
व्याप्तं चराचरम् ॥ १४५ ॥ निरयादिमनुष्यांतं तस्मात्सर्वं त्यजेद्बुधः ॥ स्कन्धात्स्कन्धं नयेद्भारं विश्रामं मन्यतेन्यथा ॥ १४६ ॥ तद्वत्सर्वमिदं
लोके दुःखं दुःखेन शाम्यति ॥ एवमेतज्जगत्सर्वमन्योन्यातिशयोच्छ्रितम् ॥ १४७ ॥ दुःखैराकुलितं ज्ञात्वा निर्वेदं परमाप्नुयात् ॥ निर्वेदाच्च
विरागः स्याद्विरागाज्ज्ञानसंभवः ॥ १४८ ॥ ज्ञानेन तं परं ज्ञात्वा विष्णुं मुक्तिमवाप्नुयात् ॥ नाहमेतादृशे लोके रमेयं जननि क्वचित् ॥ १४९ ॥
राजहंसो यथा शुद्धः काकामेध्यप्रदर्शकः ॥ शृणु मातर्यत्र संस्थो रमेयं निरुपद्रवः ॥ १५० ॥ अविद्यायनमत्युग्रं नानाकर्मातिशाखिनम् ॥
संकल्पदंशमकरं शोकहर्षहिमातपम् ॥ १५१ ॥ मोहांधकारतिमिरं लोभव्यालसरीसृपम् ॥ विषयानन्यथाध्वानं कामक्रोधविमोक्षकम् ॥ १५२ ॥

१ वृत्तम्--इ० पा० । २ आव्रजेत्--इ० पा० ।

तदतीत्य महादुर्गं प्रविष्टोऽस्मि महद्वनम् ॥ न तत्प्रविश्य शोचंति न प्रदुष्यंति[1] तद्विदः ॥ १५३ ॥ न च बिभ्यति केषांचिन्नास्य बिभ्यति
केचन ॥ १५४ ॥ तस्मिन्वने सप्तमहाद्रुमास्तु सप्तैव नद्यश्च फलानि सप्त ॥ सप्ताश्रमाः सप्त समाधयश्च दीक्षाश्च सप्तैतदरण्यरूपम् ॥ १५५ ॥
पंचवर्णानि दिव्यानि चतुर्वर्णानि कानिचित् ॥ त्रिद्विवर्णैकवर्णानि पुष्पाणि च फलानि च ॥ १५६ ॥ सृजंतः पादपास्तत्र व्याप्य तिष्ठन्ति तद्व
नम् ॥ १५७ ॥ सप्त स्त्रियस्तत्र वसंति सत्यस्त्ववाङ्मुख्यो भानुमतो भवंति ॥ ऊर्ध्वं रसानाददते प्रजाभ्यः सर्वांश्च तास्तत्त्वतः कोपि वेद ॥१५८॥
सप्तैव गिरयश्चात्र धृतं यैर्भुवनत्रयम् ॥ नद्यश्च सरितः सप्त ब्रह्मवारिवहाः सदा ॥ १५९ ॥ तेजश्चाभयदानत्वमद्रोहः कौशलं तथा ॥ अचापल्यम
थाक्रोधः प्रियवादश्च सप्तमः ॥ १६० ॥ इत्येते गिरयो ज्ञेयास्तस्मिन्विद्यावने स्थिताः ॥ दृढनिश्चयस्तथा भासा समता निग्रहो गुणः ॥ १६१ ॥
निर्ममत्वं तपश्चात्र सन्तोषः सप्तमो ह्रदः ॥ भगवद्गुणविज्ञानाद्भक्तिः स्यात्प्रथमा नदी ॥ १६२ ॥ पुष्पादिपूजा द्वितीया तृतीया च प्रदक्षिणा ॥
चतुर्थी स्तुतिवाग्रूपा पञ्चमी ईश्वरार्पणा ॥ १६३ ॥ षष्ठी ब्रह्मैकता प्रोक्ता सप्तमी सिद्धिरेव च ॥ सप्त नद्योऽत्र कथिता ब्रह्मणा परमेष्ठिना ॥ १६४ ॥
ब्रह्मा धर्मो यमश्चाग्निरिंद्रो वरुण एव च ॥ १६५ ॥ धनदश्च ध्रुवादीनां सप्तकानर्चयंत्यमी ॥ नदीनां संगमस्तत्र वैकुंठसमुपह्वरे[2] ॥ १६६ ॥
आत्मतृप्ता यतो यांति शांता दांताः परात्परम् ॥ केचिद्द्रुमाः स्त्रियः केचित्केचित्तत्त्वविदोऽपरे ॥ १६७ ॥ सरितः केचिदाहुः स्म सप्तैव ज्ञान
वित्तमाः ॥ अनपेतव्रतकामोऽत्र ब्रह्मचर्यं चरामि च ॥ १६८ ॥ ब्रह्मैव समिधस्तत्र ब्रह्माग्निर्ब्रह्म संस्तरः ॥ आपो ब्रह्म गुरुर्ब्रह्म ब्रह्मचर्यमिदं मम
॥ १६९ ॥ एतदेवेदृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ॥ गुरुं च शृणु मे मातर्यो मे विद्याप्रदोऽभवत् ॥ १७० ॥ एकः शास्ता न द्वितीयोऽस्ति शा
स्ता हृद्येव तिष्ठन्पुरुषं प्रशास्ति ॥ तेनाभियुक्तः प्रणवादिवोदकं यथा नियुक्तोस्मि तथाचरामि ॥ १७१ ॥ एको गुरुर्नास्ति तथा द्वितीयो
हृदि स्थितस्तमहं नु ब्रवीमि ॥ यं चावमान्यैव गुरुं मुकुन्दं पराभूता दानवाः सर्व एव ॥ १७२ ॥ एको बंधुर्नास्ति ततो द्वितीयो हृदि स्थितं त
महमनुब्रवीमि ॥ तेनानुशिष्टा बांधवा बंधुमंतः सप्तर्षयः सप्त दिवि प्रभांति ॥ १७३ ॥ ब्रह्मचर्यं च संसेव्यं गार्हस्थ्यं शृणु यादृशम् ॥ पत्नी प्रकृ
तिरूपा मे तच्चित्तो नास्मि कर्हिचित् ॥ १७४ ॥ मच्चित्ता सा सदा मातर्मम सर्वार्थसाधनी ॥ घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पंचमम्
॥ १७५ ॥ मनो बुद्धिश्च सप्तैते दीप्यंते पावका मम ॥ गंधो रसश्च रूपं च शब्दः स्पर्शश्च पंचमम् ॥ १७६ ॥ मंतव्यमथ बोद्धव्यं सप्तैताः

१ प्रदुष्यन्ति—दु०पा० । २ वैकुण्ठसमुपह्वरे—वैकुण्ठस्य गह्वरं नदीनां च तत्रैव संगमः—वैकुण्ठसंनिकटवर्तिप्रदेशे—इत्यर्थः ।

समिधो मम ॥ हुतं नारायणध्यानाद्भुंक्ते नारायणः स्वयम् ॥ १७७ ॥ एवंविधेन यज्ञेन यजाम्यस्मि तमीश्वरम् ॥ अकामयानस्य च सर्वकामो भवेद्विषाणस्य च सर्वदोषः ॥ १७८ ॥ न मे स्वभावेषु भवंति लेपास्तोयस्य बिंदोरिव पुष्करेषु ॥ नित्यस्य मे नैव भवंत्यनित्या निरीक्षमाणस्य बहुस्वभावात् ॥ १७९ ॥ न सज्जते कर्मसु भोगजालं दिवीव सूर्यस्य मयूखजालम् ॥ १८० ॥ एवंविधेन पुत्रेण मा मातर्दुःखिनी भव ॥ तत्पदं त्वां च नेष्यामि न यत्क्रतुशतैरपि ॥ १८१ ॥ इति पुत्रवचः श्रुत्वा विस्मिता इतराभवत् ॥ चिंतयामास यद्येवं विद्वान्मम सुतो दृढम् ॥ ॥ १८२ ॥ लोकेषु ख्यातिमायाति ततो मे स्याद्यशः परम् ॥ इत्यादि चिंतयंत्यां च रजन्यां भगवान्हरिः ॥ १८३ ॥ प्रहृष्टस्तस्य तैर्वाक्यैर्विस्मितः प्रादुरास च ॥ मूर्तेः स्वयं विनिष्क्रम्य शंखचक्रगदाधरः ॥ १८४ ॥ जगदुद्भासयन्भासा सूर्यकोटिसमप्रभः ॥ ततो निष्पत्य धरणीं हृष्टरोमाश्रुगद्गदः ॥ १८५ ॥ मूर्ध्नि बद्धांजलिं धीमानैतरेयोऽथ तुष्टुवे ॥ १८६ ॥ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ प्रद्युम्नायानिरुद्धाय नमः संकर्षणाय च ॥ १८७ ॥ नमो विज्ञानमात्राय परमानंदमूर्तये ॥ आत्मारामाय शांताय निवृत्तद्वैतदृष्टये ॥ १८८ ॥ आत्मानंदानुभूत्यैव सम्यत्त्यक्तोर्मये नमः ॥ हृषीकेशाय महते नमस्तेऽनंतशक्तये ॥ १८९ ॥ वचस्युपरते प्राप्यो य एको मनसा सह ॥ अनामरूपचिन्मात्रः सोऽव्यान्नः सदसत्परः ॥१९०॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यपैति जायते ॥ मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥१९१॥ यं न स्पृशंति न विदुर्मनोबुद्धींद्रियासवः॥ अंतर्बहिश्च विततं व्योमवत्प्रणतोऽस्म्यहम् ॥१९२॥ देहेंद्रियप्राणमनोधियोऽमी यदंशबद्धाः प्रचरंति कर्मसु ॥ नैवान्यदालोहमिव प्रतप्तं स्थानेषु तद्दृष्टपदेन एते ॥ १९३ ॥ चतुर्भिश्च त्रिभिर्द्वाभ्यामेकधा प्रणमामि तम् ॥ पूर्वापरापरयुगे शास्तारं परमीश्वरम् ॥ १९४ ॥ हित्वा गतीर्मोक्षकामा यं भजंति दशात्मकम् ॥ तं परं सत्यममलं त्वां वयं पर्युपास्महे ॥ १९५ ॥ ॐनमो भगवते महापुरुषाय महानुभावाय विभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलोत्पलकुड्मलोपलालितचरणारविंदयुगल परमपरमेष्ठिन्नमस्ते ॥ १९६ ॥ तवाग्निरास्यं वसुधांघ्रियुग्मं नभः शिरश्चंद्ररवी च नेत्रे ॥ समस्तलोका जठरं भुजाश्च दिशश्चतस्रो भगवन्नमस्ते ॥ १९७ ॥ जन्मानि तावंति न संति देव निष्पीड्य सर्वाणि च

१ अस्मि—अहम्। २ एतस्य तात्पर्यं नावगम्यते—तर्कितोऽयमर्थोऽनुमीयते—प्रतप्तं लोहं यथा वह्निरूपमेव भवति—न पृथक्तयावभासते—तथा—देहेंद्रियप्राणमनोधियः—त्वद्रूपा एव—भवन्ति। स्थानेषु तत्तद्भिन्नभिन्नाकारविशेषेषु—तद्दृष्टपदेन—'अयं देहः, इमानि इन्द्रियाणि, इमे प्राणाः, इदं मनः' इत्येवं पृथगाकाररूपेण न प्रतीयन्ते। किं तु सर्वं चैतन्यरूपमेवावभासते—इति तात्पर्यम्।

सर्वकालम् ॥ भूतानि यावंति मयात्र भीमे पीतानि संसारमहासमुद्रे ॥ १९८ ॥ संपच्छिलानां हिमवन्महेंद्रकैलासमेर्वादिषु नैव तादृक् ॥ देहाननेकाननुगृह्णतो मे ग्रामास्ति संपन्महती यथेश ॥ १९९ ॥ न संति ते देव भुवि प्रदेशा न येषु जातोऽस्मि तथा विनष्टः ॥ भूत्वा मया येषु न जंतवश्च संभक्षिता वा न च भूतसंघैः ॥ २०० ॥ शोकाभिभूतस्य ममाश्रु देव यावत्प्रमाणं पतितं भवेषु ॥ तावत्प्रमाणं न जलं पयोदा मुंचंति दिव्यैरपि वर्षलक्षैः ॥ २०१ ॥ मन्ये धरित्रीपरमाणुसंख्यामुपेति पित्रोर्गणना न मह्यम् ॥ मित्राण्यमित्राण्यनुजीव्यबंधून्संख्यातुमीशोऽस्मि न देवदेव ॥ २०२ ॥ त्वय्यर्पितं नाथ पुनः पुनर्मे मनः समाक्षिप्य सुदुर्द्धरारि ॥ कामो वशं क्रोधमुखैः सहायैः करोति किं तद्भगवन्करोमि ॥ ॥ २०३ ॥ सोऽहं भृशार्तः करुणाकरस्त्वं संसारगर्ते पतितस्य विष्णो ॥ महात्मनां संश्रयमभ्युपेतो नैवावसीदत्यपि दुर्गतोऽपि ॥ २०४ ॥ परायणं रोगवतो हि वैद्यो महाब्धिमग्नस्य च नौर्नरस्य ॥ बालस्य मातापितरौ सुघोरसंसारखिन्नस्य हरे त्वमेव ॥ २०५ ॥ प्रसीद सर्वेश्वर सर्वभूत सर्वस्य हेतो परमार्थसार ॥ मामुद्धरास्माद्गुरुदुःखसंघात्संसारगर्तात्स्वपरिग्रहेण ॥ २०६ ॥ क्षुत्तृट्त्रिधातुभिरिमं मुहुरर्द्यमानं शीतोष्ण वातसलिलैरितरेतराच्च ॥ कामाग्निनाच्युत रुपा च सुदुर्भरेण संपश्यतो मम उरुक्रम सीदतो हि ॥ २०७ ॥ भवंतु भद्राणि समस्तदोषाः प्रयांतु नाशं जगतोऽखिलस्य ॥ मयाद्य भक्त्या परमेश्वरे प्रभौ स्तुते जगद्धातरि वासुदेवे ॥ २०८ ॥ ये भूतले ये दिवि चांतरिक्षे रसातले प्राणिगणाश्च केचित् ॥ भवंतु ते सिद्धियुजो मयाद्य स्तुते जगद्धातरि वासुदेवे ॥ २०९ ॥ अज्ञानिनो ज्ञानविदो भवंतु प्रशान्तिभाजः सततोग्रचित्ताः ॥ मया च विश्वंभरणे ह्यनंते स्तुते जगद्धातरि वासुदेवे ॥ २१० ॥ शृण्वंति ये मे स्तुवतस्तथान्ये पश्यंति ये मामिदमीरयंतम् ॥ देवासुराद्या मनुजा स्तिरश्चो भवंतु तेऽप्यच्युतयोगभाजः ॥ २११ ॥ ये चापि मूका विकलेंद्रियत्वात्पठंति नो नैव विलोकयंति ॥ पश्वादयः कीटपिपीलिकाद्या भवंतु तेऽप्यच्युतयोगभाजः ॥ २१२ ॥ नश्यंतु दुःखानि जगत्यपैतु लोभादिको दोषगणः प्रजाभ्यः ॥ यथात्मनि भ्रातरि चात्मजे वा तथा नरस्यास्तु जनेपि भावः ॥ २१३ ॥ संसारवैद्येऽखिलदोषहानिविचक्षणे निर्वृतिहेतुभूते ॥ संसारबंधाः शिथिलीभवंतु हृदि स्थिते सर्वजनस्य विष्णौ ॥ ॥ २१४ ॥ पापं प्रणाशं मम च प्रयातु यन्मानसं यच्च करोमि वाचा ॥ शारीरमप्याचरितं च यन्मे स्मृते जगद्धातरि वासुदेवे ॥ २१५ ॥ यथा हि वा वासुदेवेति प्रोक्ते संकीर्त्तनै विष्णुभक्तस्य वापि ॥ स्मृते हरौ वापि प्रयाति पापं सत्येन मे नश्यतां तेन पापम् ॥ २१६ ॥

१ तावन्ति—पु० पा० । २ परागस्य—पु० पा० । ३ शृण्वन्ति—पु० पा० ।

मूढोऽयमल्पमतिरल्पविचेष्टितोऽयं क्लिष्टं मनोऽपि विषयैर्मयि न प्रसंगि ॥ इत्थं कृपां कुरु मयि प्रणतेऽखिलेश त्वां स्तोतुमंबुजभवोऽपि हि देव नेशः ॥ २१७॥ स त्वं प्रसीद भगवन्कुरु मय्यनाथे विष्णो कृपां परमकारुणिकः किल त्वम् ॥ संसारसागरनिमग्नमनंत दीनमुद्धर्तुमर्हसि हरे पुरुषोत्तमोसि[1] ॥ २१८ ॥ इत्थं स्तुतः स भगवानैतरेयेण भारत ॥ वासुदेवो विशालात्मा सानंदमिदमाह तम् ॥ २१९ ॥ वत्सै तरेय तुष्टोस्मि भक्त्यानेन स्तवेन ते ॥ वरं वृणुष्व मत्तस्त्वं दुर्लभं यदभीप्सितम् ॥ २२० ॥ ॥ ऐतरेय उवाच ॥ ॥ एष एव वरो नाथ मम नित्यमभीप्सितः ॥ मज्जतो घोरसंसारे कर्णधारो हरे भव ॥ २२१ ॥ ॥ श्रीभगवानुवाच[2] ॥ ॥ मुक्त एवासि संसाराद्यस्य ते भक्तिरीदृशी ॥ ग्रहैर्महाग्रहैर्बद्धो[3] नैव ते द्वित्रयोदशी[4] ॥ २२२ ॥ यश्च स्तोत्रेण सततं गुप्तक्षेत्रसमीहितम् ॥ स्तोष्यते वासुदेवं मां स पापक्षयमाप्स्यति ॥ २२३ ॥ यस्मादेतेन स्तोत्रेण पापं नाशमवाप्स्यति ॥ अघनाशनमित्येव तस्मात्ख्यातिमवाप्स्यति ॥ २२४ ॥ एकादश्यामुपोष्यैव ममाग्रे यः पठिष्यति ॥ स्तवमेनं स पूतात्मा मम लोकमवाप्स्यति ॥ २२५ ॥ सर्वेषामेव क्षेत्राणां गुप्तक्षेत्रं प्रियं यथा ॥ तथा सर्वस्तवानां च स्तवोयं सुप्रियो मम ॥ २२६ ॥ यानि चोद्दिश्य भूतानि जप्यतेऽसौ महात्मभिः ॥ तानि शांतिं भगं प्रज्ञां प्राप्स्यंति कृपया मम ॥ २२७ ॥ त्वं च वत्स श्रौत धर्मान्सम्यगाचर श्रद्धया ॥ न तैर्बंधं मयि न्यस्तैराप्स्यस्यनभिसंधितैः ॥ २२८ ॥ यज यज्ञैरवाप्यैव दारान्नन्दय मातरम् ॥ मयि ध्यानेन तीव्रेण मामवाप्स्यस्यसंशयम् ॥ २२९ ॥ बुद्धिर्मनोथ भूतानि बुद्धिकर्मेन्द्रियाणि च ॥ त्रयोदशग्रहैर्ये स्युस्त्रयोदश महाग्रहाः ॥ २३० ॥ बोद्धव्यमथ मंतव्यमहंता शब्द एव च ॥ स्पर्शो रसो रूपगन्धौ वचनादानमेव च ॥ २३१ ॥ विहृत्युत्सर्ग आनंदस्त्रयोदश महाग्रहाः ॥ एतान्महाग्रहान्पुत्र शुद्धान्कुर्द्धैः स्वकैर्ग्रहैः ॥ २३२ ॥ गृहाण ध्यानयोगेन ममैवं मोक्षमाप्स्यसि ॥ एवं त्वं कर्मभिर्वीर नैष्कर्म्यं समवाप्स्यसि ॥ २३३ ॥ शुल्बं रसेन संविद्धं दक्षो हेम यथाश्नुते ॥ वर्णाश्रमाचारवता मयि संन्यस्तकर्मणा ॥ २३४ ॥ मदनुध्यानयुक्तेन मोक्षो नास्तीह दुर्लभः ॥ तस्मादेवं वर्तमानो नन्द व्रतपरायणः ॥ २३५ ॥ उद्धृत्य सप्तपुरुषाल्लँयं मयि गमिष्यसि ॥ सांप्रतं प्रतिभास्यंति वेदश्चापठिता अपि ॥ २३६ ॥ ततस्त्वं

---

१ पुरुषोत्तमोऽपि--इ० पा० । २ श्रीवासुदेव उवाच--इ० पा० । ३ गृहैर्महागृहैर्बद्धः--इ० पा० । ४ अस्यार्थोऽग्रे "बुद्धिर्मनोथ भूतानि बुद्धिकर्मेंद्रियाणि च । त्रयोदश ग्रहैर्ये स्युस्त्रयोदश महाग्रहाः । बोद्धव्यमथ मंतव्यमहंता शब्द एव च । स्पर्शो रसो रूपगंधौ वचनादानमेव च । विहृत्युत्सर्ग आनंदस्त्रयोदश महाग्रहाः ॥" इत्युक्तो बोद्धव्यः । एतेन—मनोबुद्धि—भूत—ज्ञानेन्द्रियकर्मेन्द्रियाणि मिलित्वा त्रयोदश । तत्र भूतानां सामान्येनैकत्वं विवक्षितमिति बोद्धव्यम् । विषयेषु तु भूतगुणानां पार्थक्येन वर्णनं ज्ञानेंद्रियानुसारेणैवेति न विवादः ।

॥ २३७ ॥ इत्युक्त्वा भगवान्विष्णुर्मूर्तिमध्ये विवेश ह ॥ विलोक्य
कोटितीर्थं च यज्ञे वै हरिमेधसः ॥ याहि तत्र भविष्यं ते सर्वं मातुरभीप्सितम्
॥ २३८ ॥ ततो मूर्तिं नमस्कृत्य वासुदेवस्य विस्मितः ॥ ऐतरेयः स्वजननीं मुदितो वाक्यमब्रवीत् ॥ २३९ ॥
मानो निमिषं मात्रा चैव सुतेन च
॥ २४० ॥ स कृपालुर्मम प्राह मन्त्रं वै द्वादशाक्षरम् ॥ सदेमं जप
पुराहमभवं शूद्रो भीतः संसारदोषतः ॥ परिनिष्ठागतं धर्मं ब्राह्मणं शरणं गतः
॥ जातस्मृतिर्विष्णुभक्तिः स्थितिरत्र च सर्वदा ॥ २४२ ॥
चेत्युक्त्वा तमहं जप्तवान्सदा ॥ २४१ ॥ तेन जाप्यप्रभावेन ममोत्पत्तिस्तवोदरात्
॥ २४३ ॥ ततो महीनगरकाख्ये कोटितीर्थतलस्थितम् ॥
इदानीं च प्रयाम्येष यज्ञं तं हरिमेधसः ॥ त्वद्रूपं विष्णुप्रीत्यर्थं प्रणम्य त्वां प्रसादये
॥ गेहाय मातरं प्रोच्य स यज्ञे प्रोक्तवान्द्विजः ॥ नमस्तस्मै भगवते विष्णवेऽकुण्ठमेधसे ॥
यजन्तं संवृतं विप्रैः कोटिशस्तमुपागमत् ॥ २४४
॥ २४६ ॥ आकर्ण्यासनपूजाद्यैः पूजयामासु
॥ २४५ ॥ यन्मायामोहितधियो भ्रमामः कर्मसागरे ॥ इति श्लोकं महार्थं ते हरिमेधमुखा द्विजाः
॥ प्रददुर्दक्षिणां सर्वां हरिमेधाः सुतामपि ॥ द्रव्यं कन्यां च संगृह्य स्वगृहं समुपा
रंग तम् ॥ ततो वेदार्थनैपुण्यैस्तेन ते तोपिता द्विजाः ॥ २४७
॥ इष्ट्वा यज्ञैरैतरेयो द्वादशीव्रततत्परः ॥ २४९ ॥ वासुदेवानुध्यानेन मोक्षं पश्चादु
गमत् ॥ २४८ ॥ वन्दयित्वा स्वजननीं पुत्रानुत्पाद्य धार्मिकान्[2]
॥ योऽर्चयेत्पूजयेत्स्तौति सर्वं तस्याक्षयं विदुः ॥ शिवधर्मेषु यत्प्रोक्तं फलं पूर्वं मया तव
पागतः ॥ एवंविधो वासुदेवः स्वयमत्रास्ति भारत ॥ २५०
॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे
॥ २५१ ॥ तादृशं लभते मर्त्यो वासुदेवप्रसादतः ॥ २५२ ॥
कौमारिकाखण्डे श्रीवृद्धवासुदेवमाहात्म्यवर्णन ऐतरेयब्राह्मणचारित्रवर्णनंनाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥ ॥ छ ॥ ॥ ॥ श्रीनारद
उवाच ॥ ॥ ततोऽहं पार्थ[1] भूयोऽपि जनानुग्रहकाम्यया ॥ प्रत्यक्षदेवं मार्तंडमत्रानेतुमियेष ह ॥ १ ॥ सर्वेषां प्राणिनां यस्मादुडुपो भगवान्रविः ॥
इहामुत्र च कौंतेय विश्वोद्धारी रविर्मतः ॥ २ ॥ ये स्मरंति रविं भक्त्या कीर्तयंति च ये नराः ॥ पूजयंति च ये नित्यं कृतार्थास्ते न संशयः ॥३॥
सूर्यभक्तिपरा ये च नित्यं तद्गतमानसाः ॥ ये स्मरंति सदा सूर्यं न ते दुःखस्य भाजिनः ॥ ४ ॥ भवनानि मनोज्ञानि विविधाभरणाः स्त्रियः ॥
धनं चाहष्टपर्यंतं सूर्यपूजाविधेः फलम् ॥ ५ ॥ दुर्लभा भक्तिः सूर्ये वा दुर्लभं तस्य चार्चनम् ॥ दानं च दुर्लभं तस्मै ततो होमश्च दुर्लभः ॥ ६ ॥
नमस्कारादिसंयुक्तं रविरित्यक्षरद्वयम् ॥ जिह्वाग्रे वर्तते यस्य सफलं तस्य जीवितम् ॥ ७ ॥ इत्यहं हृदि संचिंत्य माहात्म्यं रविजं महत् ॥ पूर्णं

१ अंग-इदं संबोधनम् । हे अर्जुन-इत्यर्थः । २ अत्रानयितुंगेच्छत-इति पाठः ।

वर्षशतं पार्थ रविं भक्त्या ह्यतोषयम् ॥ ८ ॥ जपेन सुविशुद्धेन च्छन्दसां वायुभोजनः ॥ ततः खाद्द्वितीयां मूर्तिं कृत्वा योगबलाद्विभुः ॥ ९ ॥ तेजसा दुर्दृशो भास्वान्प्रत्यक्षः समजायत ॥ १० ॥ तमहं प्रांजलिर्भूत्वा नमस्कृत्य रविं प्रभुम् ॥ सामभिर्विविधैर्देवं पर्यतोषयमीश्वरम् ॥ ११ ॥ तुष्टो मामाह वरदो देवर्षे सुचिरं त्वया ॥ तपसाराधितोऽस्मीति वरं वृणु यथेप्सितम् ॥ १२ ॥ इत्युक्तोऽहं लोकनाथं प्रांजलिः प्रास्तुवं वचः ॥ यदि तुष्टो भवान्मह्यं यदि देयो वरो मम ॥ १३ ॥ ततस्ते कामरूपे[1] या कला नाथ प्रवर्तते ॥ राजवर्धनराज्ञा याऽऽराधिता च जनैः पुरा ॥ १४ ॥ तया च कलया भानो सदात्र स्थातुमर्हसि ॥ ततस्तथेति देवेन प्रोक्ते तुष्टेन भारत ॥ १५ ॥ अस्थापयमहं सूर्यं भट्टादित्याभिधानकम्[2] ॥ भट्टेन स्थापितं यस्मान्मया तस्माद्रविर्जगौ ॥ १६ ॥ ततः संपूज्य तं पुष्पैः कृतावेशमहं रविम् ॥ भक्त्युद्रेकाप्लुतांगोऽथ स्तुतिमेतामथाचरम् ॥ १७ ॥ सर्ववेदरहस्यैश्च नामभिश्च शताष्टभिः ॥ सप्तसप्तिरचिंत्यात्मा महाकारुणिकोत्तमः ॥ १८ ॥ संजीवनो जयो जीवो जीवनाथो जगत्पतिः ॥ कालाश्रयः कालकर्ता महायोगी महामतिः ॥ १९ ॥ भूतांतकरणो देवः कमलानन्दनन्दनः ॥ सहस्रपाच्च वरदो दिव्यकुण्डलमण्डितः ॥ ॥ २० ॥ धर्मप्रियोचितात्मा च सविता वायुवाहनः ॥ आदित्योऽक्रोधनः सूर्यो रश्मिमाली विभावसुः ॥ २१ ॥ दिनकृद्दिनहृन्मौनी सुरथो रथिनांवरः ॥ राज्ञीपतिः स्वर्णरेताः पूषा त्वष्टा दिवाकरः ॥ २२ ॥ आकाशतिलको धाता संविभागी मनोहरः ॥ प्राज्ञः प्रजापतिर्धन्यो विष्णुः श्रीशो भिषग्वरः ॥ २३ ॥ आलोककृल्लोकनाथो लोकपालनमस्कृतः ॥ विदिताशयश्च सुनयो महात्मा भक्तवत्सलः ॥ २४ ॥ कीर्तिकीर्तिकरो नित्यो रोचिष्णुः कल्मषापहः ॥ जितानन्दो महावीर्यो हंसः संहारकारकः ॥ २५ ॥ कृतकृत्यः सुसंगश्च बहुज्ञो वचसां पतिः ॥ विश्वपूज्यो मृत्युहारी घृणी धर्मस्य कारणम् ॥ २६ ॥ प्रणतार्तिहरोऽरोग आयुष्मान्सुखदः सुखी ॥ मङ्गलं पुण्डरीकाक्षो व्रती व्रतफलप्रदः ॥ २७ ॥ शुचिः पूर्णो मोक्षमार्गदाता भोक्ता महेश्वरः ॥ धन्वंतरिः प्रियाभाषी धनुर्वेदविदेकराट् ॥ २८ ॥ जगत्पिता धूमकेतुर्विधूतो ध्वांतहा गुरुः ॥ गोपतिश्च कृतातिथ्यः शुभाचारः शुचिप्रियः ॥ २९ ॥ सामप्रियो लोकबन्धुर्नैकरूपो युगादिकृत् ॥ धर्मसेतुर्लोकसाक्षी खेटकः सर्वदः प्रभुः ॥ ३० ॥ मयैवं संस्तुतो भानुर्नाम्नामष्टशतेन च ॥ तुष्यतां सर्वलोकानां सर्वलोकप्रियो विभुः ॥ ३१ ॥ इत्येवं संस्तवात्प्रीतो भास्करो मामवोचत ॥ सदात्र कलया स्थास्ये देवर्षे त्वत्प्रियेप्सया ॥ ३२ ॥ यो मामत्र महाभक्त्या भट्टादित्यं[3] प्रपूजयेत् ॥ सहस्रशः का

१ कामरूपे–देशे । २ पट्टादित्याभिधानकम्–इ०, भद्रादित्याभिधानकम–इ० च पा० । ३ पट्टादित्यम्–इ० पा० ।

मरूपे संपूज्याप्नोति तत्फलम् ॥ २३ ॥ मामुद्दिश्य च यो विप्रः स्वल्पं वा यदि वा बहु ॥ दास्यतेऽत्राक्षयं तच्च ग्रहीष्ये करजं यथा ॥ २४ ॥ रक्तोत्पलैश्च कह्लारैः केसरैः करवीरकैः ॥ शतत्रयैर्महापद्मै रविवारेण मानवः ॥ २५ ॥ सप्तम्यामथ षष्ठ्यां वा येऽर्चयिष्यंति मामिह ॥ यान्यान्प्रार्थयते कामांस्तांस्तान्प्राप्स्यति निश्चितम् ॥ २६ ॥ दर्शनान्मम भक्त्या च नाशो व्याधिदरिद्रयोः ॥ प्रणामात्स्वर्गमाप्नोति श्रुत्वा मोक्षं च नित्यशः ॥ २७ ॥ अभक्तिं यश्च कर्ता मे स गच्छेन्निश्चितं क्षयम् ॥ अष्टोत्तरशतं नाम ममाग्रे यत्त्वयेरितम् ॥ २८ ॥ त्रिकालमेककालं वा पठतः शृणु यत्फलम् ॥ कीर्तिमान्सुभगो विद्वान्सुसुखी प्रियदर्शनः ॥ २९ ॥ भवेद्वर्षशतायुश्च सर्वरोगविवर्जितः ॥ यस्त्विदं शृणुयान्नित्यं पठेद्वा प्रयतः शुचिः ॥ ४० ॥ अक्षयं स्वल्पमप्यन्नं भवेत्तस्योपसाधितम् ॥ विजयी च भवेन्नित्यं तथा जातिस्मरो भवेत् ॥ ४१ ॥ तस्मादेतत्त्वया जाप्यं परं स्वस्त्ययनं महत् ॥ तथा ममाग्रे कुंडं च कुरु स्नानार्थमुत्तमम् ॥ ४२ ॥ कामरूपकला यत्र तत्र कुंडं वने भवेत् ॥ एवं दत्त्वा वरान्भानुस्तत्रैवांतरधीयत ॥ ४३ ॥ ततो भास्करवाक्येन सिद्धेशस्य च सव्यतः ॥ वनमध्ये मया कुंडं कृतं दर्भशलाकया ॥ ४४ ॥ कामरूपभवं कुंडं वृक्षास्ते चाँपि भारत ॥ संलीनास्तन्महाश्चर्यं ममाजायत चेतसि ॥ ४५ ॥ माघमासस्य शुक्लायां सप्तम्यां स्त्री नरोऽपि वा ॥ स्नानं कुंडे शुभं कृत्वा भट्टादित्यं प्रपश्यति ॥ ४६ ॥ तस्यानंतं भवेत्पुण्यं रथं यश्च प्रपूजयेत् ॥ रथयात्रां च कुरुते यस्मिन्यस्मिन्नसौ पथि ॥ ४७ ॥ ये च पश्यंति लोकास्ते धन्याः सर्वे न संशयः ॥ पुत्रधान्यधनैर्युक्ता नीरुजस्तेजसाऽन्विताः ॥ ४८ ॥ भविष्यंति नरास्ते ये कारयंति रथोत्सवम् ॥ गंगादिसर्वतीर्थेषु यत्फलं कीर्तितं बुधैः ॥ ४९ ॥ भट्टादित्यस्य कुंडे च तत्फलं सप्तमीदिने ॥ तत्र कुंडे च यः स्नात्वा सूर्यायार्घ्यं प्रयच्छति ॥ कपिलागोशतस्यासौ दत्तस्य फलमश्नुते ॥ ५० ॥ ॥ अर्जुन उवाच ॥ ॥ वासुदेवादयः सर्वे वदंत्येवं महामुने ॥ ५१ ॥ भास्करार्घं विना प्रातः कृतं सर्वं च निष्फलम् ॥ तस्याहं श्रोतुमिच्छामि विधिं विधिविदां वर ॥ ५२ ॥ ॥ नारद उवाच ॥ ॥ यथा ब्रह्मादयो देवा यच्छंत्यर्घं महात्मने ॥ भास्कराय शृणु त्वं तं विधिं सर्वाघनाशनम् ॥ ५३ ॥ प्रथमं तावत्प्रत्यूषे उदिते सूर्ये शुचिर्भूत्वा गोमयकृतमंडलस्योपरि रक्तचंदनेन मंडलकं कृत्वा ततस्ताम्रपात्रे रक्तचंदनोदकश्वेतचंदनादिद्रव्यैः प्रपूरणं कृत्वा तन्मध्ये हेमाक्षतदूर्वादधिसर्पींषि परिक्षिप्य स्थापयेत् ॥ ५४ ॥ स्वशरीरमालभेत् अनेन मंत्रेण ॥ ॐ खखोल्काय नमः ॥ सप्तवारानुच्चार्य स्थातव्यम् ॥ तेन शुद्धिरुपसंजायते देहस्यार्चार्हता भवति ॥ पश्चादासनस्थं देवं

१ सर्वजाप्यम्—इ० पा० । २ चात्र—इ० पा० । ३ पट्टादित्यम्—इ० पा० । ४ पट्टादित्यस्य—इ० पा० ।

सवितारं मंडलमध्ये द्वादशात्मकं सुरादिभिः संपूज्यमानं ध्यात्वा पूर्वोक्तमर्घपात्रं शिरसि कृत्वा भूमौ जानुनी निपात्य सूर्याभिमुखस्तद्गतमना भूत्वार्घमंत्रमुदाहरेत् ॥ तदुच्यते सूर्यवक्राद्विनिर्गतमिति ॥ ५५ ॥ यस्योच्चारणशब्देन रथं संस्थाप्य भास्करः ॥ प्रतिगृह्णाति चैवार्घ्यं वरमिष्टं च यच्छति ॥ ५६ ॥ ॐयस्याहुः सप्त च्छंदांसि रथे तिष्ठंति वाजिनः ॥ अरुणः सारथिर्यस्य रथवाहोऽग्रतः स्थितः ॥ ५७ ॥ जया च विजया चैव जयंती पापनाशनी ॥ इडा च पिंगला चैव वहंतोऽश्वमुखास्तथा ॥ ५८ ॥ डिंडिश्च शेषनागश्च गणाध्यक्षस्तथैव च ॥ स्कंदरेवंततार्क्ष्याश्च तथा कल्माषपक्षिणौ ॥ ५९ ॥ राज्ञी च निक्षुभा देवी ललिता चैव संज्ञिका ॥ तथा यज्ञभुजो देवा ये चान्ये परिकीर्तिताः ॥ ६० ॥ एभिः परिवृतो योऽसावधरोत्तरवासिभिः ॥ तमहं लोककर्तारमाह्वयामि तमोपहम् ॥ ६१ ॥ अम्मयो भगवान्भानुरस्तु यज्ञं प्रवर्तयन् ॥ इदमर्घ्यं च पाद्यं च प्रगृहाण नमोनमः ॥ ६२ ॥ आवाहनम् ॥ सहस्रकिरण वरद जीवनरूप ते नमः ॥ इति सांनिध्यकरणम् ॥ ॐवषट् इत्युच्चार्य सूर्यस्य चरणयुगलं पश्यन् भुवि पद्भ्यां[1] पात्रीं निर्वापयेत् पाद्यं तदुच्यते ॥ एवं पाद्यं दत्त्वा बद्धांजलिः सुस्वागतमिति कुर्यात् ॥ स्वागतं भगवन्नेहि मम प्रसादं विधाय आस्यताम् ॥ इह गृहाण पूजां च प्रसादं च धिया कुरु ॥ तिष्ठ त्वं तावदत्रैव यावत्पूजां करोम्यहम् ॥ ६३ ॥ एवं विज्ञापनं दद्यादनेन मंत्रेण कमलासनम् ॥ तत्कमलासनं कमलनंदन उपाविशति ॥ आसन उपविष्टस्य शेषां पूजां नियोजयेत् अनेन विधानेन ॥ ॐसोममूर्तिक्षीरोदपतये नमः ॥ इति क्षीरादिस्नपनम् ॥ ॐभास्कराय नीरवासिने नमः ॥ इति जलस्नानम् ॥ ततो वासोयुगं शुभ्रं दद्यात् अनेन मंत्रेण ॥ इदं वासोयुगं सूर्य गृहाण कृपया मम ॥ कटिभूषणमेकं ते द्वितीयं चांगप्रावरणम्[2] ॥ ६४ ॥ ततो यज्ञोपवीतं दद्यात् अनेन मंत्रेण ॥ सूत्रतंतुमयं शुद्धं पवित्रमिदमुत्तमम् ॥ यज्ञोपवीतं देवेश प्रगृहाण नमोऽस्तु ते ॥ ६५ ॥ ततो यथाशक्ति श्वेतमुकुटमुद्रिकादिभूषणानि दद्यात् अनेन मंत्रेण ॥ मुकुटो रत्ननद्धोऽयं मुद्रिकां भूषणानि च ॥ अलंकारं गृहाणेमं मया भक्त्या समर्पितम् ॥ ६६ ॥ एवमलंकारं निवेद्य पश्चात्केशरकुंकुमकर्पूररक्तचंदनमिश्रमनुलेपनं दद्यात् ॥ ६७ ॥ ॐ तवातिप्रिय वृक्षाणां रसोऽयं तिग्मदीधिते ॥ स तवैवोचितः स्वामिन्गृहाण कृपया मम ॥ ६८ ॥ ततश्चंपकजपाकरवीरकर्णककेसरकोकनदादिभिः पूजां कुर्यात् ॥ ६९ ॥ ॐवनस्पतिरसो दिव्यो गंधाढ्यो गंध उत्तमः ॥ आहारः[3] सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ ७० ॥ शल्लकीधूपमंत्रः[4] ॥ ततः

१ पद्भ्याम्—सूर्यपादाभ्याम्—तदर्थम्—इत्यर्थः । २ अक्षराधिक्यमार्षम् । ३ आघ्रेयः सर्वदेवानाम्—इति सर्वजनसुप्रसिद्धः पाठः । ४ मल्लकीधूपमंत्रः—इ० पा० ।

पायसादिनिष्पन्नं नैवेद्यं निवेदयेदनेन मंत्रेण ॥ नैवेद्यममृतं सर्वभूतानां प्राणवर्धनम् ॥ पूर्णपात्रे मया दत्तं प्रतिगृह्ण प्रसीद मे ॥ ७१ ॥ ततः शौचोदकतांबूलदीपारार्तिकशीतलिकापुनःपूजादि निवेद्य यथाशक्त्या स्तुत्वा सुकृतं दुष्कृतं वा क्षमस्वेति प्रोच्य विसर्जयेत् ॥ ततो भूयो नमस्य हेमवस्त्रोपवीतालंकारान् ब्राह्मणाय निवेद्य निर्माल्यं संहृत्यांभसि निक्षिपेत् ॥ ७२ ॥ इत्यर्घ्यदानविधिः ॥ य एवं भास्करायार्घ्यं मूर्तौ मंडलकेऽपि वा ॥ नित्यं निवेदयेत्प्रातः स्याद्रवेरात्मवत्प्रियः ॥ ७३ ॥ अनेन विधिना कर्णो भास्करार्घ्यं प्रयच्छति ॥ ततः सूर्यस्य पार्थासावात्मवद्वल्लभो मतः ॥ ७४ ॥ अशक्तश्चेन्नित्यमेकमर्घ्यं दद्याद्दिवाकृते ॥ ततोऽत्र रथसप्तम्यां कुंडे देयः प्रयत्नतः ॥ ७५ ॥ अश्वमेधफलं प्राप्य सूर्यलोकमवाप्नुयात् ॥ तस्मात्सर्वप्रयत्नेन दातव्योऽर्घोऽत्र भारत ॥ ७६ ॥ एवंविधस्त्वसौ देवो भट्टादित्योऽत्र तिष्ठति ॥ भूयानतोऽपि बहुशः पापहा धर्मवर्धनः ॥ ७७ ॥ दिव्यमष्टविधं चात्र सद्यः प्रत्ययकारकम् ॥ पापानां चोपभुक्तं हि यथा पार्थ हलाहलम् ॥ ७८ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे सागरसंगमे भट्टादित्यमाहात्म्यवर्णनंनाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

॥ ॥ छ ॥ ॥ अर्जुन उवाच ॥ ॥ दिव्यप्राकारमिच्छामि श्रोतुं चाहं मुनीश्वर ॥ कथं कार्याणि कानीह स्फुटं यैः पुण्यपापकम् ॥ १ ॥ ॥ ॥ नारद उवाच ॥ ॥ शपथाः कोशघटकौ विषाग्नी तप्तमाषकौ ॥ फलं च तंदुलं चैव दिव्यान्यष्टौ विदुर्बुधाः ॥ २ ॥ असाक्षिकेषु चार्थेषु मिथो विवदमानयोः ॥ राजद्रोहाभिशापेषु साहसेषु तथैव च ॥ ३ ॥ अविदस्तत्त्वतः सत्यं शपथेनाभिलंघयेत् ॥ महर्षिभिश्च देवैश्च सत्यार्थाः शपथाः कृताः ॥ ४ ॥ जवनो नृपतिः क्षीणो मिथ्याशपथमाचरेत् ॥ वसिष्ठाग्रे वर्षमध्ये सान्वयः किल भारत ॥ ५ ॥ अंधः शत्रुगृहं गच्छेद्यो मिथ्याशपथांश्चरेत् ॥ रौरवस्य स्वयं द्वारमुद्घाटयति दुर्मतिः ॥ ६ ॥ मन्यंते वै पापकृतो न कश्चित्पश्यतीति नः ॥ तांश्च देवाः प्रपश्यंति स्वस्यैवांतरपौरुषाः ॥ ७ ॥ आदित्यचंद्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ॥ अहश्च रात्रिश्च उभे च संध्ये धर्मो हि जानाति नरस्य वृत्तम् ॥ ८ ॥ एवं तस्मादभिज्ञाय सत्यार्थशपथांश्चरेत् ॥ वृथा हि शपथान्कुर्वन्प्रेत्य चेह विनश्यति ॥ ९ ॥ इदं सत्यं वदामीति ब्रुवन्साक्षी भवान्यतः ॥ शुभाशुभफलं देहि शुचिः पादौ रवेः स्पृशेत् ॥ १० ॥ अथ शास्त्रस्य विप्रोऽपि शस्त्रस्यापि

१ पट्टादित्यः--इत्येव--सर्वत्र--भट्टादित्यस्थाने पाठः । २ असि--इ० पा० । ३ अविज्ञाय--इ० पा० ।

च क्षत्रियः ॥ मां संस्पृशंस्तथा वैश्यः शूद्रः स्वगुरुमेव च ॥ ११ ॥ मातरं पितरं पूज्यं स्पृशेत्साधारणं त्विदम् ॥ कोशस्य रूपं पूर्वं ते
व्याख्यातं पांडुनंदन ॥ १२ ॥ विप्रवर्ज्यं तथा कोशं वर्णिनां दापयेन्नृपः ॥ यो यो यद्देवताभक्तः पाययेत्तस्य तं नरम् ॥ १३ ॥ समभक्तं च
देवानामादित्यस्यैव पाययेत् ॥ सर्वेषां चोग्रदेवानां स्नापयेदायुधास्त्रकम् ॥ १४ ॥ स्नानोदकं वा संकल्पं गृहीत्वा पाययेन्नवम् ॥ त्रिसप्तरात्रमध्ये
च फलं कोशस्य निर्दिशेत्॥ १५ ॥ अतः परं महादिव्यविधानं शृणु यद्भवेत् ॥ संशयच्छेदि सर्वेषां धाष्टर्यात्तद्दिव्यमेव च ॥ १६ ॥ सशिरस्कं
प्रदातव्यमिति ब्रह्मा पुराब्रवीत् ॥ महोग्राणां च दातव्यमशिरस्कमपि स्फुटम् ॥ १७ ॥ साधूनां वर्णिनां राजा न शिरस्कं प्रदापयेत् ॥ न प्रवाते
घटं देयं नोष्णकाले हुताशनम् ॥ १८ ॥ वर्णिनां च तथा कालं तंदुलं मुखरोगिणाम् ॥ १९ ॥ कुष्ठपित्तार्दितानां च ब्राह्मणानां च नो विषम् ॥
तप्तमाषकमर्हंति सर्वे धर्म्यं निरत्ययम् ॥ २० ॥ न व्याधिमरके देशे शपथान्कोशमेव च ॥ दिव्यान्यासुरकैर्मंत्रैः स्तंभयंतीह केचन ॥ २१ ॥
प्रतिवातविदस्तेषां योजयेद्धर्मवत्सलान् ॥ दिव्यानां स्तंभकाञ्ज्ञात्वा पापान्नित्यं महीपतिः ॥ २२ ॥ विवासयेत्स्वकाद्राष्ट्रात्ते हि लोकस्य कंट
काः ॥ तेषामन्वेषणे यत्नं राजा नित्यं समाचरेत् ॥ २३ ॥ ते हि पापसमाचारास्तस्करेभ्योऽपि तस्कराः ॥ प्राग्दृष्टदोषान्स्वल्पेषु दिव्येषु विनि
योजयेत् ॥ २४ ॥ महत्स्वपि न चार्थेषु धर्मज्ञान्धर्मवत्सलान् ॥ न मिथ्यावचनं येषां जन्मप्रभृति विद्यते ॥ २५ ॥ श्रद्दध्यात्पार्थिवस्तेषां वचना
देव भारत ॥ ज्ञात्वा धर्मिष्ठतां राजा पुरुषस्य विचक्षणः ॥ २६ ॥ क्रोधाल्लोभात्कारयंश्च स्वयमेव प्रदुष्यति ॥ तस्मात्पापिषु दिव्यं स्यात्तत्रादौ
प्रोच्यते घटे ॥ २७ ॥ सुसमायां पृथिव्यां च दिग्भागे पूर्वदक्षिणे ॥ यज्ञियस्य तु वृक्षस्य स्थाप्यं स्यान्मुंडकद्वयम्[2] ॥ २८ ॥ स्तंभकस्य प्रमाणं च
सप्तहस्तं प्रकीर्तितम् ॥ द्वौ हस्तौ निखनेत्काष्ठं दृश्यं स्याद्धस्तपंचकम् ॥ २९ ॥ अंतरं तु तयोः कार्यं तथा हस्तचतुष्टयम् ॥ मुंडकोपरि[3] काष्ठं
च दृढं कुर्याद्विचक्षणः ॥ ३० ॥ चतुर्हस्तं तुलाकाष्ठमव्रणं कारयेत्स्थिरम् ॥ खदिरार्जुनवृक्षाणां शिंशपाशालजं त्वथ ॥ ३१ ॥ तुलाकाष्ठे तु
कर्तव्यं तथा वै शिक्यकद्वयम् ॥ प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा ॥ ३२ ॥ पाषाणस्यापि जायेत स्तंभेषु च घटस्तथा ॥ वणि
क्सुवर्णकारो वा कुशलः कांस्यकारकः ॥३३॥ तुलाधारधरः कार्यो रिपौ मित्रे च यः समः ॥ श्रावयेत्प्राड्विवाकोऽपि तुलाधारं विचक्षणः ॥ ३४ ॥

१ मां–संस्पृशन्–इति पदच्छेदो बोध्यः । मा संस्पृशम्–इ० पा० । कस्मिंश्चित्पुस्तके–'वृत्तिम्'–इति पर्यायशब्दो लिखितो दृश्यते । अत्र सुधीभिः–मां–नारदं संस्पृशन्–नारदस्य शपथं कुर्वन्–इत्यर्थो बोध्यः । यद्वा–वृत्तिं स्पृशन्–इति पाठे–स्वकीयं पण्यं स्पृष्ट्वा शपथं कुर्वन्–इत्यर्थो वा बोध्यः । अयं द्वितीयोर्थ एव सयुक्तिकः प्रतिभाति । २ स्तंभकद्वयम्–इ०पा० । ३ मंडलोपरि–इ०पा० ।

ब्रह्मघ्ने ये स्मृता लोका ये च स्त्रीबालघातके ॥ तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥३५॥ एकस्मिंस्तोलयेच्छिक्ये ज्ञातं सूपोषितं नरम् ॥ द्वितीये मृत्तिकां शुभ्रां गौरां तु तुलयेद्बुधः ॥ ३६ ॥ इष्टिकाभस्मपाषाणकपालास्थीनि वर्जयेत् ॥ तोलयित्वा ततः पूर्वं तस्मात्तमवतारयेत् ॥ ॥ ३७ ॥ मूर्ध्नि पत्रं ततो न्यस्य न्यस्तपत्रं निवेशयेत् ॥ पत्रे मंत्रस्त्वयं लेख्यो यः पुरोक्तः स्वयंभुवा ॥ ३८ ॥ ब्रह्मणस्त्वं सुता देवि तुलानाम्नेति कथ्यते ॥ तुकारो गौरवे नित्यं लकारो लघुनि स्मृतः ॥३९॥ गुरुलाघवसंयोगात्तुला तेन निगद्यसे ॥ संशयान्मोचयस्वैनमभिशस्तं नरं शुभे ॥४०॥ भूय आरोपयेत्तं तु नरं तस्मिन्सपत्रकम् ॥ तुलितो यदि वर्धेत शुद्धो भवति धर्मतः ॥ ४१ ॥ हीयमानो न शुद्धः स्यादिति धर्मविदो विदुः ॥ शिक्यच्छेदे तुलाभंगे पुनरारोपयेन्नरम् ॥४२॥ एवं निःसंशयं ज्ञानं यच्चान्यायं न लोपयेत् ॥ एतत्सर्वं रवौ वारे कार्यं संपूज्य भास्करम् ॥ ४३ ॥ अथातः संप्रवक्ष्यामि विषदिव्यं शृणुष्व मे ॥ ४४ ॥ द्विप्रकारं च तत्प्रोक्तं घटसर्पविषं तथा ॥ शृंगिणो वत्सनाभस्य हिमशैलभवस्य वा ॥ ४५ ॥ यवाः सप्त प्रदातव्या अथवा षड्घृतप्लुताः ॥ मूर्ध्नि विन्यस्तपत्रस्य पत्रे चैवं निवेशयेत् ॥ ४६ ॥ त्वं विष ब्रह्मणः पुत्र सत्यधर्मे व्यवस्थितः ॥ त्रायस्वैनं नरं पापात्सत्येनास्य भवामृतम् ॥ ४७ ॥ येन वेगैर्विना जीर्णं छर्दिमूर्च्छाविवर्जितम् ॥ तं तु शुद्धं विजानीयादिति धर्मविदो विदुः ॥ ॥ ४८ ॥ क्षुधितं क्षुधितः सर्पं घटस्थं प्रोच्य पूर्ववत् ॥ संस्पृशेत्तालिकाः सप्त न दशेच्छुध्यतीति सः ॥ ४९ ॥ अग्निदिव्यं यथा प्राह विरंचिस्तच्छृणुष्व मे ॥ सप्तमंडलकान्कुर्याद्देवस्याग्रे रवेस्तथा ॥ ५० ॥ मंडलान्मंडलं कार्यं पूर्वेणेति विनिश्चयः ॥ षोडशांगुलकं कार्यं मंडलात्तावदंतरम् ॥ ५१ ॥ आर्द्रवाससमाहूय तथा चैवाप्युपोषितम् ॥ कारयेत्सर्वदिव्यानि देवब्राह्मणसंनिधौ ॥ ५२ ॥ प्रत्यक्षं कारयेद्दिव्यं राज्ञो वाधिकृतस्य वा ॥ ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥ ५३ ॥ पश्चिमे दिनकाले हि प्राङ्मुखः प्राञ्जलिः शुचिः ॥ चतुरस्रे मंडलेऽन्ये कृत्वा चैव समौ करौ ॥ ५४ ॥ लक्षयेयुः कृतादीनि हस्तयोस्तस्य हारिणः ॥ सप्ताश्वत्थस्य पत्राणि बध्नीयुः करयोस्ततः ॥ ५५ ॥ नवेन कृतसूत्रेण कार्पासेन दृढं यथा ॥ ततस्तु सुसमं कृत्वा अष्टांगुलमथायसम् ॥ ५६ ॥ पिंडं हुताशसंतप्तं पंचाशत्पलिकं दृढम् ॥ आदौ पूजां रवेः कृत्वा हुताशस्याथ कारयेत् ॥ ५७ ॥ रक्तचंदनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥ अभिशस्तस्य पत्रं च बध्नीयाच्चैव मूर्धनि ॥ ५८ ॥ मंत्रेणानेन संयुक्तं ब्राह्मणाभिहितेन च ॥ त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ॥ ५९ ॥ पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥ त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥ ६० ॥ जठरस्थोऽसि भूतानां ततो वेत्सि शुभाशुभम् ॥ पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ॥ ६१ ॥ अथवा शुद्धभावेषु शीतो भव

महाबल ॥ ततोऽभिशस्तः शनकैर्मंडलानि परिक्रमेत् ॥ ६२ ॥ परिक्रम्य शनैर्जह्याल्लोहपिंडं ततः क्षितौ ॥ विपत्रहस्तं तं पश्चात्कारयेद्व्रीहिमर्दनम्॥ ॥ ६३ ॥ निर्विकारौ करौ दृष्ट्वा शुद्धो भवति धर्मतः ॥ भयाद्वा पातयेद्यस्तु तदघो वा विभाव्यते ॥ ६४ ॥ पुनस्त्वाहारयेल्लोहं विधिरेष प्रकीर्तितः ॥ अथातः संप्रवक्ष्यामि तप्तमाषविधिं शृणु ॥ ६५ ॥ कारयेदायसं पात्रं ताम्रं वा षोडशांगुलम् ॥ चतुरंगुलखातं तु मृन्मयं वापि कारयेत् ॥ ६६ ॥ पूरयेद्घृततैलाभ्यां पलैर्विंशतिभिस्ततः ॥ सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ॥ ६७ ॥ वह्न्युक्तं विन्यसेन्मंत्रमभिशस्तस्य मूर्धनि ॥ अंगुष्ठांगुलियोगेन तप्तमाषं समुद्धरेत् ॥ ६८ ॥ शुद्धं ज्ञेयमसंदिग्धं विस्फोटादिविवर्जितम् ॥ फालशुद्धिं प्रवक्ष्यामि तां शृणु त्वं धनंजय ॥ ६९ ॥ आयसं द्वादशपलं घटितं फालमुच्यते ॥ अष्टांगुलमदीर्घं च चतुरंगुलविस्तृतम् ॥ ७० ॥ वह्न्युक्तं विन्यसेन्मंत्रमभिशस्तस्य मूर्धनि ॥ त्रिः परावर्तयेज्जिह्वां लिहन्नस्मात्षडंगुलम् ॥ ७१ ॥ गवां क्षीरं प्रदातव्यं जिह्वाशोधनमुत्तमम् ॥ जिह्वापरीक्षणं कुर्याद्दग्धा चेन्न विमोच्यते ॥ ॥ ७२ ॥ तं विशुद्धं विजानीयाद्विशुद्धा चेत्तु जायते ॥ तंदुलस्याथ वक्ष्यामि विधिधर्मं सनातनम् ॥ ७३ ॥ चौर्ये तु तंदुला देया न चान्यत्र कथंचन ॥ तंदुलानुदके सिक्त्वा रात्रौ तत्रैव स्थापयेत् ॥ ७४ ॥ प्रभाते कारिणे देया भक्षणाय न संशयः ॥ त्रिःकृत्वः प्राङ्मुखश्चैव पत्रे निष्ठीवयेत्ततः ॥ ७५ ॥ पिप्पलस्याथ भूर्जस्य न त्वन्यस्य कथंचन ॥ तांस्तु वै कारयेच्छुद्धांस्तंदुलाञ्छालिसंभवान् ॥ ७६ ॥ मृन्मये भाजने कृत्वा सवितुः पुरतः स्थितः ॥ तन्दुलान्मंत्रयेच्छुद्धान्मन्त्रेणानेन धर्मतः ॥ ७७ ॥ दीयसे धर्मतत्त्वज्ञैर्मानुषाणां विशोधनम् ॥ स्तुतस्तन्दुल सत्येन धर्मतस्त्रातुमर्हसि ॥ ७८ ॥ निष्ठीवने कृते तेषां सवितुः पुरतः स्थिते ॥ शोणितं दृश्यते यस्य तमशुद्धं विनिर्दिशेत् ॥ ७९ ॥ एवमष्टविधं दिव्यं पापसंशयच्छेदनम् ॥ भट्टादित्यस्य पुरतो जायते कुरुनंदन ॥ ८० ॥ जलदिव्यं तथा प्राहुर्द्विप्रकारं पुराविदः ॥ जलहस्तं स्मृतं चैकं मज्जनं चापरं विदुः ॥ ८१ ॥ बाणक्षेपस्तथादानं यावद्वीर्यवता कृतम् ॥ तावत्तं मज्जयेज्जीवेत्तथा तच्छुद्धिमादिशेत् ॥ ८२ ॥ एवंविधमिदं स्थानं भट्टादित्यस्य भारत ॥ ममैव कृपया भानोर्जातमेतन्महीतले ॥ ८३ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे भट्टादित्यमाहात्म्ये दिव्यवर्णनंनाम चतुश्चत्वारिंशोऽध्यायः ॥४४॥ ॥छ॥ ॥ नारद उवाच ॥ ॥ तथा बहूदकस्थाने कथामाकर्णयाद्भुताम् ॥ यस्माद्बहूदकं कुण्डं कामरूपे यदस्ति च ॥१॥ तदस्ति चात्र संक्रांतं तस्मात्प्रोक्तं बहूदकम् ॥ कपिलेनात्र

१ आचारयेत्–इ० पा० ।

तत्वा च वर्षाणि सुबहून्यपि ॥ २ ॥ स्थापितं शोभनं लिंगं कपिलेश्वरसंज्ञितम् ॥ तच्च लिंगं सदा पार्थ नन्दभद्र इति स्मृतः ॥३॥ वाणिक्संपूजयामास त्रिकालं च कृतादरः ॥ सर्वधर्मविशेषज्ञः साक्षाद्धर्म इवापरः ॥४॥ नाज्ञातं तस्य किंचिच्च यद्धर्मेषु प्रकीर्त्यते॥सर्वेषां च सुहृन्नित्यं सर्वेषां च हिते रतः ॥५॥ कर्मणा मनसा वाचा धर्ममेनमुपाश्रितः ॥ न भूतो न भविष्यश्च न स धर्मोऽस्ति किंचन ॥६॥ त्रिदोषो यो हि सर्वत्र निश्चित्यैवं व्यवस्थितः ॥ अस्य धर्मसमुद्रस्य संप्रवृद्धस्य सर्वतः ॥ ७ ॥ निर्मथ्य नन्दभद्रेण आहृतं तन्निशामय ॥ वाणिज्यं मन्यते श्रेष्ठं जीवनाय तदास्थितः ॥ ८ ॥ परिच्छिन्नैः काष्ठतृणैः शरणं तेन कारितम् ॥ मद्यत्रजं भेदवर्जं कूटवर्जं समं तथा ॥ ९ ॥ सर्वभूतेषु वाणिज्यमल्पलाभेन सोऽचरत् ॥ अमायया परेभ्योऽसौ गृहीत्वैव क्रयाणकम् ॥ १० ॥ अमाययैव भूतेभ्यो विक्रीणात्यस्य सद्व्रतम् ॥ केचिद्यज्ञं प्रशंसंति नन्दभद्रो न मन्यते ॥ ११ ॥ दोषमेनं विनिश्चित्य शृणु तं पांडुनन्दन ॥ लुब्धोऽनृती दांभिकश्च स्वप्रशंसापरायणः ॥ १२ ॥ यजन्यज्ञैर्जगद्धंति स्वं चांधतमसं नयेत् ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ १३ ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ यद्यदा यजमानस्य ऋत्विजो द्रव्यमेव च ॥ १४ ॥ चौरप्रायस्य कलुषाज्जन्म जायेज्जनस्य हि ॥ अदक्षिणे वृथा यज्ञे कृते चाप्यविधानतः ॥ १५ ॥ पशवो लकुटैर्हन्युर्यजमानं मृतं हताः ॥ तस्माच्छुद्धैर्यवद्रव्यैर्यजमानः शुभः स्मृतः ॥ १६ ॥ यज्ञ एवं विचार्यासौ यज्ञसारं समास्थितः ॥ श्रद्धया देवपूजा या नमस्कारः स्तुतिः शुभा ॥ १७ ॥ नैवेद्यं हविषश्चैव यज्ञोऽयं हि विकल्मषः ॥ स एव यज्ञः प्रोक्तो वै येन तुष्यन्ति देवताः ॥ १८ ॥ केचिच्छंसन्ति संन्यासं नन्दभद्रो न मन्यते ॥ यो हि संन्यस्य विषयान्मनसा गृह्यते पुनः ॥ १९ ॥ उभयभ्रष्ट एवासौ भिन्ना भूमिर्विनश्यति ॥ संन्यासस्य तु यत्सारं तत्तेनावृतमुत्तमम् ॥ २० ॥ कस्यचिन्नैव कर्माणि शपते वा प्रशंसति ॥ नानामार्गस्थितांल्लोकांश्चन्द्रवल्लोयते क्षितौ ॥ २१ ॥ न द्वेष्टि नो कामयते न विरुद्धोऽनुरुध्यते ॥ समाश्मकांचनो धीरस्तुल्यनिंदात्मसंस्तुतिः ॥ २२ ॥ अभयः सर्वभूतेभ्यो यथांधबधिराकृतिः ॥ न कर्मणां फलाकांक्षा शिवस्याराधनं हि तत् ॥ २३ ॥ कारणाद्धर्ममन्विच्छन्न लोभं च ततश्चरन् ॥ २४ ॥ विविच्य नंदभद्रस्तत्सारं मोक्षेषु जगृहे ॥ कृषिं केचित्प्रशंसंति नंदभद्रो न मन्यते ॥ २५ ॥ यस्यां छिंदंति वृषणा वृषाणां चैव नासिकाम् ॥ कर्षयंति महाभारान्बध्नंति दमयंति च ॥२६॥

१ शरणं—गृहम्—इत्यर्थः । २ गृह्यते—गृह्णाति—इत्यर्थः । विकरणव्यत्ययोऽत्रार्षः । अस्य ग्रयादिगणपठितत्वाच्छ्ना भाव्यम् । परगत्र स्यना निर्देशः । ३ छिन्ना—इ० पा० । ४ लोकान्—इ० पा० । ५ न निर्वतं नरस्तेतत्सारं मोक्षेषु जगृहे—इ० पा० ।

बहुदंशमयान्देशान्नयंति बहुकर्दमान् ॥ वाहसंपीडिता धुर्याः सीदंत्यविधिना परे ॥ २७ ॥ मन्यंते भ्रूणहत्यापि विशिष्टा नास्य कर्मणः ॥ अघ्न्या इति गवां नाम श्रुतौ ताः पीडयेत्कथम् ॥ २८ ॥ भूमिं भूमिशयांश्चैव हंति काष्ठमयोमुखम् ॥ पंचेंद्रियेषु जीवेषु सर्वं वसति दैवतम् ॥ २९ ॥ आदित्यश्चंद्रमा वायुः प्रभृत्यैव च तांस्तु यः ॥ विक्रीणाति सुमूढस्य तस्य का नु विचारणा ॥ ३० ॥ अजोऽग्निर्वरुणो मेषः सूर्यश्च पृथिवी विराट् ॥ धेनुर्वत्सश्च सोमो वै विक्रीयैतान्न सिध्यति ॥ ३१ ॥ एवंविधसहस्रैश्च युता दोषैः कृषिः सदा ॥ अष्टागवं स्याद्धि हलं त्रिंशद्भागं त्यजेत्कृषेः ॥३२॥ धर्मे दद्यात्पशून्वृद्धान्पुष्यादेषां कृषिः कुतः ॥ सारमेतत्कृषेस्तेन नंदभद्रेण चाहृतम् ॥३३॥ विसाधितव्यान्यन्नानि स्वशक्त्या देवपितृषु ॥ मनुष्य द्विजभूतेषु नियुज्याश्नीत सर्वदा ॥ ३४ ॥ केचिच्छंसंति चैश्वर्यं नंदभद्रो न मन्यते ॥ मानुषा मानुषानेव दासभावेन भुंजते ॥ ३५ ॥ वधबंध निरोधेन पीडयंति दिवानिशम् ॥ देहं किमेतद्धातुः स्वं मातुर्वा जनकस्य वा ॥ ३६ ॥ मातुः पितुर्वा बलिनः क्रेतुरग्नेः शुनोऽपि वा ॥ इति संचिंत्य व्यहरन्नमरा इव ईश्वराः ॥३७॥ ऐश्वर्यमदपापिष्ठा महामद्यमदादयः ॥ ऐश्वर्यमदमत्तो हि नाँ पतित्वा हि माद्यति ॥ ३८ ॥ आत्मवत्सर्वभृत्येषु श्रिया नैव च माद्यति ॥ ३९ ॥ आत्मप्रत्ययवान्देही क्वेश्वरश्चेदृशोऽस्ति हि ॥ ऐश्वर्यस्यापि सारं स जग्राहैतन्निशामय ॥ ४० ॥ स्वशक्त्या सर्व भूतेषु यदसौ न पराङ्मुखः ॥ तीर्थायेके प्रशंसंति नंदभद्रो न मन्यते ॥ ४१ ॥ श्रमेण संकरात्तापशीतवातक्षुधा तृषा ॥ क्रोधेन धर्मगेहस्य नाँपि नाशमवाप्नुयात् ॥ ४२ ॥ सौख्येन वा धनस्यापि श्रद्धया स्वल्पगोर्थवान् ॥ समर्थो हि महत्पुण्यं शक्त आप्तुं क्व वास्ति सः ॥ ४३ ॥ सदा शुचि देवयाजी तीर्थसारं गृहेगृहे ॥ नापः पुनंति पापानि न शैला न महाश्रमाः ॥ ४४ ॥ आत्मा पुनाति पापानि यदि पापान्निवर्तते ॥ एवमेष समाचारं प्रादुर्भूतं ततस्ततः ॥ ४५ ॥ एकीकृत्य सदा धीमान्नंदभद्रः समास्थितः ॥ तस्यैवं वर्ततः साधोः स्पृहयंत्यपि देवताः ॥ ४६ ॥ वासवप्रमुखाः सर्वे विस्मयं च परं ययुः ॥ अत्रैव स्थानके चापि शूद्रोऽभूत्प्रतिवेश्मकः ॥ ४७ ॥ स नंदभद्रं धर्मिष्ठं पुनः पुनरसूयत ॥ नास्तिकः स दुराचारः सत्यव्रत इति श्रुतः ॥ ४८ ॥ स सदा नंदभद्रस्य विलोकयति चांतरम् ॥ छिद्रं चेदस्य पश्यामि ततो धर्मान्निवर्तये ॥ ४९ ॥ स्वभाव एव क्रूराणां नास्तिकानां दुरात्मनाम् ॥ आत्मानं पातयंत्येव पातयंत्यपरं च यत् ॥ ५० ॥ ततस्त्वेवं वर्ततोऽस्य नंदभद्रस्य धीमतः ॥ एकोऽभूत्त

१ पशूनेप वणिक्सुतः--इ० पा० । २ विसाधितव्यानि--विनियोज्यानि--इत्यर्थः । ३ नियुज्याश्नाति सर्वदा--इ०, नियुज्यान्नानि सर्वदा--इ० च पा० । ४ ना--नरः--इत्यर्थः । ५ ना--अपि--इति पदच्छेदः । नरः--अपि--इत्यर्थः । ६ स्वल्पगोर्थवान्--स्वल्पधेनुरूपार्थयुक्तः--इत्यर्थः । ७ व्यघात्--इ० पा० ।

नयः कष्टाद्धार्धिके सोऽप्यनश्यत ॥ ५१ ॥ तत्र द्रव्यक्षये भर्ता न शुशोच महामतिः ॥ देवो वा मानवो वापि को हि दैवाद्विमुच्यते ॥ ५२ ॥ ततो
ऽस्य सुप्रिया भार्या सर्वैः साध्वीगुणैर्युता ॥ गृहधर्मस्य मूर्तिर्या साक्षादिव अरुंधती ॥ ५३ ॥ विनाशमागता पार्थ कनकाजाख्य नामतः ॥ ततो
यतेंद्रियोऽप्येप गृहधर्मविनाशतः ॥ ५४ ॥ शुशोच हा कष्टमिति पापोहमिति चासकृत् ॥ तत्तस्य चांतरं दृष्ट्वाऽहृष्यत्सत्यव्रतश्चिरात् ॥ ५५ ॥
उपाव्रज्य च हा कष्टं ब्रुवंस्तं नंदभद्रकम् ॥ दधिकर्ण इवासाद्य नंदभद्रमुवाच सः ॥ ५६ ॥ हा नंदभद्र यद्येवं तवाप्येवंविधं फलम् ॥ एतेन मन्ये
मनसि धर्मोप्येप वृथैव यत् ॥ ५७ ॥ इत्यादि बहुधा प्रोच्य तद्वाक्यं ततस्ततः ॥ सत्यव्रतस्ततः प्राह नंदभद्रं कृपान्वितः ॥ ५८ ॥
नंदभद्र सदा तुभ्यं वक्तुकामोस्मि किंचन ॥ प्रस्तावस्याप्यभावाच्च नोदितं च मया क्वचित् ॥ ५९ ॥ अप्रस्तावं ब्रुवन्वाक्यं बृहस्पतिरपि
ध्रुवम् ॥ लभते बुद्ध्यवज्ञानमवमानं च हीनवत् ॥ ६० ॥ ॥ नन्दभद्र उवाच ॥ ॥ ब्रूहि ब्रूहि न मे किंचित्साधु गोप्यं प्रियं परम् ॥ वचोभिः
शुद्धसत्त्वानां न मोक्षोऽप्युपमीयते ॥ ६१ ॥ ॥ सत्यव्रत उवाच ॥ ॥ नवभिर्नवभिश्चैव विमुक्तं वाग्विदूपणैः ॥ नवभिर्बुद्धिदोपैश्च वाक्यं
वक्ष्याम्यदोपवत् ॥ ६२ ॥ सौक्ष्म्यं संख्याक्रमश्चापि निर्णयः सप्रयोजनः ॥ पंचैतान्यर्थजातानि यत्र तद्वाक्यमुच्यते ॥ ६३ ॥ धर्ममर्थं च कामं
च मोक्षं चोद्दिश्य चोच्यते ॥ प्रयोजनमिति प्रोक्तं प्रथमं वाक्यलक्षणम् ॥ ६४ ॥ धर्मार्थकाममोक्षेषु प्रतिज्ञाय विशेपतः ॥ इदं तदिति वाक्यांते
प्रोच्यते स विनिर्णयः ॥ ६५ ॥ इदं पूर्वमिदं पश्चाद्वक्तव्यं यत्क्रमेण हि ॥ क्रमयोगं तमप्याहुर्वाक्यतत्त्वविदो बुधाः ॥ ६६ ॥ दोपाणां च गुणानां
च प्रमाणं प्रविभागतः[1] ॥ उभयार्थमपि प्रेक्ष्य सा संख्येत्युपधार्यताम् ॥ ६७ ॥ वाक्यज्ञेयेषु भिन्नेषु यत्राभेदः प्रदृश्यते ॥ तत्रातिशयहेतुत्वं तत्सौ
क्ष्म्यमिति निर्दिशेत् ॥ ६८ ॥ इति वाक्यगुणानां च वाग्दोपान्द्विनव शृणु ॥ अपेतार्थमभिन्नार्थमपवृत्तं तथाधिकम् ॥ ६९ ॥ अश्लक्ष्णं चापि
संदिग्धं पदांते गुरु चाक्षरम् ॥ पराङ्मुखमुखं यच्च अनृतं चाप्यसंस्कृतम् ॥ ७० ॥ विरुद्धं यत्त्रिवर्गेण न्यूनं कष्टातिशब्दकम् ॥ व्युत्क्रमाभिहतं
यच्च सशेपं चाप्यहेतुकम् ॥ ७१ ॥ निष्कारणं च वाग्दोपान्बुद्धिजाञ्छृणु त्वं च यान् ॥ कामात्क्रोधाद्भयाच्चैव लोभाद्दैन्यादनार्यकात् ॥ ७२ ॥
हीनानुक्रोशतो मानान्न च वक्ष्यामि किंचन ॥ वक्ता श्रोता च वाक्यं च यदा त्वविकलं भवेत् ॥ ७३ ॥ सममेति विवक्षायां तदा सोऽर्थः प्रका
शते ॥ वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते ॥ ७४ ॥ श्रोता चाप्यथ वक्तारं तदा वाक्यं न रोहति ॥ अथ यः स्वप्रियं ब्रूयाच्छ्रोतुर्वोत्सृज्य

[1] प्रविभागशः—इ० पा० ।

यद्धतम् ॥ ७५ ॥ विशंका जायते तस्मिन्वाक्यं तदपि दोषवत् ॥ तस्माद्यः स्वप्रियं त्यक्त्वा श्रोतुश्चाप्यथ यत्प्रियम् ॥ ७६ ॥ सत्यमेव प्रभाषेत स वक्ता नेतरो भुवि ॥ मिथ्यावादाञ्छास्त्रजालसंभवान्यद्विहाय च ॥ ७७ ॥ सत्यमेव व्रतं यस्मात्तस्मात्सत्यव्रतस्त्वहम् ॥ सत्यं ते संप्रवक्ष्यामि मंतुमर्हसि तत्तथा ॥ ७८ ॥ यदाप्रभृति भद्र त्वं पाषाणस्यार्चने रतः ॥ तदाप्रभृति किंचिच्च न हि पश्यामि शोभनम् ॥ ७९ ॥ एकः सोऽपि सुतो नष्टो भार्या चार्याऽप्यनश्यत ॥ कूटानां कर्मणां साधो फलमेवंविधं भवेत् ॥ ८० ॥ क्व देवाः संति मिथ्यैतद्दृश्यंते चेद्भवंत्यपि ॥ सर्वा च कूटविप्राणां द्रव्यायैषा विकल्पना ॥ ८१ ॥ पितॄनुद्दिश्य यच्छंति मम हासः प्रजायते ॥ अन्नस्योपद्रवं यच्च मृतो हि किमशिष्यत ॥ ८२ ॥ यत्त्विदं बहुधा मूढा वर्णयंति द्विजाधमाः ॥ विश्वनिर्माणमखिलं तथापि शृणु सत्यतः ॥ ८३ ॥ उत्पत्तिश्चापि भंगश्च विश्वस्यैतद्द्वयं मृषा ॥ एवमेव हि सर्वं च सदिदं वर्तते जगत् ॥ ८४ ॥ स्वभावतो विश्वमिदं हि वर्तते स्वभावतः सूर्यमुखा भ्रमंत्यमी ॥ स्वभावतो वायवो वांति नित्यं स्वभावतो वर्षति चांबुदोऽयम् ॥ ८५ ॥ स्वभावतो रोहति धान्यजातं स्वभावतो वर्षशीतातपत्वम् ॥ स्वभावतः संस्थिता मेदिनी च स्वभावतः सरितः संस्रवंति ॥ ८६ ॥ स्वभावतः पर्वता भांति नित्यं स्वभावतो वारिधिरेष संस्थितः ॥ स्वभावतो गर्भिणी संप्रसूते स्वभावतोऽमी बहवश्च जीवाः ॥ ८७ ॥ यथा स्वभावेन भवंति वक्रा ऋतुस्वभावाद्बदरीषु कण्टकाः ॥ तथा स्वभावेन हि सर्वमेतत्प्रकाशते कोऽपि कर्ता न दृश्यः ॥ ८८ ॥ तदेवं संस्थिते लोके मूढो मुह्यति मत्तवत् ॥ मानुष्यमपि यद्धूर्ता वदंत्यग्र्यं शृणुष्व तत् ॥ ८९ ॥ मानुष्यान्न परं कष्टं वैरिणां नो भवेद्धि तत् ॥ शोकस्थानसहस्राणि मनुष्यस्य क्षणेक्षणे ॥ ९० ॥ मानुष्यं हि स्मृताकारं सभाग्योऽस्माद्विमुच्यते ॥ पशवः पक्षिणः कीटाः कृमयश्च यथासुखम् ॥ ९१ ॥ अबद्धा विहरंत्येते योनिरेषां सुदुर्लभा ॥ निश्चिंताः स्थावरा ह्येते सौख्यमेषां महद्भुवि ॥ ९२ ॥ बहुना किं मनुष्येभ्यः सर्वो धन्योऽन्ययोनिजः ॥ स्वभावमेव जानीहि पुण्यापुण्यादिकल्पना ॥ ९३ ॥ यदेके स्थावराः कीटाः पतंगा मानुषादिकाः ॥ तस्मान्मिथ्या परित्यज्य नंदभद्र यथासुखम् ॥ पिबे क्रीडनकैः सार्धं भोगान्सत्यमिदं भुवि ॥ ९४ ॥ ॥ नारद उवाच ॥ ॥ इत्यैतैरसुखैर्वाक्यैरयुक्तैरसमंजसैः ॥ ९५ ॥ सत्यव्रतस्य नाकम्पन्नंदभद्रो महामनाः ॥ प्रहसन्निव तं प्राह स्वक्षोभ्यः सागरो यथा ॥ ९६ ॥ यद्भवानाह धर्मिष्ठाः सदा दुःखस्य भागिनः ॥ तन्मिथ्या दुःखजालानि पश्यामः पापिनामपि ॥ ९७ ॥ वधबंधपरिक्लेशाः पुत्रदारादि

१ मनुष्यत्वे—इ० पा० । २ पिब क्रीड जलं भुंक्ष्व—इ० पा० । ३ असुखैः—असुखैः—न तु साधुजनाभिनंदनीयैः—इत्यर्थः ।

पंचता ॥ पापिनामपि दृश्यंते तस्माद्धर्मो गुरुर्मतः ॥ ९८ ॥ अयं साधुरहो कष्टं कष्टमस्य महाजनाः ॥ साधोर्वदंत्येतदपि पापिनां दुर्लभं त्विदम् ॥ ९९ ॥ दारादिद्रव्यलोभार्थं विशतः पापिनो गृहे ॥ भवानपि बिभेत्यस्माद्द्वेष्टि कुप्यति तद्वृथा ॥ १०० ॥ यथास्य जगतो नृपे नास्ति हेतुर्महेश्वरः ॥ तद्बालभापितं तुभ्यं किं राजानं विना प्रजाः ॥ १०१ ॥ यच्च ब्रवीषि पाषाणं मिथ्या लिंगं समर्चसि ॥ तद्भवाँल्लिंगमाहात्म्यं वेत्ति नांधो यथा रविम् ॥ १०२ ॥ ब्रह्मादयः सुरा सर्वे राजानश्च महर्द्धिकाः ॥ मानवा मुनयश्चैव सर्वे लिंगं यजंति च ॥ ॥ १०३ ॥ स्वनामकानि चिह्नानि तेषां लिंगानि संति च ॥ एते किं त्वभवन्मूर्खास्त्वं तु सत्यव्रतः सुधीः ॥ १०४ ॥ प्रतिष्ठाप्य पुरा ब्रह्मा पुष्करे नीललोहितम् ॥ प्राप्तवान्परमां सिद्धिं ससर्जेमाः प्रजाः प्रभुः ॥ १०५ ॥ विष्णुनापि निहत्याजौ रावणं पयसांनिधेः ॥ तीरे रामेश्वरं लिंगं स्थापितं चास्ति किं मुधा ॥ १०६ ॥ वृत्रं हत्वा पुरा शक्रो महेंद्रे स्थाप्य शंकरम् ॥ लिंगं विमुक्तपापोऽथ त्रिदिवेप्यापि मोदते ॥ १०७ ॥ स्थापयित्वा शिवं सूर्यो गंगासागरसंगमे ॥ निरामयोऽभूत्सोमश्च प्रभासे पश्चिमोदधौ ॥ १०८ ॥ काश्यां यमश्च धनदः सह्ये गरुडकश्यपौ ॥ नैमिषे वायुवरुणौ स्थाप्य लिंगं प्रमोदिताः ॥ १०९ ॥ अस्मिन्नेव स्तंभतीर्थे कुमारेशं गुहो विभुः ॥ लिंगं संस्थापयामास सर्वपापहरं न किम् ॥ ११० ॥ एवमन्यैः सुरैर्यानि पार्थिवैर्मुनिभिस्तथा ॥ संस्थापितानि लिंगानि तत्र संख्यातुमुत्सहे ॥ १११ ॥ पृथिवीवासिनः सर्वे ये च स्वर्गनिवासिनः ॥ पातालवासिनस्तृप्ता जायंते लिंगपूजया ॥ ११२ ॥ यच्च ब्रवीषि गीर्वाणा न संति सन्ति चेत्कुतः ॥ कुत्रापि नैव दृश्यंते तेन मे विस्मयो महान् ॥ ११३ ॥ रंकवत्किं स्म ते देवा याचंतां त्वां कुलत्थवत् ॥ यमिच्छसि महाप्राज्ञ साधको हि गुरुस्तव ॥११४॥ स्वभावान्नैव सर्वार्थाः संसिद्धा यदि ते मते ॥ भोजनादि कथं सिध्येद्वद कर्तारमंतरा ॥ ११५ ॥ बदरीमंतरेणापि दृश्यंते कण्टका न हि ॥ तस्मात्कस्यास्ति निर्माणं यस्य यावत्तथैव तत् ॥ ११६ ॥ यच्च ब्रवीषि पश्वाद्याः सुखिनो धन्यकास्त्वमी ॥ त्वदृते नेदमुक्तं च केनापि श्रुतमेव वा ॥११७॥ तामसा विकला ये च कष्टं तेषां च श्लाघ्यताम् ॥ सर्वेंद्रिययुताः श्रेष्ठाः कुतो धन्या न मानुषाः ॥११८॥ सत्यं तव व्रतं मन्ये नरकाय त्वयाऽऽहृतम् ॥ अत्यनर्थे न भीः कार्या कामोयं भविताचिरात् ॥ ११९ ॥ आदावाडंबरेणैव ध्रुवतोऽज्ञानमेव मे ॥ इत्थं निःसारता व्यक्तमादावाडंबरात्तु यत् ॥ १२० ॥ मायाविनां हि ब्रुवतां वाक्यं चाडंबरावृतम् ॥ कुनाणकमिवोद्दीप्तं परीक्षेयं सदा संताम् ॥ १२१ ॥ आदौ

१ मता—इ०पा०।

मध्ये तथा चांते येषां वाक्यमदोषवत् ॥ कषदाहैः स्वर्णमिव च्छेदेऽपि स्याच्छुभं शुभम् ॥ १२२ ॥ त्वयान्यथा प्रतिज्ञातमुक्तं चैवान्यथा पुनः ॥ त्वद्दोषो नायमस्माकं तद्वचः शृणुमो हि ये ॥ १२३ ॥ नास्तिकानां च सर्पाणां विषस्य च गुणस्त्वयम् ॥ मोहयंति परं यच्च दोषो नैष परस्य तु ॥ १२४ ॥ आपो वस्त्रं तिलास्तैलं गंधो वा स यथा तथा ॥ पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ १२५ ॥ मोहजालस्य यो योनिर्मूढैरिह समागमः ॥ अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ १२६ ॥ तस्मात्प्राज्ञैश्च वृद्धैश्च शुद्धभावैस्तपस्विभिः ॥ सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ १२७ ॥ न नीचैर्नाप्यविद्वद्भिर्नानात्मज्ञैर्विशेषतः ॥ येषां त्रीण्यवदातानि योनिर्विद्या च कर्म च ॥ १२८ ॥ तांश्च सेवेद्विशेषेण शास्त्रं येषां हि विद्यते ॥ असतां दर्शनस्पर्शसंजल्पासनभोजनैः ॥ १२९ ॥ धर्माचारात्प्रहीयंते न च सिध्यंति मानवाः ॥ बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ॥ १३० ॥ मध्यैश्च मध्यतां याति श्रेष्ठतां याति चोत्तमैः ॥ इति धर्मं स्मरन्नाहं संगमार्थी पुनस्तव ॥ यन्निन्दसि द्विजानेव यैरपेयोऽर्णवः कृतः ॥ १३१ ॥ वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थयुक्तं वचनं प्रमाणम् ॥ नैतत्त्रयं यस्य भवेत्प्रमाणं कस्तस्य कुर्याद्वचनं प्रमाणम् ॥ १३२ ॥ इतीरयित्वा वचनं महात्मा स नंदभद्रः सहसा तदैव ॥ गृहाद्विनिःसृत्य जगाम पुण्यं बहूदकं भद्दरवेस्तु कुंडम् ॥ १३३ ॥ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखंडे कपिलेश्वरतीर्थमाहात्म्ये नंदभद्रवणिग्वृत्तान्तवर्णनं नाम पञ्चचत्वारिंशत्तमोऽध्यायः ॥ ४५ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ बहूदकस्य कुंडस्य तीरस्थं लिंगमुत्तमम् ॥ कपिलेश्वरमभ्यर्च्य नंदभद्रस्ततः सुधीः ॥ १ ॥ प्रणम्य चाग्रतस्तस्थौ प्रबद्धकरसंपुटः ॥ संसारचरितैः किंचिद्दुःखी गाथां व्यगायत ॥ २ ॥ स्रष्टारमस्य जगतश्चेत्पश्यामि सदाशिवम् ॥ नानापृच्छाभिरथ तं कुर्यां नाथं विलज्जितम् ॥ ३ ॥ अपूर्यमाणं तव किं जगत्संसृजनं विना ॥ निरीह बहुधा यत्ते सृष्टं भार्गववज्जगत् ॥ ४ ॥ सचेतनेन शुद्धेन रागादिरहितेन च ॥ अथ कस्मादात्मसदृशं न सृष्टं निर्मितं जडम् ॥ ॥ ५ ॥ निर्वैरेण समेनाथ सुखदुःखभवाभवैः ॥ ब्रह्मादिकीटपर्यन्तं किमेवं क्लिश्यते जगत् ॥ ६ ॥ कांश्चित्स्वर्गेऽथ नरके पातयंस्त्वं सदाशिव ॥ किं फलं समवाप्नोपि किमेवं कुरुषे वद ॥ ७ ॥ इष्टैः पुत्रादिभिर्नाथ वियुक्ता मानवा ह्यमी ॥ क्रंदंति करुणासार किं घृणापि भवेन्न ते ॥ ८ ॥ अतीव नोचितं सर्वमेतदीश्वर सर्वथा ॥ यत्ते भक्ताः समं पापैर्मज्जंते दुःखसागरे ॥ ९ ॥ एवंविधेन संसारचारित्रेण विमोहिताः ॥ स्थानांतरं न यास्यामि भोक्ष्ये पास्यामि नोदकम् ॥ १० ॥ मरणांतमेव यास्यामि स्थास्ये संचिंतयन्नदः ॥ स एवं विमृशन्नेव नंदभद्रः स्वयं

१ अत्यन्तम्--इ०पा० । २ तुभ्यम्--इ०पा० ।

स्थितः ॥ ११ ॥ ततश्चतुर्थे दिवसे बहूदकतटे शुभे ॥ कश्चिद्बालः सप्तवर्षः पीडापीडित आययौ ॥ १२ ॥ कृशोतीव गलत्कुष्ठी प्रमुह्यंश्च पदेपदे ॥ नंदभद्रमुवाचेदं कृच्छ्रात्संस्तभ्य बालकः ॥ १३ ॥ अहो सुरूपसर्वांग कस्माद्दुःखी भवानपि ॥ ततोस्य कारणं सर्वं व्याचष्ट नंदभद्रकः ॥ १४ ॥ श्रुत्वा तत्कारणं सर्वं बालो दीनमना ब्रवीत् ॥ अहो हा कष्टमत्युग्रं बुधानां यदबुद्धिता ॥ १५ ॥ संपूर्णेंद्रिय गात्रा यन्मर्तुमिच्छंति वै वृथा ॥ मुहूर्तार्द्धचत्र खट्वांगो मोक्षमार्गमुपागतः ॥ १६ ॥ तदहो भारतं खंडं सत्यायुषि त्यजेद्धि कः ॥ अहमेव दृढो मन्ये पितृभ्यां यो विवर्जितः ॥ १७ ॥ अशक्तश्चलितुं वापि मर्तुमिच्छामि नापि च ॥ सर्वे लाभाः सातिमाना इति सत्या बत श्रुतिः ॥ १८ ॥ संतोपोऽप्युचितस्तुभ्यं देहं यस्य दृढं त्विदम् ॥ शरीरं नीरुजं चेन्मे भवेदपि कथंचन ॥ १९ ॥ क्षणेक्षणे च तत्कुर्यां भुज्यते यद्युगेयुगे ॥ इंद्रियाणि वशे यस्य शरीरं च दृढं भवेत् ॥ २० ॥ सोऽप्यन्यदिच्छते चेच्च कोऽन्यस्तस्मादचेतनः ॥ शोकस्थानसहस्राणि हर्ष स्थानशतानि च ॥ २१ ॥ दिवसे दिवसे मूढमाविशंति न पंडितम् ॥ न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु ॥ २२ ॥ मूलघातिषु सज्जंते बुद्धि मंतो भवद्विधाः ॥ अष्टांगां बुद्धिमाहुर्यां सर्वाश्रेयोविघातिनीम् ॥ २३ ॥ श्रुतिस्मृत्यविरुद्धा सा बुद्धिस्त्वय्यस्ति निर्मला ॥ अथ कृच्छ्रेषु दुर्गेषु व्यांपत्सु स्वजनस्य च ॥ २४ ॥ शारीरमानसैर्दुःखैर्न सीदंति भवद्विधाः ॥ नाप्राप्यमभिवांछंति नष्टं नेच्छंति शोचितुम् ॥ २५ ॥ आपत्सु च न मुह्यंति नराः पंडितबुद्धयः ॥ मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्पितं जगत् ॥ २६ ॥ तयोर्व्याससमासाभ्यां शमोपायमिमं शृणु ॥ [१]व्याधेरनिष्टसं स्पर्शाच्छ्रमादिष्टविसर्जनात् ॥ २७ ॥ चतुर्भिः कारणैर्दुःखं शारीरं मानसं च यत् ॥ मानसं चाप्यप्रियस्य संयोगः प्रियवर्जनम् ॥ २८ ॥ द्विप्रकारं महाकष्टं द्वयोरेतदुदाहृतम् ॥ मानसेन हि दुःखेन शरीरमुपतप्यते ॥ २९ ॥ अयःपिंडेन तप्तेन कुंभसंस्थमिवोदकम् ॥ तदाशु प्रति काराच्च सततं च विवर्जनात् ॥ ३० ॥ व्याधेराधेश्च प्रशमः क्रियायोगद्वयेन तु ॥ मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवांबुना ॥ ३१ ॥ प्रशांते मानसे ह्यस्य शारीरमुपशाम्यति ॥ मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ॥ ३२ ॥ स्नेहाच्च सज्जनो नित्यं जन्तुर्दुःखमुपैति च ॥स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ॥ ३३ ॥ शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ ३४ ॥ स्नेहात्करणरागश्च प्रजज्ञे वैषयस्तथा ॥ अश्रेयस्कावुभावेतौ पूर्व स्तत्र गुरुः स्मृतः ॥ ३५ ॥ त्यागी तस्मान्न दुःखी स्यान्निर्वैरो निरवग्रहः ॥ अत्यागी जन्ममरणे प्राप्नोतीह पुनःपुनः ॥ ३६ ॥ तस्मात्स्नेहं न

१ अडभाव आर्षः । २ व्यापत्सु—इ० पा० ।

लिप्सेत मित्रेभ्यो धनसंचयात् ॥ स्वशरीरसमुत्थं च ज्ञानेन विनिवर्तयेत् ॥ ३७ ॥ ज्ञानान्वितेषु सिद्धेषु शास्त्रज्ञेषु कृतात्मसु ॥ न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३८ ॥ रागाभिभूतः पुरुषः कामेन परिकृष्यते ॥ इच्छा संजायते चास्य ततस्तृष्णा प्रवर्धते ॥ ३९ ॥ तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी मता ॥ अधर्मबहुला चैव घोररूपानुबंधिनी ॥ ४० ॥ या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ॥ यासौ प्राणांतिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ ४१ ॥ अनाद्यंता तु सा तृष्णा ह्यंतर्देहगता नृणाम् ॥ विनाशयति संभूता लोहं लोहमलो यथा ॥ ४२ ॥ यथैवैधः समुत्थेन वह्निना नाशमृच्छति ॥ तथाऽकृतात्मा लोभेन स्वोत्पन्नेन विनश्यति ॥ ४३ ॥ तस्माल्लोभो न कर्तव्यः शरीरे चात्मबंधुषु ॥ प्राप्तेषु वा न हृष्येत नाशे वापि न शोचयेत् ॥ ४४ ॥ ॥ नंदभद्र उवाच ॥ ॥ अहो बाल न बालस्त्वं मतो मे त्वां नमाम्यहम् ॥ त्वद्वाक्यैरतितृप्तोऽहं त्वां तु प्रक्ष्यामि किंचन ॥ ४५ ॥ कामक्रोधावहंकारमिंद्रियाणि च मानवाः ॥ निंदंति तत्र मे नित्यं विवक्षेयं प्रजायते ॥ ४६ ॥ अहमेष ममेदं च कार्यमीदृशकस्त्वहम् ॥ इत्यादि चात्मविज्ञानमहंकार इति स्मृतः ॥ ४७ ॥ परिहार्यः स चेत्तं च विनोन्मत्तः प्रकीर्त्यते ॥ कामोऽभिलाष इत्युक्तः स चेत्पुंसा विवर्ज्यते॥४८॥कथं स्वर्गो मुमुक्षा वा साध्यते दृषदा यथा॥क्रोधो वा यदि संत्याज्यस्ततः शत्रुक्षयः कथम्॥४९॥बाह्यानामांतराणां वा विना तं तृणवद्विदुः ॥ इंद्रियाणि निगृह्यैव दुष्टानीति निपीडयेत् ॥ ५० ॥ कथं स्याद्धर्मश्रवणं कथं वा जीवनं भवेत् ॥ एतस्मिन्मे मनो विद्धं खिद्यतेऽज्ञानसंकटे ॥५१॥ तथा कस्मादिदं सृष्टं जडं विश्वं चिदात्मना ॥ एवं यद्बहुधा क्लेशैः पीड्यते हा कुतस्त्विदम् ॥ ५२ ॥ ॥ बाल उवाच ॥ ॥ सम्यगेतद्यथा पृष्टं यत्र मुह्यंति जंतवः ॥ शृण्वेकाग्रमना भूत्वा ज्ञातं द्वैपायनान्मया ॥ ५३ ॥ प्रकृतिः पुरुषश्चैव अनादी शृणुमः पुरा ॥ साधर्म्येणावतिष्ठेते सृष्टेः प्रागजरामरौ ॥ ५४ ॥ ततः कालस्वभावाभ्यां प्रेरिता प्रकृतिः पुरा ॥ पुंसः संयोगमैच्छत्सा तदभावात्प्रकुप्यत ॥ ५५ ॥ ततस्तमोमयी सा च लीलया देववीक्षिता ॥ राजसी समभूद्दृष्टा सात्त्विकी समजायत ॥ ५६ ॥ एवं त्रिगुणतां याता प्रकृतिर्देवदर्शनात् ॥ तां समास्थाय परमस्त्रिमूर्तिः समजायत ॥ ५७ ॥ तस्याः प्रोच्चारणार्थं च प्रवृत्तः स्वांशतस्ततः ॥ असूयत महत्तत्त्वं त्रिगुणं तद्विदुर्बुधाः ॥ ५८ ॥ अहंकारस्ततो जातः सत्त्वराजसतामसः ॥ तमो रजस्त्वमापद्य रजः सत्त्वगुणं नयेत् ॥ ५९ ॥ शुद्धसत्त्वे ततो मोक्षं प्रवदंति मनीषिणः ॥ तमसो रजसस्त

१ स्वतः--इत्यध्याहारः । स्वतः स्वस्मात्--समुत्थेन--उत्पन्नेन--इत्यर्थः । २ तथा जनोऽयम्--इ० पा० । ३ इत्येपु वा न हृष्येत प्राप्तौ वा न च शोचयेत्--इ० पा० । ४ त्रिधम्--इ० पा० । ५ संयोगमैच्छेत्तेन--इ० पा० । ६ अडभाव आर्षः ।

स्मात्संशुद्ध्यर्थं च सर्वशः ॥ ६० ॥ जीवात्मसंज्ञान्स्वीयांशान्व्यभजत्परमेश्वरः ॥ तावंतस्ते च क्षेत्रज्ञा देहा यावंत एव हि ॥ ६१ ॥ निःसरंति यथा लोहात्तप्तद्लिंगात्स्फुलिंगकाः ॥ तन्मात्रभूतसर्गोयमहंकाराच्च तामसात् ॥ ६२ ॥ इंद्रियाणां सात्त्विकाच्च त्रिगुणानि च तान्यपि ॥ एतैः संसिद्ध्यंत्रेण सच्चिदानन्दवीक्षणात् ॥ ६३ ॥ रजस्तमश्च शोध्यंते सत्त्वेनैव मुमुक्षुभिः ॥ तस्मात्कामं च क्रोधं च इंद्रियाणां प्रवर्तनम् ॥ ६४ ॥ अहंकारं च संसेव्य सात्त्विकीं सिद्धिमश्नुते ॥ राजसास्तामसाश्चैव त्याज्याः कामादयस्त्वमी ॥ ६५ ॥ सात्त्विकाः सर्वदा सेव्याः संसारविजिगीषुभिः ॥ गुणत्रयस्य वक्ष्यामि संक्षेपाल्लक्षणं तव ॥ ६६ ॥ शास्त्राभ्यासस्ततो ज्ञानं शौचमिंद्रियनिग्रहः ॥ धर्मक्रियात्मचिंता च सात्त्विकं गुणलक्षणम् ॥ ६७ ॥ अन्यायेन धनादानं तंद्री[3] नास्तिक्यमेव च ॥ क्रौर्यं च याचकाद्यं च तामसं गुणलक्षणम् ॥ ६८ ॥ तस्माद्बुद्धिसुखैस्त्वंतैः सात्त्विकैर्देवतां भजेत् ॥ राजसैर्मानवत्वं च तामसैः स्थाणुयोनिता ॥ ६९ ॥ बुद्ध्याद्यैरेव मुक्तिः स्यादेतैरेव च यातना ॥ ७० ॥ अमीषां चाप्यभावे वै न किंचिदुपपद्यते ॥ कलादो हि कलादीनां सुवर्णं शोधयेद्यथा ॥ ७१ ॥ तथा रजस्तमश्चैव संशोध्ये सात्त्विकैर्गुणैः ॥ अस्मादेव गुणानां च समवायादनादिजात् ॥ ७२ ॥ सुखिनो दुःखिनश्चैव प्राणिनः शास्त्रदर्शिनः ॥ अष्टाविंशतिलक्षैश्च गुणमेकैकमीश्वरः ॥ ७३ ॥ व्यभजच्चतुराशीतिलक्षास्ता जीवयोनयः ॥ सकाशान्मनसस्तद्वदात्मनः प्रभवंति हि ॥ ७४ ॥ ईश्वरांशाश्च ते सर्वे मोहिताः प्राकृतैर्गुणैः ॥ क्लेशानासादयंत्येव यथैवाधिकृता विभोः ॥७५॥ अन्नानां पयसां चापि जीवानां चाथ श्रेयसे ॥ मानुष्यमाहुस्तत्त्वज्ञाः शिवभावेन भावितम् ॥ ७६ ॥ ॥ नंदभद्र उवाच ॥ ॥ एवमेतत्किं तु भूयः प्रक्ष्याम्येतन्महामते ॥ ईश्वराः सर्वदातारः पूज्यंते यैश्च देवताः ॥ ७७ ॥ स्वभक्तांस्तान्न दुःखेभ्यः कस्माद्रक्षंति मानवान् ॥ विशेषात्केपि दृश्यंते दुःखमग्नाः सुरान्नताः ॥७८॥ इति मे मुह्यते बुद्धिस्त्वं वा किं बाल मन्यसे ॥७९॥ ॥ बाल उवाच ॥ ॥ अशुचिश्च शुचिश्चापि देवभक्तो द्विधा स्मृतः ॥ कर्मणा मनसा वाचा तद्गतो भक्त उच्यते ॥ ८० ॥ अशुचिर्देवताश्चैव यदा पूजयते नरः ॥ तदा भूतान्याविशंति स च मुह्यति तत्क्षणात् ॥ ८१ ॥ विमूढश्चाप्यकार्याणि तानि तानि निषेवते ॥ ततो विनश्यति क्षिप्रं नाशुचिः पूजयेत्ततः ॥ शुचिर्वाभ्यर्चयेद्यश्च तस्य चेदशुभं भवेत् ॥ ८२ ॥ तस्य पूर्वकृतं व्यक्तं कर्मणां कोटि मुच्यते ॥ महेश्वरो ब्रह्महत्याभयाद्यत्र ततस्ततः ॥ ८३ ॥ सस्नौ तीर्थेषु कस्माच्च इतरो मुच्यते कथम् ॥ अम्बरीषसुतां हृत्वा पर्वतान्नारदात्तथा ॥ ८४ ॥ सीतापहारमापेदे रामोऽन्यो मुच्यते कथम् ॥ ब्रह्मापि

१ सर्वथा--इ० पा० । २ प्रवर्धनम्--इ० पा० । ३ तंत्रनास्तिक्यमेव च--इ० पा० । ४ कलादः--सुवर्णकारः । ५ कोटि--इति--नपुंसकमत्र । कोटिः--मुच्यते--इत्ययमर्थः ।

शिरसश्छेदं कामयित्वा सुतामगात् ॥ ८५ ॥ इंद्रचंद्ररविविष्णुप्रमुखाः प्राप्नुयुः कृतम् ॥ तस्मादवश्यं च कृतं भोज्यमेव नरैः सदा ॥ ८६ ॥ मुच्यते कोऽपि स्वकृतान्नैवेति श्रुतिनिर्णयः ॥ किं तु देवप्रसादेन लभ्यमेकं सुखतैः ॥ ८७ ॥ बहुभिर्जन्मभिर्भोज्यं भुज्येतैकेन जन्मना ॥ तच्च भुक्तात तस्त्वर्थो भवेदिति विनिश्चयः ॥ ८८ ॥ ये तप्यंते गतैः पापैः शुचयो देवताव्रताः ॥ इह ते पुत्रपौत्रैश्च मोदंतेऽमुत्र चेह च ॥ ८९ ॥ तस्मा देवाः सदा पूज्याः शुचिभिः श्रद्धयान्वितैः ॥ प्रकृतिः शोधनीया च स्ववर्णोदितकर्मभिः ॥ ९० ॥ स्वनुष्ठितोऽपि धर्मः स्यात्क्लेशायैव विना शिवम् ॥ दुराचारस्य देवोपि प्राहेति भगवान्हरः ॥ ९१ ॥ भोक्तव्यं स्वकृतं तस्मात्पूजनीयः सदाशिवः ॥ स्वाचारेण परित्याज्यौ रागद्वेषाविदं परम् ॥ ९२ ॥ ॥ नन्दभद्र उवाच ॥ ॥ शुद्धप्रज्ञ किमेतच्च पापिनोऽपि नरा यदा ॥ मोदमानाः प्रदृश्यन्ते दारैरपि [1]धनैरपि ॥ ९३ ॥ ॥ बाल उवाच ॥ ॥ व्यक्तं तैस्तमसा दत्तं दानं पूर्वेषु जन्मसु ॥ रजसा पूजितः शंभुस्तत्प्राप्तं स्वकृतं च तैः ॥ ९४ ॥ किं तु यत्तमसा कर्म कृतं तस्य प्रभावतः ॥ धर्माय न रतिर्भूयात्ततस्तेषां विदांवर ॥ ९५ ॥ भुक्त्वा पुण्यफलं याति नरकं नात्र संशयः ॥ अस्मिंश्च संशये प्रोक्तं मार्कंडेयेन श्रूयते ॥ ९६ ॥ इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ॥ इह चामुत्र चैकस्य नामुत्रैकस्य नो इह ॥ ९७ ॥ पूर्वोपात्तं भवेत्पुण्यं भुक्तिर्नैवार्जयन्त्यपि ॥ इह भोगः स वै प्रोक्तो दुर्भगस्याल्पमेधसः ॥९८॥ पूर्वोपात्तं यस्य नास्ति तपोभिश्चार्जयत्यपि ॥ परलोके तस्य भोगो धीमतः स क्रियात्स्फुटम् ॥ ९९ ॥ पूर्वोपात्तं यस्य नास्ति पुण्यं चेहापि नार्जयेत् ॥ ततश्चेहामुत्र वापि भो धिक्तं च नराधमम् ॥ १०० ॥ इति ज्ञात्वा महाभाग त्यक्त्वा शल्यानि कृत्स्नशः ॥ भज रुद्रं वर्णधर्मं पालयास्मात्परं न हि ॥ १०१ ॥ यो हि नष्टेष्वभीष्टेषु प्राप्तेष्वपि च शोचति ॥ [3]तृप्येत वा भवेद्बन्धो निश्चितं सोऽन्यजन्मनः ॥ १०२ ॥ ॥ नन्दभद्र उवाच ॥ ॥ नमस्तुभ्यमबालाय बालरूपाय धीमते ॥ को भवांस्तत्वतो वेत्तुमिच्छामि त्वां शुचिस्मितम् ॥ १०३ ॥ बहवोऽपि मया वृद्धा दृष्टाश्चोपासिताः सदा ॥ तेषामीदृशका बुद्धिर्न दृष्टा न श्रुता मया ॥ १०४ ॥ येन मे जन्मसंदेहा नाशिता लीलयैव च ॥ तस्मात्सामान्यरूपस्त्वं निश्चितं न मतं मम ॥ १०५ ॥ ॥ बाल उवाच ॥ महदेतत्समाख्येयमेकाग्रः शृणु तत्त्वतः ॥ इतः सप्ताधिके चापि सप्तमे जन्मनि त्वहम् ॥ १०६ ॥ वैदिशे नगरे विप्रो नाम्नाऽऽसं धर्मजालिकः ॥ वेदवेदांगतत्त्वज्ञः स्मृतिशास्त्रार्थविद्वरः ॥ १०७ ॥ व्याख्याता धर्मशास्त्राणां यथा साक्षाद्बृहस्पतिः ॥ किं त्वहं विविधान्धर्माँल्लोकानां

१ ततः स्वर्यम्--इ०पा० । २ तदा--इ०पा० । ३ हृष्येत--इ०पा० ।

वर्णये भृशम् ॥ १०८ ॥ स्वयं चातिदुरन्नचारः पापिनामपि पापराट् ॥ मांसाशी मद्यसेवी च परदाररतः सदा ॥ १०९ ॥ असत्यभाषी दम्भी च सदा धर्मध्वजी खलः ॥ लोभी दुरात्मा कथको न कर्ता कर्हिचित्क्वचित् ॥ ११० ॥ यस्माज्जालिकवज्जालं लोकेभ्योऽहं क्षिपामि च ॥ तत्त्वज्ञा मां ततः प्राहुर्धर्मजालिक इत्युत ॥ १११ ॥ सोऽहं तैर्बहुभिश्चीर्णैः पातकैरंत आगते ॥ मृतो गतो यमस्थानं पातितः कूटशाल्मलीम् ॥ ११२ ॥ यमदूतैस्ततः कृष्टः स्मार्यमाणः स्वचेष्टितम् ॥ खड्गैश्च कृत्यमानोऽहं जीवामि प्रमियामि च ॥ ११३ ॥ आत्मानं बहुधा निंदञ्छाश्वतीर्न्यवसं समाः ॥ नरके या मतिर्भूयाद्धर्मं प्रति प्रपीडतः ॥ ११४ ॥ सा चेन्मुहूर्तमात्रं स्यादपि धन्यस्ततः पुमान् ॥ नमोनमः कर्मभूम्यै सुकृतं दुष्कृतं च वा ॥ ११५ ॥ यस्यां मुहूर्तमात्रेण युगैरपि न नश्यति ॥ ततो विपश्चिज्जनको मोक्षयामास नारकात् ॥ ११६ ॥ तैः सहाहं प्रमुक्तश्च कथंचिदवपीडितः ॥ स्थाणुत्वमनुभूयाथ क्लेशानासाद्य भूरिशः ॥ ११७ ॥ कीटोहमभवं पश्चात्तीरे सारस्वते शुभे ॥ तत्र मार्गे सुखमिव संसुप्तोहं यदृच्छया ॥ ११८ ॥ आगच्छतो रथस्यास्य शब्दमश्रौषमुन्नतम् ॥ तं मेघनिनदं श्रुत्वा भीतोहं सहसा जवात् ॥ ११९ ॥ मार्गमुत्सृज्य दूरेण प्रपलायनमाचरम् ॥ एतस्मिन्नंतरे व्यासस्तत्र प्राप्तो यदृच्छया ॥ १२० ॥ स मामपश्यत्त्रस्तं च कृपया संयुतो मुनिः ॥ यन्मया सर्वलोकानां नानाधर्माः प्रकीर्तिताः ॥ १२१ ॥ विप्रजन्मनि तस्यैव प्रभावाद्व्याससंगमः ॥ ततः सर्वरुतज्ञो मां प्राहाचार्यः कीटभाषया ॥ ॥ १२२ ॥ किमेवं नश्यसे कीट कस्मान्मृत्योर्बिभेषि च ॥ अहो समुचिता भीतिर्मनुष्यस्य कुतस्तव ॥ १२३ ॥ इत्युक्तो मतिमान्पूर्वपुण्याद्व्यासं तदोचिवान् ॥ न मे भयं जगद्वंद्य मृत्योरस्मात्कथंचन ॥ १२४ ॥ एतदेव भयं मान्य गच्छेयमधमां गतिम् ॥ अस्या अपि कुयोनेश्च संत्यन्याः कोटिशोऽधमाः ॥ १२५ ॥ तासु गर्भादिकक्लेशभीतस्त्रस्तोऽस्मि नान्यथा ॥ १२६ ॥ ॥ व्यास उवाच ॥ ॥ मा भयं कुरु सर्वाभ्यो योनिभ्यश्च चिरादिव ॥ मोक्षयिष्यामि ब्राह्मण्यं प्रापयिष्यामि निश्चितम् ॥ १२७ ॥ इत्युक्तोहं कालियेन तं प्रणम्य जगद्गुरुम् ॥ मार्गमागत्य चक्रेण पीडितो मृत्युमागमम् ॥ १२८ ॥ ततः काकशृगालादियोनिष्वस्मि यदाऽभवम् ॥ तदातदा समागम्य व्यासो मां स्मारयच्च तत ॥ १२९ ॥ ततो बहुविधा योनीः परिक्रम्यास्मि कर्षितः ॥ ब्राह्मणस्य च गेहेस्यां योनौ जातोऽतिदुःखितः ॥ १३० ॥ ततो जन्मप्रभृत्यस्मि पितृभ्यां परिवर्जितः ॥ गलत्कुष्ठी महापीडामेतां योऽनुभवामि च ॥ १३१ ॥ ततो मां पंचमे वर्षे व्यास आगत्य जप्तवान् ॥ कर्णे सारस्वतं मंत्रं तेनाहं संस्म

१ उत्तमम्–इ० पा० । २ तत्रस्थम्–इ० पा० । ३ यावन्नेष्यामि–इ० पा० । ४ कालियोऽत्र व्यासो बोध्य इति प्रतिभाति ।

रामि च ॥ १२२ ॥ अनधीतानि शास्त्राणि वेदान्धर्मांश्च कृत्स्नशः ॥ उक्तं व्यासेन चेदं मे गच्छ क्षेत्रं गुहस्य च ॥ तत्र त्वं नंदभद्रं च आश्वासय महामतिम् ॥ १२३ ॥ त्यक्त्वा बहूदके प्राणानस्थिक्षेपं महीजले ॥ कारायत्व त्वं ततो भावी मैत्रेय इति सन्मुनिः ॥ १२४ ॥ गमिष्यसि ततो मोक्षमिति मां व्यास उक्तवान् ॥ आगतश्च ततश्चात्र वाहीकेभ्योऽतिक्लेशतः ॥ १२५ ॥ इति ते कथितं सर्वमात्मनश्चरितं मया ॥ पापमेवंविधं कष्टं नंदभद्र सदा त्यज ॥ १२६ ॥ ॥ नंदभद्र उवाच ॥ ॥ अहो महाद्भुतं तुभ्यं चरितं येन मे हृदि ॥ भूयः शतगुणं जातं धर्माय दृढमानसम् ॥ १२७ ॥ किं तु त्वयोक्तधर्मस्य कर्तुकामोस्मि निष्कृतिम् ॥ धर्मं स्मर भवांस्तस्मात्किंचिदादिश निश्चितम् ॥ १२८ ॥ ॥ ॥ बाल उवाच ॥ ॥ अत्र तीर्थे च सप्ताहं निराहारस्त्वहं स्थितः ॥ सूर्यमंत्राञ्जमिष्यामि त्यक्ष्यामि च ततस्त्वसून् ॥ १२९ ॥ ततो बर्करिकातीर्थे दग्धव्योहं त्वया तटे ॥ अस्थीनि सागरे चापि मम क्षेप्याणि चात्र हि ॥ १४० ॥ यदि सापह्नवं चित्तं मय्यतीव तवास्ति चेत् ॥ ततस्त्वां गुरुकार्यार्थमादेक्ष्यामि शृणुष्व तत् ॥ १४१ ॥ अस्मिन्बहूदके तीर्थे यत्र प्राणांस्त्यजाम्यहम् ॥ तत्र मन्नामचिह्नस्ते संस्थाप्यो भास्करो विभुः ॥ १४२ ॥ आरोग्यं धनधान्यं च पुत्रदारादिसंपदः ॥ भास्करो भगवांस्तुष्टो दद्यादेतच्छ्रुतेर्वचः ॥ १४३ ॥ सविता परमो देवः सर्वस्वं वा द्विजन्मनाम् ॥ वेदवेदांगगीतश्च त्वमप्येनं सदा भज ॥ १४४ ॥ बहूदकमिदं कुंडं संसेव्यं च सदा त्वया ॥ माहात्म्यमस्य वक्ष्यामि संक्षेपाद्व्यास सूचितम् ॥ १४५ ॥ बहूदके कुंडवरे स्नाति यो विधिवन्नरः ॥ आरोग्यं धनधान्याद्यं तस्य स्यात्सर्वजन्मसु ॥ १४६ ॥ बहूदके च यः स्नात्वा सप्तम्यां माघमासके ॥ दद्यात्पिंडं पितॄणां च तेऽक्षय्यां तृप्तिमाप्नुयुः ॥ १४७ ॥ बहूदकस्य तीरे यः शुचिर्यजति वै क्रतुम् ॥ शतक्रतुफलं तस्य नास्ति काचिद्विचारणा ॥ १४८ ॥ अत्र यस्त्यजति प्राणान्बहूदकतटे नरः ॥ मोदते सूर्यलोकेऽसौ धर्मिणां च सुतो भवेत् ॥ १४९ ॥ बहूदकस्य तीरे च यः कुर्य्याज्जपसाधनम् ॥ सर्वं लक्षगुणं प्रोक्तं जपो होमश्च पूजनम् ॥१५०॥ बहूदकस्य तीरे च द्विजमेकं च भोजयेत् ॥ यो मिष्टान्नेन तस्य स्याद्विप्रकोटिश्च भोजिता ॥ १५१ ॥ बहूदकस्य तीरे या नारी गौरिणिकाः शुभाः ॥ संभोजयति तस्याश्च कुर्यात्सुस्वागतं ह्युमा ॥ १५२ ॥ बहूदकस्य तीरे च यः कुर्याद्योगसाधनम् ॥ षण्मासाभ्यन्तरे सिद्धिर्भवेत्तस्य न संशयः ॥ १५३ ॥ बहूदकस्य तीरे च प्रेतानुद्दिश्य दीयते ॥ यत्किंचिदक्षयं तेषामुपतिष्ठेन्न चान्यथा ॥ १५४ ॥ स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम् ॥ कृतं बहूदकतटे सर्वं स्यात्सुमहत्फलम् ॥ १५५ ॥

१ ते-पितरः--इत्यर्थः ।

त्वयैतद्धृदि संधार्य फलं व्यासेन सूचितम् ॥ बहूदकस्य कुंडस्य नंदभद्र महामते ॥ १५६ ॥ इत्युक्त्वा सोऽभवन्मौनी स्नात्वा कुंडे ततः शुचिः ॥ तीरे प्रस्तरमाश्रित्य स्वयं मंत्राञ्जजाप ह ॥ १५७ ॥ ॥ श्रीनारद उवाच ॥ ॥ ततः स सप्तरात्रांते जहौ बालो निजानसून् ॥ संस्कारितो यथोक्तं च नंदभद्रेण ब्राह्मणैः ॥ १५८ ॥ यत्र बालः स च प्राणाञ्जहौ जपपरायणः ॥ बालादित्यमिति ख्यातं तत्रास्थापयत प्रभुम् ॥ १५९ ॥ बहूदके च यः स्नात्वा बालादित्यं प्रपूजयेत् ॥ तस्य स्याद्भास्करस्तुष्टो मोक्षोपायं च विंदति ॥ १६० ॥ नंदभद्रोऽप्यथान्यस्यां भार्यायामपरान्सुतान् ॥ उत्पाद्यात्मसमान्धीमाञ्छिवसूर्यपरायणः ॥ १६१ ॥ रुद्रदेहं ययौ पार्थ पुनरावृत्तिदुर्लभम् ॥ एवमेतन्महाकुंडं बहूदकमिति स्मृतम् ॥ ॥ १६२ ॥ अस्य तीरे स्वमंशं च वल्लीनाथः प्रमोक्ष्यति ॥ दत्तात्रेयस्य यो योगी ह्यवतारो भविष्यति ॥ १६३ ॥ अर्चयित्वा च तं देवं योगसिद्धिमवाप्नुयात् ॥ पशूनामृद्धिमाप्नोति गोशरण्यो ह्यसौ प्रभुः ॥ १६४ ॥ पश्चिमायां बुधसुतस्तथा क्षेत्रं स भारत ॥ पुरूरवादित्यमिति स्थापयामास पार्थिवः ॥ १६५ ॥ सर्वकामप्रदश्चासौ भट्टादित्यसमो रविः ॥ बहूदकक्षेत्रसमं तस्य क्षेत्रं च भारत ॥ १६६ ॥ अस्य तीर्थस्य माहात्म्यं जप्तव्यं कर्णमूलके ॥ पुत्रस्य वापि शिष्यस्य न कथंचन नास्तिकः ॥ १६७ ॥ शृणोतीदं श्रद्धया यस्तस्य तुष्येच्च भास्करः ॥ धारयन्हृदये मोक्षं[1] मुच्यते भवसागरात् ॥ १६८ ॥ इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे बहूदकमाहात्म्यं बालादित्यवृत्तान्तवर्णनंनाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ ततो मयास्य तीर्थस्य रक्षणाय पुनर्जय[2] ॥ समाराध्य यथा देव्यः स्थापितास्तच्छृणुष्व भोः ॥१॥ यथात्मा सर्वभूतेषु व्यापकः परमेश्वरः ॥ तथैव प्रकृतिर्नित्या व्यापका परमेश्वरी ॥ २ ॥ शक्तिप्रसादादाप्नोति वीर्यं सर्वाश्च संपदः ॥ ईश्वरी सर्वभूतेषु सा चैवं पार्थ संस्थिता ॥ ३ ॥ बुद्धिह्रीपुष्टिलज्जेति तुष्टिः शांतिः क्षमा स्पृहा ॥ श्रद्धा च चेतना शक्तिर्मंत्रोत्साहप्रभूद्भवा ॥ ४ ॥ इयमेव च बंधाय मोक्षायेयं च सर्वदा ॥ एनामाराध्य चैश्वर्यमिन्द्राद्याः समवाप्नुयुः ॥ ५ ॥ ये च शक्तिं न मन्यंते तिरस्कुर्वंति चाधमाः ॥ योगीन्द्रा अपि ते व्यक्तं भ्रंश्यंते[3] काशिजा यथा ॥ ६ ॥ वाराणस्यां किल पुरा सिद्धयोगीश्वराः पुनः ॥ अवमन्य च ते शक्तिं पुनर्भ्रंशमुपागताः ॥ ७ ॥ तस्मात्सदा देहिनेयं शक्तिः पूज्यैव नित्यदा ॥ तुष्टा ददाति सा कामान्रुष्टा संहरते क्षणात् ॥ ८ ॥ परमा प्रकृतिः सा च बहुभेदैर्व्यवस्थिता ॥ तासां मध्ये महादेव्यो ह्यत्र संस्थापिताः शृणु ॥९॥ चतस्रस्तु महाशक्त्यश्चतुर्दिक्षु व्यवस्थिताः ॥ सिद्धांबि

१ मोक्षम्--मोक्षकरम्--इत्यर्थः । २ जय--हे अर्जुन--इत्यर्थः । ३ भ्रश्यन्ते--इ० पा० ।

का तु पूर्वस्यां स्थापिता सा गुहेन च ॥१०॥ जगदादौ मूलप्रकृतेरुत्पन्ना सा प्रकीर्त्यते ॥ आराधिता यतः सिद्धैस्तस्मात्सिद्धांबिका च सा ॥११॥ दक्षिणस्यां तथा तारा संस्थिता स्थापिता मया ॥ तारणार्थाय देवानां यस्मात्कूर्मं समाश्रिता ॥ १२ ॥ ययाविष्टः समुज्जह्रे वेदान्कूर्मो जगद्गुरुः ॥ अनयाविष्टदेहश्च बुधो बौद्धान्हनिष्यति ॥१३॥ कोटिशो वेदमार्गस्य ध्वंसकान्पापकर्मिणः॥इयं मया समाराध्य समानीता गिरेः सुता ॥ १४ ॥ कोटिसंख्याभिरत्युग्रदेवीभिः संवृता च सा ॥ दक्षिणां दिशमाश्रित्य संस्थिता मम गौरवात् ॥१५॥ पश्चिमायां तथा देवी संस्थिता भास्करा शुभा ॥ ययाविष्टानि भासंते भास्करप्रमुखानि च॥१६॥बिंबानि सर्वताराणां गच्छन्त्यायांति च द्रुतम् ॥ सैषा महाबला शक्तिर्भास्वरा कुरुनन्दन ॥१७॥ मयाराध्य समानीता कटाहादत्र संस्थिता ॥ कोटिकोटिवृता नित्यं त्रायते पश्चिमां दिशम् ॥ १८ ॥ उत्तरस्यां तथा देवी संस्थिता योगनंदिनी ॥ परमप्रकृतेर्देहात्पूर्वं निःसृतया यया ॥ १९ ॥ दृष्ट्वा दृष्ट्वा निर्मलया योगमापुश्चतुःसनाः ॥ योगीश्वरी च सा देवी सनकाद्यैः सुतोषिता ॥ २० ॥ सैव चांडकटाहान्मे समाराध्यात्र प्रापिता ॥ योगिनीभिः परिवृता संस्थिता चोत्तरां दिशम् ॥ २१ ॥ एवमेता महाशक्त्यश्चतस्रः संस्थिताः सदा ॥ पूजिताः कामदा नित्यं रुष्टाः संहरणक्षमाः ॥ २२ ॥ ततश्च नव मे दुर्गाः समानीताः शृणुष्व ताः ॥ २३ ॥ त्रिपुरानाम परमा देवी स्थाणुर्यया पुरा ॥ आविष्टस्त्रिपुरं निन्ये भस्मत्वं जगदीश्वरः ॥ २४ ॥ त्रिपुरेति ततस्तां तु प्रोक्तवान्भगवान्हरः ॥ तुष्टाव च स्वयं तस्मात्पूज्या सा जगतामपि ॥ २५ ॥ सा चाराध्य समानीता मयामरेश्वरपर्वतात् ॥ भक्तानां कामदा सास्ति भट्टादित्यसमीपतः ॥ २६ ॥ अपरा चापि कोलंबा महाशक्तिः सनातनी ॥ कोलरूपी ययाविष्टः केशवश्चोज्जहार गाम् ॥ २७ ॥ तस्मात्सा विष्णुना चोक्ता कोलंबेति स्तुतार्चिता ॥ सा च देवी मया पार्थ भक्तियोगेन तोषिता ॥ २८ ॥ वाराहगिरिसंस्था मां समानीता च साब्रवीत् ॥ यत्राहं नारद सदा तिष्ठामि कूपयार्थिनाम् ॥ ॥ २९ ॥ तत्र कूपेन संस्थेयं रुद्राणीसंस्थितेन वै ॥ तं हि कूपं विना मह्यं न रतिर्जायते क्वचित् ॥३०॥ तस्माद्भवान्कूपवरं स्वयमत्र खन द्विज ॥ एवमुक्ते पार्थ देव्या दर्भमूलेन मे तदा ॥ ३१ ॥ कूपोऽखनि यत्र साक्षाद्रुद्राणी कूप आबभौ ॥ ततो मया तत्र देवाः स्नात्वा जप्त्वा च तर्पिताः॥३२॥ पूजिता च ततो देवी कोलंबा जगदीश्वरी ॥ परितुष्टा तदा देवी प्रणतं मां ततोऽब्रवीत् ॥ ३३ ॥ सदात्र चाहं स्थास्यामि प्रसादं प्रापिता त्वया ॥ये च कूपेत्र संस्नात्वा माघाष्टम्यां विशेषतः ॥३४॥ पूजयिष्यंति मां मर्त्यास्तेषां छेत्स्यामि दुष्कृतम् ॥ सर्वतीर्थमयो यश्च सर्वर्तुकवने स्थितः ॥ ३५ ॥

१ सितात्--इति पाठे--सितात्--गिरेः--धवलगिरेः--इत्यर्थः । हिमालयाद्रिरित्यर्थो वा मन्दराचलादित्यर्थो वा । २ च--इ० पा० । ३ संस्थेयम्--स्थातव्यम्--इत्यर्थः ।

मेरोः समीपे रुद्राण्याः कूप एप स एव च ॥३६॥ प्रयागादपि गंगाया गयायाश्च विशेषतः ॥ कूपेस्मिन्नधिकं स्नानं मया नारद कीर्तितम् ॥ ३७ ॥ तदहं तव वाक्येन संस्थितात्र तपोधन ॥ गुहेनाथ सरः पुण्यं पालयिष्याम्यतंद्रिता ॥ ३८ ॥ कुमारेशं पूजयित्वा पूजयिष्यंति ये च माम् ॥ देवीभिः षष्टिकोटीभिर्युता तेपामभीष्टदा ॥ ३९ ॥ ॥ नारद उवाच ॥ ॥ इत्युक्तोऽहं पार्थ देव्या तदानीं प्रीयमाणया ॥ प्रत्यब्रवं प्रमुदितः कोलंबां विश्वमातरम् ॥ ४० ॥ अत्रास्य माता त्वं देवि गुप्तक्षेत्रस्य कारणम् ॥ तीर्थयात्रा वृथा तेषां नार्चयंतीह त्वां च ये ॥ ४१ ॥ इदं च यत्सरः पुण्यं त्वन्नाम्नाख्यातिमेष्यति ॥ ईश्वरी सरसोऽस्य त्वं तीर्थस्यास्य तथेश्वरी ॥ ४२ ॥ एवं दीर्घं तपस्तप्त्वा स्थापिता मयका[1] शुभा ॥ महादुर्गा नरैस्तस्मात्पूज्येयं सततं बुधैः ॥ ४३ ॥ तृतीया च दिशि तस्यां स्थिता संस्थापिता मया ॥ गुहेन च कपालेश्याः प्रभावोस्याः पुरेरितः ॥ ४४ ॥ धन्यास्ते ये प्रपश्यंति नित्यमेनां नरोत्तमाः ॥ कपालेश्वरमभ्यर्च्य विश्वशक्तिरियं यतः ॥ ४५ ॥ एवमेतास्तिस्रो दुर्गाः पूर्वस्यां दिशि संस्थिताः ॥ पश्चिमायां प्रवक्ष्यामि तिस्रो दुर्गा महोत्तमाः ॥ ४६ ॥ सुवर्णाक्षी तु या देवी ब्रह्मांडपरिपालिनी ॥ सा मयात्र समाराध्य तीर्थे देवी निवेशिता ॥ ॥ ४७ ॥ ये चैनां प्रणमिष्यंति पूजयिष्यंति भक्तितः ॥ त्रयस्त्रिंशद्भिः कोटीभिर्देवीभिः पूजिता च तैः ॥ ४८ ॥ अपरा च महादुर्गा चर्चिता चेति संस्थिता ॥ रसातलतलात्तत्र मयानीता सुभक्तितः ॥ ४९ ॥ इयमर्च्या च चिंत्या च वीरत्वं समभीप्सुभिः ॥ बहुभिर्देवदैतेयैर्ददौ तेभ्यश्च वीरताम् ॥ ५० ॥ इयमेव महादुर्गा शूद्रकं वीरसत्तमम् ॥ चौरैर्बद्धं कलौ चाग्रे मोक्षयिष्यति विक्रमात् ॥ ५१ ॥ ततस्त्वेतां स चाराध्य वीरेंद्रत्वमवाप्स्यति ॥ निहनिष्यति चाक्रम्य कालसेनमुखान्रिपून् ॥ ५२ ॥ तस्मादियं समाराध्या वीर्यकामैर्नरैः सदा ॥ चर्चिता या महादुर्गा पश्चिमायां दिशि स्थिता ॥ ५३ ॥ तथा त्रैलोक्यविजया तृतीयस्यां दिशि स्थिता ॥ यामाराध्य जयं प्राप्तस्त्रिलोक्यां रोहिणीपतिः ॥ सोमलोकान्मयानीता पूजिता जयदा सदा ॥ ५४ ॥ एवमेताः पश्चिमायामुत्तरस्यामतः[2] शृणु ॥ तिस्रो देव्यश्चोत्तरस्यामेकवीरामुखाः स्थिताः ॥ ५५ ॥ एकवीरेति या देवी साक्षात्सा शिवपूजिता ॥ ययाविष्टो जगत्सर्वं संहरत्येष[3] भूतराट् ॥ ५६ ॥ वीर्येणाद्यैकवीरायाः कृत्वा लोकांश्च भस्मसात् ॥ युगैकादशपूर्णत्वे विलक्षोऽभूत्स भस्मनि ॥ ५७ ॥ एवंविधा त्वेकवीरा शक्तिरेषा सनातनी ॥ पूजिताराधिता चैव सर्वाभीप्सितदा नृणाम् ॥ ॥ ५८ ॥ ब्रह्मलोकात्समानीता मयाराध्यात्र भारत ॥ नामकीर्तनमप्यस्या दुष्टानां घातनं विदुः ॥ ५९ ॥ द्वितीया हरसिद्ध्याख्या देवी दुर्गा

---

१ मयका--मया--इत्यर्थः । अकच्प्रत्ययविशिष्टस्य रूपमिदम् । २ ततः--इ०पा० । ३ एव--इ०पा० ।

महाबला ॥ शीकोत्तरात्समाराध्य मयानीतात्र पांडव ॥ ६० ॥ यदा शीकोत्तरस्थेन पार्वत्या प्रार्थितेन च ॥ रुद्रेण डाकिनीमंत्रः प्रोक्तो देव्याः कृपालुना ॥ ६१ ॥ तदा मंत्रप्रभावेण मोहिता गिरिजा सती ॥ तमेवाक्रम्य मांसं च शोणितं च भवं पपौ ॥ ६२ ॥ ततो रुद्रशरीरात्तु विनिष्क्रांतार्तिनाशिनी ॥ हरसिद्धिर्महादुर्गा महामंत्रविशारदा ॥ ६३ ॥ सा सहस्रभुजा देवी समाक्रम्याभिपीडच च ॥ मोक्षयामास गिरिशमशापयत तां तथा ॥ ६४ ॥ ततः प्रभृति सा लोके हरसिद्धिः प्रकीर्त्यते ॥ देवीनां षष्टिकोटीभिरावृता पूज्यते सुरैः ॥ ६५ ॥ एतामाराध्य सुग्रीवप्रमुखा दोषनाशिनीम् ॥ अभूवन्सुमहावीर्या डाकिनीसंघनाशनाः ॥ ६६ ॥ तस्मादेतां पूजयेत्तु मनोवाक्कायकर्मभिः ॥ डाकिन्याद्या न सर्पंति हरसिद्धेरनंतरम् ॥ ६७ ॥ तृतीयेशानकोणस्था चंडिका नवमी स्थिता ॥ वागीशोऽपि लभेत्पारं नैव यस्याः प्रवर्णने ॥ ६८ ॥ या पुरा पार्वतीदेहाद्विनिःसृत्य महासुरौ ॥ चंडमुंडौ निहत्यैव भक्षयामास क्रोधतः ॥ ६९ ॥ अक्षौहिणीशतं त्वेकं चंडमुंडौ च तावुभौ ॥ नापूर्यतैकग्रासोऽस्याः किंलक्ष्या[1] यात्वियं हि सा ॥ ७० ॥ इयमेवांधकानां च तृषिता शोणितं पुनः ॥ पपौ ततो निजग्राह चांधकं भगवान्भवः ॥ ७१ ॥ इयं च रक्तबीजानां कृत्वा पानं च रक्तजम् ॥ अर्पयामास तं देव्याश्चामुण्डापीतशोणितम् ॥ ७२ ॥ एषा तृप्यति भक्तानां प्रणामेनापि भारत ॥ अर्बुदानां च कोटीभिर्दैत्यानां पापकर्मिणाम् ॥ ७३ ॥ कुण्डं चास्या मया देव्याः पुण्यं निष्पादितं शुभम् ॥ यत्र वै स्पर्शमात्रेण सर्वतीर्थफलं लभेत् ॥ ७४ ॥ हरसिद्धिर्देवसिद्धिर्धर्मसिद्धिश्च भारत ॥ विविधा प्राप्यते सिद्धिस्तीर्थेऽस्मिश्चंडिकारतैः ॥ ७५ ॥ यश्च पूजयते देवीं स्वल्पेन बहुनापि वा ॥ कात्यायनी कोटिशतैर्वृता तस्य विभूतिदा ॥ ७६ ॥ एवमेता महादुर्गा नव तीर्थेऽत्र संस्थिताः ॥ चतस्रश्चापि दिग्देव्यो नित्यमर्च्याः शुभेप्सुभिः[2] ॥७७॥ आश्विनस्य च मासस्य[3] नवरात्रे विशेषतः ॥ उपोष्य चैकभक्तैर्वा[4] देवीस्त्वेताः प्रपूजयेत् ॥ ७८ ॥ बलिपूर्पकनैवेद्यैस्तर्पणैर्धूपगंधिभिः[5] ॥ तस्य रक्षां चरंत्येता रथ्यासु त्रिकचत्वरे ॥ ७९ ॥ भूतप्रेतपिशाचाद्या नोपकुर्युः प्रपीडनम् ॥ आपदो विद्रवंत्याशु योगिन्यो नंदयंति तम् ॥ ८० ॥ पुत्रार्थी लभते पुत्रान्धनार्थी धनमाप्नुयात् ॥ रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ ८१ ॥ आसां यः कुरुते भक्तिं नरो नारी च

१ किंलक्ष्या यात्वियं हि सा--या तु इयम्--( एतादृशप्रभाववती ) [ अस्ति ] सा किंलक्ष्या--कीदृशी ( महाप्रभावशालिनी स्यात् ) ( तत् त्वमेव मनसि विचारय ) । इति--अर्थयोजना कर्तव्या । एतेन इयमतीवोग्रस्वरूपा--अत्यन्तोग्रप्रभावशालिनी चास्ति--इति सूचितम् । २ यतः शुभाः--इ० पा० । ३ माघस्य--इत्यपि पाठः । ४ एकभक्तैः--एकधान्यभोजनैः--इत्यर्थः । ५ बलिपुष्पकनैवेद्यैः--इ० पा० ।

श्रद्धया ॥ सर्वान्कामानवाप्नोति यांश्चिंतयति चेतसि ॥ ८२ ॥ कामगव्य[1] इमा देव्यश्चिन्तामणिनिभास्तथा ॥ कल्पवल्ल्योऽथ भक्तानां प्रतिच्छन्दोऽत्र[2] नव हि ॥ ८३ ॥ तथात्र भूतमातास्ति हरसिद्धेस्तु दक्षिणे ॥ तस्या माहात्म्यमतुलं संक्षेपात्प्रब्रवीमि ते ॥ ८४ ॥ पूर्वं किल गुहो विद्वान्पुण्ये सारस्वते तटे॥ भूतप्रेतपिशाचानामाधिराज्येऽभ्यपिच्यत ॥ ८५ ॥ स च सर्वाणि भूतानि मर्यादायामधारयत् ॥ एतदन्नं प्रदायैव कृपया भगवान्गुहः ॥ ८६ ॥ यदमंत्रहुतं किंचिद्वेदबाह्यं च यत्कृतम् ॥ अश्रद्धया च क्रोधेन तद्वस्तृप्त्यै भविष्यति ॥ ८७ ॥ ततस्त्वनेन भोगेन तानि नंदंति कृत्स्नशः ॥ ततः केनापि कालेन श्रद्धयाऽश्रद्धया कृतम् ॥ ८८ ॥ पुण्यं तान्येव भूतानि ग्रसंत्याक्रम्य देवताः ॥ ततो देवाः क्षुधार्त्तास्ते गुहायैतन्न्यवेदयन् ॥ ८९ ॥ स वै तदाकर्ण्य क्रुद्धो गुहः काल इवाभवत् ॥ तस्य क्रुद्धस्य भ्रूपद्ममध्यात्काचिद्विनिर्गता ॥ ९० ॥ ज्वालामाला सुदुर्दर्शा नारी द्वादशलोचना ॥ सा च प्रणम्य तं प्राह तव शक्तिरहं प्रभो ॥ शीघ्रमादिश मां कृत्ये किं करोमि तवेप्सितम् ॥ ९१ ॥ ॥ ॥ स्कन्द[3] उवाच ॥ ॥ एतैर्भूतगणैः पापैरुल्लंघ्य मम शासनम् ॥ ९२ ॥ मनुष्यदत्तं सकलं भुज्यते स्वेच्छयाधमैः ॥ शीघ्रमेतानि त्वं तस्मान्मर्यादायामुपानय ॥ ९३ ॥ एतास्त्वानुव्रजिष्यंति देव्यः कोटिशतं शुभे[4] ॥ ततस्तथेति सा चोक्ता देवीभिः संवृता तदा ॥ ९४ ॥ मयूरं समुपास्थाय गुहशक्तिः समागता ॥ सरोजवनमासाद्य[5] भूतसंघानपश्यत ॥ ९५ ॥ जघान च समासाद्य देवी नानाविधायुधैः ॥ ततः प्रेतपिशाचाद्या हन्यमाना महारणे ॥ ९६ ॥ प्रसादयंति[6] तां देवीं नानावेषैः सुदीनवत् ॥ केचिद्ब्राह्मणवेषैश्च तापसानां तथोक्तिभिः ॥ ९७ ॥ नृत्यंति देवि पद्माक्षि प्रसीदेति पुनःपुनः ॥ ततः प्रसन्ना सा देवी ब्रियतां स्वेच्छयाऽऽह तान् ॥ ९८ ॥ तां ते प्रोचुस्त्राहि नस्त्वं भूतमाता भवेश्वरि ॥ मर्यादां नैव त्यक्ष्यामो वयं स्कन्दविनिर्मिताम् ॥ ९९ ॥ ये चैवं त्वां तोपयन्ति तेषां देहि वरान्सदा ॥१००॥ ॥ ॥ श्रीदेव्युवाच ॥ ॥ वैशाखे दर्शदिवसे ये चैवं तोषयंति माम् ॥ आरिष्टाभरणैः पुष्पैर्दधिभक्तैश्च पूजनैः ॥ तेषां सर्वोपसर्गा वै यास्यंति विलयं स्फुटम् ॥ १०१ ॥ एवं दत्त्वा वरं देवी मुमुदे भूतसंवृता ॥ एवंप्रभावा सा देवी मयानीतात्र भारत ॥ १०२ ॥ य एनां प्रणमेन्मर्त्यः सर्वा

१ कामगव्यः--कामधेनवः--कामपूरकाः--इत्यर्थः । कामगम्याः--इ० पा० । २ प्रतिच्छंदोऽत्र संशयस्य पर्यायशब्दो बोद्धव्यः प्रकरणसांगत्याय । ३ कार्तिकेय उवाच--इ० पा० । ४ शुभाः--इ० पा० । ५ शिरोभुवनम्--इ० च पा० । ६ प्रमोदयंति--इ० पा० ।

रिष्टैर्विमुच्यते ॥ १०३ ॥ एवं प्रभावाः परिकीर्तिता मया समासतस्तीर्थवरेऽत्र देव्यः ॥ चतुर्दशैवार्जुन पूजिता याश्चतुर्दशस्थानवरैर्नृमुख्यैः ॥ ॥ १०४ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे श्रीदेव्याख्यानवर्णनंनाम सप्तचत्वारिंशत्तमोऽध्यायः ॥ ४७ ॥ ॥ छ ॥ ॥ नारद उवाच ॥ ॥ अथातः संप्रवक्ष्यामि सोमनाथमहिं[1] स्फुटम् ॥ शृण्वन्[2]यां कीर्तयिष्यामि पापमोक्षमवाप्नुयात् ॥ १ ॥ पुरा त्रेतायुगे पार्थ चौडदेशसमुद्भवौ[3] ॥ ऊर्जयंतश्च[4] प्रालेयो विप्रावास्तां महाद्युती ॥ २ ॥ तावेकदा पुराणार्थे श्लोकमेकमपश्यताम् ॥ तं दृष्ट्वा सर्वशास्त्रज्ञावास्तां कंटकितत्वचौ ॥ ३ ॥ प्रभासाद्यानि तीर्थानि पुलस्त्यायाह पद्मभूः ॥ न यैस्तत्राप्लुतं चैव किं तैस्तीर्थमुपासितम् ॥ ४ ॥ इति श्लोकं पठित्वा[5] तौ पुनःपुनरभिष्टुतम् ॥ तद्वैव च प्रभासाय निःसृतौ स्नातुमुत्तमौ ॥ ५ ॥ तौ वनानि नदीश्चैव व्यतिक्रम्य शनैःशनैः ॥ महर्षिगणसंकीर्णामुत्तीर्णौ नर्मदां शिवाम् ॥ ६ ॥ गुप्तक्षेत्रस्य माहात्म्यं महीसागरसंगमम् ॥ तत्र स्नात्वा प्रभासाय तन्मध्येन प्रतस्थतुः ॥ ७ ॥ ततो मार्गस्य शून्यत्वात्तृट्क्षुधापीडितौ भृशम् ॥ आस्तां विचेतनौ विप्रौ सिद्धलिंगसमीपतः ॥ ८ ॥ सिद्धनाथं नमस्कृत्य संप्रयातौ सुधैर्यतः ॥ क्षुधावेगेन तीव्रेण तृषा मध्यार्कतापितौ ॥ ९ ॥ सहसा पतितौ भूमौ स्थूणपादौ विमूर्छितौ ॥ ततो मुहूर्तात्प्रालेय ऊर्जयंतमभाषत ॥ १० ॥ किंचिद्विश्वस्य धैर्याच्च सखे किं न श्रुतं त्वया ॥ यथा यथा विवर्णांगो जायते तीर्थयात्रया ॥ ११ ॥ तथातथा भवेद्दानैर्दीनः सोमेश्वरो हरः ॥ तथाऽऽस्तां लुंठमानौ तावेवमुक्ते श्रुतेऽपि च ॥ १२ ॥ लुंठमानो जगामैव प्रालेयः किंचिदंतरे ॥ उत्थितं सहसा लिंगं भूमिं भित्त्वा सुदुर्दृशम् ॥ १३ ॥ खे वाणी चाभवत्तत्र पुष्पवर्षपुरःसरा ॥ प्रालेय तव हेतोस्तु सोमनाथसमं फलम् ॥ उत्थितं सागरतटे लिंगं तिष्ठात्र सुव्रत ॥ १४ ॥ ॥ प्रालेय उवाच ॥ ॥ यद्येवं सत्यमेतच्च तथाप्यात्मा प्रकल्पितः ॥ १५ ॥ प्रभासाय प्रयातव्यं यदाऽऽमृत्योर्मया स्फुटम् ॥ ततश्चैवोर्ज्जयंतोऽपि मूर्छाभावाल्लुठन्पुरः ॥ १६ ॥ अपश्यदुत्थितं लिंगं स चैवं प्रत्यपद्यत ॥ ततः प्रत्यक्षतां प्राप्तो भवश्चक्रे तयोर्दृढे[6] ॥ १७ ॥ दृष्ट्वा तनू ततो यातौ प्रभासं शिवसद्म च ॥ तावेतौ सोमनाथौ द्वौ सिद्धेश्वरसमीपतः ॥ १८ ॥ ऊर्जयंतः प्रतीच्यां च प्रालेयस्येश्वरोऽपरः ॥ सोमकुंडांभसि शनैः स्नात्वार्णवमहीजले ॥ १९ ॥ सोमनाथद्वयं पश्येज्जन्मपापात्प्रमुच्यते ॥ ब्रह्मात्र स्थापयित्वा तु हाटकेश्वर

१ सोमनाथमहिम्--सोमनाथमाहात्म्यम्--इत्यर्थः । २ ताम्--इति शेषः । यां कीर्तयिष्यामि तां शृण्वन्--मोक्षमवाप्नुयादिति योजना बोध्या । ३ चोलदेशसमुद्भवौ--इ० पा० । ४ अर्जयंतश्च--इ० पा० । ५ श्रुत्वा--इ० पा० । ६ दृढे--इति--तनू--इत्यस्य विशेषणम् ।

संज्ञितम् ॥ २० ॥ महीनगरके लिंगं पातालात्सुमनोहरम् ॥ तुष्टाव देवं प्रयतः स्तुतिं तां शृणु पांडव ॥ २१ ॥ नमस्ते भगवन्रुद्र भास्करामिततेजसे ॥ नमो भवाय रुद्राय रसायांबुमयाय ते ॥ २२ ॥ शर्वाय क्षितिरूपाय सदा सुरभिणे नमः ॥ ईशाय वायवे तुभ्यं संस्पर्शाय नमोनमः ॥ २३ ॥ पशूनां पतये चापि पावकायातितेजसे ॥ भीमाय व्योमरूपाय शब्दमात्राय ते नमः ॥ २४ ॥ महादेवाय सोमाय अमृताय नमोऽस्तु ते ॥ उग्राय यजमानाय नमस्ते कर्मयोगिने ॥ २५ ॥ इत्येवं नामभिर्दिव्यैः स्तव एष उदीरितः ॥ यः पठेच्छृणुयाद्वापि पितामहकृतं स्तवम् ॥ २६ ॥ हाटकेश्वरलिंगस्य नित्यं च प्रयतो नरः ॥ अष्टमूर्तेः स सायुज्यं लभते नात्र संशयः ॥ २७ ॥ हाटकेश्वरलिंगं च प्रयतो यः स्मरेदपि ॥ तस्य स्याद्वरदो ब्रह्मा तेनेदं स्थापितं जंय ॥ २८ ॥ एवंविधानि तीर्थानि महीसागरसंगमे ॥ बहूनि संति पुण्यानि संक्षेपाद्वर्णितानि मे ॥ २९ ॥ इति श्रीस्कांदे महापुराण एकाशीतिसाहस्र्यां संहितायां प्रथमे माहेश्वरखण्डे कौमारिकाखण्डे स्तम्भतीर्थमाहात्म्ये सोमनाथवृत्तांतवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥ छ ॥ ॥ अर्जुन उवाच ॥ ॥ अत्यद्भुतानि तीर्थानि लिंगानि च महामुने ॥ श्रुत्वा तव मुखांभोजाद्भृशं मे हृष्यते मनः ॥ १ ॥ महीनगरकस्यापि स्थापितस्य त्वया मुने ॥ यानि तीर्थानि मुख्यानि तानि वर्णय मे प्रभो ॥ २ ॥ ॥ नारद उवाच ॥ ॥ श्रीमन्महीनगरके यानि तीर्थानि फाल्गुन ॥ तानि वक्ष्यामि यत्रास्ते जयादित्यो रविः प्रभुः ॥ ३ ॥ जयादित्यस्य यो नाम कीर्तयेदिह मानवः ॥ सर्वरोगविनिर्मुक्तो लभेत्सोऽपि हृदीप्सितम् ॥ ४ ॥ यस्य संदर्शनादेव कल्याणैरपि पूर्यते ॥ मुच्यते चाप्यकल्याणैः श्रद्धावान्पार्थ मानवः ॥ ५ ॥ तस्य देवस्य चोत्पत्तिं शृणु पार्थ वदामि ते ॥ शृण्वन्वा कीर्तयन्वापि प्रसादं भास्कराल्लभेत् ॥ ६ ॥ अहं संस्थाप्य संस्थानमेतत्कालेन केनचित् ॥ प्रयातो भास्करं लोकं दर्शनार्थी यदृच्छया ॥ ७ ॥ स मां प्रणतमासीनमभ्यर्च्यार्घेण भास्करः ॥ प्रहसन्निव प्राहेदं देवो मधुरया गिरा ॥ ८ ॥ कुत आगम्यते विप्र क्व च वा प्रतिगम्यते ॥ क्व चायं नारदमुने कालस्ते विहृतोऽभवत् ॥ ९ ॥ ॥ नारद उवाच ॥ ॥ एवमुक्तो भास्करेण तं तदा प्राब्रवं वचः ॥ भारते विहृतः खण्डे महीनगरकादपि ॥ दर्शनार्थं तव विभो समायातोऽस्मि भास्कर ॥ १० ॥ ॥ रविरुवाच ॥ ॥ यत्त्वया स्थापितं स्थानं तत्र ये संति ब्राह्मणाः ॥ तेषां गुणान्मम

१ सुरभिणे—सुरभिः—सुगंधः विद्यते यस्य सः सुरभी—सुगन्धिः—तस्मै सुरभिणे । 'सुगंधिं पुष्टिवर्धनम्—' इति श्रुतेः । २ जंय—हे अर्जुन—इत्यर्जुनसंबोधनमिदम् । ३ महीसागररोधसि—इ० पा० । ४ संस्पर्शनात्—इ०पा० । ५ तीर्थस्य—इ०पा० । ६ महीसागरकात्—इ० पा० ।

ब्रूहि किंगुणा ननु ते द्विजाः ॥ ११ ॥ ॥ नारद उवाच ॥ ॥ एवं पृष्टो भगवता पुनरेवाब्रवं वचः ॥ १२ ॥ यदि तान्भोः प्रशंसामि स्वीयान्स्तौतीति वाच्यता ॥ निंदाम्यनर्हान्कस्माद्वा कष्टमेवोभयत्र च ॥ १३ ॥ अथवापारमाहात्म्ये सति तेषां महात्मनाम् ॥ अल्पे कृते वर्णने स्याद्दोष एव महान्मम ॥ १४ ॥ मदर्चितद्विजेंद्राणां यदि स्याच्छ्रवणेप्सुता ॥ ततः स्वयं विलोक्यास्ते गत्वेदं मे मतं रवे ॥ १५ ॥ इति श्रुत्वा मम वचो रविरासीत्सुविस्मितः ॥ स्वयं द्रक्ष्यामि चोवाच पुनःपुनरहर्पतिः ॥ १६ ॥ सोऽथ विप्रतनुं कृत्वा मां विसर्ज्यैव भास्करः ॥ प्रतपन्दिवियोगाच्च प्रयातोर्णवरोधसि ॥ १७ ॥ जटां त्रिषवणस्नानपिंगलां धारयन्नथ ॥ वृद्धद्विजो महातेजा ददृशे ब्राह्मणैर्मम ॥ १८ ॥ ततो हारीतप्रमुखाः प्रहर्षोत्फुल्ललोचनाः ॥ उत्थाय ब्रह्मशालायास्ते द्विजा द्विजमाद्रवन् ॥१९॥ नमस्कृत्य द्विजाग्र्यं ते प्रहर्षादिदमब्रुवन् ॥२०॥ अद्य नो दिवसः पुण्यः स्थानमद्योत्तमं त्विदम् ॥ यत्त्वया विप्रप्रवर स्वयमागमनं कृतम् ॥ २१ ॥ धन्यस्य हि गृहस्थस्य कृपयैव द्विजोत्तमाः ॥ आतिथ्यवेषेणायांति पावनार्थं न संशयः ॥२२॥ तत्त्वं गेहानि चास्माकं पादचंक्रमणेन च ॥ दर्शनाद्भोजनात्स्थानादस्माभिः सह पावय ॥२३॥ ॥ अतिथिरुवाच ॥ ॥ भोजनं द्विविधं विप्रा प्राकृतं परमं तथा ॥ तदहं सम्यगिच्छामि दत्तं परमभोजनम् ॥ २४ ॥ इत्येतदतिथेः श्रुत्वा हारीतः पुत्रमब्रवीत् ॥ अष्टवर्षं तु कमठं वेत्सि पुत्र द्विजोदितम् ॥२५॥ ॥ कमठ उवाच ॥ ॥ तात प्रणम्य त्वां वक्ष्ये तादृक्परमभोजनम् ॥ द्विजं च तर्पयिष्यामि दत्त्वा परमभोजनम् ॥ ॥२६॥ सुतेन किल जातेन जायते चानृणः पिता ॥ सत्यं करिष्ये तद्वाक्यं संतर्प्यातिथिमुत्तमम् ॥२७॥ भोजनं द्विप्रकारं च प्रविभागस्तयोरयम् ॥ प्राकृतं प्रोच्यते त्वेवमन्यत्परमभोजनम् ॥ २८ ॥ तत्र यत्प्राकृतं नाम प्रकृतिप्रमुखस्य तत् ॥ चतुर्विंशतितत्त्वानां गणस्योक्तं हि तर्पणम् ॥ २९ ॥ षड्रसं भोजनं तच्च पंचभेदं वदंति च ॥ येन भुक्तेन तृप्तं स्यात्क्षेत्रं यद्देहलक्षणम् ॥ ३० ॥ यथापरंपरंनाम प्रोक्तं परमभोजनम् ॥ परमः प्रोच्यते चात्मा तस्य तद्भोजनं भवेत् ॥ ३१ ॥ ततो नानाप्रकारस्य धर्मस्य श्रवणं हि यत् ॥ तदन्नं प्रोच्यते भोक्ता क्षेत्रज्ञः श्रवणौ मुखम् ॥ ३२ ॥ तद्दास्यामि द्विजाग्र्याय पृच्छ विप्र यदिच्छसि ॥ शक्तितस्तर्पयिष्यामि त्वामहं विप्रसंसदि ॥ ३३ ॥ ॥ नारद उवाच ॥ ॥ कमठस्यैतदाकर्ण्य सोऽतिथिर्वचनं महत् ॥ मनसैव प्रशस्यामुं प्रश्नमेनमथाकरोत् ॥ ३४ ॥ कथं संजायते जंतुः कथं चापि प्रलीयते ॥ भस्मतामथ संप्राप्य क्व चायं प्रतिपद्यते ॥ ३५ ॥ ॥ कमठ उवाच ॥ ॥ गुरवे प्राङ्नमस्कृत्य धर्माय तदनंतरम् ॥ छंदोगीतममुं प्रश्नं शक्त्या वक्ष्यामि ते द्विज ॥ ३६ ॥

१ अनर्हान्—निंदितुमनर्हान्—इत्यर्थः । २ "अहरादीनां पत्यादिषु वा रेफः" इति रेफः । ३ यादृक्—इ०पा० ।

